श्रीराजानकमम्मटाचार्यप्रणीतः

# काव्यप्रकाशः

प्रथमो भागः

आदितः षष्ठोल्लासपर्यन्तो भागः ( १—६ )

महामहोपाध्यायश्रीकमलाकरभट्टप्रणीत-

कमलाकरीव्याख्योपेतः

तथा

लोकमणिदाहालकृत-

सरिताख्यविवृत्युपेतः

तथा च

श्रीविद्याभूषणप्रणीतः

साहित्यकौमुदीसमलङ्कृतः

सम्पादकः-

लोकमणिदाहालः

भारतीय विद्या प्रकाशन

वाराणसी दिल्ली

॥ श्रीः ॥

श्री राजानकमम्मटाचार्यप्रणीतः

# का व्य प्र का शः

प्रथमो भागः

आदितः षष्ठोल्लासपर्यन्तो भागः ( १—६ )

महामहोपाध्यायश्रीकमलाकरभट्टप्रणीतः

कमलाकरीव्याख्योपेतः

तथा

लोकमणिदाहालकृतः

सरिताख्यविवृत्युपेतः

तथा च

श्रीविद्याभूषणप्रणीतः

साहित्यकौमुदीसमलङ्कृतः

सम्पादकः—

लोकमणिदाहालः

भा र ती य वि द्या प्र का श न

वाराणसी दिल्ली

॥ श्रीः ॥

श्री राजानकमम्मटाचार्यप्रणीतः

# काव्यप्रकाशः

प्रथमो भागः

आदितः षष्ठोल्लासपर्यन्तो भागः ( १—६ )

महामहोपाध्यायश्रीकमलाकरभट्टप्रणीत-

कमलाकरीव्याख्योपेतः

तथा

लोकमणिदाहालकृत-

सरिताख्यविवृत्युपेतः

तथा च

श्रीविद्याभूषणप्रणीत-

साहित्यकौमुदीसमलङ्कृतः

सम्पादकः—

लोकमणिदाहालः

भारतीय विद्या प्रकाशन

वाराणसी दिल्ली

प्रकाशकः—

(C) भारतीय विद्या प्रकाशन

(१) पो० बाक्स नं० ११०८ कचौड़ी गली, वाराणसी–२२१००१

(२) १, यू० वी० जवाहर नगर, बैंग्लो रोड, दिल्ली–११०००७

प्रथम संस्करण—१९९३

मूल्य—१००.००

प्रेसः—

चम्पा प्रिंटिंग प्रेस

द्वारा

भारतीय विद्या प्रकाशन
कचौड़ी गली, वाराणसी } दूरभाष—३२२३७६

तेषां

पुण्यस्मृतौ

यैः

नितान्तगहनविषयः काव्यप्रकाशोऽपि

मन्दमतीनामपि

मतिविषयीकृतः

—सम्पादको विवृतिकारश्च

॥ श्रीः ॥

# प्रस्तावना

वामनाचार्यः साधुर्यदा स कथयति —

क्वाऽहं मन्दमतिः क्व चातिगहनः काव्यप्रकाशाभिधो,
ग्रन्थो यत्र धियोऽपि निर्मलधिया मा कुण्ठिता वै पुनः।
सर्वं सत्यमिदं तथापि सुधियां प्राचां कवीनां वचो,
राशेः कल्पतरोः सुसन्निधिवशाच्छङ्केन किञ्चित्क्वचित्॥ इति।

काव्यप्रकाशो हि समस्तकाव्यशास्त्रस्य तादृशो महनीयः प्रकाशस्तम्भो यस्य प्रकाशरश्मयोः निखिलमेव काव्यशास्त्रमाप्यायन्ते। असौ हि लक्षणशास्त्रजगति युगप्रवर्तको ग्रन्थः। एतत्प्रणयनानन्तरं ये खलु काव्यशास्त्रस्य ग्रन्थाः प्रणीतास्तेष्वस्य प्रभावः स्पष्टं लक्ष्यते। यावन्तो हि टीकाग्रन्था अस्य प्रणीता न तावन्तोऽन्यस्य कस्यापि काव्यशास्त्रीयग्रन्थस्य प्रणीताः। ग्रन्थस्यास्य अशीतितोऽधिका एव व्याख्याग्रन्था दृश्यन्ते। अस्य टीकाकृत्पु काव्यशास्त्रस्य प्रतिष्ठित आचार्यो रुय्यकः विश्वनाथः महावैयाकरणो नागेशभट्टश्च जैनो माणिक्यचन्द्रः नैयायिको जगदीशः परमानन्दश्च मीमांसकः कमलाकरभट्टः तान्त्रिको गोकुलनाथश्च विद्यन्ते। तथैव गोविन्दठक्कुरस्य काव्यप्रदीपः भीमसेनस्य सुधासागरः भट्टगोपालस्य साहित्यचूडामणिश्च मूलसंवादिनो ग्रन्थाः। ये हि खलु मूलग्रन्थमेव रचयितुं प्रभवन्ति स्म तेऽपि काव्यप्रकाशटीकाप्रणयने गौरवं मन्यन्ते स्मेत्यहो अस्य महनीयता।

मम्मटस्य जीवनवृत्तविषये प्रामाणिकाभिलेखस्याभावेन तत्स्थितिकालनिर्द्धारणविषयेऽन्तर्बहिःसाक्ष्यमेव शरणम्। मम्मटो हि भोजदेवमभिनवगुप्तञ्च स्मरति समुद्धरति च नवसाहसाङ्कचरितस्यैकं पद्यमिति सिध्यति यदस्य स्थितिकालः एकादशशतकात्प्राङ् न सम्भवतीति। एवमेव आलङ्कारिकेण रुय्यकेनापि काव्यप्रकाशस्य टीका प्रणीता सङ्केताख्या। स हि मम्मटं पर्य्यालोचयति मम्मटश्च तमिति मम्मटस्य रुय्यकसमकालीनत्वं सिध्यति। तथैव माणिक्यचन्द्रेणापि काव्यप्रकाशस्य टीका सङ्केताख्या प्रणीता यस्याः प्रणयनकालः १२१६ मितवैक्रमाब्दः समुल्लिखितः। एतेन हि काव्यप्रकाशेन द्वादशशतकमध्यभागमभितः प्रणीतेन भाव्यमिति तज्ज्ञाः।

मम्मटस्यैतिह्यं तु सम्प्रत्यपि अविज्ञातमेवास्माकम् । तस्य हि राजानकोपाधिना मम्मट इति टान्तनाम्ना चानुमीयते यदसौ काश्मीरक आसीदिति । कथ्यते ह्यसौ जैयटाख्यस्य पुत्रः वेदभाष्यकारस्य उव्वटस्य भ्राता महाभाष्यप्रदीपकृतः कैयटस्य चेति । किन्तु उव्वटस्य पिता तु वज्रट इति स्मर्यते तेनोव्वटो मम्मटस्य पितृव्यपुत्रः सम्भवति । यथा सुधासागरे—

शब्दब्रह्म सनातनं न विदितं शास्त्रैः क्वचित्केनचित्,
तद्देवी हि सरस्वती स्वयमभूत् कश्मीरदेशे पुमान् ।
श्रीमज्जैयटगेहिनी सुजठराज्जन्माऽऽप्ययुग्मानुजः,
श्रीमन्मम्मटसंज्ञया श्रिततनुं सारस्वतीं सूचयन् ॥
कस्तस्य स्तुतिमाचरेत् कविरहो को वा गुणान् वेदितुं,
शक्तः स्यात्किल मम्मटस्य भुवने वाग्देवतारूपिणः ।
श्रीमान् कैयट औवटो ह्यवरजो यच्छात्त्रतामागतो,
भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिं गतः ॥ इति ।

किन्त्विदं कथनं न सर्वशिष्टप्रमाणत्वेन सम्भावयितुं शक्यते, यतो हि— "आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना । मन्त्रभाष्यमिदं क्लृप्तं भोजे राज्यं प्रशासति' इति कथनेन उव्वटस्य पितृत्वेन वज्रटस्योल्लेखात् ।

मम्मटो हि समवगतसर्वशास्त्रहृदयोऽपि मुख्यतया वैयाकरणो यतो हि सः बुधैरित्यस्य वैयाकरणैरित्याशयं समर्थयति सङ्केतितश्चतुर्भेदो जात्यादिः इति वैयाकरणसम्मतपक्षञ्च प्राथम्येनोपन्यस्यति । अत एव हि नागेशप्रभृतिवैयाकरणाश्च काव्यप्रकाशं स्वोक्तप्रमाणत्वेनोद्धरन्ति । यथा वैयाकरणसिद्धान्तमञ्जूषादौ 'तदुक्तं काव्यप्रकाशे'--इति ।

काव्यप्रकाशस्य त्रयोंऽशाः कारिका वृत्तिरुदाहरणञ्च । कारिकैव सूत्रनाम्ना व्यपदिश्यते । कारिकांश एव अलङ्कारसूत्रनाम्ना व्यपदिश्यते । ताश्च कारिकाः १४२ सङ्ख्याकाः २१२ सङ्ख्याकानि सूत्राणि च । उदाहरणानि तु प्रायोऽन्यदीयान्येव । वृत्तिभागस्य प्रणेता मम्मटाचार्य इत्यपि सर्वसम्मत एव कामं परिकरालङ्कारपर्यन्ताया एव । किन्तु कारिकाभागस्य प्रणेतृविषये द्वौ पक्षौ समुदितौ दृश्येते कारिकाभागो भरतमुनिप्रणीत इत्येकः सोऽपि मम्मटप्रणीत एवेत्यपरः । कतिपये विद्याभूषणप्रभृतिविद्वांसः प्रथमपक्षं समर्थयन्ति । यथा साहित्यकौमुद्यामुपोद्घातप्रकरणे—

'सूत्राणां भरतमुनीशवर्णितानां,
वृत्तीनां मितवपुषां कृतौ ममाऽस्याम् । इति ।

अपि च—

'मम्मटाद्युक्तिमाश्रित्य मितां साहित्यकौमुदीम् ।
वृत्तिं भरतसूत्राणां श्रीविद्याभूषणो व्यधात् ॥' इति ।

इत्थं हि भरतमुनिप्रणीता या कारिका सा अलङ्कारसूत्रनाम्ना व्यवह्रियते मम्मटप्रणीता तु या वृत्तिः सैव काव्यप्रकाशनामभाक् इति तेषां पक्षः । परे तं प्रवादमात्रं मन्यन्ते । तन्मते कारिकांशस्यापि प्रणेता मम्मट एव । यदि कारिकाकृद् भरतमुनिः 'स्यात्तदा चतुर्थोल्लासे कारिकांशसमर्थने वृत्तौ—उक्तं हि भरतेन इति भरतोक्तिरुद्धृता न स्यात् । न हि कश्चिदपि प्रतिष्ठितो विद्वान् तदुक्तावेव तदुक्ति प्रमाणतया नोपन्यस्येत् । यदि नाम कारिकावृत्तिकृदैक्यं न स्यात्तदा 'माला तु पूर्ववत्' इति वृत्त्युक्ताया मालोपमायाः कारिकया पूर्वोक्तता नोक्ता स्यात् । न तु कयाऽपि कारिकया मालोपमोक्ता । विश्वनाथोऽपि तददोषौ इति सूत्रं मम्मटप्रणीतमिति मत्वैव कश्चिदाह इति सामान्येनोद्धरति भरतं तु मुनिशब्देन ।

काव्यप्रकाशस्य भागद्वयस्यैव मम्मटप्रणीतत्वसमर्थकेषु द्वौ पक्षौ दृश्येते । तत्राऽऽद्यः पक्षः—

कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः ।
प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा ॥

इति समर्थकः । अपरस्तु सम्पूर्णस्यैव ग्रन्थस्य कर्तृत्वेन मम्मटस्य समर्थकः । विषयेऽस्मिन् काव्यप्रकाशस्योपसंहारात्मकम्—

'इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता सङ्घटनैव हेतुः ॥'

इति पद्यमेवाश्रयः । तच्च व्याख्यातं यथा विदुषां ध्वनिकृत्प्रभृतीनां य एष मार्गः स्वसिद्धान्तवद्ग्रन्थगतः । तेन पृथगवस्थितोऽपि एकरूपतया प्रतिभाति तत्र सङ्घटनैव निमित्तम् । इति । अनेन एकस्यैव ग्रन्थकृत्त्वं समर्थितं भवति । यथा एवोऽद्धृतोऽलङ्काराध्वा विभिन्नोऽपीति नानाग्रन्थगतत्वेन पार्थक्येन स्थितोऽपि यदेकरूपो भाति तत्र सङ्घटना विसंस्थुलस्य सुखबोधायैकत्र सङ्ग्रहणं हेतुः । ग्रन्थाः सर्वेऽप्यत्रान्तर्लग्ना इत्यर्थः ।

अथ चाऽयं ग्रन्थोऽन्येनारब्धोऽपरेण समापित इति द्विखण्डोऽपि सङ्घटनावशादखण्डायते। सुघटं हि अलक्ष्यसन्धिर्भवतीति। पक्षोऽयं काव्यप्रकाशस्य द्विकर्तृकत्वसमर्थकः। उक्तमपि —

> काव्यप्रकाश इह कोऽपि निबन्धकृद्भ्यां
> द्वाभ्यां कृतेऽपि कृतिनां रसतत्त्वलाभः।
> लोकेऽपि विश्रुतमिदं नितरां रसालं
> बन्धप्रकाररचितस्य तरोः फलं यत्॥ इति।

परे तु समग्रस्यैव ग्रन्थस्य संयुक्तकर्तृकत्वं मन्यन्ते। यथा रुय्यकः प्रथमोल्लासकर्तृत्वेनाल्लटं स्मरति अर्जुनदेवस्तु तं सप्तमोल्लासकर्तृत्वेन। वस्तुतस्तु परिकरावधिग्रन्थः शेषभागाद्विलक्षण एव दृश्यते। पूर्वभागेऽलङ्कारनिरूपणे रुद्रटाचार्यः प्रायोऽनुसर्यते उत्तरभागे तु स्वातन्त्र्यमवलम्बितम्। एवमेव पूर्वभागे न कुत्र नवसाहसाङ्कचरितस्य पद्यान्युद्धृतानि उत्तरभागे तु तस्य षट् पद्यानि समुद्धृतानि सन्ति। तेन ग्रन्थस्यास्य द्विकर्तृकत्वमुपयुक्तमेव।

काव्यप्रकाशे सन्ति दश उल्लासाः। तत्र प्रथमे काव्यप्रयोजनं काव्यहेतुः काव्यलक्षणं काव्यभेदा द्वितीये शब्दार्थभेदाः अभिधा लक्षणा लक्षणामूलव्यञ्जना अभिधामूला व्यञ्जना चेति तृतीये अर्थव्यञ्जकता चतुर्थे ध्वनिविचारस्तत्र लक्षणामूला ध्वनिः अभिधामूला ध्वनिः—असंलक्ष्यक्रमः संलक्ष्यक्रमश्चेति पञ्चमे गुणीभूतव्यङ्ग्यविचारः व्यञ्जनास्थापना चेति षष्ठे चित्रकाव्यविचारः सप्तमे दोषविचारः अष्टमे गुणविचारः नवमे शब्दालङ्कारविचारः दशमे अर्थालङ्कारविचारश्चेति प्रतिपाद्यविषयाः।

काव्यप्रकाशस्य हि सन्ति परश्शताष्टीकाग्रन्थाः। एतादृशानशीत्यधिकान् ग्रन्थान् स्मरति वामनाचार्यः। तेष्वपि माणिक्यचन्द्रस्य सङ्केतः सरस्वतीतीर्थस्य बालचित्तानुरञ्जनी जयन्तभट्टस्य दीपिका सोमेश्वरस्य काव्यादर्शः श्रीधरस्य विवेकः चण्डीदासस्य दीपिका रुचकस्य सङ्केतः भास्करस्य दीपिका वाचस्पतिमिश्रस्य टीका सुबुद्धिमिश्रस्य टीका अच्युतठक्कुरस्य टीका विश्वनाथस्य दर्पणः पक्षधरस्य टीका रामनाथस्य रहस्यप्रकाशः पद्मनाभस्य टीका गोविन्दठक्कुरस्य काव्यप्रदीपः तस्यैवोदाहरणदीपिका रत्नपाणेः काव्यदर्पणः देवनाथस्य काव्यकौमुदी रविठक्कुरस्य मधुमती मुरारिमिश्रस्य टीका यशोधरस्य टीका रुचिकरस्य टीका परमानन्दस्य विस्तारिका भास्करस्य रहस्यनिबन्धः जयरामस्य तिलकः कस्यापि मणिसारा नरसिंहस्य नरसिंहमनीषा गदाधरस्य टीका जगदीशस्य रहस्यप्रकाशः राघवाचार्यस्य अवचूरिः आनन्दस्य निदर्शना श्रीवत्सलाञ्छनस्य सारबोधिनी विद्यासागरस्य टीका

महेश्वरस्य काव्यप्रकाशादर्शः रामकृष्णस्य भावार्थः कस्यापि तत्त्वबोधिनी पण्डितराजजगन्नाथस्य टीका कमलाकरस्य टीका वैद्यनाथस्य प्रभा भीमसेनस्य सुधासागरः महेशचन्द्रस्य तात्पर्यविवृतिः वामनाचार्यस्य बालबोधिनी हरिशङ्करस्य नागेश्वरी नागेशस्य प्रदीपोद्द्योतः गोकुलनाथशर्मणो विवरणञ्चेति केचन ग्रन्थाः।

तत्रापि कमलाकरस्य कमलाकरी नितान्तविस्तृता सर्वाङ्गपूर्णा च। असौ हि काव्यप्रकाशभावार्थाख्यटीकाकर्तुः श्रीनारायणभट्टसूनोः श्रीरामकृष्णभट्टस्य सुतः। महाराष्ट्रदेशीयोऽयं ब्राह्मणः १६४०–१७३० मितवैक्रमाब्दानभितः स्थितिमान् यतो हि स १६६८ मितवैक्रमाब्दे निर्णयसिधुं प्रणीतवान् १७१५ मितवैक्रमाब्दे सिद्धान्ततत्त्वविवेकञ्च। स्वग्रन्थस्योपसंहारवाक्ये स कथयति—

गुणिनोऽनन्तपुत्रस्य विनोदाय सतां मुदे।
कमलाकरभट्टेन श्रम एव विनिर्मितः॥

तर्के दुस्तर्कमेधः फणिपतिभणितिः पाणिनीये प्रपञ्चे
न्याये प्रायः प्रगल्भः प्रकटितपटिमा भाट्टशास्त्रप्रघट्टे।
प्राभः प्राभाकरी ये पथि मथितदुरूहान्तवेदान्तसिन्धुः
श्रौते साहित्यकाव्ये प्रखरतरगतिर्धर्मशास्त्रेषु यश्च॥
येनाकारि प्रोद्भटा वार्तिकस्य टीका चान्या विंशन्तिर्ग्रन्थमाला।
श्रीरामाङ्घ्र्योरर्पिता निर्णयेषु सिन्धुः शास्त्रे तत्त्वकौतूहले च॥
श्रीमन्नारायणाख्यात्समजनि विबुधो रामकृष्णाभिधानस्तत्सूनुः सर्वविद्याम्बुधिनिजचुलुकीकारतः कुम्भजन्मा।
टीकां काव्यप्रकाशे कमलपदपरस्त्वाकरोऽरीरचद्यः
श्रीपित्रोः पादपद्मे रघुपतिपदयोः स्वं श्रमं प्रार्पयच्च॥

रामकृष्णतनूजेन कमलाकरशर्मणा।
योऽत्र श्रमः कृतस्तेन प्रीयतां रावणान्तकः॥ इति।

तस्यादौ तु—

नत्वा गणेशं वाग्देवीं साम्बं शम्भुञ्च राघवम्।
श्रीरामकृष्णपितरं नत्वोमाख्याञ्च मातरम्॥

नारायणात्मजः श्रीमान् रामकृष्णात्मजः कृती ।
काव्यप्रकाशजां व्याख्यां तनोति कमलाकरः ॥
काव्यप्रकाशे टिप्पण्यः सहस्रं सन्ति यद्यपि ।
ताभ्यस्त्वस्या विशेषो यः पण्डितैः सोऽवधार्यताम् ॥ इति ।

असौ हि आश्वलायनो विश्वामित्रगोत्रः काशीवास्तव्यो महाराष्ट्राभिजनः । असौ हि महामीमांसकः । अनेन हि प्रणीता बहवो ग्रन्था येषु—

| | | |
|---|---|---|
| निर्णयसिन्धुः | शूद्रकमलाकरः | तत्त्वकमलाकरः |
| दानकमलाकरः | पूर्तकमलाकरः | मीमांसाकमलाकरः |
| शान्तिरत्नम् | प्रायश्चित्तरत्नम् | आह्निकप्रयोगः |
| षोडशसंस्कारप्रयोगः | हिरण्यकेशीयज्योतिष्टोमप्रयोगः | |
| गोत्रप्रवरदर्पणः | विवादताण्डवः | पूर्वमीमांसावार्तिकटीका |
| वेदान्तकुतूहलम् | | |

चेत्यादीनि नामतो ज्ञायन्ते । तेष्वपि निर्णयसिन्धुः सर्वत्र सर्वैः समादृतः ।

काव्यप्रकाशस्य सार्द्धैकशताधिकसङ्ख्याकासु टीकासु माणिक्यचन्द्रस्य सङ्केतः गोविन्दठक्कुरस्य काव्यप्रदीपः भट्टगोपालस्य साहित्यचूडामणिः भीमसेनस्य सुधासागरः सोमेश्वरस्य काव्यादर्शः परमानन्दस्य विस्तारिका गोकुलनाथस्य विवरणम् कमलाकरस्य कमलाकरी च नितान्तमेव विश्रुताः । तत्रापि काव्यप्रदीपः साहित्यचूडामणिः कमलाकरी सुधासागरश्चेत्येतच्चतुष्कं तु सर्वातिशायित्वेन विराजते । यथा हि काव्यप्रकाश आकरग्रन्थस्तथैव कमलाकर्यपि ।

जाता हि बहवोऽलङ्कारनिबन्धकर्तारः । ते च भामहदण्डिभट्टोद्भटरुद्रटभट्टनायकवामनमुकुलप्रतीहारेन्दुराजाः ( ध्वनिपूर्ववर्तित्वेन स्मृताः ) आनन्दवर्धनमहिमभट्टकुन्तकहृदयदर्पणकारअभिनवगुप्तशौद्धोदनिवाग्भटवाग्भटरुय्यकभोजराजमम्मटहेमचन्द्र-केशवमिश्रपीयूषवर्षविद्यानाथविश्वनाथगोविन्दठक्कुरविद्यानाथअप्पयदीक्षितजगन्नाथ-विद्याभूषणविश्वेश्वरअच्युतराजप्रभृतयश्च ।

तत्र भामह आद्य आलङ्कारिकः। यद्यपि अग्निपुराणे काव्यचर्चा दृश्यते तस्यार्षत्वञ्चाविहतमेव तथापि तस्य बहुविषयकत्वेन नालङ्कारनिबन्धत्वेन गृह्यते तत्। तेन भामहस्य काव्यालङ्कार एव काव्यशास्त्रपरम्परायां प्रथमः स्तम्भः। यथोक्तं प्रतापरुद्रयशोभूषणे विद्यानाथेन—

पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः।
वक्ष्ये सम्यगलङ्कारशास्त्रसर्वस्वसङ्ग्रहम् ॥ इति।

भट्टोद्भटोऽस्य ग्रन्थस्य व्याख्याता। भामहस्य स्थितिकालविषये पण्डिता नैकमत्यं भजन्ते। असौ विक्रमसमयमारभ्य तत्षष्ठशतकं यावत् कदाऽपि स्थितिमान् सम्भवति। असौ काश्मीरक इति विश्वस्यते।

आनन्दवर्धनो हि युगप्रवर्तक आचार्योऽलङ्कारशास्त्रे। तमारभ्य हि काव्यशास्त्रे ध्वनियुगः प्रवर्तते। तत्पूर्वं हि पञ्च प्रसिद्धा आचार्या अभूवन् येषु भामहभट्टोद्भट-रुद्रटा अलङ्कारप्राधान्यवादिनः दण्डी हि मार्गप्राधान्यसमर्थको वामनस्तु रीति-सम्प्रदायाधिवक्ता। आनन्दवर्धनस्तु तान् सर्वानतिशय्य काव्ये हि ध्वनेः प्राधान्यं समर्थयति। तस्य हि ध्वन्यालोको विषयेऽस्मिन् सुप्रतिष्ठितो ग्रन्थः। तदनुसारेण ध्वनिरेव काव्यस्यात्मा। तद्व्याकर्तुमशक्नुवद्भिः रीत्यादयो हि काव्यात्मत्वेन स्वीकृताः। ध्वनिप्रस्थापना ध्वनिभेदाः व्यञ्जकमुखेन ध्वनिविवेचना गुणीभूतव्यङ्ग्यचर्चा इत्यादयोऽस्य चर्चाविषयाः। आनन्दवर्धनस्य स्थितिकालः—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥

इति कल्हणोक्तिमाश्रित्य ९००-९५० वैक्रमाब्दानभितोऽनुमितः। प्रसिद्धोऽलङ्कार-शास्त्री अभिनवगुप्तोऽस्य टीकाकृत्।

अभिनवगुप्तो हि काश्मीरो महामाहेश्वरो वैक्रमैकादशशतकस्थितिमान्। तस्य हि ध्वन्यालोकस्य लोचनाख्या टीका महनीया विद्यते।

कुन्तकोऽपि काश्मीरो वक्रोक्तिसम्प्रदायस्याधिवक्ता। असौ हि वैक्रमैकादश-शतकोत्तरार्द्धमभितः स्थितिमान्।

भोजराजो हि १०७८ मितवैक्रमाब्दे राज्याधिरूढ आसीदिति तदभित एव तस्य स्थितिकालः। तस्य सरस्वतीकण्ठाभरणं शृङ्गारप्रकाशश्च अलङ्कारशास्त्रे प्रसिद्धौ ग्रन्थौ। स हि स्वयं कविः समालोचको विदुषामाश्रयदाता च। मम्मटोऽपि तत्समकालीनः एव तदनतिदूरानन्तरवर्ती वा।

विश्वनाथो हि काव्यशास्त्रस्य प्रसिद्ध आचार्यः। तस्य साहित्यदर्पणो नाट्यविषयं विहाय काव्यप्रकाशस्य सरलीकृतसंस्करणमेव। तथापि तस्य मौलिकता न विहता काव्यलक्षणादिषु। अनेन काव्यप्रकाशस्य दर्पणाख्या टीकाऽपि प्रणीता। स हि चतुर्दशशतकभवः।

जगन्नाथो हि प्रसिद्ध आचार्यः रसगङ्गाधरस्य प्रणेता। पण्डितराजोपाधि-विभूषितोऽयं वैक्रमसप्तदशशतकोत्तरार्धभवः।

विश्वेश्वरोऽपि सम्प्रदायस्यास्य महनीय आचार्यः। तस्य अलङ्कारकौस्तुभो हि प्रसिद्धो ग्रन्थः। कूर्माचलाभिजनस्यास्य वैक्रमाष्टादशशतकमभितः स्थितिकालः।

इत्थं हि भरतमुनिमारभ्य विश्वेश्वरपण्डितं यावत् द्विसहस्राब्दी अलङ्कारशास्त्रस्य विकासप्रसारकालः। विश्वेश्वरो हि सम्भवतः परम्पराया अस्या अन्तिम आचार्यः। सत्यमेवोच्यते—

भरतो भामहश्चैव कविरानन्दवर्धनः।
मम्मटो विश्वनाथश्च जगन्नाथस्तथैव च।
विश्वेश्वरः काव्यशास्त्रे ख्याता मान्या विचक्षणाः॥ इति।

तदस्य काव्यप्रकाशस्य कमलाकरभट्टप्रणीतटीकया सह सम्पादनावसरो मया लब्धः। कमलाकरी हि प्राञ्जला इदानीन्तनबालानां दुरूहेति तेषां सुखबोधाय सरल-विवृतेरावश्यकतामनुभूय मयाऽपि तत्र कमलाकरीमेवानुसृत्य व्याख्यान्तराणामपि सहयोगेन सरिताऽऽख्या काव्यप्रकाशविवृतिः प्रणीता। तत्रोक्तम्—

टीका या कमलाकरेण विहिता काव्यप्रकाशस्य वै,
तत्सम्पादनतत्परो यदहमद्राक्षं हि तत्रास्फुटम्।

तत्स्पष्टीकरणोद्यतोऽहमधुना न ज्ञानदर्पाश्रयाद्,
बालानां हितमाकलय्य मनसा दोषं क्षमन्तां बुधाः ।। इति ।

तथा च तुलनात्मकाध्ययनाय तस्या उपयोगं दृष्ट्वा विद्याभूषणप्रणीता साहित्य-कौमुद्याख्या विवृतिरप्यत्र सङ्कलिताऽस्ति । एतेन काव्यप्रकाशस्य समग्राध्ययनं सुकरं भवतीति मे विश्वासः ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः । सन्त्येवाऽत्र दोषा मतिविभ्रमान्मुद्रण-दोषादपि । काव्यप्रकाशो हि अतिदुरवगाहविषयः । तेन तद्व्याख्याने भ्रमः प्रमादो वा स्वाभाविक एव । इदन्तु प्रार्थ्यते —

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्तु ते किमपि तान् प्रति नैष यत्नः ।
यत्नस्त्वयं खलु कृतेऽल्पधियां जनानां
काव्यप्रकाशविषयाध्ययनोत्सुकानाम् ।। इति ।

एतत्तु सत्यमेव—

क्वाऽहं मन्दमतिः क्व चातिगहनः काव्यप्रकाशाभिधो
ग्रन्थो यत्र धियोऽपि निर्मलधियामाकुण्ठिता वै पुनः ।
सर्वं सत्यमिदं तथापि सुधियां प्राचां कवीनां वचो-
राशेः कल्पतरोः सुसन्निधिवशात् किञ्चित्क्वचित्साध्विति ।।

स्वकीयाया विवृत्याः प्रणयने मया कतिपयाः प्राचीनाष्टीका अपि समवलोकिता गृहीताश्च कतिपये विषयास्ततः । ताश्च श्रीगोविन्दठक्कुरस्य काव्यप्रदीपः श्रीनागेश-भट्टस्य प्रदीपोद्द्योतः वैद्यनाथस्य प्रभा माणिक्यचन्द्रस्य सङ्केतः रविभट्टाचार्यस्य मधुमती परमानन्दस्य विस्तारिका श्रीवत्सलाञ्छनस्य सारबोधिनी भट्टगोपालस्य साहित्यचूडामणिः भीमसेनस्य सुधासागरः वामनशर्मणो बालबोधिनी च । एता हि—

प्रयत्नेन च सङ्गृह्य समालोच्य च तत्त्वतः ।
सारञ्च ताभ्य आदाय प्रणीता विवृतिर्मया ।।

सन्त्येव दोषा बहवः कृतौ मे
तथाप्युपेक्षा न बुधैर्विधेया ।
न केतकी किं बहुकण्टकाऽपि
सन्धार्यते मूर्ध्नि नितम्बिनीभिः ॥

इति शम् ।

काशी
आग्रहायणसङ्क्रान्तिः
२०४९ वै०

विदुषां वशंवदः
लोकमणिदाहालः

काव्यप्रयोजनकारणस्वरूपनिर्णयात्मकः

# प्रथम उल्लासः

वाग्देवतास्तुतिरूपं मङ्गलम्—

नियतिकृतनियमरहितां ह्लादैकमयीं अनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधतीं भारती कवेर्जयति ॥१॥

काव्यप्रयोजनानि—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥२॥

कवितासामग्री—

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यासः इति हेतुस्तदुद्भवे ॥३॥

काव्यस्वरूपम्—

तददोषौ शब्दार्थौ सगुणौ अनलङ्कृती पुनः क्वापि ।

उत्तमं काव्यम्—

इदमुत्तमं अतिशयिनि व्यङ्ग्ये वाच्यात् ध्वनिः बुधैः कथितः ॥४॥

मध्यमाधमकाव्ये—

अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।
शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥५॥

इति प्रथमोल्लासः ।

—।०।—

अथ शब्दार्थस्वरूपनिर्णयो नाम

# द्वितीय उल्लासः

शब्दार्थयोः स्वरूपविभागौ—

स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।
वाच्यादयः तदर्थाः स्युः तात्पर्यार्थोऽपि केषुचित् ॥६॥

ततोः व्यञ्जकत्वं च—

सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।

वाचकस्वरूपम्—

साक्षात् सङ्केतितं योऽर्थ अभिधत्ते स वाचकः ॥७॥

सङ्केतितार्थविभागः—

सङ्केतितः चतुर्भेदः जात्यादिः जातिरेव वा ।

सङ्केतितस्यैव मुख्यत्वम् अभिधास्वरूपं च—

स मुख्योऽर्थः तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥८॥

लक्षणायाः स्वरूपम्—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽऽरोपिता क्रिया ॥९॥

लक्षणायाः उपाधिकृतः षोढा विभागः, तत्र शुद्धे उपादानलक्षणा—लक्षण-लक्षणे—

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥

शुद्धे गौण्यौ च सारोपलक्षणा-साध्यवसानलक्षणे—

सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।
विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥११॥

अनयोः गौण-शुद्धरूपेण द्वेधा विभागे निमित्तोपपादनेन निगमनम्—

भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणा तेन षड्विधा ॥१२॥

( अव्यङ्ग्य ) रूढिलक्षणा—( गूढागूढव्यङ्ग्य ) फललक्षणाभेदेन पुनः लक्षणायाः व्यञ्जनकृतः त्रिधा विभागः—

व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।
तच्च गूढमगूढं वा तदेषा कथिता त्रिधा ॥१३॥

लाक्षणिकस्वरूपम्—

तद्भूः लाक्षणिकः ।

व्यञ्जनस्वरूपम्—

तत्र व्यापारो व्यञ्जनात्मकः ।

व्यञ्जनायाः लक्षणया अगतार्थत्वोपपादनपूर्वकं व्यञ्जनास्थापनम्—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥१४॥
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।

नाभिधा समयाभावात् हेत्वभावान्न लक्षणा ॥१५॥
लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।

न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥
एवमप्यनवस्था स्यात् या मूलक्षयकारिणी ।

प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥

ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।
विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते ॥१८॥

नानार्थस्थले अभिधातिरिक्त-तन्मूलव्यञ्जनास्थापनम्—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैः अवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥१९॥

व्यञ्जकयोः शब्दार्थयोः स्वरूपम्—

तद्युक्तो व्यञ्जकः शब्दो यत् सोऽर्थान्तरयुक् तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥२०॥

इति द्वितीय उल्लासः ।

—:०:—

अर्थव्यञ्जकतानिर्णयो नाम

## तृतीय उल्लासः

अर्थानां अर्थान्तरव्यञ्जकतानिरूपणस्य प्रक्रतत्वम्—

अर्थाः प्रोक्ताः पुरा, तेषां अर्थव्यञ्जकतोच्यते ।

आर्थीव्यञ्जनास्वरूपम्—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥२१॥

प्रस्तावदेशकालादेः वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुः व्यापारो व्यक्तिरेव सा ॥२२॥

शब्दसहकृतस्यैव अर्थस्य व्यञ्जकत्वम्—

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता ॥२३॥

इति श्रीकाव्यप्रकाशकारिकासु तृतीयोल्लासकारिकाः ।

—:०:—

अथ ध्वनिनिर्णयो नाम

## चतुर्थ उल्लासः

लक्षणामूलध्वनिः, तद्विभागश्च—

अविवक्षितवाच्यो यः तत्र वाच्यं भवेद् ध्वनौ ।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥

अभिधामूलध्वनिः, तद्विभागश्च—

विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।
कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥२५॥

तत्र अलक्ष्यक्रमव्यङ्ग्यस्य विभागः, रसादीनां रसवदाद्यलङ्कारात् भिन्नत्वे हेतुश्च—

रसभावतदाभासभावशान्त्यादिरक्रम ।
भिन्नो रसाद्यलङ्कारात् अलङ्कार्यतया स्थितः ॥२६॥

रसस्वरूपम्—

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥२७॥
विभावाः अनुभावास्तत् कथ्यते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥२८॥

रसस्य अष्टधा विभागः--

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥२९॥

आस्वादैकरूपस्यापि रसस्य भेदकानां स्थायिभावानां भेदाः--

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥३०॥

व्यभिचारिभावानां भेदाः --

निर्वेदग्लानिशङ्काख्याः तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥३१॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥३२॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिः तथोन्मादः तथा मरणमेव च ॥३३॥
त्रासश्चैव वितर्कश्च विज्ञेयाः व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥३४॥

शान्तस्य नवमरसस्यापि सत्वम्--

निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

भावस्वरूपम् --

रतिर्देवादिविषया व्यभिचारो तथाञ्जितः ॥३५॥
भावः प्रोक्तः ।

रसाभासभावाभासयोः स्वरूपम्--

तदाभासा अनौचित्यप्रवर्तिताः ।

भावशान्त्युदयसन्धिसवलतानां निर्देशः--

भावस्य शान्तिरुदयः सन्धिः सवलता तथा ॥३६॥

रसापेक्षया सातिशयचमत्कारकत्वे भावशान्त्यादीनामपि अङ्गित्वोपपत्तिः--

मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।

लक्ष्यव्यङ्ग्यक्रमविभागः--

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥३७॥

शब्दार्थोभयशक्त्युत्थः त्रिधा स कथितो ध्वनिः ।

तत्र शब्दशक्त्युद्भवस्वरूपम्—

अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥३८॥
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।

अर्थशक्त्युद्भवस्वरूपम्, भेदाश्च—

अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ॥३९॥
प्रौढोक्तिमात्रात् सिद्धो वा कवेः तेनोम्भितस्य वा ।

वस्तु वालङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥४०॥
वस्त्वलङ्कारमथवा तेनासौ द्वादशात्मकः ।

शब्दार्थोभयशक्त्युद्भवस्वरूपम्—

शब्दार्थोभयभूरेकः ।

ध्वनिभेदसङ्कलनम्—

भेदा अष्टादशास्य तत् ॥४१॥

रसवदादिभेदेन आधिक्यनिरासे हेतुः—

रसादीनामनन्तत्वात् भेद एको हि गण्यते ।

तत्र पदवाक्याश्रयध्वनिविभागः—

वाक्ये द्व्युत्थः, पदेऽप्यन्ये ।

तत्र अर्थशक्तिमूलद्वादशविधध्वनेः प्रबन्धाश्रयत्वं च—

प्रबन्धेऽप्यर्थशक्तिभूः ॥४२॥

रसादिध्वनेराश्रयाः—

पदैकदेशरचनावर्णेष्वपि रसादयः ।

शुद्धभेदानां परिगणनम्—

भेदाः तदेकपञ्चाशत् ।

सङ्कीर्णभेदानां परिगणनम्—

तेषां चान्योन्ययोजने ॥४३॥

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

वेदखाब्धिवियच्चन्द्राः ।

आहव्यसर्वभेदपरिगणनम् —

शरेषुयुगखेन्दवः ॥४४॥

इति श्रीकाव्यप्रकाशमूलकारिकासु
चतुर्थ उल्लासः ।

—:०:—

अथ काव्यप्रकाशमूलकारिकासु
ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदो नाम

## पञ्चम उल्लासः

गुणीभूतव्यङ्ग्यभेदाः —

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्वाऽऽक्षिप्तमसुन्दरम् ॥४५॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।

एषामेव अवान्तरभेदसत्तासूचना—

एषां भेदाः यथायोगं वेदितव्याश्च पूर्ववत् ॥४६॥

उक्तविजातीयव्यङ्ग्ययोगात् ध्वनिभेदस्यानन्तत्वम्—

सालङ्कारैः ध्वनेः तैश्च योगः संसृष्टिसङ्करैः ।
अन्योन्ययोगादेवं स्यात् भेदसंख्याऽतिभूयसी ॥४७॥

इति श्रीकाव्यप्रकाशमूलकारिकासु
पञ्चम उल्लासः ।

—:०:—

अथ शब्दार्थचित्रनिरूपणं नाम

## षष्ठ उल्लासः

शब्दार्थचित्रं यत् पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतः तत्र स्थितिः शब्दार्थचित्रयोः ॥४८॥

इति काव्यप्रकाशकारिकासु

षष्ठ उल्लासः ।

—:०:—

अथ काव्यप्रकाशमूलकारिकासु दोषप्रदर्शनो नाम

## सप्तम उल्लासः

दोषसामान्यलक्षणम्—

मुख्यार्थहतिर्दोषः रसश्च मुख्यः तदाश्रयाद्वाच्यः ।
उभयोपयोगिनः स्युः शब्दाद्याः तेन तेष्वपि सः ॥

पददोषविशेषपरिगणनम्—

दुष्टं पदं श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थनिरर्थकमवाचकं त्रिधाऽश्लीलम् ॥
सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥

पददोषाणामेव वाक्ये पदैकदेशे चातिदेशः—

अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते, पदस्यांशेऽपि केचन ॥

वाक्यमात्रगामिनो दोषाः—

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥

अर्थान्तरैकवाचकमभवन्मतयोगं अनभिहितवाच्यम् ।
अपदस्थपदसमासं सङ्कीर्णं गर्भितं प्रसिद्धिहतम् ॥
भग्नप्रक्रमसक्रममतपरार्थं च वाक्यमेव तथा ।

अर्थदोषाः—

अर्थोऽपुष्टः कष्टः व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥
साकांक्षोऽपदमुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।
विध्यनुवादायुक्तः त्यक्तपुनस्स्वीकृतोऽश्लीलः ॥

अर्थदोषस्य क्वचिददोषत्वम्—

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
सन्निधानादिबोधार्थं स्थितेष्वेतत्समर्थनम् ॥

अर्थदोषवत् पददोषाणामपि क्वचिददोषत्वम्, गुणत्वं च—

ख्यातेऽर्थे निर्हेतोः अदुष्टतानुकरणे तु सर्वेषाम् ।
वक्त्राद्यौचित्यवशात् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ ॥

साक्षाद्रसविरोधिनो दोषाः—

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिः अनुभावविभावयोः ॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदौ अङ्गस्याप्यतिविस्तृतिः ॥
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥

रसदोषाणां क्वचिददोषत्वम्—

न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित् ।
सञ्चार्यादेः विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥

रसविरोधपरिहारोपायः—

आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः ॥

रसविरोधपरिहारोपायान्तरम्—

स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥

इति काव्यप्रकाशमूलकारिकासु

सप्तम उल्लासः ।

—:०:—

अथ काव्यप्रकाशमूलकारिकासु गुणनिर्णयो नाम

## अष्टम उल्लासः

गुणस्वरूपम्—

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युः अचलस्थितयो गुणाः ॥

अलङ्कारस्वरूपम्—

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥

गुणविभागः—

माधुर्यौजःप्रसादाख्याः त्रयस्ते न पुनर्दश ।

माधुर्यलक्षणम्—

आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥

माधुर्यव्याप्तिः—

करुणे विप्रलम्भे यत् शान्ते चातिशयान्वितम् ।

ओजोलक्षणम्—

दीप्त्यात्मविस्तृतेर्हेतुः ओजो वीररसस्थितिः ॥

ओजोगुणव्याप्तिः—

बीभत्सरौद्ररसयोः तस्याधिक्यं क्रमेण च ।

प्रसादलक्षणम्—

शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः ॥
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ।

शब्दार्थयोर्द्वयोरपि सगुणत्वोपपत्तिः—

गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥

गुणानां दशत्वनिषेधसमर्थनम्—

केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचित् न ततो दश ॥
तेन नार्थगुणाः वाच्याः ।

शब्दगुणव्यञ्जकाः—

प्रोक्ताः शब्दगुणाश्च ये ।
वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥

माधुर्यव्यञ्जकाः—

मूर्ध्नि वर्णान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्तिः मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥

ओजोव्यञ्जकाः—

योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।
टादिः शषौ वृत्तिदैर्घ्यं गुम्भ उद्धत ओजसि ॥

प्रसादव्यञ्जकाः—

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।
साधारणः समग्राणां स प्रसादो गुणो मतः ॥

उक्तार्थानां क्वचिदपवादकथनम्—

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।
रचनावृत्तिवर्णानां अन्यथात्वमपीष्यते ॥

इति काव्यप्रकाशमूलकारिकासु
अष्टम उल्लासः ।

काव्यप्रकाशमूलकारिकासु शब्दालङ्कारनिर्णयो नाम

# नवम उल्लासः

वक्रोक्त्यलङ्कारः—

यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा॥

अनुप्रासालङ्कारः—

वर्णसाम्यमनुप्रासः छेकवृत्तिगतो द्विधा।
सोऽनेकस्य सकृत्पूर्वः एकस्याप्यसकृत्परः॥

उपनागरिका-परुषा-कोमलाः वृत्तयः—

माधुर्यव्यञ्जकैः वर्णैः उपनागरिकोच्यते।
ओजः प्रकाशकैस्तैस्तु परुषा, कोमला परैः॥

वृत्तीनामासां मतान्तरानुसारेण नामान्तराणि—

केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः।

पदगतस्य शब्दानुप्रासस्य द्वैविध्यम्, नामगतस्य तु त्रैविध्यम्—

शब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः॥
पदानां सः, पदस्यापि, वृत्तावन्यत्र तत्र वा।
नाम्नः स वृत्त्यवृत्त्योश्च, तदेवं पञ्चधा मतः॥

यमकालङ्कारः तद्विभागश्च—

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः।
यमकम्, पादतद्भागवृत्ति तद्यात्यनेकताम्॥

श्लेषालङ्कारः, तत्र अष्टधा सभङ्गश्लेषः—

वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः।
श्लिष्यन्ति, शब्दाः श्लेषोऽसौ अक्षरादिभिरष्टधा॥

अभङ्गश्लेषालङ्कारः—

भेदाभावात् प्रकृत्यादेः भेदोऽपि नवमो भवेत्।

चित्रालङ्कारः—

तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता॥

शब्दार्थोभयवृत्तिः पुनरुक्तवदाभासालङ्कारः तद्विभागश्च—

पुनरुक्तवदाभासः विभिन्नाकारशब्दगा ।
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम् ॥

इति नवम उल्लासः ।

—:०:—

काव्यप्रकाशमूलकारिकासु अर्थालङ्कारनिरूपणं नाम

# दशम उल्लासः

उपमालङ्कारः तदवान्तरभेदाः—

साधर्म्यमुपमा भेदे, पूर्णा लुप्ता च, साऽग्रिमा ।
श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते यथा ॥
तद्वत् धर्मस्य लोपे स्यात् न श्रौती तद्धिते पुनः ।
उपमानानुपादाने वाक्यगाऽथ समासगा ॥
वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।
कर्मकर्त्रोर्णमुलि, एतद्द्विलोपे क्विप् समासगा ॥
धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।
क्यचि वाद्युपमेयासे त्रिलोपे च समासगा ॥

अनन्वयालङ्कारः—

उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।
अनन्वयः...... ।

उपमेयोपमालङ्कारः—

विपर्यासः उपमेयोपमा तयोः ॥

उत्प्रेक्षालङ्कारः—

सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।

सन्देहालङ्कारः—

ससन्देहस्तु भेदोक्तौ तदनुक्तौ तु संशयः ॥

रूपकालङ्कारः—

तद्रूपकमभेदो यः उपमानोपमेययोः।
समस्तवस्तुविषयां श्रौता आरोपिता यथा ॥
श्रौता आर्थश्च ते यस्मिन् एकदेशविवर्ति तत्।
साङ्गमेतत्, निरङ्गं तु शुद्धं, माला तु पूर्ववत् ॥
नियतारोपणोपायः स्यादारोपः परस्य यः।
तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥

अपह्नुत्यलङ्कारः—

प्रकृतं यन्निषिध्यान्यत् साध्यते स त्वपह्नुतिः।

श्लेषालङ्कारः—

श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत् ॥

समासोक्त्यलङ्कारः—

परोक्तिः भेदकैः श्लिष्टैः समासोक्तिः—

निदर्शनालङ्कारः—

निदर्शना।
अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ॥
स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा।

अप्रस्तुतप्रशंसालङ्कारः—

अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥
कर्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥

अतिशयोक्त्यलङ्कारः—

निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः।
विज्ञेयाऽतिशयोक्तिः सा—

प्रतिवस्तूपमालङ्कारः—

प्रतिवस्तूपमा तु सा।
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ॥

दृष्टान्तालङ्कारः—

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ।

दीपकालङ्कारः—

सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ॥
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ।
मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ॥

तुल्ययोगितालङ्कारः—

नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ।

व्यतिरेकालङ्कारः—

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ॥
हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ।
शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत् त्रिरष्ट तत् ॥

आक्षेपालङ्कारः—

निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तिविषयः स आक्षेपो द्विधा मतः ॥

विभावनालङ्कारः—

क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ।

विशेषोक्त्यलङ्कारः—

विशेषोक्तिरखण्डेषु कारणेषु फलावचः ॥

यथासङ्ख्यालङ्कारः—

यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ।

अर्थान्तरन्यासालङ्कारः—

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ॥
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ।

विरोधालङ्कारः—

विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ॥
जातिश्चतुर्भिः जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ।
क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश ॥

स्वभावोक्त्यलङ्कारः—

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ।

व्याजस्तुत्यलङ्कारः—

व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ॥

सहोक्त्यलङ्कारः—

सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ।

विनोक्त्यलङ्कारः—

विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः ॥

परिवृत्त्यलङ्कारः—

परिवृत्तिर्विनिमयः योऽर्थानां स्यात्समासमैः ।

भाविकालङ्कारः—

प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ॥
तद्भाविकम्—

काव्यलिङ्गालङ्कारः—

काव्यलिङ्गं हेतोर्वाक्यपदार्थता ।

पर्यायोक्तालङ्कारः—

पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ॥

उदात्तालङ्कारः—

उदात्तं वस्तुनः सम्पत्, महतां चोपलक्षणम् ।

समुच्चयालङ्कारः—

तत्सिद्धिहेतावेकस्मिन् यत्रान्यस्तत्करं भवेत् ।
समुच्चयोऽसौ स त्वन्यो युगपद्या गुणक्रियाः ॥

पर्यायालङ्कारः—

एकं क्रमेणानेकस्मिन् पर्यायः, अन्यस्ततोऽन्यथा ।

अनुमानालङ्कारः—

अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः ।

परिकरालङ्कारः—

विशेषणैर्यत्साकूतैः उक्तिः परिकरस्तु सः ॥

व्याजोक्त्यलङ्कारः—

व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ।

परिसंख्यालङ्कारः—

किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते ॥
तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ।

कारणमालालङ्कारः—

यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ॥
तदा कारणमाला स्यात्—

अन्योन्यालङ्कारः—

क्रियया तु परस्परम् । वस्तुनोर्जनने॒ऽन्योन्यम् ।

उत्तरालङ्कारः—

उत्तरश्रुतिमात्रतः ॥
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ।
असकृद्यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम् ॥

सूक्ष्मालङ्कारः—

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ।
धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥

सारालङ्कारः—

उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ।

असङ्गत्यलङ्कारः—

भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ॥
युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसङ्गतिः ।

समाध्यलङ्कारः—

समाधिः सुकरं कार्यं कारणान्तरयोगतः ॥

समालङ्कारः—

समं योग्यतया योगो यदि सम्भावितः क्वचित् ।

विषमालङ्कारः—

क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनाभियात् ॥
कर्तुः क्रियाफलावाप्तिः नैवानर्थश्च यद्भवेत् ।
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिया ॥
क्रमेण च विरुद्धे यत् स एष विषमो मतः ।

अधिकालङ्कारः—

महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ॥
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ।

प्रत्यनीकालङ्कारः—

प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ॥
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ।

मीलितालङ्कारः—

समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ॥
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ।

एकावल्यलङ्कारः—

स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् ॥
विशेषणतया यत्र वस्तु सैकावली द्विधा ।

स्मरणालङ्कारः—

यथानुभवमर्थस्य दृष्टे तत् सदृशे स्मृतिः ॥
स्मरणम्—

भ्रान्तिमदलङ्कारः—

—भ्रान्तिमान् अन्यसंवित्तत्तुल्यदर्शने ।

प्रतीपालङ्कारः—

आक्षेप उपमानस्य प्रतीपमुपमेयता ॥
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम् ।

सामान्यालङ्कारः—

प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ॥
ऐकात्म्यं बध्यते योगात् तत्सामान्यमिति स्मृतम् ।

विशेषालङ्कारः—

विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ॥
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ।
अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ॥
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ।

तद्गुणालङ्कारः—

स्वमुत्सृज्य गुणं योगात् अत्युज्ज्वलगुणस्य यत् ॥
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ।

अतद्गुणालङ्कारः—

तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ॥

व्याघातालङ्कारः—

यद्यथा साधितं केनाप्यपरेण तदन्यथा ।
तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥

संसृष्टिः—

सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ।

सङ्करः—

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः ॥

एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ।
स्फुटमेकत्रविषये शब्दार्थालङ्कृतिद्वयम् ॥
व्यवस्थितं च तेनासौ त्रिरूपः परिकीर्तितः ।

निगमनम्--

एषां दोषा यथायोगं सम्भवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिता ॥

इति श्रीमम्मटकृतकाव्यप्रकाशमूलकारिकासु
दशम उल्लासः ।

--:०--

वृता काव्यप्रकाशस्य ससूची-मूलकारिका ।
श्रीजगन्नाथपुत्रेण कुलनाथेन धीमता ॥

--:०:--

# विषयाणाम् अनुक्रमणी

## प्रथम उल्लासः

(काव्यप्रयोजनकारणस्वरूपनिर्णयात्मकः)

—:०:—

## द्वितीय उल्लासः

( शब्दार्थस्वरूपनिर्णयात्मकः )

विषयः पृष्ठम्

## तृतीय उल्लासः

( अर्थव्यञ्जकतानिर्णयात्मकः )



—:०:—

## चतुर्थ उल्लासः

( ध्वनिनिर्णयात्मकः )

विषयः पृष्ठम्

विषयः पृष्ठम्

—:०:—

## पञ्चम उल्लासः

( ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदात्मकः )

विषयः　　　　पृष्ठम्

विषयः पृष्ठम्



—:०:—

## षष्ठ उल्लासः

( शब्दार्थचित्रनिरूपणात्मकः )



—:०:—

# का
# व्य
# प्र
# का
# शः

* कमलाकरीव्याख्योपेतः

* सरिताख्यविवृतिसहितः

* साहित्यकौमुदीसमलङ्कृतः

॥ श्रीः ॥

# अथ

# काव्यप्रकाशः

आचार्यमम्मटाल्लट(लक)प्रणीतवृत्तिसहितः

श्रीमत्कमलाकरभट्टप्रणीतकमलाकरीटीकोपेतः

लोकमणिदाहालकृतसरिताख्यविवृत्तिविभूषितः

## अथ प्रथम उल्लासः

[वृत्तिः] ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति—

[कमला०] नत्वा गणेशं वाग्देवीं साम्बं शम्भुञ्च राघवम्।
श्रीरामकृष्णपितरं नत्वोमाख्याञ्च मातरम् ॥ १ ॥
नारायणात्मजश्रीमद्रामकृष्णात्मजः कृती।
काव्यप्रकाशगां व्याख्यां तनोति कमलाकरः ॥ २ ॥
काव्यप्रकाशे टिप्पण्यः सहस्रं सन्ति यद्यपि।
ताभ्यस्त्वस्या विशेषो यः पण्डितैः सोऽवधार्यताम् ॥ ३ ॥

स्वकृतकारिकाः व्याचिख्यासुराद्यश्लोकस्यावतारिकामाह ग्रन्थेति—एकार्थको वाक्यसन्दर्भो ग्रन्थः परमानन्दस्तु सम्बन्धप्रयोजनज्ञानाहितशुश्रूषाजन्यश्रुतिविषयः शब्दसन्दर्भो ग्रन्थः सम्बन्धो वाच्यवाचकभावादिस्तस्य प्रयोजनस्य च ज्ञानेन शुश्रूषा ततो ग्रन्थश्रवणमित्याह। तन्न। घटमानयेत्यादिवाक्येऽतिव्याप्तेः। पूर्वोत्तरपक्षादि-पञ्चाङ्गकं वाक्यं ग्रन्थ इति श्रीवत्सलाञ्छनः। तत्तुच्छं भारतादावव्याप्तेः। तेन पूर्वोक्तमेव साधुः। ग्रन्थो महावाक्यं महत्त्वञ्च विवक्षितार्थपरानपेक्षत्वमिति देवनाथः। आरम्भः आद्या कृतिः। यत्तु आरभ्यतेऽस्मिन्नित्यारम्भः प्राक्काल इति स एवाऽऽह तन्न। न हि दर्शपौर्णमासावारभ्यमाना इत्यादौ कालाङ्गत्वमिष्टेः। आद्यकृतौ रूढेर्योगाद् बलवत्त्वाच्चैतेनाद्यावयव आरम्भ इत्यपास्तं कर्मणो निरवयवत्वाद् द्वितीयादि-प्रयोगे तदापत्तेश्च। आरम्भे तत्प्राक्काले इति केचित्। तन्न। लक्षणापत्तेः। अत

आरम्भे इति निमित्तसप्तमी चर्मणि द्वीपिनं हन्तीतिवत्। तन्निश्चयवांश्चाधिकारी तेनाद्यकृतेः कथमाधारत्वमित्यपास्तम्। विघ्नेति--विशिष्टो धातो ध्वंसो वैशिष्ट्यञ्च समाप्त्ययोगव्यवच्छेदः समाप्तौ मङ्गलस्यान्वयव्यतिरेकाभ्यां व्यभिचारादन्यथा सिद्धेश्च विघ्नध्वंसस्यैव फलत्वमिति भावः। वाङ्मयग्रन्थस्य तदेकसाध्यत्वात्समुचितां योग्यामिष्टामाराध्यां भारतीरूपां परामृशति स्तौतीति ललाटभास्करः। नमस्कार्यत्वेन स्मरतीति मधुमतीसुबुद्धिमिश्रौ। सर्वोत्कृष्टत्वेन प्रतिसन्धत्ते इति परमानन्ददेवनाथौ।

[सरि०] ध्यात्वा शिवौ गुरुं नत्वा कात्यो लोकमणिर्द्विजः।
श्रीपर्शुरामतनयो विष्णुमायासुकुक्षिजः॥ १॥
स्मृत्वाऽन्तर्देवसरितां चित्तगां चिन्मयीं पराम्।
कुर्वे काव्यप्रकाशस्य विवृतिं सरिताह्वाम्॥ २॥
टीका या कमलाकरेण विहिता काव्यप्रकाशस्य वै
तत्सम्पादनतत्परो यदहमद्राक्षं हि तत्रास्फुटम॥
तत्स्पष्टीकरणोद्यतोऽहमधुना न ज्ञानदर्पाश्रयात्
छात्राणां हितमाकलय्य मनसा दोषं क्षमन्तां बुधाः॥ ३॥

ग्रन्थारम्भे--ग्रन्थस्य वाक्यसन्दर्भविशेषस्यारम्भे उपक्रमे प्रक्रमनिमित्तमित्याशयः। विघ्नविघाताय---विघ्नस्य प्रारिप्सितप्रतिवन्धकदुरितस्य विघाताय निर्मूलनाशाय—तादर्थ्ये चतुर्थी। समुचितेष्टदेवतां समुचिता विषयानुकूला ग्रन्थस्य वाङ्मयाधिकृतया वाग्देव्या अत्रौचित्यमिष्टा स्वस्वानुकूला भक्तिश्रद्धाविशयेनाराधितत्वमेवेष्टत्वं च या देवता देव्येन न तु गुर्वादयस्ताम्, ग्रन्थकृत्==ग्रन्थं वक्ष्यमाणवाक्यसन्दर्भविशेषं काव्यप्रकाशाभिधं करोति निबध्नाति तच्छील इति। ताच्छील्ये क्विप् प्रत्ययलक्षणेन तुक् च। मम्मटाचार्य इत्याशयः। केचिन्मम्मटस्य कारिकाकृत्त्वं संशेरते। साहित्यकौमुदीकृद्विद्याभूषणस्तु कारिकाभागं भरतमुनिकृतिं मत्वा पृथगेव वृत्तिग्रन्थमपि तस्य प्रणयति। एवमेव महेश्वरजयरामावपि। किन्तु अनेके विचक्षणास्तन्न साधु मन्यन्ते। परामृशति अनुसन्धत्ते आराधयतीत्याशयः।

[विद्या० वृत्तिः]---

कारुण्याद् गजपतिराशु यस्य भेजे
निर्धूताखिलवृजिनः परं प्रमोदम्।
चैतन्याकृतिमजितं जितं स्वभक्तै-
स्तं वन्दे मधुरियसागरं मुरारिम्॥ १॥

सूत्राणां भरतमुनीश्वर्वणितानां
वृत्तीनां मितवपुषां कृतौ ममास्याम् ।
लक्ष्याणां हरिगुणशालिनाञ्च सत्वा
त्कुर्वन्तु प्रगुणधियो बतावधानम् ॥ २ ॥

निष्प्रत्यूहप्रारिप्सितपरिसमाप्तिकामो मुनिः समुचितां गीर्देवीं प्राक्प्रणमति ।

[कारिका] **नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥**

[कमला०] नियतीति—कवेर्भारती जयति सर्वोत्कर्षेण वर्तते न तु वर्तता-मित्यर्थः । उत्कर्षस्यासिद्धत्वेन निकृष्टतापत्तेः यद्यपि भारतीपदं देवतापरं न च शब्द-देवतोभयशक्तं शब्दे गौणत्वाद् वृत्तिद्वयविरोधान्नाप्यधिष्ठातरि लक्षणा । अत्र कविपद-सन्निधानात्तु शब्दपरं कविपदवैयर्थ्यात् । कोशादौ देवतायां शक्तत्वेन लक्षणा-योगाच्च । न च कवेर्निर्मितिमादधतीत्यन्वयः । एतद्विलक्षणा तु कविवाङ् निर्मिति-रिति व्याख्या विरोधात् । तथापि प्रतिमादौ विष्ण्वादिपदवदधिष्ठातुरभेदात्तथा व्यपदेशः । यद्वा कवेर्निर्मितिमिति सम्बन्धः । सप्तम्यर्थे वा षष्ठी । निर्मीयत इति निर्मितिः काव्यम् । कवौ तन्निःक्षिपन्तीत्यर्थः । आदधती प्रकाशयन्तीति श्रीवत्स-लाञ्छनः । यद्वा निर्मीयते काव्यमनयेति निर्मितिः शक्तिस्तां कवौ निक्षिपन्ती, देवताप्रसादेन हि काव्यबीजभूता शक्तिराधीयते । ब्रह्मसृष्ट्यपेक्षयोत्कर्षहेतूनाह **नियतीति** नियम्यन्ते सौरभादीन्यनयेति नियतिरसाधारणो धर्मः पद्मत्वादिस्तत्कृतो नियमो यत्र पद्मत्वं तत्र सौरभविशेष इति व्याप्तिस्तद्रहितां तेन विनाऽपि कान्तामुखे तत्सत्त्वात् । यद्वा नियम्यतेऽनयेति नियतिः कारणतानियामिका शक्तिः यद्वा नियम्यते कार्यमनयेति नियतिः कारणम्, तद्रहितां ता विनाऽपि मुखे पद्मत्वावभासात्, यद्वा नियतिर्विधिरीश्वरस्तत्कृतो नियमः शब्दार्थयोर्वाच्यवाचकत्वादि पद्मादिपदात्केसर-पत्रादिमानर्थः प्रत्येतव्यः इत्येवंविधेश्वरेच्छैव शक्तिस्तद्रहितां काव्ये पत्रादिकं विनापि मुखे पद्मादिप्रयोगात् यद्वा नियतिर्विधिरदृष्टं वा तत्कृतो नियमोऽयं दुःखी सुखीति तद्रहितामत्र सर्वसुखोत्पत्तेः । **ह्लादेति** । ह्लादेन सुखेनैकमयीमेकस्वभावां यद्वा एकशब्दो मात्रार्थे स्वार्थे मयट् लक्षणया सुखमात्रजनिकां तत्स्वभावां वेत्यर्थः । अन्ये भावाः सुखदुःखमोहात्मकास्त्रिगुणा भावा इति हि साङ्ख्याः । प्राचुर्ये वा मयट् ह्लादैक-प्रचुरामित्यर्थः । यत्तु देवनाथेन विशेषणत्वे कामचारात् ह्लादान्वयोऽपि साधुरित्युक्तं तन्न; पूर्वकालेत्यादिना एकशब्दस्य पूर्वनिपातापत्तेः । अन्यस्य भारतोभिन्नस्य समवाय्यसमवायिनिमित्तकारणादेः परतन्त्राऽधीना नेत्यर्थः परतन्त्रः पराधीन इति कोशात्पराधीने रूढोऽयम् । तेनान्यपरशब्दयोः पौनरुक्त्यशङ्का परास्ता । तत्त्वं

तु विशिष्टवाचकानां पदानां विशेषणसन्निधाने सकीचकैर्मारुतपूर्णरन्ध्रै'रित्यादिवद्
विशेष्यमात्रपरत्वादधीनत्वमात्रं परतन्त्रशब्दार्थः। अतो न पौनरुक्त्यमिति वयम्।
यत्तु नास्त्यन्यः परः श्रेष्ठो यस्मात्सोऽनन्यपरस्तत्तन्त्रामिति यच्च देवनाथः अन्यपरो
भारतीविमुखचित्तस्तदन्योऽनन्यपरस्तत्तन्त्रामिति तन्न'। द्विवचनापत्तेः एकवद्भावे
रुचिरमित्यापत्तेश्च। न च द्विगुः नवरसीरुचिरामित्यापत्तेश्च। यद्वा नवभिः रसैः
रुचिरामिति तृतीयातत्पुरुषस्त्रिगुणसचिव इतिवत्। त्रिलोकनाथेन सतां मखद्विषः
इतिवच्च समाहारस्याविवक्षणात्। यद्यपि दिक्सङ्ख्ये संज्ञायामिति संज्ञायामेव
समासविधानं तथाप्यनित्यमेतत्। तद्धितार्थोत्तरपदेत्यत्र संज्ञाभावेऽपि विधाना-
दित्यन्ये। तन्मन्दम्। उत्तरपदे इत्यस्य बहुव्रीहिरूपसमासावयवपरत्वादत्र च
तदभावात्। तेन नवविधो रसो नवरसः। एवं त्रिगुणेत्यादौ शाकपार्थिवादित्वा-
न्मध्यमपदलोप इत्यपरे। नव रसा यस्यां सा चासौ रुचिरेति तु वयम्।

[सरि०] समुचितेष्टदेवतापरामर्शप्रमाणभूतां कारिकामवतारयति नियती-
त्यादिना। कवेः नियतिकृतनियमरहितां ह्लादैकमयीम् अनन्यपरतन्त्राम् नवरस-
रुचिराम् निर्मितिम् आदधती भारती जयति यद्वा निर्मितिम् कवेः आदधती इति
पदव्यवस्था।

कवेः काव्यकृतः, नियतीति नियतिरदृष्टं तेन कृतो निर्द्धारितो यो नियमः
पद्मादिष्वेव सौरभत्वमिति नियमविशेषस्तेन रहिता शून्यां कविकृतौ हि अचेतनाना-
मपि चेतनवद्व्यवहारसन्निबन्धनसदनिबन्धनादि यथेच्छव्यवहारसम्भवात्। ह्लादेति
ह्लादेन सुखेन एकमयीमेकस्वभावां कविकृतौ दुःखमोहयोरभावाद् यद्वा ह्लादेषु यः एको
मुख्यस्तन्मयीम्। अनन्येति अन्यस्य कविप्रतिभाभिन्नस्य समवाय्यसमवायिनिमित्त
कारणादेः परतन्त्रामधीनां न अन्यपरतन्त्रामनन्यपरतन्त्राम्। नवेति नव नव-
सङ्ख्याका वा नित्यनूतना रसाः शृङ्गारादयो यस्यां सा नवरसा सा चासौ रुचिरा
हृद्या ताम्। निर्मितिम्--निर्मीयते विरच्यते इति निर्मितिः काव्यम्। आदधती
प्रकाशयन्ती, भारती वाग्देवता। जयति सर्वोत्कृष्टत्वेन वर्तते। यद्वा निर्मितिम्
निर्मीयते विरच्यतेऽनयेति निर्मितिः शक्तिः। कवेः काव्यकृतिः सप्तम्यर्थे षष्ठी।
आदधती निक्षिपन्ती। प्रथमपक्षे ब्रह्मापेक्षया कवेर्व्यतिरेको व्यङ्ग्यो द्वितीयपक्षे
भारत्याः। मङ्गलाचरणपरकत्वादस्य द्वितीयपक्ष एव साधुः। तेन हि कवौ विधि-
विहितनियमेष्वनाबद्धां सुखमात्रस्वभावां कविप्रतिभामात्राधीनां नवविधरसपरिपाकेण
हृद्यतमां काव्यशक्तिं समर्पयन्ती वाग्देवी सर्वोत्कृष्टत्वेन वर्तत इति भावः। यथाऽऽह
धर्मकीर्तिः / घगङ्ग्योऽपि—'कस्यचिदेव कदाचिद् दयया विषयं सरस्वती विदुषः। घटयति कमपि
तमन्यो व्रजति जनो येन वैदग्धीम्' इति।

[वृत्तिः] नियतिशक्त्या नियतरूपा सुखदुःखमोहस्वभावा परमाण्वाद्युपादान-कर्मादिसहकारिकारणपरतन्त्रा षड्रसा न च हृद्या एव तैर्ब्रह्मणो निर्मितिर्निर्माणमेत-द्विलक्षणा तु कविवाङ्निर्मितिः यत् एव जयति। जयत्यर्थेन च नमस्कार आक्षिप्यते इति तां प्रति अस्मि प्रणत इति लभ्यते।

[कमला०] कविनिर्मितेरुत्कर्षस्य प्रतियोग्यपेक्षायां ब्रह्मसृष्टिस्वरूपं व्यतिरेक-मुखेन विवृण्वन् श्लोकं व्याचष्टे नियतशक्त्येति नियतिः कारणं तस्य नियामिका कारणत्वशक्तिः सङ्केतरूपा चोक्ता सुखदुःखमोहरूपसत्वरजस्तमोमयप्रकृति-विकारत्वात्तदात्मिका अतएव एका कामिनी कञ्चित्प्रति सुखरूपाऽन्यस्य दुःखरूपा साङ्ख्यमते चैतत् अन्यमते तु सुखदुःखमोहानां स्वस्मिन् भाव उत्पत्तिर्यस्यामित्यर्थः। परमाण्विति — परमाण्वाद्युपादानं समवायिकारणं कर्मचलनमादिशब्दाददृष्टं निमित्तं सहकारि असमवायिकारणं कारणपदस्य प्रत्येकमन्वयः। मधुरादिषड्रसा कवि-निर्मितिस्तु नवरसेति भावः। यद्यपि कविनिर्मितौ शब्दरूपत्वादुपादानाद्यपेक्षाऽस्त्येव तथापि सौरभादेः पद्माद्युपादानानपेक्षत्वम्। मुखेऽपि तन्निर्माणादित्यर्थः। तैः रसैर्हृद्या मनोहरैव न किन्तु दुःखरूपाऽपि अहृद्यत्वायोगा व्यवच्छेद एवकारार्थः हृद्यैवेति पाठः साधुः। कविवाक् कविभारती तस्याः निर्मितिर्निर्माणं काव्यं कर्मणि क्तिन् यद्वा कविवाग्रूपनिर्मिति। अतएवेति यतो विलक्षणां निर्मितिं करोति अतएवेत्यर्थः। एवकारो व्यर्थं इति केचित्। जयत्येवेत्यन्वयादुत्कर्षयो गव्यवच्छेदार्थ इत्यन्ये। अत्र ब्रह्मतन्निर्मित्यपेक्षया भारतीतन्निर्मित्योराधिक्याद् व्यतिरेकालङ्कारः। तदुक्तं केनचिद्—यत्र धर्मेण द्वयोः संसिद्धसाम्ययोर्भवत्येकतराधिक्यं व्यतिरेकः स उच्यत इति। भारतीविषया रतिर्व्यङ्ग्या स्पष्टैव। ननु मङ्गलापेक्षायां नतिः किं न कृता तत्राह। जयत्यर्थेनेति आक्षिप्यते व्यज्यते। न च नत्या स्तुतिसिद्धेर्वै-परीत्यं शक्यं तस्यास्तदव्याप्तेः। अयम्भावः—जयत्यर्थ उत्कर्षः स च भारत्याम-विशेषात्सर्वप्रतियोगिक इति तदन्यस्य सर्वस्यापकर्षभानात् ननु तर्हि सर्वः प्रणत इति स्यान्न त्वहं प्रणत इति तत्राऽऽह तां प्रतीति-तत्रापि व्यजनैवेत्यर्थः। सर्वान्तः पातिनः स्वस्यापि अपकर्षज्ञानात् नतिरिति भावः।

[सरि०] व्यतिरेकमुखेन श्लोकं व्याख्याति वृत्तिकृन्नियतीत्यादिना ब्रह्मणो विधेः। निर्मितिः=निर्माणं=सृष्टिः नियतिशक्त्या नियतेः नियामिकायाः शक्त्या सामर्थ्येन। नियतरूपा नियतं निश्चित मनन्यथा भावि रूपं स्वभावाद्या-कृतिर्यस्याः सा तथाविधा। न च कविनिर्मितिरिव यथारुचि प्रवर्तयितुं शक्या। सुखेति सुखं प्रीतिः दुःखमप्रीतिर्मोहो विवेकशून्यता स्वभावः प्रकृतिर्यस्याः सा न च प्रीतिमात्रप्रकृतिका कविकृतिरिव सर्वेषामेव सर्वास्ववस्थासु प्रीत्युत्पादकत्वात्।

परमेति परमाणुः सूक्ष्मतमरूपं वस्तुन स आदिर्यस्ष तत्तथाविधं यदुपादानं समवायिकारणं यथा पटस्य तन्तवः आदिपदात्कपालादीनामपि ग्रहणम् च कर्म क्रिया आदिर्यस्य तत् आदिपदात्संयोगादिगुणलाभोऽसमवायिकारणं तद्गुणकर्मणोरिति न्यायात् यथापटस्य।

च सहकारि निमित्तं यत्कारणं कार्योत्पादकतत्वं तेषां पराधीना वशवर्तिनी न तु कविनिर्मितिरिव कारणाभावेऽपि कार्यसाधिका। षड्रसा—षडेव षट्सङ्ख्याका एव रसा मधुरादय आस्वादा यस्यां सा—मधुराम्लतिक्तलवणकटुकषायभेदादास्वाद्यरसास्तत्र षडेव न तु कविनिर्मिताविव शृङ्गारादि नवरसा नित्याभिनवाः। नेति न नैव च सा ब्रह्मनिर्मितिः तैः षड्विधरसैः हृद्या कमनीया एव तत्राहृद्यत्वादीनामपि सम्भवात्। कविनिर्मितिस्तु निरतिशमसुखरूपत्वेन सर्वदैव सर्वेषां हृद्या। तादृशी तथाविधा वर्तत इति शेषः। एवं व्यतिरेकमुखेन ब्रह्मनिर्मित्यपेक्षया कविनिर्मितेर्वैलक्षण्यं प्रतिपाद्य सम्प्रति फलितमाह एतदित्यादिना-कवीति कवेः काव्यकृतो वाक् वाणीरूपा या निर्मितिः सृष्टिः, तु इति व्यवच्छेदे ब्रह्मसृष्टिव्यतिरिक्तमित्याशयः। एतद्विलक्षणा एतस्या तथाविधाया ब्रह्मनिर्मितेर्विलक्षणा विचित्रैव। अत इति अतएव हेतुनानेन। जयति सर्वोत्कृष्टत्वेन वर्तत इति। श्लोकोऽयं मङ्गलपरकस्तेनात्र नतिरेवापेक्ष्या सा कथं नोक्तेत्याह जयतीति—जयति इति अर्थेन जयति इति पदादर्थतः, नमस्कारः प्रणतिः, च वैशिष्ट्यप्रतिपादनव्यतिरिक्तमपि, आक्षिप्यते व्यज्यते स्तुतेरपि उत्कर्षवर्णनस्वरूपत्वात्। तथा सत्यपि कोऽत्र प्रणत इत्याह इतीति इति इत्थम्। तां तथाविधां वाग्देवीं। प्रति। प्रणतः शिरसाऽवनतः। अस्मि वर्ते। इति इत्थमर्थः। लभ्यते ध्वन्यत इति। ब्रह्मनिर्मित्यपेक्षया कविनिर्मितेर्ब्रह्मशक्त्यपेक्षया भारत्याश्च वैशिष्ट्यप्रतिपादनाल्लक्ष्यक्रमो व्यतिरेकालंकारध्वनिः। व्यतिरेकालङ्कारलक्षणञ्च यथा—उदयोः साम्यप्रोक्तौ विशेष उपमेयगे व्यतिरेक इति। क्वचिदुपमेयापेक्षयोपमानस्य विशेषोक्तावपि।

[वि० वृ०] अत्र विधिकृतविलक्षण विश्वविधानाज्जयतीति नतिमाक्षिप्य तां प्रति प्रणतोऽस्मीति व्यज्यते।

[वृत्तिः] इहाभिधेयं सप्रयोजनमित्याह—

[कारिका] **काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥ २॥**

[कमला०] इहेति—इह ग्रन्थे अभिधेयफलेनैव ग्रन्थस्य फलवत्त्वात् प्रवृत्तियुक्तेत्यर्थः। ग्रन्थस्य प्रेक्षावत्प्रवृत्त्यर्थं काव्यफलेन फलवत्त्वं वक्तु काव्यफलमाह

काव्यमिति यशसे इत्याद्यास्तादर्थ्यचतुर्थ्यः। कृते विदे युजे इत्येते भावे क्विबन्ताः। कृते करणाय। कृते इत्यव्ययं चतुर्थीप्रतिरूपकं मत्कृते दीनासीतिवत्। तेनार्थार्थं-मिति वा। विदे वेदनाय। शिवेतरं दुःखं तस्य क्षतिर्नाशः। ननुपदेशार्थं नीति-शास्त्राणि सन्ति किं काव्येन तत्राह कान्तेति त्रिविधो हि शब्दः प्रभुसम्मितः सुहृत्सम्मितः कान्तासम्मितश्च। आद्यो वेदादिः द्वितीयः पुराणेतिहासादिः। स हि एवं कृते इदमिष्टमिदमनिष्टमितिसुहृदिवाह। तृतीयः काव्यरूपः। स हि नीति-शास्त्रविमुखान् सुकुमारमतीन् राजकुमारादीनपि कान्ते च सरसतामापाद्योपदेशं ग्राहयति गुडजिह्विकान्यायेनेत्यर्थः। कान्तासम्मिततया रमणीतुल्यतयोपदेशस्य युजे योगाय युक्तोपदेशायेति व्यत्यासो ज्ञेयो विशेषणत्वे कामचारात्। यद्वा कान्ता-सम्मिततयेति परनिर्वृत्याद्यैरपि यथायोगमन्वयः।

[सरि०] प्रयोजनमुद्दिश्यैव प्राकृतस्यापि प्रवृत्तिर्भवति कार्ये किमुत विदुषामिति ग्रन्थस्यास्यानुवन्धचतुष्टयनिर्देशिकां कारिकामवतारयितुं वृत्तिकृदुपक्रमते इहेत्या-दिना इह ग्रन्थेऽस्मिन् काव्यप्रकाशाभिधे। अभिधेयं यत्कथनीयमस्ति तत्। सप्रयोजनं प्रयोजनमुद्देशस्तेन सहितम्। इति इतिसाधनाय। आह कथयति। अत्राभिधेयं काव्यं ग्रन्थोऽयं तस्यैवाङ्गम्। अङ्गिनः काव्यस्य फलेन सफलमिति प्रेक्षावत्प्रवृत्तये कथयति। सम्बन्धश्चात्र प्रतिपाद्यप्रतिपादकभावोऽधिकारी च तत्फलार्थी सहृदयः। कारिकामवतारयति काव्यमित्यादि काव्यम् यशसे अर्थकृते व्यवहारविदे शिवेतरक्षतये सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे (भवति) इत्यन्वयः। काव्यं लोकोत्तरवर्णनात्मकं कविकर्मात्राभिधेयं यत्तत्सप्रयोजनमेव तद्विश्लेषकत्वेनास्य ग्रन्थस्यापि तदेव प्रयोजनमिति भावः। प्रयोजनान्याह यशसे कीर्तये तादर्थ्ये चतुर्थी कीर्त्यर्थमिति। अर्थकृते अर्थो धनं तस्य कृते निमित्तं तादर्थ्ये-ऽव्ययम्। व्यवहारविदे व्यवहार आचारो वेदनं वित् तदर्थम् भावे क्विबन्तो ज्ञानायेति। शिवेति शिवं कल्याणमारोग्यञ्च तदितरत्कष्टं रोगादयश्च तेषां क्षतिर्ध्वंसस्तस्यै चतुर्थी तादर्थ्ये। सद्य इति—सद्यस्तत्क्षणमेव काव्यश्रवणानुपदमेव न तु कालान्तरेऽदृष्टादिवद् देहान्तरे वा परा निरतिशया या निर्वृतिरानन्दस्तस्यै। कान्तेति कान्ता कमनीया रमणी तया सम्मितः सदृश आह्लादको य उपदेशो विहिते प्रवर्तनं निषिद्धान्निवर्तनमित्यादिरूपं कथनं तस्य योजनं युक् तस्मै भावे क्विप् ग्राह्यत्वेन युक्तोपदेशायेत्याशयः। भवतीति शेषः। ग्रन्थोऽयमपि तेषामेव साधक इति।

[वि० वृ०] प्रेक्षावत्प्रवृत्तये शास्त्राभिधेयफलं तावदाह।

[वृत्तिः] कालिदासादीनामिव यशः श्रीहर्षादेर्धावकादीनामिव धनं राजादिगतोचिताचारपरिज्ञानम् आदित्यादेर्मयूरादीनामिवानर्थनिवारणं सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत्कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद् वर्तितव्यं न तु रावणादिवदित्युपदेशञ्च यथायोगं कवेः सहृदयस्य करोतीति च सर्वथा तत्र यतनीयम्।

[कमला०] काव्यस्य यश आदिहेतुत्वे मानाभावमाशङ्क्य हेतुताग्राहकमाह **कालिदासेति** लोकोत्तरवर्णनारूपं निपुणकविकर्मरूपं यत्काव्यं तत्कालिदासादीनामिव यशो धनमानन्दञ्च कवेः करोति उपदेशमानन्दञ्च सहृदयस्य यथायोगं करोतीत्यतः सर्वथा तत्र तज्ज्ञाने तन्निर्माणे च यतनीयमित्यन्वयः। श्रीहर्षादेरिति पञ्चमी। धावकनामा कविः रत्नावलीनाटकं श्रीहर्षसंज्ञे राज्ञि विक्रीय धनमवापेति जनप्रथा। व्यवहारपदार्थमाह **राजादीति** आदिपदान्मुनिदेवतादिग्रहणम्। उचितेत्यनुचिताचारनिवृत्त्यर्थम्। आदित्यादेरिति पञ्चमी। मयूरनाम्नो हि सूर्यशतकेन कुष्ठनाशः प्रसिद्धः। एतेनादृष्टफलार्थत्वमुक्तम्। एवं हरिवर्णनादीनामुक्तार्थत्वं ज्ञेयम् अनर्थपदेन सर्वथानर्थव्रातनिदानमिथ्याज्ञानोक्तेः। तदुक्त—सवाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमवद्धवत्यपि। इति। तथा—

हृद्वाग्वपुर्भिर्विदधन्नमस्ते लभते यो मुक्तिपदे स दायभाक्। इति। निर्वृतेः परत्वमाह **सकलेति** निरुपाधीच्छाविषयमित्यर्थः। **समनन्तरमिति** सद्यः पदार्थमाह न स्वर्गादिवत्कालान्तरे देहान्तरे वा किन्तु काव्यश्रवणानन्तरमेवेत्यर्थः। **रसेति** रस्यत इति रसो भावः। आस्वाद्यत इति आस्वादनमास्वाद्यमानं यथा वक्ष्यति चर्व्यमाणतैकप्राण इति समुद्भूतं सम्यगुद्भूतं स्वप्रकाशमिति यावत् ततः कर्मधारयः स्वप्रकाशज्ञानात्मकमित्यर्थः। यत्तु रसस्यास्वादो ज्ञानं तस्मात्समुद्भूतमिति तन्न आस्वाद्यमानस्यैव रसत्वाद्रसस्यवानन्दत्वादजन्यत्वाच्च। **विगलितं** निरस्तं वेद्यान्तरं स्वातिरिक्तविषयान्तरं यत्र स्वमेव विषयो विषयी च न तु घटा इव ज्ञानस्यान्यो विषय इत्यर्थः। तेन सर्वं ज्ञानं स्वविषयातिरिक्तहीनमिति कोऽत्र विशेष इति शङ्का परास्ता। कान्तासम्मितत्वं वृणोति **प्रभ्विति** सम्मितानि तुल्यानि शब्दप्रधानानि शासनाप्रधानानि विधिरूपाणि यद्वशादिष्टताहेतुतामनालोच्य निष्फलेऽपि नित्ये नैमित्तिके सन्ध्यादौ प्रवर्तते। आदिशब्दात्स्मृतयः। एतच्च गुरुमते ज्ञेयम्। तेषां नित्यादौ नियोगसिद्धेरेव फलत्वात्। अन्यमते तु प्रत्यवायपरिहारस्य भाव्यत्वान्नेदम्। मधुमतीकारस्तु शब्दप्रधानत्वं शब्दपरिवृत्त्यसहत्वम्।

न हि 'अग्निमीळे', 'इत्यत्र', 'वह्निमीळे', 'ईळेऽग्नि'मिति वा फलदमित्याह। तन्न। पुराणादावपि सत्वात्। वस्तुतस्तु वेदादीत्यादिशब्देन पुराणादेर्ग्रहणम्। पुराणेतिहासेभ्य इति पुराणानां पुरातनानां ये इतिहासाभारतादयः। यद्वा कर्मधारय इति युक्तम्। अर्थप्रधानत्वमर्थतात्पर्यवत्त्वम्। एवं कृते एवं भवतीत्युपदेश एव सुहृद्व्यापारः। त्रिविधः शब्दः। तत्र प्रभुसुहृत्सम्मताभ्यां विलक्षणं यत्काव्यमित्यन्वयः। वैलक्षण्ये हेतुमाह शब्दार्थयोरिति रसाङ्गभूतो रसाभिव्यक्तिहेतुर्व्यापारः शब्दार्थयोर्व्यञ्जनात्तत्प्रवणत्वं तदर्थं प्रयुक्तत्वम् प्रवणतया गुणभावाद्विलक्षणमित्यर्थः। यद्वा प्रवणतयेति कान्तैवेत्यन्वयः। काव्यपदं व्याचष्टे लोकोत्तरेति—लोकोत्तरा शब्दान्तरासाध्या वर्णनाविभावादिप्रत्यायनं तस्यां निपुणस्य कवेः कर्मेत्यर्थ इति तन्न। स्वपत्यधिकरणन्यायेन तत्पुरुषस्य दुर्बलत्वात् कवेर्भोजनोत्थानादिकर्मण्यतिव्याप्तेश्चानेन लोकोत्तरवर्णनारूपं यन्निपुण कर्मेत्यर्थः। रामादिवदिति नीतिशास्त्रविमुखान् राजकुमारादीनपि रमणीयार्थकथनेन कटाक्षादिभिः कान्तेव सरसतायथायोगमिति कवेर्यश आदिकं सहृदयस्योपदेशमनर्थनाशानन्दादि तूभयोरित्यर्थः। फलितमाह इति सर्वथेति काव्यफलेनैव लक्षणस्य फलवत्त्वादित्यर्थः। तत्र यतनीयमित्युक्तम्।

[सरि०] दृष्टान्तमुखेन कारिकां व्याख्याति कालिदासादीनामित्यादिना काव्यं हि यशसे भवति यथा कालिदासादीनामित्याशयः, आदिपदादश्वघोषभारविप्रभृतीनामपि ग्रहणं येषां हि न कुलं प्रथितं न च दानादिकर्म किन्तु काव्यद्वारैव ते कीर्त्यन्ते सम्प्रत्यपि। मूर्द्धस्थानीयत्वात्प्रथमं कालिदासस्मरणम्। वाल्मीकिव्यासादीनां तु काव्येतरदपि यशः कारणमिति न तेषामुल्लेखः।' कालिदास आदिर्येषान्तेषाम्। इव। यशः कीर्तिः। करोतीति शेषः। काव्यमिति यावत्। द्वितीय प्रयोजनं व्याख्याति श्रीहर्षादेरिति श्रीहर्षादेः श्रीहर्षो हि कश्चित्सम्राट् आदिपदात्तथाविधवृत्तानां भोजादीनामपि ग्रहणम्। जातावेकवचनम्। पञ्चम्यन्तमिदं पदम्। धावकादीनां धावकस्तदाख्य कश्चित्कविः रत्नावल्याः प्रणेता। आदिपदात्तथाविधानामन्येषामपि ग्रहणम्। तेषामिव धनमर्थः। काव्यं करोतीतिशेषः। धावको हि कविः रत्नावलीं नाटिकां प्रणीय राज्ञे श्रीहर्षाय समर्प्य ततो बहुधनमाप्तवानिति जनश्रुतिः। प्रामाणिकता त्वस्य सन्दिग्धा। तृतीयं काव्यप्रयोजनं व्याचष्टे राजेत्यादिना। काव्याद्धि व्यवहारो ज्ञायते तच्च राजा नृप आदिपदाद् गुर्वादीनामपि ग्रहणं राजादौ गतः सम्बद्धो य उचितः साधुराचार आचरणं तस्य परिज्ञानं सम्यग्ज्ञानम्। साध्वसाध्वाचारज्ञानेन व्यवहारकौशलं भवतीत्याशयः। चतुर्थं प्रयोजनं व्याख्याति आदित्यादेरित्यादिना आदित्यो

हि सूर्यं आदिपदाद् देवी प्रभृतीनामपि ग्रहणम् । पञ्चम्यन्तं पदम् । एकवचनं समानप्रकृतिबोधकम् । **मयूरादीनां** मयूराख्यः कश्चित्कविः । आदिपदाद् बाणभट्टादीनामपि ग्रहणम् । तेषामिव । **अनर्थेति** अनर्थोऽनभीष्टो रोगादिस्तस्य निवारणं दूरीकरणम् । मयूरो हि कविर्दम्पत्योः प्रणयकलहविघ्ननिमित्तं बाणेन शप्तः कुष्ठमवाप । पश्चाच्च सूर्यशतकं प्रणीय ततो नीरोगतामवापेति किंवदन्ती । एवमेव बाणोऽपि चण्डीशतकप्रणयनेन । अनयोरपि प्रामाणिकता सन्दिग्धा । पञ्चमं काव्यप्रयोजनं व्याचष्टे **सकलेत्यादिना** सकलेति सकलानि समग्राणि यानि प्रयोजनानि यशः प्रभृतीनि काव्यफलानि तेषां मौलिभूतं श्रेष्ठं परिनिर्वृतेः कविपाठकोभयगतत्वात्तस्या एव सर्वातिशायित्वाच्च । उक्तमेव धनञ्जयेन आनन्दनिःस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिरिति । **समनन्तरं**—काव्यपाठसमकालमेव न तु कालान्तरे वा देहान्तरे प्राप्यम् । **एवेति** व्यवच्छेदाय कालान्तरितत्वस्य । **रसेति** रसस्य शृङ्गारादेरास्वादन् चर्वणं तस्मात्समुद्भूतमुत्पन्नं रसानुभवफलस्वरूपम् । **विगलितवेद्यान्तरं** अन्यत्तद्भिन्नं वेद्यं ज्ञेयं वेद्यान्तरं विगलितं दूरीभूतं वेद्यान्तरं यस्मिन् । तथाभूतं विषयभावाद्यन्तरज्ञानशून्यम् । आनन्दं परमशर्म । करोतीति शेषः । काव्यमिति यावत् । षष्ठं प्रयोजनं विवृणोति **प्रभिवति** प्रभुरधिपो यस्याज्ञाऽविचार्यैवोद्दयते तेन सम्मितास्तुल्याः ये शब्दास्त एव प्रधानानि सन्ति येषु तादृशानि यानि वेदादिशास्त्राणि तेभ्यः आदिपदात्स्मृत्यादीनामपि ग्रहणम् । प्राधान्येन वेदानां नामतः स्मरणम् । ब्राह्मणेन निष्कारणो धर्मो वेदितव्य इत्यादिवचनात् । प्रत्यक्षफलदर्शनाभावेऽपि 'अहरहः सन्ध्यामुपासीत' इतिवचनात्सोपास्यते । प्रत्यवायनिरासः सन्ध्यायाः फलं किन्तु तदप्रत्यक्षमेव । अतएवोक्तं-श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः इति । **सुहृदिति**—सुहृदा मित्रेणसम्मितः समकक्षो योऽर्थस्तस्येव यत्तात्पर्यमभिप्रायस्तद्वन्ति तद्युक्तानि यानि पुराणादीनि इतिहासश्च तेभ्यः आदिपदादुपाख्यानादीनामपि ग्रहणं यथा षोडश राजोपाख्यानं महाभारते । चेति तदपेक्षयाऽपि । **शब्दार्थयोः**—शब्दस्य तत्र सङ्केतितो योऽर्थस्तस्य च तयोः । गुणेति गुणभावेन अप्राधान्यतया तत्र वाक्यार्थस्याविश्रामात् । रसेति रसानां शृङ्गारादिकाव्यास्वादानां रस्यत आस्वाद्यत इति रसः स्वप्रकाश इति व्याख्यानात् । अङ्गभूतः शोभाधायको यो व्यापारो वृत्तिस्तस्मिन् प्रवणता तत्परता तया रसैकमात्रपरतया । **विलक्षणं** भिन्नमेव । यत् यदेव । काव्यं कविकृतिः । तदेव विवृणोति **लोकेति** लोकोत्तराऽलौकिकाया वर्णना विषयोपस्थितिस्तस्यां निपुणो दक्षो यः कविः काव्यकृत्तस्य कर्म कृतिः । तत् काव्यम् । कवेः कृतिः काव्यं तत्र साधारणव्यापारव्यवच्छेदाय लोकोत्तरेति । **कान्ता** अभीष्टा रमणी । इव यथा । **सरसतेति** सरसता रसाभिप्लुतता तस्या

आपादनेन भावनेन। अभिमुखीकृत्य प्रवृत्यं। रामादिवत् रामप्रभृतिसाधवो यथा। आदिपदाद्युधिष्ठिरादयोऽपि। वर्तितव्यं व्यवहर्तव्यम्। न नैव कदापि। रावणादिवत् रावणादयोऽसाधवो यथा। आदिपदाद् दुर्योधनादीनामपि ग्रहणम्। इति इत्थम्। उपदेशं कृत्याकृत्यप्रवर्तनाप्रवर्तनपरामर्शम्। चेति समुच्चये। तत्तु धर्मशास्त्रेभ्योऽपि भवतीत्यतिव्याप्तिवारणाय कान्तेतिपदम्। यथायोगं पात्रानुसारं प्रकरणानुसारम्। कवेः काव्यकृतः। सहृदयस्य रसवासनाशीलस्य पाठकस्य च। करोति विदधाति। इति हेतोः। सर्वथा सर्वतो भावेन। तत्र काव्ये। यतनीयं प्रवर्तनीयमिति। षट्सु प्रयोजनेषु हि यशोऽर्थौ केवलं कविलभ्यौ। व्यवहारज्ञानमुपदेशश्च पाठकलभ्यौ। शिवेतरक्षतिरानन्दश्चोभयप्राप्यौ। तदभिव्यक्तये यथायोगमिति पदम्। तेन तेषामयं क्रमः। आनन्दः काव्यस्य प्रथमं। सर्वोत्कृष्टञ्च प्रयोजनम्। स च वेद्यान्तरशून्यत्वाद् ब्रह्मसगोत्रः। काव्यपाठसमकालमेवोभयोरेव लभ्यः। अनर्थनिवारणं द्वितीयं प्रयोजनम्। तदुभयगतमपि प्राधान्येन कविसम्बद्धमेव। तत एव यशोऽर्थौ प्राकरणिकौ कविगतौ। न कोऽपि यशः स्यादर्थोऽस्त्विति काव्यं प्रणयति। यत्तु कालिदासेन 'मन्दः कवियशः प्रार्थी' इत्युद्घोषितं तदपि प्राकरणिकमेव आनन्दस्यैव प्राथम्यात्। अभिव्यक्तितो यत्सुखं लभ्यते तदेव काव्यस्य प्रेरकम्। तेन कविः स्वान्तः सुखायैव काव्यं करोति। यशस्तु सुकाव्यादेव भवति न तु कुकाव्यादतो न सर्वव्यापि। कुकाव्येऽप्यभिव्यक्तिसुखं तु न केनापि निवार्यते। अर्थोऽपि न सदा निश्चितः। काव्यादर्थप्राप्तिरेव भवतीति न राजाज्ञा। शेषे द्वे पाठकगते नितान्तं प्राकरणिकेऽनित्ये च। तेन ह्यानन्द एव काव्यस्य प्रथममन्तिमञ्च प्रधानं प्रयोजनम्। न कोऽपि व्यवहारज्ञानमुपदेशग्रहणञ्चोद्दिश्य काव्यं पठति। पाठकोऽपि आनन्दायैव तत्पठति। अतएवोक्तं हेमचन्द्रेण—'काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशायेति। यत्तु सुखाच्चतुर्वर्गफलप्राप्तिः काव्यस्य प्रयोजनमुक्तं तदपि बहिरङ्ग परमेव निरानन्दस्य नास्ति काचिदपि प्राप्तिः।

[वि० वृ०] कीर्तिर्धनप्राप्तिर्देवमनुष्यादिव्यवहारावगतिर्देवतावन्दनकृतः क्लेशनाशः सपद्येव रसानुभवसमुद्भूतः परमानन्दः सरसतया धर्मादिरूपहितोपदेशश्च काव्यादेव भवतीति सर्वथा तत्र प्रयतनीयम्। वेदः खलु शब्दप्राधान्यात्प्रभुसम्मितः। पुराणादिश्चार्थप्राधान्यात्सुहृत्सम्मितः शास्ति। काव्यं तु शब्दार्थयोर्गुणतया रसाङ्गभूतव्यापारप्रावण्यात्तद्विलक्षणमतः कान्तासम्मितं तदिति।

[वृत्तिः] एवमस्य प्रयोजनमुक्त्वा कारणमाह—

[कारिका] **शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे॥ ३॥**

[कमला०] तत्र यतनीयमित्युक्तं तन्न युक्तमुपायाज्ञानात्कृतिसाध्यताज्ञानस्याप्रवर्तकत्वदित आह अस्येति अस्य काव्यस्य। कारणमिति जातिपरम् सामग्रीपरं वा। शक्तिरिति शक्तिर्देवताप्रसादजन्यमदृष्टम्। लोकस्तद्वृत्तम्। शास्त्रं छन्दः शास्त्रादि। काव्यं रघुवंशादि। आदिपदादितिहासादि। अवेक्षणं विमर्शः। तस्मान्निपुणता काव्याभ्यासश्चेति त्रितयं तदुद्भवे हेतुः। फलोपहितञ्च कारणं स्वरूपयोग्यता तु प्रत्येकमेव।

[सरि०] सर्वथा काव्ये यतनीयमित्युक्तं तत्कथमित्यपेक्षायां काव्यहेतुनिर्देशककारिकावतारणायोपक्रमते एवमिति—एवमित्थं हि। अस्य काव्यस्य। प्रयोजनं फलम्। उक्त्वा युक्त्या प्रतिपाद्य। कारणं काव्यहेतुम्। आह निर्दिशति। कारिकामवतारयति शक्तिरित्यादि। तदुद्भवे शक्तिः लोकशास्त्रकाव्याद्यवेक्षणात् निपुणता काव्यज्ञशिक्षया अभ्यास इति हेतुरित्यन्वयः। तदुद्भवे तस्य काव्यस्योद्भवे उत्पत्तौ। प्रणयन इत्याशयः। शक्तिः कवित्वबीजसंस्काररूपः कविसहजातः प्रतिभाविशेषः। स च जन्मान्तरसञ्चितपुण्यलभ्यो देवताप्रसादादिरूपः। 'शक्तिस्तत्र सुदुर्लभा' इति कथनात्तस्मादसाधारणत्वाच्च। यथाऽऽह ध्वनिकारः—'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः। यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते।' इति। तथैव 'काव्यं तु जायते जातु कस्यचित्प्रतिभावतः' इति कथनाच्च। शक्तिः कविसहजाता भवति नोपार्ज्या। लोकेति लोको जगत् योगादुपचाराद्वा तद्वृत्तम् शास्त्रं छन्दोव्याकरणादि काव्यं रघुवंशादिमहाकविकृतयः आदिपदादितिहासादयश्च। सर्वेषां द्वन्द्वः। तेषामवेक्षणात् विमर्शात। निपुणता यद्वैचक्षण्यं भवति तत्। काव्यज्ञशिक्षया काव्यं जानन्ति ये तेषां शिक्षयोपदेशेन। अभ्यासः पुनः-पुनः प्रवर्तनम्। इति इत्थं त्रितयम्। हेतुः कारणम्। भवतीति शेषः। शक्तिमानेव कविर्भवति। सा च व्युत्पत्त्यभ्यासाभ्यां संस्कार्या भवतीत्याशयः।

[वि० वृ०] तस्य हेतुमाह।

[वृत्तिः] शक्तिः कवित्वबीजरूपः संस्कारविशेषो यां विना काव्यं न प्रसरेत्प्रसृतं वोपहसनीयं स्यात्। लोकस्य स्थावरजङ्गमात्मनो लोकवृत्तस्य। शास्त्राणां छन्दोव्याकरणाभिधानकोषकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां काव्यानाञ्च महाकविसम्बन्धिनामादिग्रहणाणादितिहासादीनाञ्च विमर्शाद् व्युत्पत्तिः। काव्यं कर्तुं विचारयितुञ्च ये जानन्ति तदुपदेशेन करणे योजने च पौनः पुन्येन प्रवृत्तिरिति त्रयः समुदिताः न तु व्यस्ताः। तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः।

[कमला०] **कवित्वबीजेति** देवताप्रसादजन्यमदृष्टं न तु पदार्थस्मृतिहेतुर्भावनाऽऽख्यः संस्कारस्तस्य साधारणत्वाद् देवताप्रसादाजन्यत्वाच्च। प्रतिभारूपो गुण इति केचित्। तन्न। तस्य व्यङ्ग्यधीहेतुत्वात्प्रतिभाजुषामित्यग्रेऽभिधानात्। तस्याः कारणत्वोपपत्तिमाह **यां विनेति** अत्र शक्तिं विना जनितस्य व्यभिचारादुपहसनीयस्य चमत्कारकारित्वाभावाच्च। काव्यत्वाभावेऽपि काव्यपदं शब्दरचनापरम्। प्रसृतं समुद्भूतम्। वाशब्दोऽप्यर्थे। प्रसृतमपीत्यर्थः। अनास्थायां वा वाशब्दः। किं वा तेन सुतेनास्येतिवत्। यद्वा यां विना कर्तरि न प्रसरेत। शक्त्या प्रसृतमपि श्रोतर्युपहसनीयं समुल्लासकारि न स्यादिति निर्माणे समुल्लासे च शक्तेर्हेतुत्वमुक्तम्। द्वितीयं हेतुं व्याचष्टे **लोकस्येति** धर्मिमात्रज्ञानस्याहेतुत्वादाह लोकवृत्तस्येति। लोक्यत इति व्युत्पत्तेरित्यर्थः। वृत्तेर्लक्षणा त्वयुक्तैव। अभिधानं निघण्टुनिरुक्तादि। कोशोऽमरसिंहादिः। यद्वाऽभिधानानां नाम्नां कोशः सङ्ग्रहः। कोशो धनं तद्ग्रन्थोऽर्थशास्त्रमिति वा। कलागीतनृत्यचुम्बनादि। तद्ग्रन्थस्तद्वर्णनम्। कामशास्त्रञ्च चतुर्वर्गो धर्मार्थकाममोक्षाः। ग्रन्थपदस्य प्रत्येकमन्वयः। आदिपदार्थमाह **इतिहासादीनामिति**। तत्रादिपदार्थमाहोपदेशेनेति। करणे निर्माणे योजने व्याख्याने विभावादियोजने वा त्रयः शक्तिनिपुणताऽभ्यासाः समुदिता दण्डचक्रवत्परस्परसापेक्षाः न तु व्यस्ता तृणारणिमणिवत्प्रत्येकमित्यर्थः। समुल्लासे चमत्कारे हेतुरिति हेतुः सामग्रीफलोपहिता न तु हेतवः प्रत्येकं स्वरूपयोग्या इत्यर्थः। यतो हेतुरित्येकवचनं मूले इति परमानन्दस्तन्न। लक्षणावृत्तेः। स्वरूपयोग्यपरत्वे हेतव एव न तु हेतुरिति वाक्यार्थभेदो वा। यद्यपि निपुणताभ्यासौ विनाऽपि शक्तिमात्राद् बालादौ काव्योत्पत्तिर्दृश्यते तथापि तत्र जन्मान्तरीययोस्तयोः कल्पनं तत्र कार्यतावच्छेदकमेकं पृथग्वाऽस्तु जन्मप्रभावत्काव्यत्वं विशिष्टं वाऽवच्छेदकमिति तर्कपञ्चाननादयः। काव्यरचने शक्तिश्चारुत्वे व्युत्पत्तिरभिवृद्धौ वाऽभ्यास इत्यार्थसमाजात्समुदितानां विशिष्टकार्यहेतुता नीलं घटत्ववदित्याशयेनोक्तं समुदिता हेतुरिति। तदुक्तं—

> 'कवित्वं जायते शक्तेर्वर्द्धतेऽभ्यासयोगतः।
> अस्य चारुत्वनिष्पत्तौ व्युत्पत्तिस्तु गरीयसी॥'

इति प्राञ्चः। नव्यास्तु न बालके प्राग्भवीययोस्तयोः कल्पनमन्योन्याश्रयात्। सिद्धे हि तयोः कल्पने कारणत्वं कारणत्वाच्च तत्कल्पनमिति नाप्यार्थः समाजो विनिगमनाभावात्। अतः कारणमाह हेतुः कारणमुक्त्वा स्वरूपमाहेत्येकत्वश्रवणाच्छक्तिरेव कारणं नेतरौ। अतएव शक्तौ कवित्वबीजरूपः इत्युक्तं नेतरयोरित्याहुः।

[सरि०] आशयनिर्देशपुरस्सरं कारिकां व्याचष्टे शक्तिरित्यादिना शक्तिः शक्यते यया काव्यं निर्मातुमास्वादमनुभवितुञ्च साऽसाधारणप्रतिभा। कवीति कवित्वस्य काव्यकर्मणो बीजरूपो बीजतुल्यः। संस्कारेति—आत्मनो भावनाख्यविशेषगुणविशेषः। यामित्यादि यां शक्ति। विनाऽन्तरेण। यस्या अभावे इत्याशयः। काव्यं कविकृतिः। न प्रसरेत् नैव जायेत। प्रसृतं कथञ्चित्काकतालीयन्यायेन जातम्। वा अपि। उपहसनीयमुपहासपात्रमास्वादाभावात्। स्यात् जायेत। अनास्थायामपि वाकारः 'किं तेन वा सुतेनास्य यो न चक्रे पितृक्रियाम्' इत्यादाविव। लोकेति पदं व्याचष्टे लोकस्येति लोकस्येति स्थावरजङ्गमात्मनः स्थावरं स्थानपरं जङ्गमं गतियुक्तञ्चात्मास्वरूपं यस्य तथाविधस्य लोकवृत्तस्य जगच्चरितस्य। स्थावरजङ्गमवृत्तस्यावेक्षणादित्याशयः। शास्त्रपदं व्याचष्टे शास्त्राणामिति छन्दः पिङ्गलादिप्रोक्तवृत्तशास्त्र काव्ये वर्णादिनियमबोधकः—व्याकरण पाणिन्याद्युपज्ञातशब्दानुशासनप्रकृतिप्रत्ययविभागव्युत्पादकमभिधानं व्याख्यापरकनिघण्टवादि यास्कादिप्रोक्त कोषः समान नानार्थ शब्दलिङ्गानुशासनस्वरूपग्रन्थोऽमरसिंहादिप्रोक्तः कलाः गीतनृत्यसुरतादिचतुष्षष्ठीसङ्ख्याकाः कलाः चतुर्वर्गो धर्मार्थिकाममोक्षाः गजो हस्ती तुरगोऽश्वः खङ्गः शस्त्रविशेषः आदिपदात्स्त्रीपुरुषप्रभृतयश्चैते स्वरूपतो विशेषतश्च लक्ष्यन्ते यैरिति तादृशा ग्रन्थाः वैत्तेषां लक्षणग्रन्थाः स्वरूपविवेचकग्रन्थास्तेषाम्। काव्यपदं व्याख्याति काव्यानां कालिदास प्रभृतयो हि महाकवयस्तत्सम्बन्धिनां रघुवंशादीनाम्। आदिपदं व्याख्याति आदिपदात् इतिहासादीनां इतिहासः पुरावृत्तवर्णनापरो ग्रन्थः आदिपदात्पुराणादीनां ग्रहणं तेषाम्। विमर्शात् पुनःपुनरनुसन्धानात्। व्युत्पत्तिः नैपुण्यम्। जायत इति शेषः। तृतीयं हेतुं व्याचष्टे काव्यमित्यादिना काव्यं लोकोत्तर वर्णन कविकृति। कर्तुं स्रष्टुं। विचारयितुमालोचयितुम्। चेति समुच्चये न केवलं काव्यसृष्टिरेव काव्यज्ञत्वमपितु तत्पर्यालोचनमपि। ये हि कवयः। जानन्ति निपुणाः सन्ति। तदुपदेशेन तेषां काव्यज्ञानामुपदेशेन शिक्षया। करणे काव्यसृष्टौ। योजने चमत्काराधाने। चेति समुच्चये उभयस्मिन्निति। पौनः पुन्येन मुहुर्मुहुः सततावृत्या। प्रवृत्तिः संलग्नता तत्परता। इति इत्थं प्रकाराः। त्रयः त्रिसङ्ख्याकाः। समुदिताः संहता दण्डचक्रादिन्यायेन परस्परसापेक्षाः। न तु व्यस्ताः पार्थक्येन स्थितास्तृणारणिमणिन्यायेन प्रत्येकं कार्यसाधकाः। तस्य तथाविधप्रयोजनवतः। काव्यस्य कविकर्मणः प्रकृतिमहतः। उद्भवे सृष्टौ। निर्माणे व्यक्तौ। समुल्लासे चमत्काराधाने। चेतिं समुच्चये त्रितयस्मिन्नेव। हेतुः कारणम्। न तु हेतवः व्यस्ततया प्रत्येकं कारणानि। काव्यसृष्टौ हि प्रतिभा हेतुः। तन्निर्माणे व्युत्पत्तिर्हेतुः। तत्समुल्लासे चाभ्यासो हेतुरिति समष्टित्वेन काव्यप्रणयने शक्ति-

व्युत्पत्त्यभ्यासा हेतुर्न तु हेतव इति। त्रीण्येव काव्यप्रणयनस्याङ्गानि सृष्टिर्व्यक्तिश्चमत्काराधानञ्च। सृष्टिं विना कुतो व्यक्तिस्तां विनाद्या व्यर्थैव। व्यक्तस्याऽपि लोकोत्तरत्वाभावे नैव काव्यत्वं सिध्यति। अतएव सृष्टौ शक्तेः व्यक्तौ व्युत्पत्तेः सञ्जायामभ्यासस्य पार्थक्येन कारणत्वेऽपि काव्यत्वसिद्धौ त्रयाणामेव संहतत्वमावश्यकमतएव हेतुरित्येकवचनम्। नव्यास्तु प्रतिभामेव काव्यहेतुं मन्यन्ते नापरौ। ते हि वृत्तिग्रन्थमपि तदानुकूल्येन सङ्गमयन्ति तत्राप्येक एक एव प्रतिभारूपो हेतुरिति। यथोक्तं 'प्रतिभाऽस्य हेतुः। व्युत्पत्त्यभ्यासाभ्यां सा सत्कार्या' इति। तन्न समीचीनम्। निष्प्रतिभास्यापि व्युत्पत्त्यभ्यासयोगेन काव्यप्रणयनदर्शनात्। सारस्वताभ्यासिकौपदेशिकादिकविविभागवैयर्थ्याच्च। जन्मान्धेऽपि कवित्वस्य दर्शनात्तत्राव्याप्तिर्नस्यादिति अवेक्षणपदस्य विमर्शनमर्थः। विमर्शनं तु श्रवणादपि सम्भवति न केवलं विलोकनमात्रेण। तथापि शक्तेः प्राथम्यं तत्र न केनाऽपि निवार्यते। तेनैवोक्तम्—

> 'सारस्वतः स्वतन्त्रः स्याद् भवेदाभ्यासिको मितः।
> औपदेशकविस्त्वत्र वल्गु फल्गु च जल्पति॥'

इति।

[वि॰ वृ॰] शक्त्यादित्रयं काव्यकारणमित्यर्थः। तत्र शक्तिः प्राक्तनसंस्कारविशेषः। काव्योत्पादत्वावच्छिन्नैकहेतुः। या विना काव्यं नोदयति। उदितं वोपहासाय। लोकः स्थावरजङ्गमात्मकलोकवृत्तम्। शास्त्रं छन्दोव्याकरणादि। काव्यं महाकविकृतम्। आदिशब्दादितिहासादि च। तेषां परामर्शाद् व्युत्पत्तिः। काव्यज्ञाः काव्यनिर्माणविचारणचतुरास्तदुपदेशेन निर्माणे योजने च पुनःपुनः प्रवृत्तिरिति त्रिकं समुदितमेव हेतुरित्येके। डिम्भेनाऽपि काव्योत्पादनाच्छक्तिरेव केवलेत्यपरे।

[वृत्तिः] एवमस्य कारणमुक्त्वा स्वरूपमाह—

**[कारिका] तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।**

[कमला॰] स्वरूपमसाधारणो धर्मः। लक्षणमाहेत्यर्थः। **तददोषाविति** अर्थज्ञानस्य शब्दायत्तत्वात्कविसंरम्भगोचरत्वाच्च शब्दस्य पूर्वं निर्देशः। अत्र देवनाथादयः कविकृतिगोचरत्वात्काव्यं पठति काव्यं शृणोतीत्यादिप्रयोगाच्च आस्वादजीवातुः शब्द एव काव्यमिति प्राहुः। अन्ये त्वास्वादजनकत्वं शब्दवदर्थेऽपि तुल्यं तत्रापि रसव्यञ्जकत्वेनास्वादहेतुत्वात्। अर्थे कविकृतिसाध्यत्वेन काव्यत्वं तु तद्गोचरशब्दप्रकाश्यत्वाद्भाक्तम्। शब्दनित्यतावादे शब्दस्य काव्यत्ववत्काव्यं पठतीत्याद्यपि विशेष्ये बाधाच्छब्दमात्रपरम्। तेन शब्दार्थाविति द्वन्द्वे साहित्यादुभौ काव्यम्। तत्वञ्च प्रमेयत्वोपाधिरित्यन्ये। गोत्ववदनेकावयवसाध्यव्यक्तिवृत्तिर्जाति-

रित्यन्ये। तेन काव्यत्वस्य संयोगवद् व्यासज्यवृत्तित्वे जातित्वबाधः। प्रत्येकवृत्तित्वे प्रत्येकं काव्यत्वापत्तिरिति गौडदूषणं परास्तम्। **अदोषाविति** अत्र यत्किञ्चिद् दोषाभावो वा यावद्दोषाभावो वा ? नाद्यः। दुष्टकाव्येऽपि सत्त्वात्। नान्त्योऽसम्भवात् लक्षणस्य विरलविजयतापत्तेः। दुष्टेऽपि काव्यपदप्रयोगाच्चेति चेदत्र चण्डीदासः। रसदोषस्याऽप्यविमृष्टविधेयांशस्य न्यक्करोत्ययमेवेत्यादेः काव्यत्वमस्त्येवान्यथा दुष्टं काव्यमिति प्रयोगायोगात्। तेन रसवद्वाक्यत्वमेव लक्षणमिति। तदुक्तम्—

> 'कीटानुविद्धरत्नादिसाधारण्येन काव्यता।
> दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः।' इति।

सुबुद्धिमिश्रास्तु अदोषत्वं स्फुटदोषशून्यत्वं स्फुटत्वञ्च कविमतिप्रतिभयातिरोधानाभाव इत्याहुः। देवनाथस्तु विरलविषयत्वमिष्टमेव। दुष्टं काव्यमिति प्रयोगस्तु दुष्टो हेतुरितिवज्ज्ञेयः। तेन दोषसामान्याभावो विवक्षितः। न चैवं न्यक्कारो ह्ययमेवेत्यादेरतत्वापत्तिः। वीररससञ्चारिणोऽसूयाख्यभावस्यास्वादे दोषविशेषदर्शनेऽपि दर्पणे मुखमितिवद्भ्रमसम्भवात्। यद्वाऽस्तु स्फुटदोषशून्यत्वम्। नन्वेवं पुरुषमतिभेदेनैकस्यैव काव्यत्वमकाव्यत्वञ्च स्यादिति चेन्न। इष्टापत्तेः। काव्यत्वस्योपाधित्वेन तत्संकरस्यादोषत्वाज्जातावेव हि सः। अतएव वक्ष्यति वक्त्राद्यौचित्याद् दोषोऽपि गुण इत्याह। नव्यास्तु दुष्टेऽपि यदंशे दोषस्तदंशे नास्तु काव्यत्वम्। यदंशे दोषाभावस्तदंशे काव्यत्वमेव। तेनैकस्यापि पद्यस्यैकज्ञानस्य [illegible] काव्यत्वमकाव्यत्वञ्च संकरस्तूपाधित्वाददोषः। तेन दोषसामान्याभावोऽत्र विवक्षित इत्याहुः। **सगुणाविति** गुणस्य रसैकनिष्ठत्वेऽपि परम्परया तदभिव्यञ्जक शब्दार्थनिष्ठत्वम्। **अनलङ्कृती** इति नञीषदर्थे अलवणाल्पार्थः अनुदरा कन्येतिवत्। तत्त्वञ्चास्फुटत्वम्। तेन वस्तुतः सालङ्कारत्वमर्थः। अन्यथा [illegible] स्यात्। केचित्तु सरसं वाक्यं काव्यमाहुः।

[illegible] एवं हि काव्यस्य हेतुं निर्दिश्य सम्प्रति तत्स्वरूपनिर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते एवमित्यादिना। एवं पूर्वोक्तप्रकारेण दण्डचक्रन्यायेन शक्ति व्युत्पत्त्यभ्यासाः काव्यत्वे हेतुरिति। अस्य काव्यस्य। कारणं हेतुम्। उक्त्वा निर्दिश्य। स्वरूपं स्वरूपं हि वस्त्वन्तरव्यावर्तकोऽसाधारणो धर्मस्तेन स्वरूपमिति लक्षणम्। आह कथयतीति। कारिकामवतारयति तदित्यादि। अदोषौ सगुणौ पुनः क्वापि अनलङ्कृती शब्दार्थौ तत् इत्यन्वयः। अदोषौ न विद्यते दोषो ययोस्तौ तादृशौ आस्वादव्याघातत्वमेव दोषस्य दोषत्वम्। तथाविधदोषशून्यावित्याशयो नत्वीषद्दोषौ वा निर्दोषावेव। सदोषमपि पदं रससाधकत्वे काव्यविषयो

भवत्येव। तेन हि रसस्याकिञ्चित्करदोषे सत्यपि न काव्यत्वहानिः। **सगुणाविति**—गुणेन सहितौ गुणो हि रसोत्कर्षाधायकधर्मः। गुणस्य रसैकमात्रधर्मत्वेऽपि तद्व्यञ्जकत्वेनोपचारात्तस्य शब्दार्थयोः स्थितिः। काव्यस्य हि गुणवत्त्वं स्वव्यङ्ग्यास्वादसमवायसम्बन्धेन न तु साक्षादेव। यथा 'नीलः पटः' इत्यत्र पटस्य नीलिमा परम्परासम्बन्धेन। तेन हि रसैकमात्रधर्मस्य गुणस्य शब्दार्थयोः स्थितिरनुपपद्यत इति दर्पणकारमतं परास्तं भवति 'गुणवृत्त्या पुनस्तेषां स्थितिः शब्दार्थयोर्मता' इति निर्दिष्टमेव ग्रन्थे। न च काव्ये गुणाभिव्यञ्जकशब्दार्थवत्त्वस्य स्वरूपाधायकत्वं न सम्भवति तेषां तु तदुत्कर्षप्रयोजकत्वमेवेति वाच्यं तद्वैशिष्ट्येनैव तस्यास्वादक्षमतासिद्धेः। रसगुणयोः परस्परसापेक्षत्वं तु सिद्धमेव। तेन यथैव नीरसस्य तथैव निर्गुणस्यापि शब्दार्थयुगलस्य नैव काव्यत्वम्। **पुनः** तथैव। **क्वापि**—यत्र कुत्र तु यस्मिन् कस्मिंश्चिदंशे तु। **अनलङ्कृती**—न विद्यते अलङ्कृतिरलङ्क्रियतेऽनयेति शब्दार्थालङ्कारौ यत्रेति प्रायः सर्वत्रालङ्कृतावेव क्वचित्तदभावेऽपि न तयोः काव्यत्वहानिरित्याशयः। तेन हि स्फुटदोषरहितौ स्फुटगुणयुक्तौ स्फुटालङ्कारौ क्वचित्तु तद्विरहितावपीति। यथा हि दुष्टेऽपि रसाद्यनुगमे स्फुटे सति काव्यत्वं सम्पद्यते तथैवालङ्कारविरहितेऽपि रसाद्यनुगमेऽबाधिते सति न काव्यत्वहानिरिति। यत्तु 'अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती' इति कथितं तत्पूर्वाग्रहपरकवाक्यमेव। न ह्यस्य सर्वथाऽलङ्कारविरहितयोरेव काव्यत्वमित्यभिप्रायः। यच्च 'दर्पणकारेण यः कौमारहर' इत्यत्र विभावनाविशेषोक्तिमूलसन्देहसंकरालङ्कारस्य स्फुटत्वमुक्तं तदपि तथैव तस्याशाब्दत्वात्। कारणसत्त्वेऽपि कार्याभावकथनं विशेषोक्तिः। अत्रानुत्कण्ठाकारणं वरोपकरणयोरुपभुक्ततैव। तत्रोत्कण्ठात्वेनैवानुत्कण्ठाभाववर्णनान्नास्य स्फुटता। यदि चेतोऽनुत्कण्ठितं नेदयमिहितं भवेत्तदाऽस्य स्फुटता स्यात्। एवं विभावनाऽप्यस्फुटा वरोपकरणयोस्तत्तारूपेणैवोपन्यासान्नातत्ताविरहत्वेन। **शब्दार्थाविति**—शब्दो विवक्षितैकार्थबोधकश्चार्थश्च स्वस्पन्दसुन्दरश्च तौ। अयमेवाशयो भामहस्य 'शब्दार्थौ सहितौ काव्यम्' इति कथनेऽपि। परिवृत्त्यसहिष्णुः शब्द एवात्र शब्दोऽर्थश्च। **तदिति**—तत् काव्यम्। भवतीति शेषः। तेन हि स्फुटदोषरहितौ गुणविशिष्टौ प्रायः सालङ्कारौ पाकगतौ शब्दार्थौ काव्यमिति पर्यवसितोऽर्थः। अदोषपदमत्र दोषसामान्याभावविवक्षापरमेव। न च किञ्चिद् दोषाभावो वा यावद्दोषाभावोऽप्यस्याशयः। आद्यस्याव्यावर्तकात्परस्यासम्भवात्। यच्च 'न्यक्कारः....' इत्यादौ विधेयाविमर्शदोषदुष्टत्वमुक्तं कैश्चित्तन्न काव्योपघातकं दोषसामान्याभावविवक्षयाऽऽस्वादापकर्षकत्वविरहेण च। तथा सति कुत्र हि दोषस्य दोषत्वं कुत्र च नेत्यपेक्षायामुच्यते तत्तु परिनिष्ठितभावकायत्तम्। आस्वादापकर्षणमात्रमेव दोषस्य

दोषत्वं न तु स्वरूपेण। वस्तुतस्तु आस्वाद एव काव्यस्य प्रयोजकम्। तद्दूषक एव दोषस्तदुत्कर्षक एव गुणः। यच्च 'आस्वादजीवातुः पदसन्दर्भः काव्यमि'त्युक्तं तत्र पूर्वोक्तविशेषणत्रयमन्तरेणास्वादजीवातुतावच्छेदकत्वनिर्वचनासम्भवात्तन्न युक्तम्। यच्च 'वाक्यं रसात्मकं काव्यम्' इत्युक्तं तदपि न समीचीनं 'न्यक्कारो ह्ययमेव' इत्यादावव्याप्तेः रसात्मकताया इयत्तावच्छेदकानिरूपणात्। यच्च कैश्चित् 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इत्युक्तं तदप्येकाङ्गचे व। तत्र रमणीयार्थस्य मानानिर्देशात्। वस्तुतस्तु आस्वादस्य वा रमणीयार्थस्य वा रसात्मकवाक्यस्य व्यवच्छेदकत्वेन अदोषादिविशेषणत्रयं वाच्यमेव।

[वि० वृ०] तस्य स्वरूपमाह।

**[वृत्तिः]** दोषगुणालङ्कारा वक्ष्यन्ते। क्वापीत्यनेनैतदाह यत्सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः। यथा—

> यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
> स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
> सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
> रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥१॥

अत्र स्फुटो न कश्चिदलङ्कारः। रसस्य हि प्राधान्यान्नालङ्कारता।

[कमला०] ननु दोषाद्यज्ञाने कथमिदं ज्ञायन्तत्राह दोषेति—क्वचिदिति रसवतीत्यर्थः। स्फुटालंकाराभावे काव्यत्वमुदाहरति यः कौमारेति—काचिद्रेवातीरे परपुंसा कृतसंकेता तद्रतिं गोपायन्ती सखीमाह—कौमारं नवयौवनं बाल्यं वा संकुचितयोनित्वं सम्भोगेन यो हृतवान्। हिशब्दो यद्यपीत्यर्थे। एवकारहिकारावन्ययोगायोगव्यवच्छेदपरावित्यन्ये। क्षपा रात्रयः। मालती वासन्ती न जातिः। प्रौढा रत्युद्दीपकाः। कदम्बो धूलिकदम्बो कदम्बाकारोऽनिल इत्यन्ये। अस्मीत्यहमर्थेऽव्ययम्। सैव चाहमित्यन्वयः। तत्रेति—अस्य लीलाविधिरेवारोधोवेतसीतरुतलैस्त्रिभिरप्यन्वयः। अत्र स्फुटो नेति—ननु अलंकारान्तराभावेऽपि कारणाभावे कार्योत्पत्तिर्विभावना कारणसत्वे कार्याभावरूपाऽतिशयोक्ति(?)श्चास्ति। तथा हि पतिसान्निध्याभावो ह्युत्कण्ठाकारणम्। इह च पतिसान्निध्याभावाभावेऽपि उत्कण्ठेति विभावना। एवं पतिसान्निध्ये कारणे सति अनुत्कण्ठारूपं कार्यं न किन्तूत्कण्ठैवेत्यतिशयोक्तिश्चास्तीति चेदत्राहुः। पतिसान्निध्याभावाभावस्य तत्त्वेन नात्राभिधानं किन्तु पतिसान्निध्येनैवमनुत्कण्ठाभावत्वेन नाभिधानं यदि ह्युत्कण्ठते चेत इत्युच्येत तदाऽतिशयोक्तिः स्यान्न चैवं किन्तूत्कण्ठात्वेन। अतस्तयोरस्फुटत्वे ननु स एवेति एवकारेण पतिसान्निध्यायोगव्यवच्छेदोक्तेस्तत्त्वाभावाभावत्वेनोक्तिरस्तीति विभावना स्फुटैवेति चेदत्र काव्य-

प्रदीपः। अयोगो ह्यसम्बन्धस्तद्व्यवच्छेदेऽपि न तदभावाभावः शाब्दः सिध्यति, किन्त्वर्थात्सम्बन्धाभावेन सम्बन्धभावासिद्धेः। न चाभावाभाव एव तच्छक्यः। अभावभावस्य भावत्वेन पाण्डुरादिपदे पौनरुक्त्यापत्तेरित्यूचे। काव्यलिङ्गं न स्फुटं सौरभे प्रौढत्वे च हेतुत्वानुक्तेः। अनुप्रासो न स्फुटः। अन्ये तु विभावनातिशययोः संकरादेकस्याऽप्यस्फुटत्वमित्याहुः। अन्ये तु सर्वौं प्रत्युक्तेर्वरसान्निध्याभाव एवात्रेत्याहुः। वयं तु समुत्कण्ठया विप्रलम्भस्य प्राधान्येन गुणत्वाभावान्नालंकारोऽत्रेति ब्रूमः। ननु चमत्कारकारित्वे रस एवालंकारोऽस्त्विति दण्डिमतमाशंक्याह **रसस्येति**—इह श्रृङ्गाररूपो रसः प्रधानम्। रसस्य गुणत्वेऽलंकारतेष्टा न प्राधान्ये इत्यर्थः। रसो विप्रलम्भ इत्यन्ये। पतिसान्निध्येऽपि गुरुसन्निधौ सुरतप्रतिबन्धे तत्सम्भवात्।

[सरि०] कारिकां व्याचिख्यासुर्वृत्तिकृद् दोषादिज्ञानायाह **दोषेति**—**दोषाः** आस्वादव्याघातकधर्माः **गुणा** रसोत्कर्षकतद्धर्माः **अलङ्कारा** आस्वादातिशयहेतुभूता बाह्यधर्माश्च ते। वक्ष्यन्ते पश्चान्निर्दिश्यन्ते तेषां रसज्ञानाधीनज्ञानविषयत्वेन तन्निरूपणानन्तरमेव निरूपयिष्यन्ते इत्याशयः। कारिकायां **क्वापी**त्येतस्याशयं निदर्शनमुखेन व्याचष्टे **क्वापीत्यादिना**=**क्वापि** इति **अनेन** पदेन। एतत् वक्ष्यमाणाशयम्। आह कथितमस्ति यत् शब्दार्थौ हि काव्यव्यपदेश्यौ सर्वत्र प्रायशः। **सालङ्कारौ** अलंकारमण्डितौ। **क्वचित्तु** कुत्रचित्स्थले। तु इति व्यवच्छेदे सत्यपि शब्दार्थयोः सर्वत्र सालंकारत्वेऽपेक्षिते इति। **स्फुटालङ्कारविरहे** स्फुटः स्पष्टतयोद्भावितोऽलंकार अलंकृतिस्तस्य विरहेऽभावे अलंकृतेरस्फुटत्वे। अपि इति समुच्चये। न। **काव्यत्वहानिः**--काव्यसिद्धौ काचिद् बाधा। प्रायः सर्वत्र स्फुट एवालंकार उपेक्षितः काव्ये किन्तु क्वचित्तु अस्फुटालंकारस्यापि अलंकारवत्त्वं भवतीत्याशयः। नायमस्याशयो यदलंकारस्य नितान्तविरहेऽपि काव्यत्वं सिध्यत्येवेति प्रत्युतास्यायमाशयो यद्यत्र कुत्रालंकारस्यास्फुटत्वेऽपि न हानिरिति। एतेन काव्येऽलंकारस्यापेक्षा साधितैव। अलंकारस्यास्फुटत्वेऽपि काव्यत्वसिद्धिमुदाहरति **य** इत्यादिना--'यः कौमारहरः स एव वरः हि ता एव चैत्रक्षपाः ते एव उन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः च सा एव अस्मि च तथापि सुरतव्यापारलीलाविधौ तत्र रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते' इत्यन्वयः। **यः** य एव **कौमारहरः** कौमारमक्षतयोनित्वमत्र तस्य हरस्त्रोटकः स एव नान्यो **वरः** पतिरस्तीति शेषः। हि इति निश्चये। यो हि मां प्रथमं सम्भुक्तवान् स एव मेऽभिलषितः पतिरस्ति नान्यः। प्रथमसम्भोक्तरि नार्या विशेषानुरागः प्रसिद्धः। वेश्याजनोऽपि प्रथमसम्भोक्तारमेव पतिं मत्वा तन्नाम्ना जीवति किमुताऽन्यासाम्। सोऽपि न केवलं पतिरपितु वरः स्वयमेवाङ्गीकृतो व्रियत इति व्युत्पत्त्या। तेन तयोरुभयानुरागः

स्पष्टः। ताः यास्वेकस्यां स मां प्रथमवारं सम्भुक्तवान् सम्प्रत्यपि स्मृतिपटलस्थाः, एव नान्याः। चैत्रक्षपाः मधुमासनिशाः। ते ये हि तदा सुरतस्य रहः साक्षिण आसन् एव उन्मीलितमालतीसुरभयः उन्मीलितास्तत्कालविकसिता या मालती वासन्तीलता तया तस्याः सम्पर्केण सुरभयः सुगन्धिताः प्रौढाः रत्युद्दीपनादिप्रागल्भ्य-शालिनः कदम्बानिलाः कदम्बस्य धूलिकदम्बवृक्षस्य अनिलाः पवनास्तत्सम्पर्किणो वा सर्वदिक्सञ्चारित्वेन कदम्बाकाराः समीरणाः चेति समुच्चये। अहमपि सा यस्या-स्तदा प्राथमिकया सम्भोगेन कौमारमपहृतम् एवेति व्यवच्छेदे नान्या अस्मि वर्ते वाऽस्मीति अहमर्थेऽव्ययम्। चकारः समुच्चये। तथापि तथास्थिते सत्यपि। सुरतव्यापारलीलाविधौ –सुरतस्य सम्भोगस्य यो व्यापारो दूतीसम्प्रेषणप्रसाधन-स्मितचुम्बनादिः स एव लीला विहारस्तस्या विधौ सम्पादने तत्र सुखसुरतानुकूले रेवारोधसि नर्मदातीरे वेतसीतरुतले वेतस्या वेष्टितस्तरुर्वृक्षस्तस्य तलेऽधोदेशे चेतो हृदयम्, समुत्कण्ठते समुत्सुकं भवतीति। श्लोकोऽयं शीलाभट्टारिकायाः। उक्तिरियं कुमारीभावे एव स्वयंवृतकान्तायास्तदैव तेनोपभुक्तायाः पश्चाच्च तेनैव परिणीतायाः कस्याश्चित्प्रियसखीं प्रत्युक्तिरिति साहित्यचूडामणिकारः परपुरुषरति-गोपनाय सखीं प्रति कस्याश्चिदुक्तिरिति कमलाकरः। उपभुक्तानामपि वरोपकरणा-दीनामत्यन्तप्रियत्वेन क्षणमप्यपरित्याज्यं सूचयन्त्याः कस्याश्चित्स्वकीयायाः सखीं प्रत्युक्तिरिति भीमसेनः। नदीतीरे स्वकीयाया एव सुरतवर्णननिर्देशाद् भीमसेनमत-मेवाऽत्र समीचीनं प्रतिभाति। अत्र काशकुशावलम्बनात्कश्चिदलंकारः कामं प्रसज्येत किन्तु नैव कश्चित्स्फुटोऽलंकारस्तथापि विप्रलम्भशृङ्गारप्राधान्यादुत्तमकाव्यताऽस्य। विशेषोक्तिविभावनयोः स्वविरुद्धार्थमुखेन कथञ्चिदुत्थापनेऽपि न स्पष्टत्वमुत्कण्ठोक्त्या निषेध्ययोः कार्यकारणयोर्भावान्तरमुखेनाभावाभिधानादिति साहित्यचूडामणिकारः। दर्पणकृत्त्वत्र स्पष्टमेव तयोः स्थितिं पश्यति। अत्रेदं तत्त्वम्। सत्यपि कारणे कार्याभावो विशेषोक्तिरसत्यपि कारणे कार्योत्पत्तिर्विभावना। अत्रोभावेवास्फुटौ। वरोपकरणयोरुपभुक्तत्वैवानुत्कण्ठाकारणम्। तत्सत्त्वे यद्यपि उत्कण्ठारूप अनुत्कण्ठा-भाव उक्तस्तथापि न अनुत्कण्ठाभावत्वेन किन्तूत्कण्ठात्वेनैव। तेन विशेषोक्ते-रस्फुटत्वैव। यदि चेतोऽनुत्कण्ठितं नेत्यभिहितं भवेत्तदाऽस्य स्फुटता स्यात्। तथैव उत्कण्ठाकारणाभाव उक्तस्तथापि न तदतत्ताविरहत्वेन किन्तु तत्तारूपेणैव। अतोऽस्या अपि नैव स्फुटता। यदि तत्ताविरहत्वेनोत्कण्ठा वर्णिता भवेत्तदेवास्याः स्फुटत्वं स्यात्। न चात्र काव्यलिङ्गमपि सौरभे प्रौढत्वे च कारणानिर्देशात्। न च क्रियादीपक-मस्मीत्येतस्याहमर्थेऽव्ययात्। सत्यपि तस्य क्रियापदत्वे तदन्विमा सर्वेषामेव प्राकरणिकत्वाद्दीपकस्य तु प्राकरणिकाप्राकरणिकोभयविषयत्वान्न तस्य स्फुटता। नाऽपि परिसङ्ख्या एवकारस्याभेदपरत्वेनेतरनिषेधपरत्वायोगात्। न समुच्चयः स्फुटो

वरादीनां गुणक्रियायौगपद्याभावात् । न तुल्ययोगिता वरादीनामुपमानोपमेयभावाभावात् । सदृशदर्शनाप्रयोज्यत्वात्कथनस्य प्रत्यभिज्ञाशरीरत्वाच्च नायं स्मरणालङ्कारविषयः । न च रसवदलङ्कारो रसस्य प्राधान्यादप्राधान्ये एव तस्यालङ्कारत्वोपगमात् । गुणदोषयोरिवालङ्कारस्यानियतत्वात् कामं कश्चिन्नवोऽलङ्कार उदपद्येत किन्तु नात्र कविप्रसिद्धालङ्कारस्फुटविषयोऽयम् । तथाप्यस्य चमत्कारातिशययोगेन काव्यत्वं न व्याहन्यत इति । तदेवाह **अत्रेति**—अत्र काव्येऽस्मिन् । **स्फुटः** स्पष्टतया समुद्भावितः । **कश्चित्** कोऽपि प्रसिद्धः । **अलङ्कारः** अलङ्कृतिः । **न** नैव प्रतीयते । तथाभवने हेतुं निर्दिशति **रसस्येति—हि** यतः । **रसस्य** विप्रलम्भात्मकस्य शृङ्गारस्य । **प्राधान्यात्** प्रधानतयाऽवस्थितेः । **अलङ्कारता** रसस्यालङ्कृतित्वमपि । **न** । न च प्रसिद्धालङ्कारस्य स्पष्टतयावभासनमिति ।

अथ प्रकरणानुरोधेन कानिचित्काव्यलक्षणान्युच्यन्तेऽत्र—

'निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्' —अग्निपुराणम् ।

'शब्दार्थौ सहितौ काव्यम्' —भामहस्य काव्यालङ्कारे (१।१३) ।

'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' — दण्डिनः काव्यादर्शे (१।१०) ।

'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते'

—वामनस्य काव्यालङ्कारसूत्रवृत्तौ (१।१) ।

'शब्दार्थौ काव्यम्' —रुद्रटस्य काव्यालङ्कारे (२।१) ।

'अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्' —हेमचन्द्रस्य काव्यानुशासने ।

'शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ च काव्यम्'

—वाग्भटस्य काव्यानुशासने ।

'गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ' —विद्यानाथस्य प्रतापरुद्रीये ।

'निर्दोषा लक्षणवती सरीतिर्गुणभूषणा ।
सालङ्काररसानेकवृत्तिर्वाक्काव्यनामभाक्' ॥ —जयदेवस्य चन्द्रालोके ।

'वाक्यं रसात्मकं काव्यम्' —विश्वनाथस्य साहित्यदर्पणे ।

'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' —जगन्नाथस्य रसगङ्गाधरे ।

काव्यत्वं हि शब्देऽर्थे वोभयोरेव वर्तत इति विषये आचार्या वैमत्यं भजन्ते । 'काव्यं पठितमर्थो न ज्ञात' इत्यादिव्यवहाराच्छब्द एव काव्यत्वव्यवहाराद् वेदादिवच्छब्द एव काव्यं नार्थ इति शब्दपक्षवादिनः । यदि हि शब्दार्थयोरेव तस्य स्थितिर्मन्यते तदापि एको न द्वावित्ति तत्र व्यासज्यवृत्तिर्न च प्रसज्यवृत्तिरेकस्मिन्नेव काव्यद्वयव्यवहारात् । कविकर्म काव्यम् । कवेः कर्म तु शब्द एव भवति नार्थस्तस्येश्वरेच्छाधीनत्वादिति । अन्ये तन्न मन्यन्ते । तन्मते काव्यत्वप्रयोजकस्यास्वादव्यञ्जकत्वस्य

शब्दार्थयोरविशेषात्, अर्थेष्वपि व्यञ्जनावृत्त्यङ्गीकाराच्छब्दार्थयोरुत्कर्षापकर्षाभ्यां काव्योत्कर्षापकर्षव्यवहारात् च न शब्दमात्रे काव्यं सिध्यति। यच्च काव्यं कृतमनेनेत्युच्यते तच्च तत्प्रकाश्यत्वपरमेव। अतथासति शब्दानां नित्यत्वे मौनिश्लोकादौ च शब्देष्वपि तदसम्भवत्वम्। अर्थोऽपि व्यङ्ग्यः कविकृत एव भवति। तेन हि शब्दार्थयोर्योजनात्मकः कविव्यापार एव काव्यं भवितुमर्हति न शब्दमात्रपरो नार्थमात्रपरो वा। यथा सूत्रपुष्पयोरन्यदीयत्वेऽपि माला हि प्रथनरूपव्यापारावलम्बिनी इति।

[वि० वृ०] दोषशून्यं सगुणं सालङ्कारं शब्दार्थयुगलं तत्काव्यम्। अदोषाविति। यावद्दोषराहित्यं स्फुटदोषराहित्यं रसापकर्षकदोषराहित्यं वा नञर्थः। अनलङ्कृती क्वापीति स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिः। यथा—

> प्रियः सोऽयं कृष्णः सहचरि कुरुक्षेत्रमिलित-
> स्तथाहं सा राधा तदिदमुभयोः सङ्गमसुखम्।
> तथाऽप्यन्तः खेलन्मधुरमुरलीपञ्चमजुषे
> मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति॥

अत्र न कश्चिदलङ्कारः स्फुटः। रसस्तु प्राधान्यादलङ्कार्य इति वक्ष्यते। न चाऽत्र विशेषोक्तिविभावना वा स्फुटा निषेधमुखेनानुपादानात्।

[वृत्तिः] तद्भेदान् क्रमेणाऽऽह—

**[कारिका] इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः॥४॥**

[कमला०] तद्भेदानिति—भेदनं भेदो विभागः। भिद्यतेऽनेनेति भेदो विशेषलक्षणं वेत्यर्थः। इदमिति—वाच्यात्पदार्थान् वाक्यार्थाच्च। गुरुमतेऽन्विताभिधानेन संसर्गस्यापि शक्यत्वात्। अत्र लक्ष्यादित्यपि द्रष्टव्यम्। साक्षात्परम्परया वा शक्तिजन्यज्ञानविषयत्वं वाच्यं तेनोभयोः सङ्ग्रह इत्यन्ये। इदं काव्यम्। वाच्याद् व्यङ्ग्येऽतिशयिनि चमत्कारकारिणी सत्युत्तमम्। स एव बुधैर्ध्वनिरुच्यत इत्यर्थः।

[सरि०] इत्थं काव्यस्वरूपमुक्त्वा सम्प्रति तद्भेदनिर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते तदित्यादिना—**तद्भेदान्** तस्य तादृशस्वरूपस्य काव्यस्य भेदान् भेदनं भेदो विभागस्तान्। **क्रमेण** आनुपूर्विकया। **आह** निर्दिशति कारिकाकार इति यावत्। कारिकामवतारयति इदमित्यादि—इदं वाच्याद व्यङ्ग्ये अतिशयिनि उत्तमं बुधैः ध्वनिः कथितः इत्यन्वयः। **इद** काव्यम्। **वाच्यात्** वाच्यार्थापेक्षया वाच्यार्थश्च शक्यार्थ एव सङ्केतितो मुख्यार्थः। स चाभिधया बोध्यः। **व्यङ्ग्ये**

व्यङ्ग्यार्थे । व्यङ्ग्योऽर्थो व्यञ्जनाविषयः । स च गुणीकृतस्वार्थाभ्यां शब्दार्थाभ्यामुपक्षिप्तः प्रयोजनानुगः । अतिशयिनि उत्कर्षतायुक्ते यत्र हि काव्यस्य चारुत्वं वाच्यार्थापेक्षया व्यङ्ग्यार्थे एव पर्यवस्यति तत्रेति । उत्तमं तदाख्यम् । भवतीति शेषः । स एव व्यङ्ग्योऽर्थो यत्र काव्यचारुत्वं पर्यवस्यति । बुधैर्विचक्षणैर्विशेषतो वैयाकरणैः । ध्वनिः इति कथितः--संज्ञितः इति । 'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ । ध्वनेः स एव विषयः' इत्युक्तेः । अत्र वाच्यार्थेन लक्ष्यार्थस्यापि ग्रहणं तदनुयायित्वात् । तथैवानेन वाक्यार्थस्यापि ग्रहणं गुरुमतेऽन्वयस्यापि शक्यत्वात् ।

[वि० वृ०] तद्भेदानाह --

[वृत्तिः] इदमिति काव्यम् । बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य । यथा --

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं वपुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥२॥

अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाधमपदेन व्यज्यते ।

[कमला०] नन्विदमित्यस्य प्रक्रम्यमाणध्वनिपरत्वे नपुंसकत्वायोगस्तत्राऽऽह काव्यमिति । स्फोटरूपेति—आशुतरविनाशिनां क्रमवतामानुपूर्वीरहितानां वर्णानां पदानाञ्च पदार्थवाक्यार्थधीर्न युक्ता मेलकाभावात् । अतः पूर्ववर्णानुभवजनितसंस्काररहितान्त्यवर्णानुभवेन ध्वन्यात्मिको नित्यब्रह्मरूपः सकलार्थप्रत्यायनक्षमः शब्दः स्फोटसंज्ञो व्यज्यते । वर्णाश्च तद्व्यञ्जकाः वृत्तिश्च व्यञ्जना । तद्व्यञ्जकः शब्दो ध्वनिर्व्यवह्रियते । तदुक्तम् ---

'एकैकवर्णसामर्थ्यान्मेलकानुपपत्तितः ।
एकं बुद्ध्वेनदीदीनतौल्यात्स्फोटः स च द्विधा ॥' इति ।

यथा तैः स्फोटव्यञ्जकशब्दस्य ध्वनिरिति व्यवहारकृतस्तथान्यैरप्यालङ्कारिकैर्न्यग्भावितं गुणीकृतं वाच्यमत्र तादृशव्यङ्ग्यव्यञ्जकस्य शब्दार्थयुगलस्य ध्वनिरिति व्यवहारः कृत इत्यनुषङ्गः । निःशेषेति—नायकानयनाय प्रेषितां तं सम्भुज्य स्नानापदेशेनागतां दूतीं प्रति नायिकारोषोक्तिरियम् । दूती न तु सखी । तेन मिथ्यावादो युक्तः । अधमपदे रतेर्व्यङ्ग्ये इतरपदानां सहकारित्वम् । निःशेषं च्युतं

न त्वीषत् तव स्तनयोस्तटं न तु सन्धिश्चूचुकं वा तत्रैव मर्दनाधिक्यात्। नितरां मृष्टो गतो रागो यत्र अधरो न तु पूर्वोष्ठस्तत्रैव चुम्बनाधिक्यात्। नेत्रे दूरमत्यर्थं दूरं शिरः सा नमयाञ्चकारेति नैषधोक्तेः। दूरं बहिर्न तु मध्ये इत्यन्ये। तत्त्वं तु स्तनयोः कञ्चुकिकायां सरणं चन्दनलेपो मर्दनात्तदपगमश्च स्पष्टं सुरतकार्यम्। नितरां मृष्टो मधुरो रागस्ताम्बूलरक्तिमा यस्येदृशोऽधरः। नेत्रे परिधानीयोत्तरीये वक्त्रे दूरमत्यर्थमनञ्जने निर्मले। अञ्जनं गौण्या मलोऽन्यथा सुरते कज्जलापगमायोगादयुक्ततापत्तेः। तदुक्तम्—

> "अधरे नववीटिकानुरागो नयने कज्जलमुज्ज्वलं दुकूलम्।
> इयदेव विभूषणं वधूनामितरद्भूषणमङ्गदूषणाय॥"

तेनोज्ज्वलवस्त्रताम्बूलरागादि महत्सुरतं लिङ्गम्। तेन स्नानायोगात्त्वं मिथ्या वदसीति वयम्। 'नेत्रं मेघागुणे वस्त्रे तरुमूले विलोचने' इति विश्वः। तन्वी कृशा म्लाना वा तनुः पुलकिता रोमाञ्चिता सुरतस्मरणात्। तवेत्यस्य स्तनतटादिभिः सर्वैरन्वयः। बान्धवजनस्य मद्रूपस्याज्ञातपीडासम्बन्धे। अन्यथा कथं मत्कान्तं रमये। तस्य बहुधा क्षान्तापराधस्य दूतीसम्भोगरूपनीचकर्मकर्तृत्वान्नीचस्य समीपं काक्वा न गतास्यपि तु गतास्येव न च काक्वाक्षिप्तत्वान्मध्यमत्वं झटित्यबोधात्। न हि तत्समीपगमनमात्रादपराधः किन्तु सुरतादिति विरुद्धलक्षणया गमनं तेन रतं व्यङ्ग्यमत एव रन्तुमिति तुमुन्। न लक्षणामूलगूढव्यङ्ग्यमिदम्। अत्रैके तादृशचन्दनच्यवनादीनां रतैकसाध्यत्वेन स्नानकार्यत्वबाधात्स्नातुं गतासीत्यत्र विपरीतलक्षणया न गताऽसीति लक्ष्यम्। न गताऽसीत्यत्र गतासीति विधिर्लक्ष्यः। नन्वेवमुपकृतं बहु तत्र—साहेन्तीतिवच्च तदन्तिकं गतासीति लक्ष्यमेव न तु व्यङ्ग्यमन्यथा तत्रापि लक्षणामूलव्यङ्ग्ये विपरीतलक्षणा न स्यादिति चेत्सत्यम्। अत्र विपरीतलक्षणैव। ग्रन्थे गतासीति लक्ष्यत इति शेषः। व्यज्यत इति तु रन्तुमित्यनेनान्वीयते अधमपदेन तद्व्यञ्जनादित्याहुः। काव्यप्रदीपादयस्तु न मुख्यार्थबाधादिस्वरूपं सल्लक्षणाबीजं किन्तु ज्ञातम्। तेन यत्र दूत्याः कान्तसङ्गो मानान्तरेण ज्ञातस्तत्र न गतासीत्यस्य मुख्यार्थबाधादस्तु लक्षणा। उपकृतं बहु तत्रेतिवत्। यदा तु मानान्तरेण न ज्ञातस्तदा बाधायोगान्न लक्षणा किन्तु अधमपदाद् व्यञ्जनयैव तद्धीः। देवनाथस्तु गतासि न गतासीत्यत्र नैकं लक्ष्यमननुगमाद् गौरवादन्यतरेणान्यतरासिद्धेश्च। तेन स्नातुं गताऽसि न तदन्तिकमिति स्नानविशिष्टतदन्तिकगमनाभावस्य विशिष्टस्याभावो लक्ष्यो वाच्यः। न च तद्युक्तं लक्षणायाः पदवृत्तित्वात्। तेन सिद्धा तदन्तिकगमने व्यञ्जनैवेत्याह। अर्थवादे प्राशस्त्यलक्षणावद्वाक्ये एव लक्षणेति केचित्। तदा माऽस्तु व्यञ्जनेत्यन्ये। तत्राधमपदे रतव्यङ्ग्यप्रतीतेऽर्वाञ्चस्तु निःशेषच्युतेत्यादेर्न सुरतकार्यत्वं स्नानकार्यत्वस्यापि सम्भवात्। अतो वक्तृबोद्धव्यवशादेवात्र व्यञ्जनेति।

सुबुद्धिमिश्रास्तु न गतासीत्यत्र काक्वा गतास्येवेति व्यङ्ग्यम्। न च काक्वाक्षिप्तं झटित्यप्रतीतेरित्याहुः। अत्र त्वय्येवविधायां यदहं विश्वसिमि यच्च दुर्विदग्धे तत्रास्मि तद्युक्तमेवञ्चन पात्रत्वमितीर्ष्यया विप्रलम्भस्य निर्वेदरूपसञ्चारिभावध्वनिः। दूतीसम्भोगचन्दनच्यवनादीनां परिरम्भचुम्बनादिद्वारा सम्भोगोत्कर्षद्वारा ईर्ष्योत्तेजकत्वमित्यप्याहुः।

[सरि०] कारिकां व्याख्याति इदमित्यादिना—इदमिति कारिकायां यत्क्लीबान्तं पदं तस्याशयः काव्यमिति। **बुधैर्ध्वनिरिति कथितः** इत्येतावदंशं विवृणोति। बुधैरिति वैयाकरणैः प्रथमे हि वैयाकरणा इत्युक्तेः। प्रधानेति प्रधानभूतोऽर्थप्रत्ययरूपफलोत्पादकत्वात्सर्वातिशयित्वेन स्थितो यः स्फोटरूपः स्फुटयति प्रकाशयत्यर्थमिति स्फोटो वर्णात्मकशब्देन प्रत्याय्यस्तद्रूपो यो व्यङ्ग्यो व्यञ्जनाविषयोऽर्थस्तस्य व्यञ्जकस्य व्यक्तिं विदधतः। शब्दस्य सार्थकवर्णसमूहस्य। ध्वनिः ध्वनति स्फोटं व्यञ्जयतीति। इति। व्यवहारः। ग्रहणकृतः। अस्यायमाशयः—वर्णात्मकः शब्दः। तद्गता वर्णास्तु अनित्या आशुविनाशिनश्च मेनकाभावादानुपूर्व्या ज्ञातुमशक्याः। तेभ्यो हि कथं पदार्थज्ञानमित्यपेक्षायामुच्यते पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्तिमवर्णानुभवेन स्फोटो व्यज्यते। स एव ध्वन्यात्मकः शब्दो नित्यः सकलप्रत्येयप्रत्यायनक्षमः 'इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम्। ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः'॥ इति स्तुतः। वर्णात्मक एव शब्दस्तस्य व्यञ्जकस्तत्र व्यञ्जनैव वृत्तिः सङ्केताद्यभावेन तस्य वृत्त्यन्तराविषयत्वात्। स एव व्यञ्जकः शब्दो ध्वनिरिति वैयाकरणानां मतम्। पूर्वपूर्ववर्णसमर्पितसंस्कारविशिष्टोऽन्तिमो वर्ण एव पदार्थमेवं पूर्वपूर्वपदार्पितसंस्कारवच्चरमपदमेव वाक्यार्थं बोधयति। क्रियैषैव स्फोट इत्युच्यते तद्व्यञ्जक शब्द एव ध्वनिरिति। काव्ये तस्य फलितं निर्दिशति तत इत्यादिना—ततः तज्ज्ञानानन्तरम्। तन्मतेति—तेषां यन्मतं पदार्थबोधनक्षमत्वात्प्राधान्येन स्थितो यः स्फोटस्तस्य व्यञ्जकत्वेन स्थितस्य शब्दस्य ध्वनिरिति संज्ञेति विचारस्तदनुसरणशीलैः तेषां मतमनुसरन्ति तच्छीलास्तैरिति। अन्यैः काव्यमर्मज्ञैः। अपि इति समुच्चये। न्यगिति—न्यग्भावितं गुणीकृतं वाच्यं शक्यार्थो येन तादृशं यद् व्यङ्ग्यं वाच्यवाचकाक्षिप्ततद्भिन्नार्थस्तस्य व्यञ्जने समाक्षेपे क्षमस्य समर्थस्य। शब्दार्थयुगलस्य शब्दस्यार्थस्य च ध्वनिरिति संज्ञा कृता द्वयोरेव काव्यत्वात्। उक्तमेव ध्वनिकृता—'यत्रार्थः शब्दो वा तमुपसर्जनीकृतस्वार्थौ। व्यक्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः'॥ इति। नव्यास्तु बुधैर्ध्वनिकारादिभिरिति व्याख्यान्ति। तन्मते व्याकरणे शब्दमात्रस्य ध्वनित्वेनाङ्गीकारादत्र बुधैर्वैयाकरणैरिति केवलं तन्मूलताप्रदर्शनायैवेति। समन्वयवादिनस्तु बुधैरिति वैयाकरणैर्ध्वनिकारादिभिश्चे-

त्यामनन्ति। यदेव वैयाकरणमते पदार्थवाक्यार्थधीस्तदेव ध्वनिकारमते चमत्कृतिः। उभयमेव वाच्येनासाध्यं व्यङ्ग्येनैवार्प्यमाणमिति वाच्याद् व्यङ्ग्यस्यातिशयः। फलितं तु प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वसाधर्म्याद् गुणीभूतवाच्यं यद्व्यङ्ग्यं तद्व्यञ्जनक्षमस्य शब्दार्थयुगलस्य ध्वनिसंज्ञोत्तमकाव्यता चेति। तदेवोच्यते—'वाच्यातिशयिनि व्यङ्ग्ये काव्यं तदुत्तमं ध्वनिः' इति। तदुदाहरणायोपक्रमते यथेति। उदाहरणं प्रस्तौति निःशेषेति—हे मिथ्यावादिनि! बान्धवजनस्य अज्ञातपीडागमे! दूति! तव स्तनतटम् निःशेषच्युतचन्दनम् अधरः निर्मृष्टरागः नेत्रे दूरम् अनञ्जने तनु तन्वी पुलकिता (यतः त्वम्) इतः स्नातुम् वापीम् गता असि पुनः तस्य अधमस्य अन्तिकम् न इत्यन्वयः। नायकानुनयाय प्रेषितां तत्र गत्वा समागतां लक्ष्यमाणसम्भोगचिह्नां दूतीं प्रति कस्याश्चित्कलहान्तरिताया स्वीयाया नायिकाया उक्तिरियममरूशतके निबद्धम्। हे मिथ्यावादिनि! मिथ्या तत्रागत्वैव गताऽहं तत्र। बहुधाऽनुनीतोऽपि स नागत इति नितान्तमसत्यं वदति प्रलपति तच्छीलेति तत्सम्बुद्धौ। बान्धवजनस्य बान्धवः सुहृत्तादृशो यो जनस्तस्यात्यन्तमेव सुहृत्त्वमुपागतस्यात एवातिविश्वस्तस्य जनस्य। अज्ञातेति अज्ञातोऽनवगतः पीडाया दुःखस्यागमः प्राप्तिर्यया सा तत्सम्बुद्धौ अनवध्यातमादृशविश्वस्तजनव्यथागाम्भीर्ये। दूति सन्देशहरे! न तु सखीति तत्प्रतिकूलाचारात्। तव-ते। स्तनतटं स्तनयोः कुचयोस्तटं प्रदेशः। निःशेषच्युतचन्दनं निःशेषं निरवशिष्टं यथा स्यात्तथा च्युतमपाकृतश्चन्दनं विलेपनं यस्मादिति तथोक्तम्। अधरो निम्नोष्ठः। निर्मृष्टरागः निर्मृष्टोऽपगतो रागस्ताम्बूलजन्यरागो यस्मात्तथाविधः। नेत्रे विलोचने। दूरं प्रान्तभाग एव। अनञ्जने न विद्यतेऽञ्जनं कज्जलं यत्रेति तथाभूते। तनुः वपुः। तन्वी कृशा! पुलकिता—सरोमाञ्चा। अतस्त्वम्। इतः अस्मात्स्थानात्। स्नातुं जलावगाहनार्थम्। वापीं दीर्घिकाम्। गता याता। असि। पुनस्तद्व्यतिरिक्तम्। तस्य अस्मद्बुद्धिस्थस्य। अधमस्य निकृष्टस्य निष्ठुरस्य शठस्य वा? अन्तिकं समीपम्। न नैव गतासीति सम्बन्धः। अत्र हि स्वीया प्रगल्भा नायिका। सा च कलहान्तरिता। शठो नायकः। ईर्ष्याक्रोधप्रायं नर्म। समाधिरलङ्कारो युगपदेवानेकधर्माणामभ्यासात्। वृत्तं शार्दूलविक्रीडितम्। तल्लक्षणं तु 'सूर्याश्वैर्मसजस्तताः सगुरव' इति। तत्र फलितमाह अत्रेत्यादिना। अत्रेति काव्येऽस्मिन्। तदन्तिकम् तस्य नायकस्यान्तिकं समीपम्। एव इति व्यवच्छेदे नान्यत्रेत्याशयः। रन्तुं सम्भोगेनात्मानमानन्दयितुम्। गताऽसि याता विद्यसे। इति ईदृश आशयः। प्राधान्येन मुख्यतयाऽन्येषामपि सहयोगेनेत्यर्थः। अधमपदेन निकृष्टकारित्वार्थकाधमपदप्रयोगेण। व्यज्यते ध्वन्यत इति। अस्यायमाशयः। कदाचित्कलहान्तरितया स्वीयया नायिकया नायकमनुनीयानेतुं काचिद्विश्वस्ता दूती प्रेषिता आसीत्। सा

च तं गत्वा तमेवोपभुज्य नायिको प्रत्यागत्याहं तत्र गता। बहुधानुनीतोऽपि स नागत इति कथितवती। तां लक्ष्यमाणसम्भोगचिह्नामपि विदग्धतया नायिका स्नानमुखेन तानेव व्यनक्ति निःशेषेत्यादिना। स्नानं तु वाप्यामेव न तु गृहादौ। तत्र स्वाच्छन्द्येन स्नानासम्भवाच्चन्दनादीनां निःशेषक्षालनेन वेशावशेषो न स्यात्। चन्दनं हि स्तनसमभागे एव विरहितं न तु चूचुकाग्रादौ। तत्र तु सशेषमेव तत्र नायककरामर्शायोगात्। स्तनयोः करामर्शस्तु समभागे एव भवति करतलोर्मुकुलितत्वेन मर्दने। स्नानपक्षे वाप्या जनाकीर्णतया सार्वदेशिकमार्जनासम्भवात्तथा। अधरस्य निर्मृष्टरागत्वं चुम्बनात्पानाच्च भवति न तु पूर्वोष्ठस्य चुम्बनादौ तन्निषेधात्। स्नानपक्षे तु अधरस्योत्तानत्वेन सुचिरजलसम्बन्धेन क्षालनसम्भवो न तूत्तरोष्ठस्य न्युब्जतया तत्र जलास्थैर्यात्। नेत्रप्रान्तयोरनञ्जनत्वमपि चुम्बनेनैव भवति न तु मध्यभागस्य तत्र चुम्बनादिनिषेधात्। स्नानपक्षे तु नयनयोर्मुद्रणात्प्रान्तभागं एव क्षालनसम्भवो न तु मध्ये। तनोस्तनुत्वं सुरतश्रमेण स्नानपक्षे शीतातिशयेन। पुलकितत्वं सुरतानन्दजातसात्त्विकभावेन स्नानपक्षे जाड्यातिशयेन। अत्र निःशेषादिपदानां स्नानसुरतयोः सूचकत्वेन तुल्यत्वेन अधमपदेनैव रन्तुमेव गतासीति व्यङ्ग्यं ध्वन्यतेऽन्यथा तद्वैयर्थ्यात्। केचित्तु बहुधा कृतापराधत्वादधमपदप्रयोग इति वदन्ति। तत्तुच्छम्। तथाविधस्य नीचस्य सकाशाद् दूतीप्रेषणासम्भवात्। नायकस्तदानीमेव कृतापराधो न तु तदभ्यस्तः। कलहान्तरितत्वञ्च तयोर्मानाधिक्येन। कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनमित्यादिवत्। यदि हि स्नानमेव कथनस्य लक्ष्यं तदा नायकस्याधमत्वं न सिध्येत्। कलहान्तरितत्वं प्रेम्ण एवांशो न त्वधमत्वप्रयोजकम्। तेन हि प्राधान्येन अधमपदेन निःशेषच्युतचन्दनामपि सहकारित्वेन रन्तुमेव गताऽसि इति ध्वन्यते इत्याशयः साधुः। अत्र हि स्नानस्य वाच्यतया तत्सम्बद्धा अर्था वाच्याः रमणसम्बद्धाश्चार्था व्यङ्ग्याः। केचिदत्र विपरीतलक्षणामधिकुर्वन्ति किन्तु तन्मन्दम्। निःशेषादीनां स्नानेऽपि सम्भवान्मुख्यार्थबाधाविरहात्। यथोक्तं परमानन्दैः—"न च तात्पर्यविषयतदन्तिकगमनान्वयानुपपत्त्या लक्षणैवेति वाच्यम्। स्नानप्रतीतिमुखेन तत्प्रकाश एव तात्पर्यस्योक्तत्वात्। तत्प्रकाशश्च वाचकत्वविरहेण व्यञ्जनयैव।" इति। अत्र हि शब्दशक्तिमूला वस्तुध्वनिर्वाच्यप्रतिषेधरूपे विधिरूपः। तद्व्यञ्जकं त्वधमपदं प्राधान्येन। स इव त्वं त्वमिव सोऽप्यधम इति उपमेयोपमालङ्कारो व्यङ्ग्यश्च। अत्र केचन वक्तृबोद्धव्यवैशिष्ट्येनार्थव्यञ्जकतामधिवदन्ति। सुबुद्धिमिश्रास्तु नञि काकुमधिवक्ति। परमानन्दास्तु 'पूर्ववाक्यार्थान्वितयत्किञ्चिदर्थस्य परवाक्यार्थे निषेधप्रत्यायनोत्सर्गात्तदन्तिके गमननिषेधस्य द्राक् प्रतीतिरनन्तरं वक्तृबोद्धव्यवैशिष्ट्येन स्नानार्थगमननिषेधतदन्तिकगमनयोः प्रतीतिरिति वदन्ति। तदेव वयमप्यनुकुर्मः ॥

[वि० वृ०] इदं काव्यं वाच्याद् व्यङ्ग्येऽतिचमत्कारिणि सत्युत्तमम्। तदेतदुत्तमं काव्यं ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या बुधैर्ध्वनिरित्यभिधीयते। यथा—

मुक्तावली निशि मया दयिताकदम्बवाटीकुटीरकुहरे सखि विस्मृताऽसि।
तामाहरेति वृषभानुजया नियुक्ता तां प्रोज्झ्य किं शशिकले गृहमागतासि।

अत्र कृष्णाङ्गसङ्गानुभवायैव तया त्वं प्रतार्य प्रेषिता न पुनर्मौक्तिकहाराहरणाय। यन्नखाङ्कशशिकलाञ्चितवक्षोजशम्भुः समागताऽसीति व्यङ्ग्यस्य वाच्यादतिचारुत्वादुत्तममिदं काव्यम्।

[कारिका] अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।

[वृत्तिः] अतादृशि वाच्यादनतिशायिनि। यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥३॥

अत्र वञ्जुललतागृहे दत्तसङ्केता न गतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारित्वात्।

[कमला०] अतादृशीति-व्यङ्ग्ये वाच्यादनतिशायिनि चमत्काराजनके मध्यमम्। व्यङ्ग्यस्य वाच्यादनतिशयश्च तत्समत्वे गुणत्वे वा। ग्रामेति-ग्रामे स एव तरुणो नान्यो येन विश्रान्तिः स्यात्। ग्रामस्य स्त्रीसमूहस्य तरुणः। तेन स्त्र्यन्तरसत्त्वान्न तस्यापेक्षा। तं पश्यन्त्यास्तरुण्या लतागृहे दत्तसङ्केताहं न गतेति सुरतनिराशतया मुखकान्तिर्नितरां मलिना भवतीत्यर्थः। वाच्यस्यैवेति—दर्शनं हि मालिन्यं प्रति कारणम्। अत्र पश्यन्त्या इति वर्तमानापदेशाद् दर्शनमुखमालिन्ययोर्वर्तमानकालत्वादतिशये वाच्ये नैव व्यङ्ग्यादधिकश्चमत्कारो जन्यत इत्यर्थः।

[सरि०] मध्यमकाव्यत्वं निर्देशकारिकामवतारयति अतादृशीत्यादि--व्यङ्ग्ये अतादृशि गुणीभूतव्यङ्ग्यम् मध्यमम् इत्यन्वयः। व्यङ्ग्ये व्यङ्ग्यार्थे प्रसिद्धातिरिक्तप्रतीयमानोऽर्थो व्यङ्ग्यस्तस्मिन्। अतादृशि अतथाभूते वाच्यादनतिशायिनि वाच्यस्य समत्वे वा तदपेक्षया गुणीभूतेऽपि गुणीभूतव्यङ्ग्यं गुणीभूतोऽप्राधान्येन प्रतीतो व्यङ्ग्यः प्रतीयमानोऽर्थो यस्मिंस्तत्तथाभूतम्। मध्यमं मध्यमकाव्यम्। भवतीति शेषः। वा मध्यमं काव्यम् तदेव गुणीभूतव्यङ्ग्यमित्यपि गुणीभूतञ्च तद् व्यङ्ग्यम्। यत्र हि व्यङ्ग्योऽर्थो वाच्यार्थस्य समत्वं वा तदपेक्षया गुणत्वं भजते तदा तु काव्यं मध्यमं भवति तच्च गुणीभूतव्यङ्ग्यसंज्ञकमिति। स्फुटव्यङ्ग्यविषयत्वान्नातिव्याप्तिश्चित्रे। कारिकां व्याख्याति वृत्तिकृत् अतादृशीति— अतादृशि इत्येतस्याशयो वाच्याच्छब्दार्थाद् अनतिशायिनि अनुत्कर्षशालिनि तत्समत्वेन वा तदपेक्षया गुणभावेन

च तस्य । तदेवोदाहरणायोपक्रमते—यथेति । उदाहरणं प्रस्तौति ग्रामेति--नव-वञ्जुलमञ्जरीसनाथकरम् ग्रामतरुणम् पश्यन्त्या तरुण्याः मुखच्छाया मुहुः नितराम् मलिना भवति इत्यन्वयः । नवेति नवा प्रत्यग्रा वञ्जुलस्याशोकस्य मञ्जरी पल्लवं तया सनाथो युक्तः करो हस्तो यस्य तं तादृशम् । अनेन सङ्केतस्थलं गत्वा तत्र तामनासाद्यैव प्रतिनिवृत्त इति व्यज्यते । ग्रामतरुणं—ग्रामस्य सर्वस्या एव न त्वेकस्या एव कस्याश्चित् तरुणं युवानम् । अनेन तस्य बहुवल्लभत्वं तेन यथा-कथञ्चित्तदा प्राप्तिः पुनर्दुर्लभत्वञ्च ध्वन्यते । ग्रामे स एवैको रमणयोग्य तरुण इत्य-प्यस्या आशयः । पश्यन्त्या विलोकयन्त्या । तरुण्या रमणोत्सुकाया युवत्या । अनेन तस्याः कन्यात्वं व्यज्यते । मुखच्छाया--मुखस्य वदनस्य छाया कान्तिः । मुहुः – पुनः-पुनः परभयेन दर्शनस्य सातत्यविरहात् । नितराम् अत्यन्तमेव । मलिना श्रीहीना । भवति सम्पद्यते । इति । यदा यदा पश्यति तदा तदैव मलिना भवतीत्याशयः । श्लोकोऽयं रुद्रटप्रणीते काव्यालङ्कारे प्रस्तुतो भावनिदर्शनाय । तत्र फलितमाह अत्रेति--अत्र काव्येऽस्मिन् । वञ्जुललतागृहे वञ्जुलवल्लरीगहने । दत्तसङ्केता—दत्तो निश्चितः सङ्केतो मिलनस्थानं यया । सैव । न । आगता प्राप्ता । इति इत्थम् । व्यङ्ग्यं प्रतीयमानार्थः, गुणीभूतं चमत्कारापर्यवसायित्वादप्राधान्येन स्थितम् । व्यङ्ग्यस्य गुणीभावे हेतुमाह तदिति—तस्य व्यङ्ग्यार्थस्य अपेक्षया तुलनया । वाच्यस्य आभिधेयस्यार्थस्य । एवेति निर्द्धारणे । चमत्कारित्वात् आस्वादशालित्वात् । अत्र व्यङ्ग्यस्य हि सङ्केतभङ्गेन विप्रलम्भाभासस्य वाच्येन मुखश्रीमालिन्येनैव पोषणमिति व्यङ्ग्यस्य वाच्यमुखप्रेक्षित्वाद् गुणीभावः ।

[वि० वृ०] वाच्यादचारुणि व्यङ्ग्ये तदिदं मध्यमं गुणीभूतव्यङ्ग्यमित्यभि-धीयते । यथा—

> कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः ।
> निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥

अत्र रसालवाटीकृतसङ्केता तत्राहं न गतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चारुत्वात् ।

**[कारिका] शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥५॥**

**[वृत्तिः]** चित्रमिति गुणालङ्कारयुक्तम् । अव्यङ्ग्यमिति स्फुट-प्रतीयमानार्थरहितम् । अवरमधमम् । यथा—

> स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
> मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः ।

भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥४॥
विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥५॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेषनिर्णयो
नाम प्रथम उल्लासः ।

—०—

[कमला०] शब्देति—अव्यङ्गचं स्फुटव्यङ्गचशून्यम् । अवरमधमं काव्यमित्यर्थः । तच्च व्यङ्गचाभावे तस्यास्फुटत्वे चेति द्वेधा । चित्रपदार्थमाह गुणेति—गुणा माधुर्यादयः । तेषां रसनिष्ठत्वेऽपि तद्व्यञ्जकशब्दार्थपरं यथा वक्ष्यति 'गुणवृत्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इति । शब्दालङ्कारा अनुप्रासादयः । अर्थालङ्कारा उपमादयस्तैर्युक्तम् । शब्दचित्रमाह स्वच्छन्देति—स्वच्छन्दं यथेष्टं स्वेच्छया वा उच्छलन्त्योऽच्छा निर्मलाः कच्छकुहरेषु जलप्रायदेशविलेषु छातेतराः कृशेतराः पुष्टा इत्यर्थः । 'अमांसो दुर्बलश्छात' इत्यमरः । याऽम्बुच्छटा जलोर्मयस्ताभिर्मूर्च्छन्नुश्यन् मोहोऽज्ञानम् स्वेद इत्यपव्याख्या अप्रसिद्धेः येषां तैर्महर्षिभिर्हर्षेण विहिते स्नानाह्निके यस्यां सा । उद्यन्त उदारा महान्तो दर्दुरा भेका यासु ताश्च ता दर्यश्च कन्दरास्तासु दीर्घा विस्तृता । दर्दुरः पर्वतविशेषः, अन्यथा कच्छकुहरेति पौनरुक्त्यापत्तेः । मन्दाकिनी च न गङ्गा दर्दुरगिरेस्तदसम्बन्धात् । तेन नद्यन्तरमेवेदमिति कश्चित् । तं प्रसिद्धिरेव गलहस्तयतु । दरिद्रा शीर्णमूला यद्वा अदरिद्रा महान्तश्च ते द्रुमाश्च तेषु द्रोहोद्रेको येषां ते च ते महोर्मयस्तैर्मेदुरो मांसलोमदो यस्याः सा मन्दाकिनी गङ्गा । अह्नाय शीघ्रम् । वो युष्माकम् । मन्दतां जाड्यम् । भिद्यादित्यन्वयः । यद्यप्यत्र गङ्गाविषया रतिर्व्यङ्गचा । तीर्थान्तरव्यतिरेकश्च तथापि तत्र कवेर्न तात्पर्यम् । अनुप्रासादिक्षिप्तचित्तत्वात् । तदाह ध्वनिकृत्—रसभावादिविरहविवक्षाविरहे सति । अलङ्कारनिबन्धो यः स चित्रविषयो मतः इति । अर्थचित्रमाह, विनिर्गतमिति—मानं द्यति खण्डयति शत्रूणां मित्राणामानन्दं यदृच्छया आत्मनगराद् विनिर्गतं हयग्रीवसंज्ञं राजानमुपश्रुत्य अमरावती भिया निमीलिताक्षी वेत्यर्थः । ननु हयग्रीवस्य प्रतापो वीररसस्तद्गोचरभावश्च व्यङ्गचोऽस्तीति कथमव्यङ्गचत्वम् ? अत्र देवनाथः । यदेकस्य वाक्यस्यावच्छेदकभेदेन ध्वनित्वं मध्यमत्वमधमत्वञ्चास्त्येव । एवमन्यत्रांशे व्यङ्गचसत्त्वेऽपि भिया निमीलिताक्षीवेत्यर्थचित्रम् अव्यङ्गचत्वात् इवोक्तस्योत्प्रेक्षालङ्कारस्य भयस्य च शाब्दत्वेन व्यञ्जनावृत्त्यगम्यत्वात् । अक्षिनिमीलनाच्च न प्रतापो व्यङ्गचो विद्युदादिवद्भयेन

तत्सम्भवात् प्रतापाजन्यत्वादित्याह। वध्यत्वेन च वर्णने तज्जयान्नायकोत्कर्ष इति रसभावादेरनुनयः। अलङ्कारमात्रात्तूदाहरणमित्यन्ये।

इति श्रीमन्महामहोपाध्यायरामेश्वरभट्टसूरिसूनुनारायणभट्टात्मज-
रामकृष्णभट्टसूनुकमलाकरकृते काव्यप्रकाशव्याख्याने
प्रथम उल्लासः। श्रीः शुभम्।

—०—

[सरि०] अथ क्रमप्राप्तं काव्यस्य तृतीयभेदस्य निर्देशककारिकामवतारयति वृत्तिकृत् शब्देत्यादि। अव्यङ्‌ग्यम् तु अवरम् स्मृतम् तत् शब्दचित्रम् वाक्यचित्रम् इत्यन्वयः। अव्यङ्ग्यं न विद्यते व्यङ्‌ग्यं यस्मिस्तदव्यङ्‌ग्यं व्यङ्‌ग्यार्थशून्यं यद्वा सत्यपि तस्मिस्तत्प्रासङ्‌गिकत्वेनैव स्थितं वा स्फुटव्यङ्‌ग्यरहितमपि यत्काव्यं तद्। अवरमधमम्। स्मृतं मतम्। तच्चाधमकाव्यं चित्रमित्यभिधीयते। चित्रत्वञ्च लेख्यमात्रत्वात्कलामात्रत्वाद्वा। तच्च द्विविधम्। शब्दचित्रं शब्दे एव चित्रं न पुनरन्यत्र रसादौ। अर्थचित्रम्—अर्थाख्ये काव्यभागे एव चित्रं न तु रसादौ। कारिकाशयं विवृणोति वृत्तिकृच्चित्रमित्यादिना। चित्रमिति गुणालङ्‌कार-युक्तं गुणा माधुर्यादयोऽलङ्कारा उपमादयस्तैर्युक्तं मण्डितम् गुणालङ्काराणामेवोत्कट-वैचित्र्यमण्डितं न तु व्यङ्‌ग्यार्थस्यास्वाद्यस्य। अव्यङ्ग्यमिति स्फुटेति स्फुटः स्फुटत्वेनोद्भावितो यः प्रतीयमानो व्यङ्‌ग्यरूपोऽर्थस्तेन रहितं शून्यम्। अवरमिति अधमं निकृष्टम्। अस्यायमाशयः—व्यङ्‌ग्यस्य हि प्राधान्ये काव्यमुत्तमं तस्य गुणीभावे तन्मध्यमं तस्याभावे वा सत्यपि कवेरतत्परत्वे वा स्फुटावभासनाभावेऽपि तदधमम्। काव्यं तु आस्वादवदेव भवति। आस्वादश्च व्यङ्‌ग्य एवेति कथम-व्यङ्‌ग्यं सम्भवति काव्यमित्यपेक्षायामुच्यते। तत्र हि प्रथमं तु गुणालङ्कारयो-रुत्कटवैचित्र्ये हृदयं विश्राम्यति। परत एव कथञ्चिदास्वादोऽनुभूयत इत्यस्य चित्रत्वम्। अत एव तत्परत्वेन काव्योद्देश्यानिर्वाहकत्वादस्याधमत्वम्। चित्र-मिव चित्रम्। यथा हि चित्रे विविधचित्ररेखावैचित्र्यं तथैव चित्रकाव्ये गुणा-लङ्कारयोः। न हि तत्र कविसंरम्भगोचरः प्रतीयमानोऽर्थः। सर्वस्यापि काव्यार्थ-स्यान्ततो विभावत्वेन व्यञ्जकत्वं तु भवत्येव किन्तु चित्रे न कवेस्तत्र तात्पर्यमपितु शब्दयोजनामात्रे वाऽर्थयोजनामात्र एवेति। ननु चित्रं हि कथं काव्यभेदः? प्राधान्येन प्रतीतौ व्यङ्‌ग्यस्य ध्वनित्वमप्राधान्येन वा वाच्यसमकक्षत्वेन प्रतीतौ गुणीभूतव्यङ्‌ग्यत्वमिति व्यङ्‌ग्यस्य द्विःप्रकारत्वेन द्विविधमेव काव्यं सम्भवति। यदाऽव्यङ्‌ग्यत्वेन व्यङ्‌ग्याभावस्तदा तस्य काव्यत्वमेव न भवति—'प्रधानगुण-भावाभ्यां व्यङ्‌ग्यस्यैव व्यवस्थितेः। उभे काव्ये ततोऽन्यत्तु तच्चित्रमभिधीयते।' इति कथनात्। अव्यङ्‌ग्यत्वमीषद्व्यङ्‌ग्यत्वमिति चेत्किं तन्नाम आस्वाद्य-

व्यङ्ग्यत्वमनासाद्य व्यङ्ग्यत्वं वा ? आद्यस्य तु पूर्वोक्तभेदयोरेवान्तःपातः। द्वितीये त्वकाव्यत्वमेवेति। तदचारु। वाच्यवाचकवैचित्र्यप्रतीतिव्यवहितप्रतीतिकस्यास्फुटव्यङ्ग्यत्वस्यापि तृतीयप्रकारस्य सिद्धान्तितत्वात्। गुणालङ्कारवैचित्र्ये व्यङ्ग्यस्य नाङ्गित्वं न वाऽङ्गत्वमिति पूर्वोक्ताभ्यां भेदः। ध्वनिकारस्यापि अयमेवाशयो यद् व्यङ्ग्यस्य प्रधानगुणभावाभ्यां काव्ये द्विविधे। तस्य प्राधान्यगुणीभावाभावे तु चित्रमिव चित्राख्यो हि काव्यभेद इति। ननु गुणालङ्कारयोगस्तु सर्वत्राऽपि भवति तत्कथं गुणालङ्कारयोगश्चित्रमित्युच्यत इति चेदित्थम्। सत्यमेव गुणालङ्कारयोर्योगस्तु सार्वत्रिक एव तद्राहित्ये काव्यत्वस्यैवासिद्धेः। यत्र हि तयोरतिशायि वैचित्र्यं तत्रैव तृतीयप्रकारता काव्यस्योदेति। अथवा यत्र हि आस्वादनिर्वाहकपरत्वेन तयोर्निर्वाहस्तदा तयोर्व्यङ्ग्यस्याङ्गत्वेन तत्रोत्तममध्यमकाव्यता। यत्र तु तयोर्निर्वाहमात्रमुद्दिश्य पृथक् प्रयत्नस्तत्र चित्रकाव्यतोदेति तयोः प्राधान्यात्। उक्तमेव ध्वनिकारेण—"विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन" इति। तत्परत्वेन व्यङ्ग्यपरत्वेनात एवाङ्गत्वेन न त्वङ्गित्वेन प्राधान्येनेति। तेन स्थितं यद् व्यङ्ग्यस्य प्राधान्ये काव्यमुत्तमम्। तस्य गुणीभावे गुणीभूतव्यङ्ग्यं मध्यमं काव्यम्। गुणालङ्कारयोः प्राधान्ये व्यङ्ग्यस्यास्फुटत्वेनाधमं काव्यमिति काव्यस्य त्रैविध्यम्। शब्दचित्रोदाहरणायोपक्रमते यथेति—उदाहरणं प्रस्तौति स्वच्छन्देति-स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निका उद्यदुदारदर्दुरदरीदीर्घा अदरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी वः मन्दताम् अह्नाय भिद्यात् इत्यन्वयः। स्वच्छन्दं स्वाधीनं न तु वाय्वादिप्रेरितमुच्छलदुत्तरङ्गम् अच्छं निर्मलं च कच्छे जलसमीपे यत्कुहरं तरङ्गनिरन्तरखननभूतविवरं तत्र छातेतरत्कृशेतरदर्थाद्वेगवत् यदम्बु जलं तस्य छटया परम्परया मूर्च्छन् प्रादुर्भवन् मोहो विस्मयरूपमज्ञानं कथमित्थं सञ्जातमिति येषान्ते तादृशा ये महर्षयो महामुनयस्तैर्हर्षेण प्रमोदातिरेकेण भक्त्या विहितं सम्पादितं स्नानमवगाहनमाह्निकमवशिष्टसन्ध्यादिनित्यकृत्यं यस्यां सा तादृशी भक्त्यतिरेकव्यक्तये हर्षपदम्। फलाधिक्यद्योतनाय स्नानाह्निकपदम्। स्नानस्य मुक्तिफलकत्वेन पृथगुपन्यासः। उद्यदिति—उद्यदुन्नत उदारो महान् सर्वाश्रयत्वेन यो दर्दुरः पर्वतो विशेषेण हिमालयस्तस्य दर्यो गुहास्ताभिर्दीर्घा तत्र प्रतिध्वनितत्वेन दीर्घतमवेगरचना। अदरिद्रेति दरिद्रा शाखापत्रादिसम्पन्ना जलसान्निध्याद्ये द्रुमास्तटवृक्षास्तेषां द्रोहे उन्मूलने उद्रेको वैशिष्ट्यं येषान्तादृशा महोर्मयो महातरङ्गा एव मेदुरो निविडो मदो गर्वो यस्याः सा तादृशी। मन्दाकिनी तदाख्या महानदी गङ्गायास्तिसृषु शाखास्वन्यतमा। गङ्गा हि मन्दाकिनी—अलकनन्दा—भागीरथीति त्रिविधस्वरूपेण हिमालयादवतीर्य पश्चादेकतां भजते। वः युष्माकमुपचारादस्माकञ्च। मन्दतामज्ञानम्। अह्नाय झटित्येव। भिद्यान्नाशयत्विति। केचित्तु स्वच्छन्दमुच्छलन्त्योऽच्छाः

कच्छकुहरेषु छातेतरा याऽम्बुच्छटा जलोर्मयस्ताभिर्मूर्च्छन्नश्यन्मोहोऽज्ञानं येषान्ते तादृशैर्महर्षिभिर्हर्षेण विहितस्नानाह्निका । उद्यन्त उन्नतिशीला उदारा महान्तो ये दर्दुरा भेकास्तेषां दर्यो निवासाय कृता गर्तविशेषास्तासु दीर्घा प्रसृता । दरिद्रा शीर्णमूला यद्वा अदरिद्रा स्थूलमूला ये वृक्षाः······इत्यपि व्याख्यान्ति । तच्चिन्त्यम् । दर्दुरस्य भेकार्थे कच्छकुहरेत्यत्र पौनरुक्त्यं स्यात् । मन्दाकिन्या भेकबलात्प्रसृत्वमुपहसनीयञ्च । यत्तु गङ्गाया दर्दुरपर्वतासम्बन्धान्मन्दाकिनी गङ्गेतरैव नदीति कथ्यते कैश्चिषदव्यज्ञानमूलमेव । दर्दुरो हि पर्वतः केदारखण्डे विलसति यस्योपत्यका गतदीर्घिकातो मन्दाकिनी प्रथमं मन्दवेगेन पश्चाच्च प्रबलवेगेन स्ववेगध्वनिना दरीश्च प्रतिध्वनयन्ती पर्वतमध्यभागं प्राग्यालकनन्दया सह मिलति । तच्च तीर्थं रुद्रप्रयागसंज्ञकम् । ततश्च चलिते ते भागीरथ्या सह मिलतः । तत्तीर्थं देवप्रयागसंज्ञकम् । ततोऽवतीर्य या एकीभूय हरिद्वारमाप्लावयति । शार्दूलविक्रीडितं वृत्तम् । अत्र हि तीरस्थद्रुमपातानादिकार्यस्य नदीमात्रस्य सर्वसामान्यत्वेऽपि स्वच्छन्दोच्छलनमहर्षिनिषेत्रणदर्दुरदरीप्रतिध्वननादि कर्मणा असाधारणत्वान्मन्दाकिन्या नद्यन्तरात्तीर्थान्तराच्च व्यतिरेको व्यङ्ग्यस्तद्विषयप्रोतेरभिव्यक्तेः । किन्तु व्यङ्ग्यं तत्र न कवेस्तात्पर्यं तत्तु प्रासङ्गिकमेव तेनास्फुटम् । कवेस्तात्पर्यं तु अनुप्रासमात्रे एव । व्यङ्ग्यस्य सत्त्वेऽपि तस्यास्फुटत्वात्कवेस्तात्पर्यविषयीभूतत्वाभावाच्चास्य चित्रकाव्यत्वं शब्दाश्रयेण । सत्यमेव नास्ति स काव्यार्थो यस्यान्ततो विभावत्वेन व्यञ्जकत्वं न स्यात् । किन्तु तादृशं हि व्यञ्जकत्वं यदि गुणालङ्कारभारेणाव्यवहितं तदा तत्रोत्तममध्यमकाव्यतोदेति । तस्य व्यवहितत्वे तु तस्यावरत्वमेवेति । रसादितात्पर्यमनपेक्ष्यैव केवलं शब्दार्थाभ्यां सह यत्र क्रीडयते कविना तदेवावरकाव्यत्वस्य प्रयोजकम् । अर्थचित्रोदाहरणं प्रस्तौति **विनिर्गतमिति**—मानदम् यम् आत्ममन्दिरात् यदृच्छया अपि विनिर्गतम् उपश्रुत्य ससम्भ्रमेन्द्रद्रुतपातितार्गला अमरावती भिया निमीलिताक्षी इव भवति इत्यन्वयः । **मानदम्**—मानमुत्कर्षं परेषा द्यति खण्डयति मित्राणां तु ददातीति तम् । य हयग्रीवम् । आत्ममन्दिरात्—स्वकीयावासतः । यदृच्छया स्वमनीषिकया विहरणाय न तु युयुत्सया । अपि । विनिर्गतं निःसृतं न तु प्रस्थितमेव । उपश्रुत्य—कर्णाकर्णिकया श्रुत्वा न तु दूतमुखेन । ससम्भ्रमेति—ससम्भ्रमेण नितान्तभीतेनात एव त्वरितेन इन्द्रेण पाकशासनेन द्रुतमविलम्बं दौवारिकाह्वानविलम्बासहतया स्वयमेवेति पातिता विनिक्षिप्ता न तु विस्रब्धं यथास्थाने निहिता अर्गला द्वारपिधानदीर्घकाष्ठं यस्यां सा तादृशी । **अमरावती** देवनगरी । **भिया** भीत्याधिक्येन । **निमीलिताक्षी** निमीलिते सङ्कुचितेऽक्षिणी नयने यया—तादृशी । इव इत्युत्प्रेक्षा । भवति सञ्जायत इति ।

हयग्रीवनिःसरणश्रवणसमकालमेव द्वारपिधानकार्यद्योतनाय ससम्भ्रमपदम् । वृत्तं वंशस्थम् । लक्षणन्तु--'जतौ वंशस्थमुदीरितं जरौ' इति । हयग्रीववधाख्यनाटकगतं पद्यमिदम् । अत्र हि अमरावतीति स्त्रीत्वाध्यवसानमूलोत्प्रेक्षालङ्कार एव चमत्कारविश्रामभूमिर्न तु हयग्रीवप्रभावस्य व्यङ्ग्यस्य । अत्र हयग्रीवप्रभावस्फुटप्रतीतेर्वीररसोद्बोधनात्कथमस्य चित्रत्वमित्यत्रोच्यते । वीरो हि रस उत्साहप्रकृतिको न तु प्रभावजन्मा । उत्साहश्च युद्धदानदयान्यतमविषयक एव । सोऽपि कार्यारम्भसंरम्भरूपः । अत्र तु यदृच्छया न तु युयुत्सया विनिर्गतं न तु प्रस्थितमित्यादिपदैर्नोत्साहो दृश्यते येन वीररसोद्बोधः स्यात् । तथैवामरावत्या अचेतनत्वाद्वीरावलम्बताऽपि असम्भवैव । तथैव तस्यामुत्प्रेक्षितं त्रासवत्त्वं न रसोद्बोधहेतुरपि तु तद्विरोध्येव । चमत्कारश्चोत्प्रेक्षार्थालङ्कारघटकतयैव न तु व्यङ्ग्यविलासेन । कामं तत्रोत्साहस्य तदेकाश्रयत्वेन वीराभासः सम्पद्येत । किन्तु तन्न, स्फुटमनास्वाद्यत्वात्प्राथम्येन । व्यङ्ग्यश्चात्र शब्दार्थगतवैचित्र्याद् व्यवहितमेव । सहृदयेषु हयग्रीवप्रभावापेक्षया अमरावत्या भयस्यैव प्रभावाधिक्यात् । इति ।

इत्थं हि काव्यप्रकाशे काव्यस्य यशःप्राप्तिप्रभृतिप्रयोजनानि शक्त्यादि काव्यकारणम्, अदोषसगुणप्रायःसालङ्कृतशब्दार्थयुगलस्य काव्यत्वमिति काव्यलक्षणम् व्यङ्ग्यस्य प्राधान्ये काव्यस्योत्तमत्वं गुणीभावे मध्यमत्वमस्फुटत्वेऽवरत्वमिति काव्यविशेषनिर्णयश्च प्रथमे हि उल्लासे निरूपिताः ।

इति श्रीमद्वत्सगोत्रोत्पन्न-रविलालात्मजपरशुरामसूनुविष्णुमायागभंज-
कात्यायनपथानुयायिमाध्यन्दिनीयशाखान्तर्गतशुक्लयजुर्वेदा-
ध्यायि परमशैवलोकमणिदाहालप्रणीतायां काव्य-
प्रकाशस्य सरिताख्यविवृत्यां काव्यप्रयोजन-
कारणलक्षणस्वरूपविशेषनिरूपको नाम
प्रथम उल्लासः समाप्तः । ॐ नमः
श्रीपार्वतीपतये ।

यथाऽऽस्ते देवसरिता नित्यं हृत्पटले मम ।
तथैवैषा पाठकानां चित्ते नित्यं विराजताम् ॥

[वि० वृ०] स्फुटव्यङ्ग्यरहितं तदिदमवरं काव्यं चित्रमित्यभिधीयते । तच्च शब्दचित्रमर्थचित्रमिति द्विविधम् । क्रमेणोदाहरणम्—

ऊर्जत्स्फूर्जद्‌गर्जनैर्वारिवाहाः प्रोद्यद्विद्युद्दामविद्योतिताशाः ।
अद्रावद्रौ विद्रुता द्रावयन्ते दन्तिभ्रान्त्या सिंहसङ्घप्रकोपान् ॥

कदम्बमालाकलिता कं सहर्षं न कुर्वती ।
कृष्णमूर्तिरिवाभाति कालिन्दीकाननस्थली ॥'

अनयोरनुप्रासनिबन्धः शब्दसाम्योपमा च क्रमात्स्वादाय कल्पते न तु किञ्चिद् व्यङ्ग्यं प्रसरति ततः कनिष्ठमेतत् ।

इति भरकसूत्रवृत्तौ साहित्यकौमुद्यां काव्यप्रयोजनहेतुस्वरूपविशेष-
निर्णयो नाम प्रथमः परिच्छेदः ।

—:o:—

# अथ द्वितीय उल्लासः

[वृत्तिः] क्रमेण शब्दार्थयोः स्वरूपमाह—

[कारिका] स्याद्वाचको लक्षकश्च शब्दोऽत्र व्यञ्जकस्त्रिधा ।

[वृत्तिः] अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।

[कारिका] वाच्यादयस्तदर्थाः स्युः ।

[वृत्तिः] वाच्यलक्षकव्यङ्ग्याः ।

[कमला०] ननु लोके व्यञ्जकव्यङ्ग्ययोः शब्दार्थयोरभावात्कथमेतद्गर्भमुत्तमादिकाव्यविभागो लक्षणञ्चात आह क्रमेणेति--काव्यलक्षणोपादानक्रमेण शब्दस्यार्थस्य चेत्यर्थः । स्वरूपं लक्षणं सामान्यपरमेकवचनमित्यन्ये । व्यञ्जकत्वं शब्दार्थयोर्निरूपणार्हं न वाच्यत्वादिसर्वतन्त्रसिद्धत्वात्तदपेक्ष्यैकवचनम् । ननु लोकेद्वैविध्यमेव दृष्टं तत्राह अत्रेति । स्वशास्त्रपरिभाषेयमित्यर्थः । विभागात्त्रित्वे सिद्धेऽपि न्यूनाधिकसङ्ख्याविच्छेदाय त्रिधेत्युक्तम् । तेन ये गौणत्वमौपचारिकत्वं वा विधान्तरमाहुस्ते लाक्षणिकेऽन्तर्भावात्परास्ताः । यद्यपि लाक्षणिकव्यञ्जकयोरपि वाचकत्वमस्ति तथापि वृत्तिभेदाद् विभागः उपधेयसङ्करेऽप्युपाधीनो विविक्तत्वात् । ननु लक्षणं कुतो नोक्तं तत्राह एषामिति स्वरूपं लक्षणम् । अर्थान्विभजते वाच्येति । तेषामर्थास्तदर्थाः । अत्र लक्षणायाः शक्तिपूर्वकत्वाद् व्यञ्जनायाश्च तदुभयमूलत्वाच्छब्दार्थयोरेवं क्रमः । यद्यपि वाच्यस्य वाच्यादित्वाभावाद् बहुवचनानुपपत्तिस्तथापि वाच्य आदिराद्यो येषामिति विशेष्यैकदेशं विशेषणं कृत्वा लम्बकर्णं इतिवत्तद्गुणसंविज्ञानो बहुव्रीहिर्ज्ञेयः । जन्माद्यस्य यत इतिवत् । न चैवं लक्षणयैकलक्ष्यतावच्छेदकप्रकारेणोपस्थितो विभागानुपपत्तिस्त्रितयान्यान्यत्वस्य लक्ष्यतावच्छेदकत्वे तद्घटकतयाऽवान्तरविभाजकोपस्थितेः ।

[सरि०] काव्यलक्षणावसरे दोषहीनगुणयुक्तप्रायोऽलङ्कृतशब्दार्थयुगलस्य काव्यत्वमुक्तम् । तत्र शब्दार्थयोः प्राधान्येन तत्स्वरूपनिरूपककारिकावतारणाय वृत्तिकृदुपक्रमते क्रमेणेत्यादिना—अनेनोल्लासान्तरसङ्गतिश्चोल्लिङ्गिता । क्रमेण क्रमो हि काव्यलक्षणोपादानलभ्यस्तत्प्राप्तत्वात् । शब्दार्थयोः प्रथमं शब्दस्य ततोऽर्थस्येति । स्वरूपम् असाधारणधर्मम् । आह निर्दिशति । धर्मिणि सिद्धे सम्प्रति धर्मसिद्धिं निर्दिशतीत्याशयः । स्वरूपमिति सामान्यमपेक्ष्यैकवचनमिति

समालोचकाः। तन्न सङ्गच्छते इत्यपरे शब्दार्थयोर्वाचकत्ववाच्यादिषु स्वरूपेष्वनुगतैकधर्माभावादेकवचनानुपपत्तेः। वस्तुतस्तु काव्ये वाचकत्वलक्षकत्वापेक्षया व्यञ्जकत्वमेव प्राधान्येन निरूपणीयतयोद्देश्यमत्रशिष्टयोः सर्वतन्त्रसिद्धत्वात्। तेन हि व्यञ्जकत्वनिर्देशायैकवचनमिति परमानन्दप्रभृतयः। स्वरूपनिरूपणन्तु विभागानन्तरमेव सुकरं भवतीति प्रथमं शब्दस्य विभागो निर्दिष्टः। कारिकामवतारयति **स्यादिति**। अत्र शब्दः वाचकः लाक्षणिकः व्यञ्जकः इति त्रिधा स्यात् इत्यन्वयः। अत्र काव्ये। **शब्दः** अर्थाश्रयवर्णौघः। **वाचकः** वाच्यार्थविबोधकः। **लाक्षणिकः** लक्षणागम्यार्थविबोधकः। **व्यञ्जकः** व्यङ्ग्यार्थविबोधकः। चेति। त्रिधा त्रिप्रकारकः। **स्यात्**—भवतीत्यर्थः। कारिकां विवृणोति अत्रेति—अत्र इत्यस्य काव्ये इत्यर्थः शास्त्रान्तरे व्यञ्जकशब्दानङ्गीकारात्। न्यूनाधिकसङ्ख्यानिरासाय त्रिधेति पदम्। अनेन भेदानामेषां नोपाधेयभेदोऽपितु उपाधिभेद एवेत्यपि व्यज्यते। वाचकस्य लाक्षणिकव्यञ्जकयोरुपजीव्यत्वेन तस्य प्रथमं निर्देशः। वाचक एव शब्दो गत्यन्तरताभे लाक्षणिको व्यञ्जकश्च भवतीति। एषामित्यादि—एषां त्रिविधानामेव शब्दानाम्। स्वरूपमसाधारणो धर्मः। वक्ष्यते प्रकरणे निर्दिश्यते। शब्दविभागमुक्त्वाऽर्थनिर्देशककारिकामवतारयति—वाच्येत्यादि—वाच्यादयः तदर्थाः स्युः इत्यन्वयः। **वाच्यादयः** वाच्योऽभिधेय आदिर्येषान्ते तादृशाः आदिपदात् लक्ष्यव्यङ्ग्ययोरपि ग्रहणम्। वाचकस्य वाच्यरूपः लाक्षणिकस्य लक्ष्यरूपः व्यञ्जकस्य व्यङ्ग्यरूपश्चेति। तदर्थाः तेषां त्रिविधानामेव शब्दानां क्रमेणार्थाः। स्युः भवन्तीति। वाच्यादय इति पदं व्याचष्टे वाच्येति—वाच्यलक्ष्यव्यङ्ग्याः क्रमेण वाचकलाक्षणिकव्यञ्जकशब्दसम्बद्धा इति। अनेन वाच्यादीनां वाचकादिप्रतिपाद्यत्वलक्षणमपि निर्दिष्टं भवति। यथा वाचकशब्दप्रतिपाद्यत्वमेव वाच्यत्वमित्यादि।

[वि० वृ०] शब्दार्थयोः काव्यमित्युक्तम्। तयोः क्रमेण स्वरूपमाह। अत्र काव्ये शब्दस्त्रिधा। उपाधित्रैविध्यादेव। स्वरूपमेषां वक्ष्यते। तेषां वाचकादीनामर्थाः क्रमाद् वाच्यलक्ष्यव्यङ्ग्याः स्युः।

**[कारिका]** तात्पर्यार्थोऽपि केषुचित्।

**[वृत्तिः]** आकाङ्क्षायोग्यतासन्निधिवशाद् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीति अभिहितान्वयवादिनां मतम्। वाच्य एव वाक्यार्थ इति अन्विताभिधानवादिनः।

[कमला०] विभागस्य न्यूनत्वमाशङ्क्याह तात्पर्येति—केषुचिद्वाक्यरूपेषु शब्देष्वित्यर्थः। अन्ये तु केषुचिदिति षष्ठ्यर्थे सप्तमीमाहुः। असार्वत्रिकत्वान्न तुल्य-

वन्निर्देशः। वृत्तिं विनाऽतिप्रसङ्गात्संसर्गे तात्पर्याख्या वृत्तिरित्यर्थः। तात्पर्यार्थस्तात्पर्यवृत्तिलभ्यः। यद्यपि न वाक्यशक्तिः पदशक्तिभिन्नाऽस्ति तथाप्याकाङ्क्षादिसहकारिवशात्पदशक्तिरेव तथोच्यते। इयमेव संसर्गमर्यादेत्युच्यते। विशेषवपुर्विशेषात्मा तस्यैव क्रियान्वयात्। अभिहितानां पदोपस्थितीनामन्वयः संसर्ग इति वादिनां भाट्टतार्किकादीनाम्। गुरुमतमाह वाच्य इति। गामानयेति वाक्यात्प्रवर्तमानं प्रयोज्यं दृष्ट्वा नूनमनेनास्मादयमर्थो ज्ञात इति व्युत्पित्सुः कल्पयति। न च शक्तिं विना वाक्यात्संसर्गधीर्युज्यते लक्षणादेस्तत्पूर्वकान्न च संसर्गमर्यादया तद्धीस्तस्याः शब्दवृत्तित्वाभावात् शक्तिलक्षणयोरेव तत्त्वात्। न च शब्दतात्पर्यगोचरत्वं शाब्दत्वं तदभावे शुकबालाद्युदीरितेऽबोधकत्वापत्तेः। न च गां नयाश्वमानयेति व्यभिचारात्संसर्गे न शक्तिरिति वाच्यम्। वाक्यस्यैव प्रयोगार्हत्वेन पूर्वगृहीतसंसर्गशक्त्यबाधेनेतरान्विते स्वार्थे पदानां शक्तिग्रहादिति अन्वितस्य संसर्गविशिष्टस्याभिधानमिति वादिनो मतमित्यनुषङ्गः। एकवचनात्तुच्छत्वमुक्तम्। तथा हि न संसर्गविशेषेषु शक्तिः। गां नय गां बधानेत्यादौ तेषामानन्त्येन गोपदस्य नानार्थत्वापत्तेः। न च संसर्गसामान्ये सा विशेषस्यासङ्केतविषयत्वेऽशाब्दत्वापत्तेः। अथाकाङ्क्षादिसहकारिवशात्तदादेव तद्धीस्तर्हि तस्मादेव सामान्येऽपि तथाऽस्तु धीः किं शक्त्या। इतरान्वितयोर्द्वित्वेन गामानयेत्यत्र वाक्यार्थद्वयधीः स्यात्। संसर्गसामान्ये शक्तौ च सर्ववाक्यानां पर्यायत्वापत्तिः। विशेषस्य सम्बन्धिविशेषादेव सिद्धेर्न वाच्यत्वं तत्त्वे उक्तदोषाच्च। एतेन संसर्गे वाक्यार्थेऽखण्डस्फोटे शक्तिं वदन्तो वैयाकरणाः परास्ताः। एतच्च पञ्चमोल्लासे व्यक्तीकरिष्यते।

[सरि०] शब्दार्थयोः प्रत्येकं त्रैविध्यं काव्यसम्मतं निरूप्य सम्प्रति स्वासम्मतमपि नैयायिकादिनये प्रचलितत्वात्तात्पर्यार्थं विवृण्वन् तन्निर्देशकारिकामवतारयति तात्पर्येत्यादि--केषुचित् कतिपयेषु नयेषु तु। तात्पर्यार्थः पदानां तात्पर्यवृत्तिलभ्योऽर्थः। अपि च। अव्युक्तोऽस्तीति। अत्र केचित्केषुचिदित्यत्र षष्ठ्यर्थे सप्तमी मन्यन्तेऽपरे तन्नेच्छन्ते। एकैकपदार्थबोधनानन्तरं विरतायामभिधायां पदार्थानां वाक्यार्थरूपोऽन्वयस्तात्पर्याख्यवृत्त्या बोध्यत इति केचिल्लाक्षणिका विशेषतो नैयायिका मीमांसकेषु भाट्टाश्च वदन्ति। तदर्थ एव तात्पर्यार्थस्तेषां मते। मीमांसकेष्वेव प्राभाकरास्तु अभिधया वाक्येऽन्वितानामेव पदानामर्थं बोधयतीति मन्यन्ते। व्यङ्ग्यार्थस्य तु असार्वत्रिकत्वेऽपि ग्रन्थोद्देश्यत्वेन प्राधान्यमेव। वाच्यलक्ष्ययोः सार्वत्रिकत्वेऽपि प्रकृतग्रन्थानुद्देश्यतयाऽप्राधान्यमपि। तात्पर्यार्थस्यासार्वत्रिकत्वात्प्रकृतग्रन्थानुद्देश्यतया च न कथञ्चिदेव प्राधान्यमिति तस्य नैव तुल्यत्वेनाभिधानमपितु पृथगेवोपन्यासः। ग्रन्थकारस्यापि न तत्सम्मतमिति केषुचित्पदेन ज्ञायते।

कारिकांशं व्याख्याति वृत्तिकृद्—आकाङ्क्षेत्यादिना। आकाङ्क्षेति आकाङ्क्षा प्रतीतेः पर्यवसानाभावः योग्यता परस्परसम्बन्धे बाधाभावः सन्निधिरासत्तिर्नैकट्य-मिति तेषां वशात्साहाय्यात्। वक्ष्यमाणेति वक्ष्यमाणं प्रतिपाद्यमानं स्वरूपं लक्षणं येषां तेषाम्। पदार्थानां पदबोध्यार्थानां वाच्यादीनाम्। समन्वयेऽन्वयसिद्धयेऽभि-धायाः पदार्थमात्रबोधनेन निवृत्तेः सकृन्निवृत्तस्य पुनरप्यप्रवृत्तेश्च। विशेषवपुः स्वप्रकृत्या विशिष्टः पटमानयेत्यादौ पटकर्मकानयनादौ भासमाने तात्पर्यवशात् यत्किञ्चित्पटानयनादिविशेषरूपः। अपदार्थः प्रत्येकपदवृत्त्यविषयः। अपि इति व्यवच्छेदे। तात्पर्यार्थः तात्पर्यवृत्तिबोध्यः। वाक्यार्थः वाक्यबोध्योऽर्थः। समुल्लसति अनुभवविषयतामागच्छति। इति इति प्रकारे—एवंविधमिति। अभि-हितान्वयवादिनाम् अभिहितानां पदोपस्थापितानामर्थानामन्वयं तात्पर्यवृत्त्या संयोजनं वदन्त्यामामनन्ति तच्छीला इति तेषां नैयायिकादीनां भाट्टानाञ्च। प्रकारार्थे बहुवचनं न तु पूजार्थम्। मतं राद्धान्तः। यथोक्तम्—'अर्थो ह्यनन्वितावस्थः पदेनाभिहितो यतः। अन्वितामात्मनोऽवस्था लक्षितामेव लक्षयेत्'॥ इति। वाक्ये हि पदानां सङ्केतितार्थं बोधयित्वाऽभिधा विरमति। ततश्च तेषामाकाङ्क्षायोग्यताऽऽसत्ति-साहाय्येन तात्पर्यवृत्त्या परस्परान्वयः साध्यते। तेनैव वाक्ये पूर्वमभिहितानामेवान्वयो भवतीति। निराकाङ्क्षादावन्वयाभावादाकाङ्क्षेत्यादि। तात्पर्यार्थस्यासङ्केति-तत्वात्तद्द्वारसिद्धये वशपदम्। पदानां परस्परसम्बन्ध एव समन्वयः। प्रत्येक-पदवृत्तेरविषयत्वादपदार्थ इति। अयमाशयः—पदानां हि लाघवात्पदार्थमात्रे शक्तिर्न त्वन्वये। तस्य गौरवादन्यलभ्यत्वाच्च। अन्वयांशो हि तात्पर्यार्थः वाच्यादर्थ-विलक्षणस्वरूपः आकाङ्क्षादित्रिकसाहाय्येन पदार्थाविषयोऽपि प्रतीयते। तेन हि पदार्थः प्रथममभिधया प्रतीयते। पश्चाच्च तात्पर्यशक्त्या वाक्येऽन्वयं लभमानो वाक्यार्थतामेति इति। अभिहितान्वयवादिमतदूषकं मतान्तरमुपस्थापयति वाच्य इत्यादिना। वाच्यः वाच्यार्थं एव नान्यस्तात्पर्यादिबोध्यः। वाक्यार्थः पद-समन्वितार्थः। इति इति प्रकारे एवमित्याशयः। अन्विताभिधानवादिनः—अन्वितानां प्रथममेव समन्वितरूपेणोपस्थितानामर्थानामभिधानं कथनं वदन्ति तच्छीला इति ते प्रभाकरादयो मीमांसकाः। पूजार्थं बहुवचनम्। अस्यायमाशयः। पदार्थानामन्वितानामेव बोधो भवति तथैव शक्तिग्रहात्। अतथात्वे तेषामनुभव-विषयत्वमेव न भवति। गामानयेत्यत्र गवानयनं दृष्ट्वा क्रियापदार्थान्विते कारके कारकपदस्य कारकपदार्थान्विताऽऽत्रोपायां क्रियापदस्य च बालः शक्तिमवधारयति। तेनान्वितानामेव पदार्थानां शक्तिग्रहो भवति नानन्वितानाम्। तेनाभिधैवान्वयबोधे शक्ता। अत एव न कश्चिद् वाच्यार्थातिरिक्तो वाक्यार्थ इति। यथोक्तम्—कारको-पनिबन्धः स्यात्क्रियादिषु यथा यथा। जिज्ञासा जायते बोद्धुः सम्बन्धिषु तथा तथा॥

मद्यदाकाङ्क्षितं योग्यं सन्निधिं प्रतिपद्यते। तदन्वितपदेनार्थः स्वकीयः प्रतिपद्यते। इति। वस्तुतो वाक्यस्यैव प्रयोगार्हता न तु प्रत्येकपदस्य। तेन ह्यन्वितानामेवार्थानां प्रथममेव बोध इति मतं युक्तम्। यच्च वैयाकरणाः संसर्गे वाक्यार्थेऽखण्डस्फोटे शक्तिं मन्यन्ते तेषामपि मतं तथैव नावाच्यम्।

[वि० वृ०] षष्ठयर्थे सप्तमी। केषाञ्चिन्मते वाक्यार्थस्तात्पर्याख्यवृत्तिगम्यः। एकैकपदार्थबोधनेनाभिधाया विरतत्वाद्वाक्यार्थस्वरूपस्य पदार्थानामन्वयस्य बोधनाय तात्पर्यनाम्नी वृत्तिः। तदर्थस्तात्पर्यार्थः। तद्बोधकं तु वाक्यमित्यभिहितान्वयवादिनः।

**[कारिका] सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते।**

[कमला०] सर्वेषामिति यद्यप्युद्देशक्रमाच्छब्दस्य व्यञ्जकत्वमादौ वक्तुमर्हं तथापि स्पष्टत्वात्तदुपेक्ष्यार्थस्यैवोक्तम्। केचित्तु ननु नार्थे व्यञ्जकत्वं युक्तं शब्दोपस्थितस्यैव तत्त्वेन तद्व्यञ्जनयैवोपपत्तेः। न चेच्छब्दे सा तर्हि तद्विभागो व्यर्थोऽत आह सर्वेषामिति। सर्वेषां पर्यायशब्दानां येऽर्थास्तेषामपि प्रायशो बहुधा व्यञ्जकत्वमिष्यते। तेनोन्नतपयोधरेत्यादौ द्वयं गतं सम्प्रतीत्यादौ च पयोधरादिशब्देनोपस्थितस्यैव व्यञ्जकत्वं न तु मेघादिशब्देनाऽतोऽन्वयव्यतिरेकाभ्यां शब्देऽपि व्यञ्जना सिद्धेत्यर्थमाहुः। अन्ये त्वर्थानामपीत्यन्वयः। तेन शब्देऽपि तल्लाभ इत्याहुः। यद्वा व्यञ्जकत्वमपीति वाच्यत्वाद्यत्यागो वक्तृबोद्धव्याद्यभावे न व्यञ्जनेति प्रायश इत्युक्तम्।

[सरि०] अर्थविभागनिर्देशप्रकरणे तेषामपि व्यञ्जकत्वनिर्देशककारिकामवतारयति सर्वेषामिति। सर्वेषाम् अर्थानाम् अपि प्रायशः व्यञ्जकत्वम् अपि इष्यते इत्यन्वयः। सर्वेषां सर्वप्रकाराणामेव। अर्थानां वाच्यलक्ष्यव्यङ्ग्यानाम्। अपीति समुच्चये न केवलं शब्दानामेवेति। प्रायशः बहुधा वक्तृबोद्धव्याद्यनवतारे तु तदभावात्। व्यञ्जकत्वमर्थान्तरव्यञ्जनम्। अपि इति समुच्चये न केवलं तेषां व्यङ्ग्यत्वमेवेत्याशयः। इष्यते विषयीक्रियते। अर्थानां व्यङ्ग्यत्वं तु प्रसिद्धमेव। एवमेवार्थानामपि व्यञ्जकत्वमपि सम्भवति प्रधानभूतरसाद्यर्थंवर्जमित्यस्याशयः। काव्यलक्षणे सगुणाविति शब्दार्थयोरेव गुणाभिव्यञ्जकत्वं प्रतिपादितमेव। उक्तमेव—तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ इति। वक्ष्यमाणस्य 'अर्थव्यञ्जकतोच्यते' इत्येतस्य प्राकरणिकत्वसिद्धयेऽप्यत्रास्य सङ्क्षेपात्सन्निवेशः।

[वि० वृ०] अर्थस्यापि व्यञ्जकतामाह—

**प्रायशो** वक्त्रादिवैशिष्ट्ये सतीत्यर्थः। सर्वेषामित्यत्र केचित्तात्पर्यार्थमपि समा-**विष्टं मन्यन्ते**। अर्थान्तरस्येव तात्पर्यार्थस्यापि व्यञ्जकत्वं भवतीति तेषां मतम्।

[वृत्तिः] तत्रवाच्यस्य यथा—

माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमए।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥६॥
[मातर्गृहोपकरणमद्य तु नास्तीति साधितं त्वया।
तद्भण किं करणीयमेवमेव न वासरस्तिष्ठति ॥]

[वृत्तिः] अत्र स्वैरविहारार्थिनीति व्यज्यते।

[कमला०] माए इति मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया। तद् भण किं करणीयमेवमेव न वासरः स्थायी। मातरित्यादेशयोग्यत्वम्। अद्य गृहे कापि सामग्री नास्तीति त्वया साधितमुक्तं न तु मयेतीङ्गितगोपनम्। तद्वद् दिने गते रात्रौ तवाज्ञायामपि कुलाङ्गनया न किञ्चिच्छक्यमित्यर्थः। अत्रेति कार्यकरणेन वक्तृवैशिष्ट्याद् बहिर्गमनं व्यङ्ग्यम्। तेन च स्वैरविहारोऽन्यसङ्गमः। स च तात्पर्यार्थव्यङ्ग्यः। कथं तर्हि वाच्योदाहरणमेतच्छृणु। पदार्थसंसर्गस्य व्यञ्जकत्वे पदार्थस्यापि व्यञ्जकत्वात्सम्बन्धिनं विना सम्बन्धावोधात्। वस्तुतस्तु शक्तिप्रयोज्यधीविषयत्वं तत्राऽप्यस्त्येवेति न क्षतिः। गुरुमते वाक्यार्थस्य वाच्यत्वादेतदुदाहरणं तात्पर्यार्थस्य व्यञ्जकत्वाभावे सर्वेषां प्रायश इत्यादि विरोधापत्तेः। शुद्धवाच्यस्य व्यञ्जकत्वं जयतीत्यादौ ज्ञेयम्। यद्वा स्वैरविहारार्थिनीयमिति हेतोर्मातरित्यादिपदे तत्तदर्थो व्यज्यत इत्यर्थः।

[सरि०] अथ क्रमेणार्थस्य व्यञ्जकत्वोदाहरणाय वृत्तिकृदुपक्रमते तत्रेति—तत्र=तेषु हि। वाच्यस्य वाच्यार्थस्य। यथा व्यञ्जकत्वं यथेति। उदाहरति माए इति—कस्याश्चिदुपनायकसङ्गमार्थिन्या शाकेन्धनानयनव्याजेन बहिर्गन्तुकामायाः स्वैरिण्या उक्तिरियं मातरं वा श्वश्रूं प्रति। माए ( मातः ) तुमए ( त्वया ) अज्ज ( अद्य ) घरोवअरणं ( गृहोपकरणं ) हु ( तु/खलु ) णत्थि ( नास्ति ) त्ति ( इति ) साहिअं ( साधितम् ) ता ( तत् ) भणः किं करणिज्जं ( करणीयं ) एमे ( एवम् ) अ ( एव ) वासरो ( वासरः ) ण ( न ) ठाइ ( स्थायी ) ( तिष्ठति ) इत्यन्वयः। गाथासप्तशत्यां सङ्कलितमिदं पद्यम्। मातः इति सम्बुद्धिः हे अम्ब ! त्वया भवत्या। अद्य वर्तमानदिवसे। गृहोपकरणं भोजनपानाद्यर्थावश्यकशाकेन्धनादिवस्तु। तु इति विशेषेण खलु इति निश्चयेन। नास्ति न विद्यते। इति इत्थम्। साधितमभिहितम्। तत्त्वया कथितं मयाऽपि ज्ञातम्। किन्तु कथनमात्रेण वा ज्ञानमात्रेण न कार्यं सिध्यति तत् तेन। भण निर्दिश। किं किमिव। करणीयं विधातव्यम्। यद्भवती कथयति तदेव मया क्रियते। अत्र न मे कापि पृथग्रुचिः। एवम् अकृत्वा यद्वा एवमेव यथा सम्प्रति वर्तते तथैव। किञ्चिदपि स्थितौ तु। एव इति व्यवच्छेदे। वासरो दिवसः। न स्थायी नैव तिष्ठति। दिनं तु नास्माकं कार्यं प्रतीक्षते। रात्रौ नैव किमपि कर्तुं शक्यत इति तात्पर्यार्थः। तत्र फलितमाह

लक्षणे लक्ष्यं योजयतीति अत्रेति अत्र कथनेऽस्मिन्। स्वैरेति स्वैरविहारार्थिनी स्वैरविहारो यथेच्छसुरतं तमर्थयति काङ्क्षतीति। ताच्छील्ये णिनिस्ततो नान्तत्वात् ङीप्। इति। व्यज्यते ध्वन्यते। इति स्वैरविहारोऽत्र व्यङ्ग्यमेव वाच्यार्थाक्षिप्तं तात्पर्यसिक्तञ्च यतो हि स्वैरविहारेच्छा तु वाक्यार्थोत्तरकालमेव प्रतीयते। तत्र न शब्दस्य व्यापारो व्यासज्यते विरतत्वात् शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। तथैवार्थस्यापि विरत्यनन्तरं व्यापारान्तरं न सम्भवति। तेनाऽत्र व्यञ्जनैव। विहारमात्रे आज्ञापारतन्त्र्यस्य सत्त्वादधिकरणं तु स्वैरतैवेति स्वैरविहारार्थिता व्यङ्ग्यम्। प्रभाकरमते पूर्वमेव तात्पर्येणान्वितानामेव पदानामुपस्थितिर्वाक्ये भवतीति तात्पर्यार्थाक्षिप्तव्यङ्ग्यमेतत्। सम्बन्धित विना सम्बन्धाबोधादत्र वाच्यार्थस्यापि व्यञ्जकत्वं शुद्धवाच्यस्य व्यञ्जकत्वं तु जयतीत्यादाविति कमलाकर्यां स्पष्टम्। अत्र मातरित्यनेनालङ्घनीयाज्ञत्वम्। गृहेत्यनेन नितान्तावश्यकत्वं तदभावे प्राणमात्राबाधात्। उपकरणमित्यन्यथासिद्धिपरिहारः प्रतिवेशितोऽपि सर्वस्य लाभासम्भवात्। अद्येत्यनेन कार्यस्यापरिहार्यत्वम्। साधितमिति सत्त्वशङ्काराहित्यम्। त्वयेत्यनेन स्वकल्पनाविरहः। तदिति हेत्वर्थेनावश्यमेव निर्देष्टव्यत्वम्। भणेत्यनेन स्वेच्छागोपनम्। एवमेवेत्यादिना रात्रौ कर्तुमशक्यमिति सुधाकरे स्पष्टम्।

[वि० वृ०] प्रायशो वक्त्रादिवैशिष्ट्ये सतीत्यर्थः। तत्र वाच्यस्य यथा—

मधुरिता मधुना विधिनाऽप्यसौ सखि पतङ्गसुतापुलिनाटवी।
सवयसा वयसा च विभूषिता तनुरियं किमिह क्षममुच्यताम्॥

अत्र तथाभूता पुलिनाटवी तरुणतमालेनेव मत्तनुश्च महेन्द्रमणिनेव येन राजिष्यते तं कृष्णं त्वरितमाहर यदि चातुर्यं बिभर्षीति वाच्योऽर्थो व्यञ्जयति।

[वृत्तिः] लक्ष्यस्य यथा—

साहेन्ती सहि सुहअ खणे खणे दूम्मिआसि मज्झ कए।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए॥७॥
[ साधयन्ती सखि ! सुभग क्षणे क्षणे दूनासि मत्कृते।
सद्भावस्नेहकरणीयं सदृशन्तावद् विरचितं त्वया॥]

[वृत्तिः] अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्। तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्।

[कमला०] साहेन्तीति साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मत्कृते। सद्भावस्नेहकरणीयं सदृशं तावद्विरचितं त्वया॥ प्रियानुनयार्थं प्रहितां तमुपभुज्या-

गतां सखीं प्रति नायिकोक्तिरियम्। मत्कृते मदर्थं प्रियं शासयन्तीत्यन्वयः। शिक्षयन्ती अनुनयन्ती वा। सद्भावः साधुत्वं तस्य स्नेहस्य च करणीयं कार्यं परपुरुषगामित्वेन साधुत्वं स्नेहादेर्बाधात्तद्विरुद्धं वैरिणि दृष्टासि इत्यादिकं सखि दूनासि इत्यादिपदे लक्ष्यम्। तेन भर्तुर्दूतीगामित्वेन सापराधत्वं व्यङ्ग्यमित्यर्थः। अत्र लक्ष्यघटितवाक्यार्थस्य व्यञ्जकत्वाल्लक्ष्यस्य व्यञ्जकत्वम्।

[सरि०] अर्थव्यञ्जकतायाः सङ्क्षेपतो निदर्शनक्रमे वाच्यार्थस्य व्यञ्जकत्वमुदाहृत्य सम्प्रति लक्ष्यार्थस्य तदुदाहरणायोपक्रमते लक्ष्यस्येति—लक्ष्यस्य लाक्षणिकशब्दविषयस्यार्थस्य। यथेति निदर्शने। उदाहरणं प्रस्तौति साहेन्ती इति। सहि (सखि !) मज्झकए (मत्कृते) सुहअं (सुभगं) खणे खणे (क्षणे क्षणे) साहेन्ती (साधयन्ती) दूम्मि आसि (दूना असि) तुमए (त्वया) दाव (तावत्) सब्भावणेहकरणिज्जसरिसअं (सद्भावस्नेहकरणीयसदृशं) विरइअं (विरचितम्) इत्यन्वयः। मानाधिक्यवशात्कलहान्तरितं नायकमनुनीयानेतुं प्रेषितां किन्तु स्वयमेव तमुपभुज्यागतां दूतीं प्रति कस्याश्चित्स्वीयायाः प्रगल्भाया उक्तिरियं गाथासप्तशत्यां निबद्धा। सखि ! सुखदुःखसहभागिनि वयस्ये ! मत्कृते मन्निमित्तम्। सुभगं हितकार्यम्। क्षणे क्षणे प्रतिक्षणमेव। साधयन्ती प्रतिपादयन्ती। दूना श्रान्ता। असि। त्वया भवत्या। तावत् प्राथम्येन निःशेषं वा। सदिति सद्भावः सौहार्दता स्नेहः प्रणयस्तयोर्यत्करणीयं कृत्यं तस्य सदृशमनुकूलम्। विरचितं साधितमिति। सद्भावस्य यत्कार्यं स्नेहस्य च यदुचितं तदेव निर्वाहितमित्याशयः। लक्ष्ये लक्षणं घटयति अत्रेत्यादिना। अत्रेति काव्येऽस्मिन्। मत्प्रियं मद्वल्लभम्। रमयन्त्या उपभुक्तवत्या। त्वया सख्याऽपि। शत्रुत्वम् मद्विप्रियत्वम्। आचरितमनुष्ठितमिति। लक्ष्यं लाक्षणिकोऽर्थः। तेन लक्ष्यार्थेन शत्रुत्वाचरणत्वप्रकाशकेन। चेति पूर्वसमुच्चये यथा हि पूर्वकाव्ये वाच्यार्थेन तथैवात्र लक्ष्यार्थेन। कामुकविषयं कामुकस्य सुरतलम्पटस्य विषयं प्रसङ्गसम्बद्धम्। सापराधत्वप्रकाशनं सापराधत्वस्य कृतदूतीसम्भोगरूपापराधतायाः प्रकाशनं द्योतनम्। व्यङ्ग्यम् प्रत्यायितोऽर्थः। अत्र हि मत्कृते त्वं क्षणे क्षणे खिन्नाऽसीति वाच्यार्थस्य सखीकृते कृतश्रमायाः खिन्नत्वस्य वाक्येऽन्वयासिद्धेर्विपरीतसम्बन्धेन सम्भोगजन्यकृशता लक्ष्यते, येन च नायकस्य दूतीसम्भोगरूपा गो ध्वन्यत इति तस्य व्यञ्जकत्वम्। तत्र हि त्वयेति दूत्यावैशिष्ट्यं तथाविधकृशताया सुरतैकसाध्यत्वादपकारिण्यां साधुत्वस्नेहयोर्बाधेन च तदभावव्याप्यत्वेन विरोधित्वं लक्ष्यते। अस्यायमाशयो यत्साधुत्वस्नेहाभ्यां तदभावो लक्ष्यते येन तदतिशयः कान्तरमणरूपविप्रियकारित्वेन शत्रुत्वं व्यज्यते। मत्कृते इत्येतस्य लक्षणया स्वकृते इति दूनासीत्येतस्य दृष्टासीत्यर्थो

बोध्यते। तेन हि मुख्यार्थलक्ष्यार्थयोर्मित्रत्वशत्रुत्वयोर्वैपरीत्यं सम्बन्धः। कामुके-त्यत्र कामुकी च कामुकश्चेत्येकशेषः। कामुकविषयसापराधत्वमेव व्यङ्ग्यमिति बालबोधिनीकारः।

[वि० वृ०] लक्ष्यस्य यथा—

साधयन्त्यनुलवं प्रियं हरिं मत्कृते श्रममवाप यत्सखी।
तच्चकार चरितं हितैषिणी बन्धुराङ्गि करणीयमुच्चकैः॥

अत्र स्वसुखतात्पर्यान्मत्कान्तं रमयन्ती त्वं शत्रुत्वं कृतवतीति लक्ष्योऽर्थः कान्ते सापराधत्वं व्यञ्जयति।

[वृत्तिः] व्यङ्ग्यस्य यथा—

उअ णिच्चलणिप्पंदा मिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व॥८॥
[पश्य निश्चलनिष्पन्दा विसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥]

[वृत्तिः] अत्र निष्पन्दत्वेनाश्वस्तत्वं तेन च जनरहितत्वमतः सङ्केत-स्थानमेतदिति कयाचित्कश्चित्प्रत्युच्यते। अथवा मिथ्या वदसि न त्वमत्रागतोऽभूरिति व्यज्यते।

[कमला०] एवं व्यङ्ग्ये उवेति (उअ इति) पश्य निश्चलनिष्पन्दा विसिनी-पत्रे राजते बलाका। निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव। निश्चला नरब्र-मेति सम्बोधनम्। एवं तु वाच्यसिद्धयङ्गत्वापत्तेर्निश्चला पृथिवीव निष्पन्दति परमानन्दस्तन्न। निश्चलपदे ह्रस्वत्वायोगात्। तेनांशे मध्यमत्वे न क्षतिः। शङ्ख-शुक्तिर्मुक्ताशुक्तिः शङ्खाकारा शुक्तिर्वा शङ्खयुक्ता शुक्तिर्वा। आश्वस्तत्वमभीतत्वम्। तेन विजनत्वं व्यङ्ग्यम्। तेन सङ्केतस्थानं व्यङ्ग्यम्। अथवेति जनागमाभावे-नेत्यर्थः। पूर्वत्र सम्भोगो व्यङ्ग्योऽत्र तु विप्रलम्भः। हे निश्चला अलसनिश्चेष्टा वराकीति पाठे दीना मत्सखी विसनीपत्रे तापात् शयिता राजते। त्वमेवागत्य पश्य। शङ्खशुक्तिरित्युपमया पाण्डुत्वं व्यङ्ग्यम्। तेन विप्रलम्भातिशय इति सुबुद्धिमिश्राः।

[सरि०] व्यङ्ग्यार्थस्यापि व्यञ्जकत्वोदाहरणायोपक्रमते व्यङ्ग्यस्येति— व्यङ्ग्यस्य व्यञ्जनावोधितार्थस्य। यथेति निदर्शनम्। उदाहरणं प्रस्तौति उअ इति। उअ (पश्य) मिसिणीपत्तम्मि (विसिनपत्रे) णिच्चलणिप्पंदा (निश्चल-निष्पन्दा) बलाआ (बलाका) णिम्मलमरगअभाअणपरिट्ठिआ (निर्मलमरकत-भाजनपरिस्थिता) संखसुत्ति (शङ्खशुक्तिः) व्व (इव) रेहइ (राजते) इति

अन्वयः। गाथेयं गाथासप्तशत्यां सङ्कलितम्। दत्तसङ्केताऽपि त्वं नागताऽहं तु एकाक्येवात्रागत्य प्रतिनिवृत्त इति प्रतारयन्तं नायकं प्रति पश्चान्मिलितायाः कस्याश्चिदुक्तिरियमथवा कयाचित्कञ्चित्प्रति निर्जनत्वेन सङ्केतस्थानमेतदिति सूचनायोक्तं वचनमिदम्। यद्वा प्रतिज्ञायाप्यनागतं नायकं प्रति नायिकादशाबोधनाय तत्सख्या वचनमिदम्। पश्य विलोकय। बिसिनीपत्रे बिसिन्याः कमलिन्याः पत्रे पर्णे। निश्चलनिष्पन्दा निश्चला स्थिरा स्वप्रयत्नसाध्यक्रियाशून्या कुतोऽपि भीतेरभावात् चासौ निष्पन्दा निर्गतः स्पन्दः कम्पो यस्या सा नितान्तनिष्कम्पा स्वाधीनक्रियाशून्या। उभयत्र क्रियाभेदान्न पौनरुक्त्यम्। विशेषणोभयकर्मधारयस्तेन पूर्वपदस्य पुंवद्भावः। चलनं शारीरिकक्रिया स्थानान्तरप्रापिका स्पन्दस्त्ववयवक्रियेति वैद्यनाथः। तादृशवैजात्याभावात्तन्नेति भीमसेनः। वयं तदेव साधु मन्यामहे वस्तुसम्बद्धत्वात्। कामुकीपक्षे निश्चला एकत्र स्थिरा निष्पन्दा अवयवक्रियाशून्येति पक्षात्। हे निश्चल निरुद्योग इति यद्दीपिकायां सम्बोधनत्वेन गृहीतं तत्सङ्केतस्थानरूपस्य वाच्यसिध्यङ्गतापत्तेर्न युक्तम्। यच्च परमानन्दैर्निश्चला पृथिवीव निष्पन्देत्युक्तं तदपि न चारु पूर्वपदस्य ह्रस्वत्वापत्तेरिति कमलाकर्यां स्पष्टम्। यच्च निश्चलः पर्वतस्तद्वन्निष्पन्देति सारबोधिन्यामुक्तं तदपि पदेन तथा प्रत्ययाभावादयुक्तमेवेति सुधासागरे स्पष्टम्। बलाका बकपतङ्गी। निर्मलेति निर्मलं स्वच्छं यन्मरकतस्य नीलमणेर्भाजनं पात्रं तत्र परिस्थिता विद्यमाना। शङ्खशुक्तिः शङ्खस्य (शङ्खघटिता) शुक्तिः शुक्त्याकारपात्रं चन्दनादिनिधानप्रयोजकम्। इव यथा। राजते शोभत इति। लक्ष्ये लक्षणं घटयति अत्रेत्यादि—अत्र काव्येऽस्मिन्। निष्पन्दत्वेन अवयवव्यापारशून्यत्वेन वाच्यार्थेन। आश्वस्तत्वं विस्रब्धत्वं न कुतोऽपि भयसम्भवादिति व्यङ्ग्यार्थ आक्षिप्यत इति शेषः। तस्यापि व्यञ्जकत्वमाह तेनेति – तेन तादृशवाच्याक्षिप्तव्यङ्ग्यार्थेन। चापि। जनरहितत्वं नितान्तनिर्जनत्वमिति व्यङ्ग्यमाक्षिप्यते। तत्फलितमाह अत इति। अतः इति हेतोः। एतत् इदं पुरोवर्तिस्थानम्। सङ्केतस्थानमभिसरणयोग्यस्थानम्। इति इत्थम्। कयाचित् कयापि कामुक्या। कञ्चित् कमपि प्रियं युवानम्। प्रति--लक्ष्यीकृत्य। उच्यते कथ्यते व्यञ्जनया प्रतिपाद्यत इति सम्भोगपक्षाश्रितव्यङ्ग्यम्। पक्षान्तरमाह अथवेति—अथवा विप्रलम्भशृङ्गारपक्षे तु मिथ्या अहमागत्य प्रतिनिवृत्तस्त्वमेव नागतेति नितान्तमसत्यम्। वदसि कथयसि। त्वं भवान्। न नैव कथञ्चिदपि। अत्र स्थानेऽस्मिन्। आगतः-- इतः पूर्वमेव प्राप्तः। अभूः आसीः। इति इत्थम्। व्यज्यते ध्वन्यते इति। सम्भोगस्यैव शृङ्गारे प्राधान्यात्प्रथमं तदुपादानम्। अनन्तरमेव विप्रलम्भस्य सम्भोगोत्कर्षद्वारैव तस्य चमत्कारित्वादिति सुधासागरे। सम्भोगाद्विप्रलम्भस्य मधुरत्वेन तस्य पश्चाद्ग्रहणमिति बालबोधिन्याम्। वयन्तु पूर्वपक्षमेव साधुं मन्यामहे

विप्रलम्भस्यापि सम्भोगपरत्वेनैव चमत्कारात्। केचिद् गाथामिमामित्थं व्याख्यान्ति— कस्याश्चित्कामुक्या विरहवेदनां तत्प्रियं सूचयन्ती मूढोक्त्या तत्सखी नायकं कथयति हे निश्चल अलस! पश्य निश्चेष्टा अवयवव्यापारशून्या सा बलाका कामुकी बिसिनीपत्रे राजते पतिता तिष्ठति कामतापप्रशमनाय। शङ्खशुक्तिरिति अचेतनोपमया निश्चेष्टत्वातिशय इति। तेन विप्रलम्भातिशय इति। तत्क्लिष्टं वृत्तिविरुद्धञ्चेति सुधासागरे स्पष्टम्। तथा सति सिद्धेऽपि वाच्याक्षिप्तव्यङ्ग्यार्थे व्यङ्ग्यस्य व्यञ्जकतासिद्धेस्तन्न युक्तमिति वयम्। न च तथा वृत्तिकृत आशयः।

[वि० वृ०] व्यङ्ग्यस्य यथा —

नाक्षिणी क्षिप कुरङ्गि सर्वत साक्षिणी भव सखीभिरन्विता।
माधवः किल दुनोति मामसौ साधवः शृणुत भोः शिखण्डिनः ।।

अत्र निर्जनोऽयं देश इति व्यङ्ग्योऽर्थः। स्वच्छन्दं मया सह विहरेति व्यञ्जयति।

**[वृत्तिः]** वाचकादीनां क्रमेण स्वरूपमाह—

**[कारिका] साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः ।।७।।**

[वृत्तिः] इहागृहीतसङ्केतस्य शब्दस्यार्थप्रतीतेरभावात् सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः।

[कमला०] स्वरूपं लक्षणम्। साक्षादिति। यः साक्षादभिधत्ते गमयति स वाचकः। एवं नु स्पर्शादिवर्णानां माधुर्यश्रृङ्गारादेः साक्षाद्गमकत्वात्तत्रातिव्याप्तिरतः सङ्केतितमिति। वृक्षो ग्राम इति तद्द्वारा व्यवहितसङ्केतगोचरे ग्रामे वाक्यार्थे चातिप्रसङ्गोऽतः साक्षादिति। सङ्केतितं सङ्केतविषयतावच्छेदकावच्छिन्नं न तु सङ्केतवन्तं सङ्केतस्य सम्बन्धत्वेन शब्देऽपि सत्त्वान्नापि तद्विषयं गामुच्चारयतीत्यत्र शब्देऽपि सत्त्वात्। विषयतावच्छेदकं तु गोशब्दत्वं न तु शब्दत्वम्। अतो न शब्दत्वेन गोशब्दस्य वाच्यता। तत्त्वं तु लक्षणैवात्रेति। न तु सर्वत्र पदजन्यपदार्थज्ञाने सम्बन्धस्मृतेः सत्त्वात् सम्बन्धस्य चोभयसम्बन्धिनिरूप्यत्वात्पदस्याऽपि विषयतेति चेन्न। सम्बन्धेन हि पदमर्थं स्मारयति न तु सम्बन्धस्मृतिर्मानाभावात्। केचित्तु यः सङ्केतितमभिधत्ते स वाचकः। यः साक्षादभिधत्ते स वाचक इति लक्षणद्वयमाहुः। अभिधा च न्यायनये ईश्वरेच्छा भाट्टमते पदार्थान्तरम्। तेन एद्दहमेत्तेत्यादौ अभिनयेऽभिधाभावान्नातिव्याप्तिः। न चापभ्रंशेऽतिव्याप्तिः। तत्र साधुशब्दोपस्थापनेन प्रत्यायकत्वं न तु साक्षात्। तत्र सङ्केतभ्रमः कारणं वा

तस्यापि वाचकत्वाल्लक्ष्यत्वम् । अन्यथा तन्मयभाषाप्रबन्धे काव्यता न स्यादिति सुबुद्धिमिश्राः ।

सङ्केतस्यार्थधीहेतुत्वेऽर्थापत्तिमाह इहेति--इह लोकव्यवहारे। अगृहीत-सङ्केतस्य पुंसः ।

[सरि०] शब्दनिरूपणप्रसङ्गे तस्योपाधिभेदं निरूप्य सम्प्रति तत्स्वरूपनिर्देशक-कारिकावतारणायोपक्रमते वृत्तिकृदुपक्रमते वाचकादीनामित्यादि--वाचकादीनां वाचकलाक्षणिकव्यञ्जकानां वाचक आदिर्येषान्तेषामिति विग्रहः। क्रमेण उद्देश-क्रमेण। स्वरूपं लक्षण स्वं रूप्यते इतरव्यावृत्ततया ज्ञायते अनेनेति इतरभेदकम्। आह निर्दिशतीति। तत्र क्रमप्राप्तत्वाद्वाचकशब्दस्वरूपावधारककारिकामवतारयति साक्षादिति। यः साक्षात् सङ्केतितम् अर्थम् अभिधत्ते सः वाचक इति। यः शब्दः। साक्षात् अव्यवधानेन। सङ्केतितं गृहीतसङ्केतं सङ्केतितविषयतावच्छेदकता-वच्छिन्नं न तु सङ्केतवन्तम्। तथा हि सति पदादर्थो न प्रतीयेत तत्र सङ्केता-भावात्। शब्दस्य सम्बन्धेनैव पदमर्थं स्मारयति इति कमलाकर्यां स्पष्टम्। अर्थं जात्यादिरूपम्। सः अभिधत्ते प्रतिपादयति। सः तथाविधः। शब्दः। वाचकः वाचकसंज्ञको भवति। इति। लाक्षणिकादावतिव्याप्तिवारणाय सङ्केतितमिति। मुख्यार्थव्यवधानेऽतिव्याप्तिवारणाय साक्षादिति। तेनान्विताभिधानवादिनां मते घोष इत्यत्र मुख्यार्थव्यवहिते तटादावपि सङ्केतसद्भावात्तत्रातिव्याप्तिर्न। चेष्टाया-मतिव्याप्तिवारणाय यः (शब्दः) इति। अस्माच्छब्दादयमर्थो बोद्धव्य—इत्युद्देशनं सङ्केतः। स च मूलतः साधुशब्दे एव भवतीति स इति पदस्याशयः। अपभ्रंशस्य तु साधुशब्दोपस्थापनेनैव प्रत्यायकत्वम्। तस्यापि बोधकत्वं तु न केनापि निवार्यते किन्तु तत्र वाचकत्वविचारोऽव्यवस्थां जनयेत्। समानायामर्थावगतौ शब्दापशब्द-विवेकोऽपि न स्यात्। तेन हि तत्र सङ्केतभ्रमादेव बोधकत्वमेव। कारिकायामस्यां लक्षणद्वयमपि अभ्युक्तम्। यत्र यस्य साक्षात्सङ्केतः स तस्य वाचक इत्येकम्। यत्र यस्याभिधा स इत्यपरम्। वस्तुतस्तन्न युक्तं वृत्तिविरोधात्। अभिधा हि शक्तिरेव। सा नैयायिकमते अस्मादयं बोद्धव्य इतीश्वरेच्छाविशेषो भाट्टमीमांसकमते पदार्थान्तरं वा। न हि नानार्थव्यञ्जकेऽतिव्याप्तिस्तस्य लक्ष्यत्वात्। सङ्केतविप्रतिपत्तिनिरा-करणपूर्वकं कारिकां व्याचष्टे इहेति—इह लोकव्यवहारे। अगृहीतसङ्केतस्य न गृहीतः स्वानुभवविषयीकृतः सङ्केतोऽस्य शब्दस्यायमर्थ इति निर्देशो येन तस्य जनस्य सङ्केतश्च लोकत एव भवति। न तु शास्त्रात् प्रधानप्रत्यार्थवचनमर्थ-स्यान्यप्रमाणत्वादित्युक्तेः। यद्यपि व्याकरणोपमानकोशाप्तवाक्यव्यवहारादिभ्यो हि शक्तिग्रहो मतः। किन्तु तत्र व्यवहारस्यैव प्राधान्यमितरेषामपि तन्मूलकत्वात्।

सङ्केतो नाम शब्दार्थयोः सम्बन्धावधारणम्। तज्ज्ञानस्य चान्वयव्यतिरेकाभ्यामेवार्थ-प्रतीतिजनकत्वम्। शब्दस्य सङ्केतविषयीकृतार्थबोधकवर्णवर्णसमूहस्य। अर्थ-प्रतीतेः अर्थज्ञानस्य। अभावात् विरहात्। सङ्केतसहायः सङ्केतविषयीभूतः। एवेत्यवधारणे नासङ्केतविषय इति। शब्दः। अर्थविशेषं विशिष्टार्थम्। अगृहीत-सङ्केतस्याप्यर्थमात्रप्रतीतिस्तु भवत्येव। तेन तत्रातिव्याप्तिनिरासाय विशेषपदम्। प्रतिपादयति ज्ञानविषयीकरोति। इति हेतोः। यस्य यस्यैव शब्दस्य। यत्र यस्मिन्नर्थे। अव्यवधानेन अव्यवहितत्वेन। साक्षादेव। सङ्केतः सङ्केतग्रहः। गृह्यते ग्रहणे उपयुज्यते। सः तादृशः शब्दविशेष एव। तस्य सङ्केतितार्थविशेषस्य। वाचकः प्रत्यायक इति।

[वि० वृ०] वाचकादीनां क्रमात्स्वरूपमाह—

यस्य शब्दस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्यार्थस्य वाचकः। सङ्केत-श्चास्माच्छब्दादयमर्थो बोध्य इतीश्वरेच्छा। तद्ग्रहस्तु वृद्धव्यवहारादितः। तथाहि प्रयोजकवृद्धेन 'गामानय' इत्युक्ते प्रयोज्यवृद्धे सास्नादिमन्तमर्थं स्थानात्स्थानान्तरं नयति सति पार्श्वस्थः शिशुः अनेन 'अस्माच्छब्दादेवविधोऽर्थो ज्ञात' इति प्रथमं प्रतिपद्यते। ततश्च 'गां नय अश्वमानय' इति तेनोक्ते तस्मिंस्तथा तथा प्रवृत्ते तस्य तस्य शब्दस्य तत्र तत्रास्ति कश्चन सम्बन्ध इति निश्चिनोति। आदिपदाद् व्याकरणकोशाप्तवाक्यादेः।

[कारिका] सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा।

[वृत्तिः] यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथाप्यानन्त्याद् व्यभिचाराच्च तत्र सङ्केतः कर्तुं न युज्यत इति गौः शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नोतीति च। तदुपाधावेव सङ्केतः। उपाधिश्च द्विविधो वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च। वस्तुधर्मोऽपि द्विविधः—सिद्धः साध्यश्च। सिद्धोऽपि द्विविधः—पदार्थस्य प्राण-प्रदो विशेषाधानहेतुश्च। तत्राद्यो जातिः। उक्तं हि वाक्यपदीये—"न हि गौः स्वरूपेण गौर्नाप्यगौर्गोत्वाभिसम्बन्धात् तु गौः" इति।

[कमला०] ननु व्यवहारोपयोगित्वाद् व्यक्तावेव सङ्केतो युक्तो न जातावत आह यद्यपीति अध्यंत इत्यर्थः। प्रयोजनं तद्रूपा क्रिया जलाहरणादिरूपा। यद्वाऽर्थो घटादिस्तद्धेतुका क्रिया। किं व्यक्तिषु सर्वासु सङ्केतग्रहः कतिपयासु वा? नाद्य इत्याह आनन्त्यादिति सर्वव्यक्तीनामनुपस्थितेः। नान्त्य इत्याह व्यभिचारादिति अगृहीतसङ्केतासु प्रयोगसङ्केतग्रहाविशेषाद् घटादिपदाद् गवादिबोधापत्तेश्चेत्यर्थः। तत्र व्यक्तौ सङ्केतग्रहः कर्तुं न युज्यते न शक्यते इति हेतोस्तदुपाधावेव सङ्केत

इत्यग्रेऽन्वयः। अयम्भावः। [न घटादिपदे व्यक्तिर्वाच्या तासामानन्त्यान्न च सामान्यलक्षणया सर्वोपस्थितिस्तत्र मानाभावात्। तदङ्गीकारेऽपि न व्यक्तौ सङ्केतो युक्तः सङ्केतस्य सम्बन्धत्वेन सम्बन्धिनाशे तस्यापि नाशापत्तेः। अत एव शब्दोऽर्थश्च जातिरूपो नित्यः। समवायवदाश्रयनाशेऽपि सत्त्वमिति चेन्न, तत्रापि तुल्यत्वेनासिद्धेर्व्यक्तौ सन्देहाच्च। न हि शब्दः संशापको निश्चयजनकत्वात्, तस्य जातिविशिष्टस्य वाच्यत्वेनागृहीतविशेषणन्यायेन लाघवात्प्राथमिकत्वाच्च जातेरेव वाच्यत्वात्। न च शक्यतावच्छेदकाभावात्कथं जातौ शक्तिरिति वाच्यम्। व्यक्तेर्वाच्यत्वे ह्यानन्त्यव्यभिचारादिदोषादवच्छेदकापेक्षा। न जातावेकत्वात्। तत्त्वन्तु घटत्वस्यैव तत्त्वमिति। ननु तर्कनये सामान्यलक्षणया भाट्टनये च शक्तिग्रहान्वयबोधयोः समानप्रकारकत्वस्य तन्त्रत्वादगृहीतसङ्केतानामप्यन्वयबोधो युक्त इत्यतो दूषणान्तरमाह—तथेति। विषयो निमित्तत्वं तस्य विभागो भेदस्तद्भेदाभावे व्यक्तिवाचित्वेन पर्यायत्वात्सहप्रयोगो न स्यात्। जातिगुणादीनामवाच्यत्वे गवादिप्रत्यायानां भिन्नप्रकारत्वमपि न स्यादित्यर्थः। तदुपाधाविति तस्या व्यक्तेरुपाधौ विशेषणे। एवम्प्रकारेण विशेष्यव्यावृत्तिरुपाधित्वञ्च क्रियानन्वयात्। तदुक्तं वेदान्तकल्पतरौ—'यावत्कार्यमवस्थाथिभेदहेतोरुपाधिते'ति। वस्तुधर्मो वस्तुनि सन् यदृच्छया स्वेच्छया सन्निवेशितो नियुक्तः डित्थादिसंज्ञाशब्दः साध्यः साध्यत्वेन विवक्षितः पदार्थस्य घटादेः प्राणनं प्राणो व्यवहारस्तत्प्रदस्तन्निर्वाहकः सर्वघटवृत्तिजातिरित्यर्थः। विशेषेति विशेषस्य सजातीयव्यावर्तनस्याधानं प्रत्ययस्तद्धेतुः। जातेः प्राणप्रदत्वे सम्मतिमाह उक्तं हीति। वाक्यपदीयं भर्तृहरिकृतो ग्रन्थः। गौर्गोपदार्थः। स्वरूपेण जातिरहितव्यक्तित्वेन। न गौः न गोव्यवहारहेतुः। एवं हि घटोऽपि गौः स्यात्। नाप्यगौर्न गोव्यवहारहेतुः। तदा गौरप्यगौः स्यात्। गोत्वाभिसम्बन्धाद् गोत्वज्ञानात्तु गोव्यवहारहेतुस्तस्यैव साधर्म्यवैधर्म्यत्वादित्यर्थः।

[सरि०] साक्षात्सङ्केतितार्थाभिधायी वाचक इति यदुक्तं तत्र कः सङ्केतित इति जिज्ञासायां तन्निरूपककारिकामवतारयति—सङ्केतित इति। सङ्केतितः जात्यादिः चतुर्भेदः वा जातिः एव इत्यन्वयः। सङ्केतितः सङ्केतग्रहविषयोऽर्थः जात्यादिः जातिः पदार्थव्यवहारयोग्यतानिर्वाहिका गोपिण्डादिषु गोत्वादिका आदिपदाद् गुणक्रियायदृच्छाश्च यत्र विशेषाधानहेतुः सजातीयेभ्योऽपि व्यावर्तको गुणो यथा शुक्लादिः क्रिया पूर्वापरीभूतावयवा पाकादिः साध्यरूपो वस्तुधर्मः यदृच्छाशब्दो वक्त्रा यथानुकूलसन्निवेशित डित्थादिशब्दस्वरूपमेव। सैव संज्ञा। इति चतुर्विधः चतुष्प्रकारकः। इदं हि महामुनिपतञ्जलिमतेन। वा इति पक्षान्तरे।

मीमांसकमतमाह—जातिः पदार्थव्यवहारयोग्यतानिर्वाहकधर्मः। एवं इति गुणादीनां व्यवच्छेदः। सङ्केतविषयीभूतोऽर्थो महाभाष्यकारादिमते जातिगुणक्रियाद्रव्यभेदाच्चतुर्विधो भवति, मीमांसकमते तु जातिरेवेति। ननु आनयननयनादिव्यवहार एव शक्तिग्राहक इति यदुक्तं तत्तु व्यक्तावेव सम्भवति, तस्या एव प्रयोजननिमित्तक्रियानिर्वाहकतया। तत्कथं जात्यादिरित्युक्तमित्याह—यद्यपीति। यद्यपि सामान्यदर्शने। अर्थक्रियाकारितया—अर्थः प्रयोजनं गवि दुग्धरूपं तन्निमित्तं या क्रिया गोरानयनादिरूपा तस्याः कारितया निर्वाहकत्वेन अर्थक्रियां करोति तच्छीला तस्या भावस्तत्ता तयेति विग्रहः। जलाहरणप्रयोजनसाधकत्वं घटस्यार्थक्रियाकारित्वम्। प्रवृत्तिनिवृत्तियोग्या प्रवृत्तावुपादाने निवृत्तौ हाने च योग्या समुचिता। व्यक्तिः जात्याश्रयभूतविषयः। एवेति व्यवच्छेदे न तु तदाश्रितजात्यादौ। तथापि आद्यसङ्केतग्रहस्य व्यवहारमात्राधीनत्वं व्यवहारस्य च व्यक्तावेव सम्भवत्वमिति स्थितौ सत्यामपि। आनन्त्यात् व्यक्तेरसङ्ख्येयत्वात्सर्वासामेव व्यक्तीनामेकदोपस्थित्यसम्भवाच्चेति प्रथमो हेतुः। अनेन हि सर्वासु व्यक्तिषु सङ्केतग्रहसम्भवः परास्तः। व्यभिचारात् सङ्केतितस्यैव शाब्दबोध इति नियमाभावो व्यभिचारस्तस्मात्। इति द्वितीयो हेतुः। चकारः समुच्चयार्थे। वेति पाठे पक्षान्तरे। तत्र व्यक्तौ। सङ्केतः शब्दार्थाभिसम्बन्धम्। कर्तुं विधातुम्। न युज्यते न पार्यते। अयमाशयोऽस्य—यदि हि व्यवहाराधारतया व्यक्तावेव सङ्केतग्रहो मन्यते तदा किं सर्वास्वेव व्यक्तिषु वा कतिपयास्वेव? नाद्यः, सर्वासामेव व्यक्तीनामेकदोपस्थित्यसम्भवात्। नान्त्योऽपि, कतिपयास्वेव सङ्केतग्रहेऽवशिष्टानां सङ्केतग्रहं विनैवार्थबोधसम्भवात्तथा सति घटशब्दोऽपि गवादिबोधकः स्यादगृहीतसङ्केतस्य तुल्यत्वादिति। ननु नैयायिकमते सामान्यलक्षणया सर्वासामेव व्यक्तीनामुपस्थितिः सम्भवति तत्कथं व्यक्तौ सङ्केतग्रहे आनन्त्यदोषः? तथा च मीमांसकमते शक्तिग्रहान्वयबोधयोः समानप्रकारत्वस्य तन्त्रत्वादगृहीतसङ्केतानामपि अन्वयबोधसम्भवात्तत्र कथं व्यभिचारदोष? इत्यपेक्षायां दोषान्तरमाह—गौरित्यादि। गौरिति जातिः। शुक्ल इति गुणः समानस्वरूपेऽपीतरव्यावर्तकः। चल इति व्यापारश्चलनात्मकः। डित्थ इति यादृच्छिकसंज्ञा। इत्यादीनाम्। विषयविभागः विषयः प्रवृत्तिनिमित्तं तस्य विभागो भेदः। न प्राप्नोति नैव सम्भवति। इति हेतोः। चेति समुच्चयार्थे। अनेनाऽपि हेतुनेत्याशयः। तैश्चतुर्भिरेव प्रवृत्तिनिमित्ताभेदे एकैव व्यक्तिरुच्येत। व्यक्तेरेवं प्रवृत्तिनिमित्तत्वात्तस्याश्च प्रकृते एकत्वादिति। तथा हि सत्येकार्थवाचकत्वेन घटः कलश इत्यादीनां पर्यायतया सह प्रयोगोऽपि न स्यात्। जातिगुणादीनामवाच्यत्वे गवादिप्रत्ययानां भिन्नप्रकारत्वमपि न स्यादिति कमलाकर्याम्। तेन व्यक्तौ न सङ्केतग्रह इष्ट आनन्त्याद्

व्यभिचारात्तदभावेऽपि शब्दानां विषयभेदापत्तेश्च । न च जातावेव तत्र शक्यतावच्छेदकत्वाभावादर्थक्रियाकारिताभावेन । तर्हि कुत्र स इत्यपेक्षायामाह **तदिति** तदुपाधौ तस्या व्यक्तेर्य उपाधिर्धर्मस्तत्र । **एव** इति व्यवच्छेदार्थे व्यक्तिजात्योः । **सङ्केतः** शब्दार्थाभिसम्बन्धनमिति । कर्तुं युज्यत इति शेषः । एवं धर्मे हि सङ्केतग्रहे धर्मिणस्त्वाक्षेपेणैव निर्वाह इत्याशयः । तथा हि सति जात्यादीनां स प्रवृत्तिनिमित्तभेदेन गवादिशब्दानां पर्यायित्वाभावात्सहप्रयोगसम्भव इति । उपाधिभेदोपभेदान्निरूपयति **उपेति** उपाधिः वस्तुभूतस्वदेहवाचकत्वप्रयुक्तो धर्मो वक्तृव्यवहर्तृभ्यां निर्निबन्धतया सन्निवेशितश्च । च पुनः । द्विविधः द्विप्रकारकः । तदेवाह **वस्त्विति वस्तुधर्मः** वस्तुनो व्यक्तेर्धर्मः जातिगुणक्रियारूपं वैशिष्ट्यं विशेषणाख्यम् । **वक्त्रिति** वक्त्रा कथयित्रा उपलक्षणाद् व्यवहर्त्रा च यदृच्छया स्वाच्छन्दयेन सन्निवेशितः स्थापितो वाच्यवाचकसम्बन्धेन धर्मिणि संज्ञारूपो डित्थादिः । स्वभावतो वस्तुवृत्तिर्गोत्वादिरेको जातिगुणक्रियात्मकः । यदृच्छया वक्त्रा सन्निवेशितनामरूपोऽपरः डित्थादिश्चेति । आद्यं विभजते **वस्त्विति वस्तुधर्मः** वस्तुवृत्तिः । अपि पुनः । **द्विविधः** द्विप्रकारकः । तदेवाह **सिद्ध** इति **सिद्धः** सत्स्वरूपो लिङ्गसंख्याद्यन्वययोग्यः । **साध्यः** साधनारूपः क्रियारूपः । सिद्धं विभजते **सिद्ध** इति सिद्धः सत्स्वरूपः । अपि पुनः । **द्विविधः** द्विप्रकारकः । तदेवाह **पदेति पदार्थस्य** पदबोध्यवस्तुनः । **प्राणप्रदः** प्राणो हि सत्त्वं व्यवहारस्तस्य प्रदो निर्वाहकः सत्त्वहेतुरिति । **विशेषाधानहेतुः** विशेषस्य सजातीयव्यावर्तनस्याधानं प्रत्ययः समर्पणं तस्य हेतुः कारणम् । चेति समुच्चये । तदेव व्याख्याति **तत्रेति** तत्र = तयोः । आद्यः प्रथमः प्राणप्रदः । **जातिः** सामान्यमेव । तदेवार्थं द्रढयितुमाप्तवचनोद्धरणायोपक्रमते **उक्तमिति वाक्यपदीये** वाक्यञ्च पदञ्चेति द्वन्द्वाच्छस्तदाख्ये भर्तृहरिप्रणीतग्रन्थे । उक्तं प्रतिपादितम् । हि इति अवधारणे । तदेवोद्धरति **नेत्यादि गौः** गौरिति व्यक्तिः । स्वरूपेण आकृत्या । न गौः न अगौः । हि इति निश्चये । **गोत्वाभिसम्बन्धात्** गोत्वं गोरूपजातिस्तस्याभिसम्बन्धात्समायोगात् । तु इति व्यवच्छेदे नान्यथेति । गौस्तदाख्या व्यक्तिरिति । गोपदोद्देश्यो धर्म उपाधिरहितव्यक्तिमात्रेण न गोव्यवहारहेतुः । तथा सति तु स्वरूपाविशेषाद् घटोऽपि गौः स्यात् । गोव्यवहारे तद्भिन्नव्यवहारेऽपि साधर्म्यवैधर्म्यरूपेण गोत्वमेव तत्र प्रयोजकमित्याशयः ।

[वृत्तिः] द्वितीयो गुणः । शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते । साध्यः पूर्वापरीभूतावयवः क्रियारूपः । डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमस्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यत इति

सोऽयं संज्ञारूपो यदृच्छात्मक इति। 'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकारः। परमाण्वादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्। गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद् भेद इव लक्ष्यते, यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्। हिमपयः शङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यम्। गुडतण्डुलपाकादिष्वेवमेव पाकत्वादि। बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये। तद्वान् अपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात्प्रकृतानुपयोगाच्च न दर्शितम्।

[कमला०] द्वितीयो विशेषाधानहेतुरित्यर्थः। गुणस्य विशेषाधानहेतुत्वमाह शुक्लादीति लब्धसत्ताकं जात्या प्राप्तव्यवहारम्। विशेष्यते सजातीयेभ्यो व्यावर्त्यते। परमानन्दस्तु लब्धसत्तेति निर्देशात्स्वसमवायात्प्रागाश्रयसिद्धिलाभः। उत्पन्नद्रव्यस्य क्षणं निर्गुणत्वाद् गुणे तथा नैवज्ञातौ तद्युक्तद्रव्यस्योत्पत्तेरित्याह। ननु जातेरपि तद्भिन्नेभ्यो व्यावर्तकत्वादतिप्रसङ्ग इति चेन्न। सजातीयेभ्यो भेदकत्वाभावात्। यद्यपि शुक्लादेर्गुणस्य नित्यत्वे जातिवत्सर्वयोगित्वन्तथापि तत्सम्बन्धः कदाचिदपैति जातिस्तु न तथेत्यर्थः। गुणलक्षणवत्त्वमेव तत्त्वम्। एवं प्राणप्रदत्वं जातिलक्षणयोगित्वं विवक्षितमित्यन्ये। तन्न। एतदप्रतीतेः। साध्य इति। पूर्वापरीभूता अवयवा अधिश्रयणादयो यस्याः सा क्रिया पाकादिस्तद्रूपः प्रयत्नसमुदायो भावनेत्युक्तं भवति। तदुक्तं राणके—

'प्रयत्नश्च करोत्यर्थस्तदस्यानुपलम्भनात्।
धात्वर्थव्यतिरिक्ताऽतः प्रयत्नाख्यभावना॥'

यजतीत्यादिपदाख्यातवाच्येऽस्त्येव समञ्जसमिति तावतः फलजनकत्वेन भावव्यापारत्वात्। तदुक्तं वार्तिके—

'तस्मादाद्यपरिस्पन्दात्प्रभृत्याफललाभतः ।
यत्ना पूर्वापरीभूता क्रिया सा वर्तते तदा॥' इति।

तदुक्तं मण्डनमिश्रैः—

'अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति।' इति।

वक्तृयदृच्छया निवेशितमाह डित्थादीति। अन्त्यं व्यवच्छेद्यं व्यक्ति-मात्रम्। तस्य बुद्धयैव निर्ग्राह्यम्। न त्वन्यः प्रकारः। न तत्संहृतक्रमं क्रम-शून्यम्। जात्यादिज्ञानोत्तरं व्यक्तिज्ञानादिति क्रमहीनं स्वरूपं डित्थादिशब्दः उपाधित्वेन विशेषणत्वेनार्थे स्थाप्यते। न चैवं शब्दान्निर्विकल्पकापत्तिः। आकाशादि-पदे शब्दाश्रयत्वादेरनुपस्थितेस्तद्वदिष्टापत्तिरिति केचित्। तन्न। अनुभवस्य समान-प्रकारत्वेन स्मृतिहेतुत्वात्पदस्य च स्मारकत्वेन तस्मान्निर्विकल्पकस्मृत्ययोगात्। न च समानविषयतयैव स्मृतिहेतुता। न समानप्रकारतयेति वाच्यम्। घटत्वप्रकारका-नुभवेन घटे घटत्वप्रकारकस्मृत्या नापत्तेः। अन्ये तु प्रत्यक्षोपस्थिता संज्ञैव विशेषणम्। संज्ञाशब्दो हि स्वविशिष्टधर्मिणं बोधयति। ननु शक्यतावच्छेदकप्रकाराग्रहे कथं शक्यत्वग्रहः? न च शब्द एव शक्यतावच्छेदकः प्रकारः। तथा च डित्थशब्द-वाच्योऽयमिति उल्लेखोऽपीति वाच्यम्। डित्थपदादेवं प्रत्यये स्वशब्दस्वरूपाभिधेयत्वे आत्माश्रयापत्तेरिति चेन्न, कारणतावच्छेदकभेदात्। यथा विशिष्टज्ञानस्यांशे विशेषण-ज्ञानजन्यत्वमेवमत्रापि विशेषणज्ञानत्वेन कारणता न तु डित्थशब्दज्ञानत्वेन। डित्थ-शब्दात्तच्छब्दानुपस्थितेः कथं तर्हि शक्यतावच्छेदकत्वम्? प्रत्यक्षोपस्थितस्यैवेत्य-वेहि। न हि विशेषणाभिधानमपि विशिष्टज्ञानसामग्री। तदुक्तं भट्टपादैः—'सर्वबुद्धयगृहीतविशेषणाविशिष्टे बुद्धिरनिष्ठा। न त्वनभिहितविशेषणेति। वह्नि-मानित्यत्र यथा वह्नयंशेऽनुमितिः पर्वतांशे प्रत्यक्षमेव वह्नि-मनुमिनोमि पर्वतं पश्यामीत्यनुभवादन्यथा वह्निमन्तं पर्वतमनुमिनोमीत्यापत्तेः। तथा संज्ञांशे प्रत्यक्षं संज्ञ्यंशे च शाब्दत्वमिति सङ्करेऽप्यदोष इति हृदयम्। ग्रन्थाऽर्थोऽप्येवं ज्ञेयः। शब्दस्य प्रत्यक्षानन्तरत्वादन्त्यया परया तद्विशिष्टधर्मिप्रतीत्या निर्ग्राह्या। विषयीकृतं जात्यादि शब्देषु पूर्वपूर्वप्रयोगात्परः परप्रयोग इति क्रमः। नैवमत्र तत्र हेतुः। यदृच्छयेति संज्ञाया अवाच्यत्वादेवोपाधित्वेनेत्युक्तम्। तदुक्तम्—अनन्व-यित्वेन च भेदकानामुपाधिता लक्षणता च सिद्धेति। अनन्वयोऽशक्यत्वम्। तदेवं प्राणप्रदो जातिर्विशेषाधानहेतुर्गुणः। साध्यः क्रिया। यदृच्छाशब्दो डित्थादिरिति चतुर्धा शब्द उक्तः। तत्र सम्मतिमाह गौः शुक्ल इति। प्रवृत्तिः स्वरूपम्। तदुक्तम्—

> 'शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः।
> चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विधः॥' इति।

यद्यपि चल इत्यादीनां न क्रियात्वमनाख्यातत्वात्तथापि धात्वर्थस्य क्रिया-रूपत्वादिमते इदं क्रियाशब्दः कर्मपरो वा। ननु परमाणुत्वं न जातिः पृथिवीत्या-दिनासङ्करात्। न गुणश्चतुर्विंशतावपाठात्। न क्रियाऽसिद्धत्वान्न द्रव्यमनेक-व्यक्तिकत्वात्। अतः कथञ्चातुर्विध्यमत आह परमाण्वादीनामिति परमाणुत्वा-

दीनामित्यर्थः। आदिशब्दात्परममहत्त्वं पारिभाषिकमेव गुणत्वम्। वस्तुतो जातित्वमेवाजातिसङ्करस्योपाधिसङ्करवददोषत्वादित्यर्थः। यत्तु परमानन्दोऽणुत्वस्य महत्त्वादिव्यावर्तकत्वादस्मात्परिभाषयाऽपि सिद्धं गुणत्वम्। एवकारोऽप्यर्थे इति। तन्न। तत्सम्बन्धात्प्रागाश्रयसिद्धत्वाभावाद् यद्वा। ननु न गुणस्य विशेषाधानहेतुत्वं वैशेषिकेगु णत्वाभिमतानामणुत्वादीनां नित्यत्वेन विशेषानाधायकत्वादत आह **परमाण्विति**। तेषां वस्तुतो गुणत्वाभावान्नाव्याप्तिरित्यर्थः। ननु शुक्लादीनां प्रतिव्यक्तिभेदात्तत्र शक्तौ व्यक्तिवदानन्त्यव्यभिचारादिदोषस्तुल्यो जातिवाचित्वे तु गुणशब्दत्वाभावाच्चातुर्विध्यं न स्यादत आह **गुणेति** गुणश्च क्रिया च यदृच्छाशब्दो यस्य डित्थादेरर्थस्य तेषामेषामर्थानां प्रत्यभिज्ञया ऐक्यसिद्धौ भेदधीराश्रयभेदवशान्न परमार्थत इति भावः। औपाधिके भेदे दृष्टान्तमाह **यथेति**। आलम्बनभेदाद्भेद इत्यनुषङ्गः। यत्तु यदृच्छया शब्दः स्फोटस्यैकं वर्णरूपाश्रयस्य भेद इति। तन्न। शब्दस्याप्रस्तुतत्वात्। जातिरेव वेति व्याचष्टे **हिमेति** परमार्थत इति उत्पत्तिविनाशादिप्रतीतेः शुक्लतरः शुक्लतम इति तारतम्यादिप्रतीतेश्चाबाधितत्वादनन्यथासिद्धत्वाच्च शुक्लादयो नाना न चोत्पादादिधीः सम्बन्धविषया तदनुल्लेखात्। अतः शुक्लादीनां भेद इत्यर्थः। **अभिन्नेति** एकसंज्ञैकाकारप्रत्ययोत्पत्तिर्यद्वशेन तच्छुक्लत्वादिसामान्यमस्तीति भाविनान्वयः। यत्र गुणवृत्तिर्जातिः शक्या स गुणशब्दः। एवं क्रियादावपि गुडपाकस्तण्डुलपाक इत्यादौ एकाकारधिया पाकत्वमस्तीत्यन्वयः। **बालवृद्धेति** तारमन्द्रादिस्वरभेदाच्छब्दभेद उक्तः। डित्थादिशब्देषु डित्थशब्दत्वं सामान्यम्। **प्रतिक्षणमिति** स्थूलोपाधिपरम्। परिमाणभेदे शरीरभेदात्तद्वृत्ति चैत्रत्वडित्थत्वाद्यस्तीत्यर्थः। वाशब्दो वादिभेदेन शब्दार्थगतजातिभेदार्थः। वा इवार्थे शब्देष्विव भिद्यमानेऽर्थे इत्यन्वय इत्यन्ये। शब्देषु चेति पाठे वाऽप्यर्थोऽर्थेऽपीत्यग्रे योज्यः। उपसंहरति **सर्वेषामिति**। अन्ये मीमांसकाः। इदञ्च तन्मते गुणक्रियाणामभेदान्नित्यत्वाच्चैकदेशिमते ज्ञेयम्। आकाशादिपदे कथञ्जातिर्वाच्येति चेन्न। शब्दाश्रयस्य शक्यत्वे तद्घटकशब्दवृत्तिशब्दत्वजातेः परम्परासम्बन्धेन शक्यत्वात्। अष्टद्रव्यभिन्नद्रव्यत्वं शब्दाश्रयत्वञ्च शक्यमिति केचित्तन्न। आकाशोऽष्टद्रव्यभिन्नं द्रव्यं शब्दाश्रय इति सहप्रयोगानुपपत्तेः। अतो व्यक्तिरेवार्थः एकत्वाच्च नावच्छेदकापेक्षाशब्दान्निर्विकल्पकम्। संज्ञैव प्रकारो वेत्यन्यदेतत्। अभावेऽप्यभावत्वस्याखण्डोपाधेः शक्यत्वम् जातिपदेन साधारणधर्मोक्तेः। यद्वा एक एवात्यन्ताभावः शक्यः पूर्वोत्तरकालतादात्म्याद्यवच्छेदकभेदात्। प्रतियोगितामात्रं भिन्नं लाघवात्। न तु प्रागभावादयो भिन्नाः। ननु जातेर्वाच्यत्वे शब्दान्निर्विकल्पकापत्तिः। न च व्यक्तिरेव प्रकारस्तस्याः प्राधान्यादत आह **तद्वानिति** तद्वान् जातिमान् शब्दार्थः केश्चिदुक्तस्तार्किकादिभिरित्यर्थः। अयम्भावः— न व्यक्तिमात्र

शक्तिरानन्त्याद् व्यभिचाराच्च। न जातिमात्रे व्यक्तिप्रतीत्यभावप्रसङ्गात्। न चाक्षेपात्तद्धीः शाब्दबोधे पदोपस्थितस्यैव भानात्। न चानन्त्याद् व्यभिचाराच्च न विशिष्टे शक्तिरिति वाच्यम्, सामान्यलक्षणया सर्वव्यक्तीनामुपस्थितौ शक्तिग्रह-सम्भवात्। तेन जातिविशिष्टा व्यक्तिर्वाच्या। अपोहः अतद्व्यावृत्तिरेव शब्दार्थो वैनाशिकैरुक्तः। तेषाञ्जातेरभावाद् गोव्यावृत्त्यैवानुगतव्यवहारः। कथं तर्हि जाति-मात्रे शक्तिरुक्तात आह प्रकृतेति। जातेर्वाच्यत्वे व्यक्तेराक्षेपादिव्यञ्जनयाऽपि भान-मिति प्रकृतोपयोगः। विशिष्टशक्तिवादे तु न व्यञ्जनेति प्रकृतानुपयोगान्नोक्त-मित्यर्थः। न चोक्तदूषणग्रासादयुक्त एव व्यञ्जनोपयोगी जातिपक्ष इति वाच्यम्। आनन्त्याद् व्यभिचाराच्च विशिष्टाधानस्य पूर्वं निरस्तत्वात्। सामान्यलक्षणायाश्चा-युक्तत्वात्। विस्तरेण चैतद् भाट्टकुतूहलेऽस्माभिरुक्तमिति नाऽत्रोच्यते। न च शक्यतावच्छेदकाभावान्न जातौ शक्तिः। वाच्यैकत्वेनानन्त्यव्यभिचारादिदोषाभावेन तदनपेक्षणात्। न च प्रकारं विना पदात्कथं निर्विकल्पका स्मृतिरिति वाच्यम्। शब्दस्यैव प्रकारत्वाद् व्यक्तौ सन्देहाद् व्यक्तेश्चरमोपस्थितत्वाच्चित्रबुद्धेरभावाद् गौरवाच्च न वाच्यम्। न हि प्रतीतिमात्राद् व्यक्तेर्वाच्यत्वं लक्षणोच्छेदापत्तेः। अनन्यलभ्यो हि शब्दार्थः। न च व्यक्तेर्लक्षणया भानसम्भवे वाच्यत्वं युक्तम्। न च लक्ष्यता-वच्छेदकासम्भवो जातेरेव तत्त्वात्। क्वचिदाक्षेपात्तद्धीसम्भवाच्च। न चाक्षेपे कथं व्यक्तौ बहुत्वादिसङ्ख्यान्वयस्तस्या अशाब्दत्वात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थ-वाचित्वादिति वाच्यमभेदेन प्रकृत्यर्थत्वात्। यत्र हि व्रीहीनवहन्तीत्यादौ अन्वयानुप-पत्तिः। न हि कर्मत्वादिकं व्यापारवत्त्वं येन व्यक्तिद्वारा स्यात्। तत्र व्यक्तौ लक्षणैव। यत्र तु व्रीहिभिर्यजेतेत्यादौ जातेरमूर्तया अप्याहण्यवद् द्रव्यपरिच्छेदद्वारा करणत्वसम्भवो व्यापारवत्त्वस्य तत्त्वात्। तत्राक्षेपादेव व्यक्तिधीः। आक्षेपश्चार्था-पत्तिरनुमानं स्मृतिर्वाऽस्तु न तु शाब्दबोधविषयतेति दिक्। सर्वत्राशब्द-व्यक्तौ सङ्ख्याद्यन्वयायोगाल्लक्षणैवेति तु युक्तमत एव कैश्चिदित्यनेन तुच्छत्वमुक्तम्।

[सरि०] सिद्धस्य हि द्वितीयं प्रकारं निरूपयति द्वितीय इत्यादि। द्वितीयः विशेषाधानहेतुरूपः। गुणः गुणाख्यधर्मः। तदेव व्याचष्टे शुक्लेति शुक्लादिना शुक्लप्रभृतिगुणैः। हि इति निश्चये। लब्धसत्ताकं लब्धा गोत्वादिजात्या प्राप्ता सत्ता व्यवहारयोग्यता येन तादृशम्। वस्तु व्यक्तिः। विशिष्यते सजातीयेभ्यो व्यावर्त्य विशिष्टत्वेन परिचाय्यते। अत्रेदमवधेयम्—जातिर्हि नित्या व्यक्तेः स्वरूपा-धायकात्। शुक्लादि गुणोऽपि नित्यः सहजातत्वात्। तथापि गुणस्य सम्बन्ध कदाचिदनैत्यपि न तु जातेरिति जातेः प्राणप्रदत्वं गुणस्य विशेषाधायकत्वम्।

वस्त्रस्य हि शुक्लत्वं वर्णान्तरसंसर्गेण प्रणश्यत्यपि वस्त्रत्वं न कदापीत्यत्र निदर्शनम्। उक्तमेव—सत्त्वे निवेशितेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥ इति। तेन हि व्यक्तेर्धर्ममात्रं गुण इति सिद्धम्। वस्तुधर्मस्य द्वितीयं भेदं साध्यं व्याचष्टे साध्य इति। पूर्वापरीभूतावयवः पूर्वापरीभूताः क्रियायास्त्रैकाल्येऽप्येकत्वात्क्रमाभावेऽपि क्रमिकत्वेन भ्रान्त्या प्रतीयमाना अवयवाः अधिश्रयणाद्यवतारान्तव्यापारा यस्य स तादृशः। अक्रमस्य क्रमद्योतनाय च्विप्रत्ययः। क्रियारूपः धातुवाच्यः। साध्यः साध्यत्वेन विवक्षित इति। अस्यायमाशयः अधिश्रयाद्यवतारणान्तव्यापारसमूहो हि पाकक्रिया। तेषाञ्च विक्लित्यनुकूलत्वेनानुगमान्न नानार्थता। तत्र हि सर्वप्रागभावे भविष्यत्वं सर्वध्वंसे भूतत्वं कस्यचिदवस्थितौ वर्तमानत्वम्। यथोक्तम्—'यावत्सिद्धमसिद्धं वा साध्यत्वेन] प्रतीयते। आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते॥' इति। पाचकादीनां प्रकारीभूतक्रियायां शक्तिः। क्रिया हि द्विविधा—साध्या सिद्धा च। तत्र साध्या धातुरूपनिबन्धना। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वं कारकान्वयितावच्छेदकरूपवत्त्वं वा साध्यत्वम्। एतदेवासत्त्वभूतत्वेन गृह्यते यथा पचतीत्यादि। तथैव क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वं वा कारकानन्वयितावच्छेदकरूपवत्त्वं सिद्धत्वम्। सिद्धभावो हि घञादिनिबन्धनरूपः। यथा पाकः पचनम्। एतदेव सत्त्वभूतत्वेन गृहीतम्। तदित्थं वैयाकरणसम्मतजातिगुणक्रियास्वरूपं निर्णीतम्। एतेऽत्र सङ्ग्रहश्लोकाः—

'भिन्नेष्वभिन्नधीशब्दो धवलादिषु यद्बलात्।
वर्तेत जातिरेषा स्यान्मालासूत्रवदन्विता॥
द्रव्याश्रयस्ततो भिन्नस्तत्प्रतीतेरपाश्रयः।
विपरावृत्तिधर्मा च निर्गुणो गुण इष्यते॥
कर्त्रादिकारकग्रामनिर्वर्त्याऽसत्त्वधर्मतः।
पदार्थो व्याप्यकर्तृस्थः क्रियाविद्भिः क्रियेष्यते॥' इति।

उपाधेर्द्वितीयभेदं व्याचष्टे डित्थेत्यादिना। डित्थ आदिर्येषान्ते तादृशानां डित्थडवित्थकैयटप्रभृतीनां शब्दानां संज्ञावबोधकवर्णोच्चयानाम्। अन्त्यबुद्धिनिर्ग्राह्यं अन्त्यशब्दे चरमो यो वर्णस्तद्बुद्ध्या निर्ग्राह्यं निःशेषतो ग्राह्यं पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतयाऽन्त्यवर्णबुद्ध्या ज्ञेयम्। शब्दानां क्रमवृत्तित्वान्नैकदेशकालावच्छेदलक्षणः समुदायः सम्भवति। न हि खलु 'डि'शब्दोच्चारणकाले 'त्थ'शब्दोऽस्ति, नैव 'त्थ'शब्दोच्चारणकाले 'डि'शब्दः। अत एव अन्त्योच्चारितः 'त्थ'शब्दो हि पूर्वोच्चारितस्य 'डि'शब्दस्यापि संस्कारमादायार्थं बोधयति। तेनैव संहृतक्रमं

संहृतः पिण्डीकृतोऽत एव शून्यः क्रम आनुपूर्वी यस्य तत्तथाभूतम्। व्यञ्जकानां हि ध्वनीनां क्रमवत्त्वेऽपि व्यङ्ग्यस्य स्फोटरूपस्य न कोऽपि क्रमः। वर्णानां तु क्रमवृत्तितयैवार्थप्रत्यायकतासामर्थ्यम्। पूर्वपूर्ववृत्त्या ईषद्ग्राह्यमन्त्यबुद्ध्या स्फुटतरावभासनात्स्फोटस्यैकत्वाच्च क्रमशून्यमित्याशयः। **स्वरूपं** डित्थादिपदरूपम्। **वक्त्रा** कथयित्रा वा व्यवहर्त्रा **यदृच्छया** इच्छानुसारमेव अनेन नाम्ना इयं व्यवहरामीति स्वतन्त्रपुमिच्छया। डित्थाडिषु डित्थप्रभृतिषु। अर्थेषु तद्बोध्येषु धर्मिषु। **उपाधित्वेन** विशिष्टधीहेतुधीविषयत्वेन सङ्केताश्रयतया विशेषणत्वेन। **सन्निवेश्यते** कल्प्यते। इति इति हेतौ। सः तादृशो वक्त्रा यदृच्छया सन्निवेशितोपाधिः। अयमेव डित्थादि शब्दः। **संज्ञारूपः** संज्ञाख्यः **यदृच्छात्मकः** यदृच्छा वक्तुः स्वेच्छैव तया आत्मा स्वरूपं यस्य तादृशः। इति इति जात्यादिविभागप्रकरणसिद्धौ। अयमेव संज्ञाशब्दो द्रव्यशब्द इति व्यवह्रियते। श्रावणज्ञानस्य शाब्दबोधे हेतुत्वाङ्गीकारान्नात्माश्रय इति उद्द्योते स्पष्टम्। यच्च चण्डीदासाः अन्त्यं स्वलक्षणं बुद्ध्या निःशेषतो ग्राह्यं यस्य तत् जातिप्रतीत्यनन्तरं व्यक्तिप्रतीतिरिति क्रमशून्यं च डित्थादीनां शब्दानां स्वरूपं डित्थादिष्वर्थेषु उपाधित्वेन पदार्थोपस्थित्यनुकूलतया सङ्केत्यते। उपाध्यनन्तरं तेषां किन्तु धर्मिमात्रं ततः प्रतीयत वृत्त्यर्थमाह। तच्च भाष्यविरुद्धं तत्र शब्दस्यैवोपाधित्वेन व्यवस्थापनात्। डित्थादिशब्दात् डित्थादिनामायमिति प्रतीतेरिति प्रदीपे स्पष्टम्। जयरामतर्कपञ्चाननास्तु अन्त्यवर्णबुद्धौ पूर्ववर्णोपनमनवशान्निःशेषतो विषयीभूतमत एव संहृतक्रमं तद्वर्णबुद्ध्यनन्तरं तद्वर्णबुद्धिरिति क्रमशून्यं यत्स्वरूपं डित्थादिपदरूपमिति वृत्तिग्रन्थं व्याचक्रुः। डित्थादिपदस्य दुर्ज्ञेयत्वान्न तथात्वमिति परिसृतमिति सुधासागरे स्पष्टम्। वस्तुतस्तु जात्यादिशब्देषु पूर्वप्रयोगात्परःपरप्रयोग इति यः क्रमः सोऽत्र न भवति, साक्षिप्रयोगत्वादिति तत्रैव स्पष्टम्। तदयमत्र सङ्ग्रहः—

'नामरूपेण संवित्तः कश्चित्संज्ञी निगद्यते।
नामेति तद्यथा चैत्रः संज्ञाशब्दश्च तद्ध्वनिः॥
प्रतीतिभेदमाश्रित्य द्रव्यशब्दात् पृथक्कृतः।
यद्यद्विशिष्यते किञ्चित्तत्तद्द्रव्यमिहेष्यते॥
वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो द्रव्यत्वेन विवक्षितः॥' इति।

अत एवोक्तं भवति—

'शब्दैरेभिः प्रतीयन्ते जातिद्रव्यगुणक्रियाः।
चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः॥' इति।

क्रमोच्चारितवर्णानां हि संज्ञाशब्दानां स्फोट एव वाच्यः। स च वक्तृ-परिभाषात्मकः। वक्ता हि स्वेच्छया तेन स्वाभीष्टां व्यक्तिमाक्षिप्यानुभावयति गोत्वादिवत्। स्फोटस्य शब्दात्मकत्वाच्छब्दस्य च द्रव्यत्वात्पारिभाषिकशब्दानां द्रव्यवाचिता। न च डित्थादिपदात्पदार्थस्वरूपमात्रं प्रतीयते। संज्ञोपाधिरपि यदृच्छोपाधिरेव। इत्थमुपाधिचातुर्विध्याच्चतुर्विधा पदानां प्रवृत्तिरपि। उपाधिपदेन प्रवृत्तिनिमित्तस्याभिधानमिति परमानन्दाः तत्तदुपाध्यवच्छिन्नप्रतीतिविषयताविभेदात् सहप्रयोगस्तेषां नानुपपन्न इति। तत्र शिष्टसम्मतिमाह **गौरिति** गौरिति जातिः। शुक्ल इति गुणः। चल इति क्रिया। डित्थ इति संज्ञा। **इत्यादौ** इत्यादिपदेषु। **शब्दानाम्** अर्थावबोधकवर्णौघानाम्। **चतुष्टयी** चतुर्विधा जातिगुणक्रियाद्रव्य-स्वरूपा। **प्रवृत्तिः** व्यवहार इति। शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्त-भेदाच्चतुर्विधेत्याशयः। तत्र सत्त्वाधायिका जातिर्विशेषाधानहेतुर्गुणः साध्यः क्रिया यदृच्छाशब्दो डित्थादिरिति। **इति** इत्थमेव। **महाभाष्यकारः** भगवान् पतञ्जलि-रिति। शब्दानां हि प्रवृत्तिनिमित्तस्य चातुर्विध्यत्वेन शब्दस्यापि चातुर्विध्यम्। एतच्च पातञ्जलमहाभाष्ये 'ऋलृक्' सूत्रव्याख्याने प्रतिपादितमस्तीति।

[ अत्र हि शब्दतदर्थतद्ग्रहणादिविषये प्राकरणिकं किञ्चिदुच्यतेऽनुक्तमप्य-पेक्षितत्वात्। कारिकायां सङ्केतितो जात्यादिरित्युक्तम्। कोऽसौ सङ्केत इत्य-पेक्षायां त्रीणि मतानि दृश्यन्ते प्राधान्येन नैयायिकमतं मीमांसकमतं वैयाकरण-मतञ्च। न्यायमतेन हि उच्चारितवर्णध्वनिसङ्केत एव शब्दः। स चानित्यः। सामयिको हि शब्दार्थसम्प्रत्ययः। समयश्चाभिधानाभिधेयनियमनियोग एव। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छैव शक्तिस्तेन हि शाब्दबोधः प्रथमान्त-विषयकः। मीमांसकमते शब्दो नित्यस्तद्गतवर्णा अपि। केवलं तेषामानुपूर्व्येवा-नित्या। सा केवलमर्थप्रकाशिकैव न तु वाचिका; प्रतिवर्णं हि शब्दस्यार्थविबोधकशक्तिः पूर्णता तु तेषामानुपूर्व्यामेव। पदार्थान्तरं शक्तिः। नित्यो हि शब्दार्थसम्बन्धः। स एव शक्तिः। वैयाकरणमते नित्यो हि शब्दार्थसम्बन्धः। सर्वे शब्दाः सर्वेषा-मेवार्थानां वाचका भवन्ति सङ्केतस्तत्र विशिष्टार्थप्रकाशक एव। बौद्धं हि शब्दार्थयो-स्तादात्म्यं यदेव स्फोट इत्युच्यते। श्रूयमाणध्वनयः स्फोटस्यैव ग्राहकाः। बौद्धो ह्यर्थः। बाह्यस्तु तस्यैव प्रतिबिम्बमेव। सङ्केतग्रहणं विना नार्थबोधः। स च व्यवहारादिसाध्यः।

कः शब्द इत्यपेक्षायामपि पण्डिता बाहुमत्यं भजन्ते। केषाञ्चिन्मते यस्मादर्थ-प्रतीतिः स एव शब्दः। अपरे तत्र मन्यते यत्तथा हि सति वह्निरूपार्थप्रकाशक-धूमोऽपि शब्दः स्यादिति। तेन तेषां मतेऽर्थप्रतीत्यर्थमुच्चारितवर्णसमुदाय एव शब्दः।

अन्ये तदपि न साधु मन्यन्ते तदवयवभूतवर्णानां नैरर्थक्येन समुदायेऽर्थस्याऽप्यसम्भवात्। वर्णानां हि एकोपस्थितावपरस्योपस्थित्यसम्भवान्न समुदायताऽपि। न चावयवेतरावयविसम्भवः। परे तु स्फोटमेव यथार्थशब्दं मन्यन्ते। तस्यापि प्रामाण्याभावादपरे तन्न मन्यन्ते। स्फोटो हि न प्रत्यक्षसिद्धो नापि अनुमानगः। 'शब्दो हि नित्योऽविचिन्त्यस्वरूपो यस्याभिव्यक्तिर्नश्वरवर्णध्वनेर्भवति इत्यन्ये। तन्मते सङ्केतितार्थः पारमार्थिकस्य प्रतिबिम्बमेव।

सङ्केतितार्थविषयेऽपि तथैव विचक्षणा नैकमत्यं भजन्ते। वैयाकरणा हि उपाधेश्चातुर्विध्येन शब्दमपि जातिगुणक्रियाद्रव्यभेदेन चतुर्विधमेव मन्यन्ते; यथा गौः शुक्लश्चलो डित्थ इति। तेन हि तन्मते सङ्केतितार्थोऽपि चतुर्विध एव। अर्थक्रियाकारित्वमेव शब्दस्यार्थसाधकत्वम्। द्रव्यगुणक्रियाणामानन्त्यात्कथं तत्र सङ्केतग्रह इत्यपेक्षायामुच्यते यत्ते हि प्रत्येकं वस्तुत एकविधमेव। केवलमाश्रयभेदादेव तेषां भिन्नतया प्रतीतिरिति न दोषः। मीमांसकास्तु जातिमेव सङ्केतितार्थं मन्यन्तेऽपरेषां तत्रैवान्तर्भावात्। एवमेव नैयायिका जातिविशिष्टव्यक्तिमेव सङ्केतितार्थमामनन्ति तस्या एवार्थक्रियाकारित्वात्। केचिद्विशेषतो बौद्धा अपोह एव शक्तिग्रहं मन्यन्ते। स च स्वेतरतत्वनिरास एवेति। ]

प्रकृतमनुसरामः—तर्हि वैशेषिकैर्गुणत्वेन व्यवहृतानां वस्तुतः प्राणप्रदत्वेन जात्यन्तःपातिनां परमाण्वादीनां का स्थितिरित्याह **परमेति** परमाण्वादीनां परमाणुर्जलसूर्यमरीचिस्थसूक्ष्मरजसः षष्टितमो भागः आदिपदाद् द्व्यणुकादिपरममहत्त्वादीनां ग्रहणं तेषाम्। तु इति व्यवच्छेदे पूर्वोक्तविपरीतमेव। गुणमध्यपाठात् वैशेषिकनये अणुमहद्दीर्घह्रस्वादिरूपेण गुणेऽन्तःपातित्वात्। गुणत्व विशेषाधानहेतुत्वम्। तु। **पारिभाषिकं** पारिभाष्यैव प्राप्तमर्थाद् भाक्तमेव न तु वस्तुतस्तेषामपि पदार्थप्राणप्रदत्वेन जातित्वात्। तेन सिद्धोपाधिभेदे प्राणप्रदो जातिरिति यदुक्तं तस्य गुणे नातिव्याप्तिरित्याशयः। ननु परमाणुत्वं न जातिः घटजलपरमाण्वोः परस्परपरिहारेण वर्तमानयोः पृथिवीत्वपरमाणुत्वयोः पृथिवीपरमाणौ समावेशेन जातिसङ्करप्रसङ्गात्। उक्तमेव—'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः' ॥ इति। न च तेषां गुणत्वं चातुर्विंश्यामपाठादनेकव्यक्तिकत्वाच्च। न च तेषां द्रव्यत्वं यादृच्छिकत्वाभावान्नैव क्रियात्वं सिद्धत्वसाध्यत्वाभावाच्च तत्कथमुच्यते शब्दानाञ्चातुर्विध्यमिति ? अत्रोच्यते — परमाण्वादीनां नासाङ्कर्यं भूषणादिमर्यादया सम्यक्त्वादिना समनुभवत्वादिवत्तत्स्थितेः। यच्च गुणानां चातुर्विंश्युक्ता तत्र सजातीयव्यावर्तकवैधर्म्यादर्शनात्तथैव परिभाषितमत्रापि। तन्त्रान्तरे तु सामान्यवान् गुणो गुण इति। तेषां गुणत्वमिति

तत्प्रवृत्तिनिमित्तकशब्दानां गुणशब्दत्वमिति विस्तारिकायां स्पष्टम्। वस्तुतः परमाण्वादीनां जातित्वमेव तेषां पदार्थप्राणप्रदत्वसिद्धेः। तेषां गुणत्वं तु भाक्तमेव तन्निमित्तीकृत्य प्रवृत्तायां परमाण्वादिशब्दानां गुणशब्दत्वमिति। सिद्धं परमाण्वादीनामपि जातित्वमेव। यथा हि व्यक्तौ सङ्केतग्रहे आनन्त्यव्यभिचारसमानार्थकसह्ययोगापत्तिप्रभृतयो ये दोषा दर्शितास्ते तु गुणादीनामप्यानन्त्याद् व्यभिचाराच्च यथा घटस्य शुक्लः पटस्य शुक्लः ओदनस्य पाको गुडस्य पाकः डित्थस्य यदृच्छा डवित्थस्यापि तथेति किमिदं न घट्टकुटयां प्रभातमित्यपेक्षायामाह **गुणेति**। गुणक्रियायदृच्छानां गुणस्य क्रियायां यदृच्छायाश्च। **वस्तुतः** परमार्थतः। **एकरूपाणां** सार्वत्रिकत्वेन सामान्यस्वरूपाणाम्। **अपि** इति निर्द्धारणे। **आश्रयभेदात्** आलम्बनपार्थक्येन। भेदः पार्थक्यम्। **इव** यथा। **लक्ष्यते** दृश्यते वस्तुतो न तत्स्वरूपे भेद इति। तत्र निदर्शनमाह **यथेति**। यथा। **खड्गेति** खड्गोऽसिः स्वच्छधारः मुकुरो दर्पणस्तैलं तिलाद्युद्भूतस्निग्धद्रवस्तु तदाधाना यानि आलम्बनानि तेषां भेदात्पार्थक्येन। **एकस्य**। **मुखस्य** वदनस्य रूपान्तरदर्शनमिति। यथा ह्येकस्यैव मुखस्य खड्गादौ दीर्घवर्तुलादिरूपं दृश्यते तथैव गुणादीनामपि। मुखस्य दीर्घवर्तुलत्वादिकं द्रव्यगतमेव न तु वास्तवम्। तथैव गुणादीनामानन्त्यमपि पात्रायत्तमेव न तु यथार्थम्। घटपटयोः शुक्लत्वयोरोदनगुडयोः पाकयोश्च न वास्तविकभेदस्तेन न तत्र नित्यव्यभिचारदोषसम्भव इति तात्पर्यम्। स एवायमिति प्रत्यभिज्ञया शुक्लादीनामैक्यसिद्धौ भेदप्रतीतिः केवलमाश्रयभेदौपाधिकीति। एक एव शुक्लादिः शङ्खाद्याश्रयवान्नानात्वेन स्फुरतीति बोध्यम्। तत्सिद्धौ शब्दानां चतुष्टयी प्रवृत्तिरुपाधेश्चातुर्विध्यात्।

इत्थं जात्यादिशब्दं व्याख्याय सम्प्रति कारिकागतं 'जातिरेव वा' इति पदोच्चयं व्याचष्टे **हिमेत्यादिना**। अत्रेदमवधेयं यद्वैयाकरणमतेन सङ्केतितार्थो जातिगुणक्रियाद्रव्यभेदेन चतुर्विधो भवति। मीमांसकमते तु गुणादीनामपि जातावेवान्तर्भावात् सैव सङ्केतितार्थ इति। प्रथमं स्वाभिमतं मतं व्याख्याय सम्प्रति क्रमप्राप्तत्वाद् द्वितीयं मतं व्याचष्टे **वृत्तिकृदिति**। **हिमपयःशङ्खाद्याश्रयेषु** हिमं तुहिनं पयो दुग्धं शङ्खः कम्बुः आदिपदादन्येषामपि शुक्लवर्णपदार्थानां ग्रहणं ते आश्रया आलम्बनानि येषां तेषु तथाविधेषु। **परमार्थतः** सामान्यतो हि सामान्येऽपि **वस्तुतः**। **भिन्नेषु** पृथक्स्वरूपेषु। **शुक्लादिषु** शुक्लप्रभृतिगुणेषु। **यद्वशेन** यन्निमित्तेन। **शुक्लः शुक्लः** हिमं शुक्लं पयः शुक्लं शङ्खः शुक्ल इत्यादि इतिप्रभृति अभिन्नाधानमेकाकारत्वेन शब्दव्यवहारं प्रत्ययो ज्ञानं तयोरुत्पत्तिरुद्भवनं वाऽभिन्नमेकाकारं यदभिधानं शब्दस्तेन या प्रत्ययोत्पत्तिरिति। **तत्** तथाप्रत्ययो-

त्पादकम्। शुक्लत्वादि शुक्लादिभावः। सामान्यं जातिरेव। जातिर्जातिश्च सामान्यमिति कोशात्। एवमेव—अनेनैव विधिना। गुडेति गुडं शर्करा तण्डुलाश्च आदिपदादेवंविधान्यपाचनयोग्यपदार्थानां ग्रहणं तेषां पाकादिषु पाचनादिक्रियासु। पाकत्वादि पाकभावादि। एवमेव तथैव शुक्ले शुक्लत्वमिव सामान्यमिति। गुडतण्डुलादिद्रव्याश्रिता ये पाकादयोऽन्योन्यमन्यत्वेन स्थिताः क्रियाविशेषास्तत्समवेतं सामान्यं यद्वशेनायं पाकोऽयं पाक इति अभिन्नाभिधानप्रत्ययोत्पत्तिरित्याशयः। बालेति बालोऽर्भको वृद्धोऽतिवयाः शुकः कीरः आदिपदात्सारिकाऽपि तैरुदीरितेषु उच्चारितेषु। डित्थादिशब्देषु डित्थडवित्थप्रभृतियादृच्छिकशब्देषु। चेति समुच्चये गुणक्रियादिष्विव। प्रतिक्षणं क्षणे क्षणे। भिद्यमानेषु भिन्नेषु डित्थाद्यर्थेषु डित्थादिपिण्डेषु। वा इति पक्षान्तरे। येषां मतेऽर्थगता जातिरिति तेषां मते। डित्थत्वादि डित्थादिभावः। अस्ति सामान्यत्वेन वर्तते। इति हेतोः। सर्वेषां निखिलानां गुणादीनाम्। शब्दानाम् अभिधानानाम्। प्रवृत्तिनिमित्तं सङ्केतविषयः अर्थबोधने या प्रवृत्तिः शक्तिस्तस्याः निमित्तं कारणमिति। जातिः सामान्यम्। एव इति गुणक्रियाद्रव्याणां परिहाराय। इति इत्थम्। अन्ये इतरे विशेषेण मीमांसकाः। आमनन्तीति शेषः। व्यक्तिस्तु पश्चाज्जात्याऽक्षिप्यते इति यावत्। अत्रेदं बोध्यम्—यद्वशेन सर्वत्र शुक्लत्वं यत्सामर्थ्येन सर्वत्र पाकादिक्रिया यदृच्छया डित्थादिष्वर्थबोधस्तत्सामान्यमेवेति जातावेव सङ्केतग्रह इति मीमांसकमतम्। यद्यपि हिमादिषु शुक्लादिगुणा वस्तुतो भिन्ना एव। अन्यदेव हिमस्य शुक्लत्वमन्यदेव च शङ्खस्य। तथैव गुडादिगता पाका अपि भिन्ना एव परिणामपार्थक्यात्। एवमेव डित्थादिषु डित्थत्वादि। तथाऽपि सर्वत्रानुगतप्रत्ययानुरोधेन शुक्लत्वपाकडित्थत्वादि जातिरेव। लाघवाच्च तत्रैव सङ्केत इत्याशयः। उक्तं यथा—

> घटतीति घटो ज्ञेयो नाघटन् घटतामियात्।
> अघटत्वाविशेषेण घटोऽपि स्याद् घटोऽन्यथा॥
> घटना च घटात्मत्वापत्तिरूपा क्रिया मता।
> यः कश्चिदर्थः शब्दानां व्युत्पत्तौ स्यान्निबन्धनम्।
> प्रवृत्तौ तु क्रियैवैका सत्तासादनलक्षणा॥ इति।

ये हि शब्दे एवोपाधिं मन्यन्ते तेषां मतेऽपि शब्दस्य नानात्वात्तन्निष्ठायां जातावेव सङ्केतग्रहः शक्यः। ये च धर्मिमात्रे शक्तिं मन्यन्ते तेषां मतेऽप्यर्थस्य नानात्वाज्जातावेव सङ्केतसम्भव इति सर्वत्र जातिरेव सङ्केतविषयत्वेन ग्राह्येति। तदप्रस्तुतमिति अपरिचितत्वेन व्यवहारो न तु ज्ञानाभावात्।

एवं कारिकां व्याख्याय 'अनुक्तमप्यूहति पण्डितो जनः' इति शक्तिग्रहे नैयायिकमतमपि व्याचष्टे तद्वानिति—तद्वान् सा जातिरस्त्यस्मिन्निति जातिमान् जातिविशिष्ट इति। यथोक्तम् आनन्त्याद् व्यभिचाराच्च न व्यक्तौ सङ्केतग्रहो न च जातावेव व्यक्तिप्रतीत्यभावात्तेन जातिविशिष्टव्यक्तावेव सङ्केतग्रहसम्भव इति वैशेषिकमतम्। न हि जातिः पाकादावुपयुज्यत इति। न चाक्षेपाद् व्यक्तिप्रतीतिरिति। तथैव सौगतमतं विवृणोति अपोह इति। वा इति पक्षान्तरे। अपोहः तदितरव्यावृत्तिस्तद्विशिष्टः। मत्वर्थीयोऽच्। यथोक्तं—गोशब्दश्रवणात्सर्वासां गोव्यक्तीनामुपस्थितेस्तस्मादश्वादितो व्यावृत्तिदर्शनाच्च अतद्व्यावृत्तिरूपोऽपोह इति। तद्वानपि। तेन हि व्यक्तावानन्त्यदोषाद्भावस्य च देशकालानुगमाभावाच्च तदनुगतायामतद्व्यावृत्तौ सङ्केत इति। भावो जात्यादिरूपः। यद्वा स्थिरस्य सामान्यस्याभावादपोहमात्रेणानुगतव्यवहार इति। तेन हि तद्वान् जातिविशिष्टः। वा इति अन्यमते। अपोहः अतद्व्यावृत्तिरूपः। शब्दार्थः शब्दस्यार्थः। तत्रैव सङ्केतग्रह इति। कैश्चित् कतिपयैरत्राश्रद्धेयैः। उक्तः प्रतिपादितः। इति इत्थं यदस्ति तत्। न दर्शितम् पर्यालोचितम्। तथाकरणे हेतुमाह ग्रन्थेति। ग्रन्थगौरवभयात् ग्रन्थस्य वृत्तिग्रन्थस्य गौरवस्य बाहुल्यस्य भयाद्भीतेः। प्रयोजनसद्भावे तु गौरवमप्यङ्गीकार्यमेवेत्यपेक्षायामाह प्रकृतेति प्रकृतानुपयोगात् प्रकृते प्रस्तुतप्रकरणे मतद्वयविवेचनयैव सङ्केतितसाकल्यप्रतीतेः अनुपयोगोऽनावश्यकस्तस्मात्। चकारः कारणसमुच्चयार्थकः। इत्थं हि उपाधिशक्तिवादः जातिशक्तिवादः जातिविशिष्टव्यक्तिशक्तिवादः अपोहवादश्च क्रमशो दर्शिता विविच्य सारमुद्धृत्य नाममात्रेण वा। अवशिष्टमतत्रये न स्वारस्यमिति बोधनाय 'अन्ये' 'कैश्चिद्' इति पदप्रयोगः। तत्रातिरिक्तसामान्यलक्षणागौरवान्नैयायिकमतं नाभिमतं व्यञ्जनापरकाणामस्माकम्। अपोहवादस्तु अतद्व्याप्तिलक्षणान्न सम्मतमेव। जातिवादेऽपि जातेरेव शक्यत्वे तस्या व्यक्तिभानानुपपत्तेस्तयोः सामानाधिकरण्याभावेन व्याप्तेरभावेनाक्षेपासम्भवात्सत्यपि तादात्म्यसम्बन्धेन व्याप्त्यभ्युपगमे व्यक्तेरपदार्थत्वे तत्र विभक्त्यर्थसङ्ख्याकर्मत्वादेरनन्वयाच्छक्तिग्राहकानयनादिव्यवहारस्य जातिविषयत्वाभावाच्च तन्नाभिमतम्। उपाधिशक्तिवादे तु तत्तद्दोषराहित्यात्सर्वथोपपन्नं तदिति।

[वि० वृ०] स चार्थः क इत्याह—

जातिगुणक्रियासंज्ञारूपश्चतुर्विधोऽर्थः सङ्केतितः। तत्र जातिर्गुणश्च सिद्धरूपो वस्तुधर्मः। पदार्थव्यवहारयोग्यतानिर्वाहिका गोपिण्डादिषु गोत्वादिका जातिः। विशेषाधानहेतुर्गुणः। शुक्लादयो हि गवादीन् सजातीयेभ्यो नीलगवादिभ्यो

व्यावर्तयन्ति। क्रिया पूर्वापरीभूतावयवा पाकादिः साध्यरूपो वस्तुधर्मः। संज्ञा तु डित्थादिद्रव्येषु वक्त्रा यदृच्छया सन्निवेशितं डित्थादिशब्दस्वरूपमेव। एकव्यक्तिवाचकः सेत्यन्ये। एष्वेव व्यक्त्युपाधिषु गौः शुक्लः पाचको डित्थः इत्यादेश्चतुर्विधस्य शब्दस्य क्रमात्सङ्केतः। न चोपाधिष्वर्थक्रियाकारितानुपपत्तिः। तैर्व्यक्त्याक्षेपात्। न चैव व्यक्तिष्वेव सङ्केतोऽस्त्विति वाच्यम्। आनन्त्यव्यभिचारदोषापत्तेः। गुणादीनामप्येकव्यक्तित्वान्न किञ्चिदवद्यम्। तेषां भेदावभासस्त्वाश्रयभेदादेव। न तु स्वतः। मणिदर्पणादिभेदान्मुखभेदवत्।

अथवा सर्वत्र जातिरेव सङ्केतगोचरः। चन्द्रचन्दनशङ्खादिषु 'अयं शुक्लोऽयं शुक्लः' इत्यादिप्रतीत्यविशेषाच्छुक्लत्वादि। गुडतण्डुलतैलपाकादिषु 'अयं पाकोऽयं पाकः' इति पाकादित्वम् बालवृद्धशुकाद्युक्तेषु डित्थादिषु 'डित्थोऽयमि'ति। डित्थादित्वमिति सर्वत्र तदवगाहात्। चतुर्विधानां गवादिशब्दानां जात्यादिचतुष्कं क्रमात् प्रवृत्तिनिमित्तम्। जातिरेव वा सर्वेषां तेषामिति ह्यर्थः।

**[कारिका] स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥८॥**

**[वृत्तिः] स इति साक्षात्सङ्केतितः। अस्येति शब्दस्य।**

[कमला०] ननु वाच्यादिभिस्त्रिविधोऽर्थः पूर्वमुक्तस्तदयुक्त मुख्यार्थस्यापि सत्त्वादत आह स इति। स वाच्य एव मुख्य इत्यर्थः। एवं वाच्यार्थमुक्त्वा तद्बोधकं वाचकं शब्दमाह तत्रेति। तत्र मुख्येऽर्थे। अस्य शब्दस्याभिधारूपो व्यापारो मुख्यः आदौ भवः। यत उच्यते पदज्ञाने हि सम्बन्धस्मरणे सति पदार्थस्मरणम्। तेन व्यापाररूपसम्बन्धज्ञानविषयत्वात् सम्बन्धो व्यापारः। तेनार्थस्य मुख्यत्वं शब्दस्य च वाचकत्वं युक्तमिति भावः।

[सरि०] सङ्केतितार्थविवेचनानन्तरं तत्स्थानव्यापारादि निर्देशककारिकामवतारयति स इति। सः साक्षात्सङ्केतितो जात्यादिर्योऽर्थः। मुख्यः प्राथमिको न तु प्रधानभूतः मुखे आदौ साधुर्मुख्यः प्रथमप्रत्यायकः। मुखमिव हस्ताद्यवयवेभ्योऽर्थान्तरेभ्यः प्रथमं प्रतीयमानत्वात् तस्य मुख्यता। यथोक्तं—'शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता। अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमिष्यते' ॥ इति। अर्थः। मुख्यार्थविषयकशब्दोऽपि मुख्य एव। तत्र व्यापारमाह तत्रेत्यादि। तत्र मुख्यार्थे। अस्य शब्दस्य। व्यापारः या वृत्तिः। सः। अभिधा अभिधीयते पदार्थोऽनयेति सा। उच्यते कथ्यत इति। पदज्ञानात्सम्बन्धस्मरणं ततः सम्बन्धिनोऽर्थस्योपस्थितिरिति व्यापारीभूतज्ञानविषयतया सम्बन्धस्य व्यापारतेति।

[वि० वृ०] वाचकस्योपाधिमाह—

स साक्षात्सङ्केतितो जात्यादिर्मुख्योऽर्थस्तत्रास्य शब्दस्य मुख्यो व्यापारो वृत्तिरभिधोच्यते। इदमत्र बोध्यम्—वाचकः शब्दस्त्रिधा यौगिको रूढो योगरूढश्चेति। यत्रावयवार्थ एव बुध्यते स यौगिकः। यथा पाचकादित्यादिः। यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बोधः स रूढः। यथा गोमण्डपादिः। इह गमनमण्डपानकर्तृत्वरूपं योगार्थं विनैव व्यक्तिविशेषगृहविशेषयोरवगमः। यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति स योगरूढः। यथा पङ्कजवक्षोजादिः। पङ्कजशब्दो ह्यवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति समुदायशक्त्या तु पद्मत्वेन रूपेण पद्ममिति योगार्थसत्त्वेऽपि व्यक्तिविशेषबोधनाद्योगरूढ एवासाविति।

**[कारिका] मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया॥९॥**

**[वृत्तिः] 'कर्मणि कुशलः' इत्यादौ दर्भग्रहणाद्ययोगाद् 'गङ्गायां घोषः' इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासम्भवान्मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च सम्बन्धे रूढितः प्रसिद्धेस्तथा गङ्गातटे घोष इत्यादेः प्रयोगाद्येषां न तथा प्रतिपत्तिस्तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा।**

[कमला०] वाचकमुक्त्वा लाक्षणिकं वक्तुं लक्षणामाह मुख्यार्थेति। मुख्यार्थस्यान्यपदार्थासंसर्ग एव बाधः शुद्धमुख्यार्थस्य क्वापि बाधायोगात्। यद्यपि 'काकेभ्यो दधि रक्ष्यताम्' 'छत्रिणो गच्छन्ति' इत्यादौ न मुख्यार्थस्य बाधस्तथापि तात्पर्यार्थविषयवाक्यार्थबोधाभावोऽभिप्रेतः। आद्ये उपघातकत्वस्यान्वयप्रतियोगित्वे तात्पर्यादन्त्ये चैकसार्थप्रवृत्तत्वेनान्वयोऽतो न व्याप्तिः। यत्र तु न तात्पर्यं काकमात्रे च तात्पर्यं तत्र नैव लक्षणा। एतेन तात्पर्यधीरेव लक्षणाबीजं नान्वयानुपपत्तिरिति सूचितम्। यद्यपि 'यष्टीः प्रवेशय' 'गङ्गायां घोषः' इत्यादावुभयापेक्षादर्शनाद्विनिगमनाविरहः तथापि 'गङ्गायां घोषः' इत्यत्र तात्पर्याभावे जघन्ये घोषपदे एव मीने लक्षणा किं न स्यात्। कुतश्च गङ्गापदेऽपि स्वार्थसम्बन्धिनौकादौ न लक्षणा तावताऽप्यन्वयानुपपत्तिशान्तेः। अतस्तात्पर्यधीरेव बीजम्। न चैवं सैन्धवादिपदे लक्षणापत्तिः वृत्तिमात्रे तात्पर्यापेक्षया लक्षणाबीजत्वासम्भवश्चेति वाच्यं प्रकरणादौ सति तदप्रसरात् तात्पर्यविशेषस्य हेतुत्वादन्यथोक्तदूषणग्रासादिति दिक्। असम्बद्धलक्षणायामतिप्रसङ्गोऽतस्तद्योग इत्युक्तमिति केचित्तन्न। सिद्धचसिद्धिव्याघातात् तादृश्या असिद्धेः सिद्धौ वा सम्बन्धस्यापि कथञ्चित्सत्त्वात्। परमानन्दस्तु

योगपदं प्रमाणान्तरानुत्थापकयोगपरं तेन धूमपदाद् व्याप्तिज्ञानद्वारा वह्निबोधे तदप्रसङ्गस्तस्यानुमानोपजीव्यत्वादित्याह। आद्यं विशेषणद्वयं सर्वलक्षणसाधारणं रूढिः प्रवाहः। अथेति विकल्पे। प्रयोजनमुद्दिश्येति ल्यब्लोपे पञ्चमी। न च हेतुद्वैधेऽननुगमोऽन्यतरत्वेनानुगमात्। तेन बाधो योगः रूढिप्रयोजनान्यतरत्वञ्चेति हेतुत्रयम्। अत एव वक्ष्यति मुख्यबाधादित्रय हेतुरितीति सुबुद्धिमिश्रकाव्यप्रदीपादयः। परमानन्दस्तु रूढ्यभावसहकृतप्रयोजनाभावस्य लक्षणत्वान्नानुगमः पक्षस्य सिषाधयिषाविरहसहकृतसिद्ध्यभावरूपलक्षणवत्। यद्यतः। यस्माच्छब्दव्यापारादन्योऽशक्योऽर्थो लक्ष्यते प्रतीयते स शक्यसम्बन्धस्मरणरूपो व्यापारो न तु शक्यसम्बन्धो व्यापारो लक्षणायाः सम्बन्धरूपत्वेन सम्बन्धाहेतुकत्वात् तस्य शब्दव्यापारत्वाभावाच्च। तस्य व्यापारत्वोक्तिर्व्यापारभूतज्ञानविषयत्वादेव। सा क्रिया लक्षणा। क्रियापदं व्यापारपरम्। शक्यसम्बन्धेनाशक्यार्थप्रतीतिर्लक्षणेति प्राचां मतेनेदं लक्षणमिति केचित्। तन्न। वृत्तिर्हि प्रतीतिहेतुर्न तु प्रतीतिरेव। तेन स्मर्यमाणः शक्यसम्बन्ध एव लक्ष्यधीहेतुत्वाल्लक्षणेति तत्त्वम्। तद्योग इति प्रतीतिं प्रत्येवं हेतुत्वं न शक्यसम्बन्धरूपलक्षणां प्रति सम्बन्धस्य सम्बन्धान्तराहेतुत्वात्। यदिति क्रियाविशेषणं वा। यत्त्वत्र देवनाथेन दूषणमुक्तं तच्चिन्त्यम्। अत्र केचिल्लक्षणार्थनिष्ठावृत्तिर्बाधितेन तेन स्वसम्बन्धितीरबोधनान्न पदात्तस्य शक्यत्वाभावात् पदस्य लक्ष्यसम्बन्धाभावाच्च। लाक्षणिकार्थबोधकत्वादेव शब्दे लक्षणाऽऽरोप्यते। अत एवोक्तं मूले आरोपितेत्याहुः। तन्न। शब्दभेदस्य प्रक्रमादारोपेण वस्त्वसिद्धे गङ्गापदात् सप्तम्ययोगात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात्तीरस्य च प्रकृत्यर्थत्वाभावात् पूरे च तद्बाधात् शब्दवृत्तौ लक्षणायां तीरस्यापि तीरस्यापि लक्षणया प्रकृत्यर्थत्वादाधारत्वं युज्यते। तेवं मूलार्थः। मुख्यार्थधीपूर्वकत्वाद् व्यवहितार्थनिष्ठाऽपि मुख्यसम्बन्धितीरविषयत्वाद् वृत्तेर्विषयतासम्बन्धेन शब्दनिष्ठेत्यर्थः। रूढौ मुख्यबाधमाह कर्मणीति कुशान् लाव्यादत्र इति दर्भग्रहीतुर्मुख्यार्थस्य बाधाच्चतुरे लक्षणा। प्रयोजनवत्या मुख्यबाधमाह गङ्गायामिति। तद्योगमाह विवेचकेति। कुशले विवेचकत्वं सम्बन्धः। गङ्गायां सामीप्यं सम्बन्धः। रूढित इत्यस्यार्थः। प्रसिद्धेरिति प्रसिद्धेर्हेतो.। प्रयोजनमाह तथेति। प्रयोजनलक्षणायां गङ्गातटे इत्यादिप्रयोगाद् व्यवहारादमुख्योऽर्थो यल्लक्ष्यते स शब्दव्यापारो लक्षणेत्यन्वयः। येषां न तटादिधीस्तेषां पावनत्वादिबोधरूपप्रयोजनादमुख्योऽर्थो यल्लक्ष्यते यद्येन स व्यापार इत्यर्थः। क्रियेत्यस्यार्थमाह व्यापार इति। आरोपितपदार्थः सान्तरार्थेति अन्तरमुख्येन व्यवधानम्। तेन सहितो योऽर्थस्तीरादिस्तन्निष्ठः स्वनिरूपितसम्बन्धस्य स्वावृत्तित्वाल्लक्ष्यनिष्ठः प्रतीतिपक्षे विषयतासम्बन्धेन शब्दनिष्ठः। स्वाश्रयवाचकसम्बन्धेन शब्दवृत्तिः। संयोगरूपेण तीरार्थवृत्तिः संयोगरूपो व्यापारो लक्षणेत्यर्थः।

केचित्तु कुशलपदे दक्षे न लक्षणा तस्याश्वकर्णे वृक्षवद्रूढ्या प्रतीतेः। योगस्तु तद्वदेव न विवक्षितः किन्तु साधुत्वमात्रार्थः न लक्षणायां प्रयोजकः किन्तु स्वरे पङ्कजपदे रूढौ लक्षणापत्तेः। अतिव्याप्तेः मण्डपपदे गृहे योगासम्भवात्। तैलपदस्य सार्षपस्नेहे योगाभावेऽपि लक्षणयाऽव्याप्तेश्च। किं बहुना। 'गौः शेते' इत्यत्र गमेर्डोप्रत्ययेन शयनकाले गमिकर्तृत्वबाधाल्लक्षणापत्तिः। पङ्कजादिपदे च तदापत्तिः। तेन 'कलिङ्गः शूरः' 'गर्गः पण्डितः' इत्युदाहार्यमित्याहुः। अन्ये तु पङ्कजपदे योगमात्रे कुमुदभेकादौ धीप्रयोगापत्तेः शक्तिः। 'कर्मणि कुशलः' 'मण्डपे शेते' इत्यादौ योगार्थबाधाल्लक्षणैव। 'कुशलमानय' 'मण्डपं भोजय' इत्यादौ तु तदभावान्न लक्षणेत्याहुस्तन्न। पङ्कजमानयेत्यत्र कुमुदे योगार्थाबाधान्न लक्षणा स्यात्। अन्ये तु कुशलपदेऽन्यप्रसत्यभावाल्लक्षणैवेत्याहुः। ननु गङ्गापदे लक्षणा न युक्ता लक्ष्यतावच्छेदकासम्भवात्। तथा हि न तावद् गङ्गातीरत्वेन तीरधीः गङ्गांशे लक्षणायोगात्। स्वस्य स्वावृत्तित्वेन गङ्गानिरूपितसम्बन्धस्य गङ्गायामसत्त्वात्तीरमात्रबोधस्य च निर्विकल्पकापत्तेः युगपद्वृत्तिद्वयविरोधाच्च। ननु स न दूषणमिति मणिकारादयः। न हि वृत्तिमात्रद्वयं विरुद्धनानार्थे सैन्धवादिपदेऽनेकशक्त्यङ्गीकारात्। न चानेकार्थानुकूले एकैव शक्तिः पुष्पवन्तपदवदिति वाच्यम्। भोजने स्वविषये शक्तेर्बाधेऽन्यत्रापि बाधापत्तेः शक्तेरेकत्वात् पुष्पवन्तावित्येकमात्रे प्रयोगाभावादुभयत्रैका शक्तिः अश्विपदवत्। इह तु प्रत्येकं प्रयोगाद् भिन्नैव शक्तिः। एतेनायोग्यत्वान्नेतरधीरित्यपास्तम्। तस्माद्विजातीयवृत्तिद्वयविरोधो दूषणं वाच्यः। न तु तद्युक्तम्। गङ्गायां मीनघोषावित्यत्र गङ्गापदस्य शक्यलक्ष्याभ्यां पूरतीराभ्यां साक्षात्परम्परासम्बन्धयोः पूर्वं गृहीतत्वेन तदाहितसंस्कारसत्त्वात्पदस्य च स्मारकत्वेनोभयबोधे बाधकाभावादिति चेन्न। यद्यप्युभाभ्यां सम्बन्धः पूर्वं गृहीतस्तथापि तस्योपस्थापकं गङ्गापदमेव। तच्च साक्षाल्लघुसम्बन्धेन शक्यस्यैवोपस्थापकं न परम्परासम्बन्धेन लक्ष्यस्य। किञ्च नानार्थसैन्धवादिपदे प्रकरणादिना विशेषधीर्न स्यात् उभयत्र शक्तिग्रहात्। अथ भोजने सैन्धवपदादश्वबाधयोग्यतयाऽपरशक्तिप्रतिबन्ध इति चेदिहापि तात्पर्यसहकारेण पूरबाधाल्लक्षणया शक्तिप्रतिबन्ध इति तुल्यम्। किञ्च लक्षणायां बाधापेक्षा शक्तौ च नेति कथमेकस्यापेक्षानपेक्षे। एकपदात् स्यातां विरोधात्। किञ्च गङ्गायामिति एकत्वानन्वयः। प्रत्ययार्थानां प्रकृत्यर्थान्वितत्वात्तस्य च द्वित्वावच्छिन्नत्वात्। न च प्रत्येकमेकत्वमादाय साधुत्वम्। घटमित्यत्रापि प्रत्येकमेकत्वमादाय द्वयोर्बहूनां वा प्रतीत्यापत्तेः। अस्तु तर्हि गङ्गयोर्मीनघोषावित्यत्रोभयधीरिति चेन्न, एकशेषेण गङ्गापदद्वये एकत्र शक्तावपरत्र लक्षणायामिष्टापत्तेरेकपदे वृत्तिद्वयाभावात्। गङ्गाविशिष्टतीरलक्षणया शक्यार्थस्य लक्ष्यं प्रति विशेषणत्वान्मीनान्वये च प्रधानत्वाद् गुणत्वप्रधानत्वविरोधः। सोऽप्यस्तु को दोष इति चेन्न। दण्डपदे पुरुषविशेषण-

स्यापि दण्डस्य प्रधानत्वे दण्डदण्डिनाविति प्रतीत्यापत्तेः गौर्नित्य इति च लक्षणा न स्यात् गुणभूतेऽपि गोत्वे नित्यत्वान्वयात् । किञ्च युगपद्वृत्तिद्वयाङ्गीकारे 'छत्रिणो यान्ति' 'काकेभ्य' इति 'कुन्ता' इति च शक्त्या छत्रकाककुन्तानां लक्षणया च जहत्स्वार्थया छत्राभावविडालपुरुषाणां धीसम्भवादजहत्स्वार्थोच्छेदः । न च तीरत्व-विशिष्टतीरे लक्षणाऽन्यथा तीरत्वप्रकारकधीर्न स्यात् । किन्तु गङ्गायामिति धीः स्यादिति पक्षधरमिश्रमतं युक्तमिति वाच्यम् । गङ्गापदात्सिन्धुतीरस्यापि बोधापत्तेः । किञ्च यया लक्षणया तीरधीस्तयैव तीरत्वधीर्लक्षणान्तरेण वा ? नाद्यः । संयोग-संयुक्तसमवाययोः शक्यसम्बन्धयोर्भेदेन लक्षणैक्याभावेन तीरत्वबोधायोगात् । न च विशेष्ये एव शक्यसम्बन्धापेक्षा न विशेषणे । वह्नित्वेन सह पृथग्व्याप्त्यभावेऽपि मानान्तरोपस्थितस्य व्यापकतावच्छेदकत्ववत्तादृशस्यैव लक्ष्यतावच्छेदकत्वसम्भवादिति वाच्यम् । तर्हि तादृशस्य पूरस्यैव तत्वे प्रद्वेषः । कुतः लक्षणया निर्विकल्पापत्तेश्च मानान्तरोपस्थितस्य शाब्दबोधाविषयत्वात् । नान्त्यः । तीरत्वे परम्परासम्बन्धेन भिन्नलक्षणायां तत्र तीरत्वस्य लक्ष्यतावच्छेदकत्वेन तत्प्रकारकबोधापत्तेः । तत्राप्युक्त-दिशा लक्षणान्तरेऽनवस्थापत्तेश्च । न च तीरे तीरत्वं तीरत्वे च तीरं प्रकारः । द्वयोर्गुणत्वप्रधानत्वविरोधादुभयविशेष्यकबोधापत्तेर्लक्षणाद्वयापत्तेः उभयत्र भिन्न-प्रकारापत्तेश्च । न च गोपदे जातिविशिष्टे शक्तिवद्विशिष्टे लक्षणां विशिष्टे नैकसम्बन्धाभावात् । तद्वरं गङ्गापदे तीरे शक्तिरेव वृत्त्यन्तरकल्पने गौरवात् । न चानेकशक्तिकल्पनाप्रयोगे नानार्थयदिष्टापत्तेः । अन्यथा नानार्थोच्छेदापत्तेः । तत्रापि लक्षणाप्रसङ्गात् । न च बाधाबाधाभ्यां भेदः । भोजनप्रकरणेऽश्वबाधेनैव सैन्धवपदे लक्षणाप्रतीतेरत्रापि बाधस्य तुल्यत्वात् । विशिष्टे च शक्तिः सुलभैवेति नोक्तदोषः स्यात् । महत्सङ्कटमेतल्लक्षणानामिति । अत्र ब्रूमः । न तावत्तीरे शक्तिः पूरे प्रयोगबाहुल्यात् । तीरस्यान्यलभ्यत्वादित्याभिधेन गङ्गापदस्य पूरेऽ-प्रयोगाच्च । लक्षणायां तीरत्वस्याप्रकारत्वेन शक्यस्य लक्षणावृत्त्यविषयत्वेऽपि प्रकारत्वोपपत्तेस्तीरत्वस्य च वापीतीरादिप्रसक्तस्य लक्ष्यतावच्छेदकत्वायोगात्तात्पर्येण बोधसम्भवाद् गङ्गातीरे इत्यनुभवाच्च शक्यस्य प्रकारतया युक्तैव लक्षणा । मूले शक्यतावच्छेदकस्यैव लक्ष्यप्रकारत्वमुक्तम् । न च गाङ्गीयमिति बोधापत्तिः । परमते वापीतीरादिनिवृत्तये तात्पर्येण गङ्गाबोधवत्तीरत्वस्य तेनैव बोधोपपत्तेः । न च लक्ष्यावृत्तेः कथं प्रकारतेति वाच्यम् । आहार्यस्य रक्तः स्फटिक इतिवदौपाधिकस्य चोपपत्तेरिति वक्ष्यते । शक्यार्थस्य विशेषणत्वे कथमियं जहत्स्वार्थेति चेद् वाक्यार्थानन्वयादित्यवेहि ।

[सरि०] वाचकशब्दनिरूपणानन्तरमुद्देशक्रमानुरोधेन निरूपणीयस्य लाक्ष-णिकस्य लक्ष्यार्थदर्शनद्वारेण व्यापारस्य निरूपककारिकामवतारयति **मुख्यार्थेति**—

मुख्यार्थवाधे तद्योगे रूढितः अथ प्रयोजनात् यत् अन्यः अर्थः लक्ष्यते सा आरोपिता लक्षणा क्रिया इत्यन्वयः। मुख्यार्थवाधे मुख्यः प्राथमिको न तु प्रधान एव योऽर्थो जात्यादिः सङ्केतविषयीभूतस्तस्य वाधे वाक्येऽन्वयाभावे वक्तृतात्पर्यवशात् मुख्यार्थस्य ह्यन्यसंसर्गाभावे एव वाधो न तु शुद्धमुख्यार्थस्य क्वापि बाधयोगः इत्येक आधारः। तद्योगे तस्य मुख्यार्थस्य योगे सम्बन्धे। सम्बन्धश्च साक्षादेव। स च सामीप्यसारूप्यसमवायवैपरीत्यक्रियायोगरूपः इति द्वितीय आधारः। रूढितः प्रसिद्धेः। अथेति विकल्पे। प्रयोजनात् किञ्चिदुद्दिश्य तथाकरणेन चेति तृतीय आधारः। एतदाधारत्रयवशात्। यत् लुप्तकरणतृतीयान्तमव्ययमिदं तेन ययेति यया वृत्त्या। अन्यः मुख्येतरः। अर्थो जात्यादिः। लक्ष्यते प्रतिपाद्यते। सा तथाविधमुख्यसम्बद्धामुख्यार्थप्रतिपादिका। आरोपिता शब्दे कल्पिता शक्यव्यवहितलक्ष्यार्थविषयत्वात्। क्रिया—वृत्तिः शब्दव्यापारः। लक्षणा तदाख्या भवतीति शेषः। मुख्येतरार्थप्रतिपादिका शब्दस्य वृत्तिर्लक्षणा। तद्व्यापारे मुख्यार्थबाधो मुख्यार्थयोगो—रूढिप्रयोजनान्यतरच्चेति त्रयं तस्याः हेतुः। तात्पर्यानुपपत्तिप्रतिसन्धानं तस्या बीजम्। मुख्यार्थबोधवाधकसमवहिता मुख्यार्थसम्बन्धग्रहजन्याऽन्यार्थप्रतीतिर्लक्षणेति फलितोऽर्थः। निदर्शनमुखेन कारिकां व्याचष्टे

'कर्मणि' इति। 'कर्मणि कुशलः' इत्यादौ दर्भग्रहणाद्ययोगात् कुशान् लाति इति कुशलपदे दर्भाणां कुशानां ग्रहणमादानं तदादीनामयोगादसम्बन्धात्। मुख्यार्थस्य शक्यार्थस्य कुशग्रहणपरकस्य। वाधेऽसिद्धौ। अस्यायमाशयः - कर्मणि चित्रकर्मणि कुशलो दक्ष इत्यस्याभिमतोऽर्थः। कुशलपदं तु कुशान् लातीति कुशग्राहिणि शक्तम्। तस्य हि चित्रकर्मणा सह साक्षात्सम्बन्धाभावेन मुख्यार्थस्य वाक्येऽनन्वयः। अतस्तस्य दक्षेऽर्थे लक्षणा तत्रोपपत्तिमाह विवेचकत्वात् विवेचकत्वं सतो ग्रहणमसतः परित्यागरूपम् यद्धि कुशग्राहिणि दक्षे च वर्तते तस्मात्। अत्र हि कुशलपदस्य यथा हि कुशग्रहणे पाटवं तथैव चित्रकर्मणीति सारूप्याद्दक्षान्वये तात्पर्यमिति मुख्यार्थवाधः। पटुत्वस्योभयत्र योगान्मुख्यार्थयोगः। तस्य दक्षार्थे प्रयोग आजानिकः। इति हेतुत्रयभावेन कुशलपदस्य दक्षार्थे लक्षणा। केचिद्विप्रतिपद्यन्ते। तन्मते दक्षत्वस्य प्रवृत्तिनिमित्तकत्वात्कुशलपदे न लक्षणा व्याकरणव्युत्पत्तेः साधुत्वार्थकत्वात्। उक्तमेव 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' इति। तथा हि सति गौरित्यस्य गमेर्डोप्रत्ययेन व्युत्पादितस्य शयनकाले तद्बाधात्।

अपरे तन्न मन्यन्ते। प्रतिलक्ष्यं लक्षणविधानेन क्वचित्सु व्युत्पत्तेः शक्तिग्राहकत्वात्। तेन हि कुशलपदे यौगिकार्थ एव मुख्यस्तस्य च दक्षान्वये तात्पर्यमिति वाधश्च। यच्च तैः 'कलिङ्गः साहसिकः' इत्युदाहृतं तत्र सर्वेषामेव कलिङ्गविषयस्थानां

साहसिकत्वरूपप्रयोजनलाभाय लक्षणाङ्गीकारान्नाजानिकत्वेन लक्षणेति। प्रयोजनमुद्दिश्य या लक्षणा सा 'गङ्गायां घोषः' इत्यत्र गङ्गापदे इति उदाहरणान्तरं प्रस्तौति। 'गङ्गायां घोषः' गङ्गा नाम प्रवाहात्मिका व्यक्तिः। घोष इति आभीरपल्लिरिति। इत्यादौ। गङ्गायां प्रवाहात्मिकायां नद्यां घोषस्यावस्थितेरसम्भवात् गङ्गापदस्य प्रवाहरूपमुख्यार्थबाधेन सामीप्यवशाच्छीतत्वपावनत्वादिप्रयोजनमुद्दिश्य तटेऽर्थे लक्षणा। तदेव व्याचष्टे गङ्गेति गङ्गादीनां गङ्गाप्रभृतिपदानाम्। **घोषाद्याधारत्वासम्भवात्** प्रवाहात्मकतया तत्र घोषादेरवस्थितेरसम्भवात्। **मुख्यार्थस्य** प्रवाहरूपशक्यार्थस्य। **बाधे** वाक्येऽनन्वये। **सामीप्ये** नैकट्येनावस्थितित्वे, चेति उभयसमुच्चयः। **सम्बन्धे** योगे। **गङ्गातटे घोषः** इत्यादेः इति पदोच्चयस्य। **प्रयोगात्** व्यवहारात्। **येषां** धर्माणाम्। **न**। **तथा** तादृग्रूपेण। **प्रतिपत्तिः** प्रतीतिः। **तेषां** प्रत्यायितुमभीष्टानाम्। **पावनत्वादीनां** शीतत्वपावनत्वप्रभृतीनाम्। **धर्माणां वैशिष्ट्याणाम्**। **तथाप्रतिपादनात्मनः** तादृशप्रयोजनसिद्धिपरकस्य वक्तुः। **प्रयोजनात्** प्रयोजनभावात्। **च** अपि। **मुख्येन** कुशग्राहिप्रवाहरूपेणार्थेन। **अमुख्यः** तत्सम्बद्धस्तदितरः दक्षतटरूपः। **यत्** येन लुप्तकरणतृतीयान्तरूपमव्ययमिदम्। **लक्ष्यते** प्रतिपाद्यते। **सः** तथाविधः। **आरोपितः** शब्दे कल्पितः **सान्तरार्थनिष्ठः** अन्तरं व्यवधानं तेन सहितः सान्तरो योऽर्थो लक्ष्यरूपस्तस्मिन् निष्ठा विषयो यस्येति। **शब्दव्यापारः** शब्दवृत्तिः। **लक्षणेति**। लक्षयत्येषाऽमुख्यार्थमिति। 'उभयत्रादिपदं तथाविधान्यवाक्यपरम्। यथा 'कूपे गर्गकुलम्' इत्यादि। तात्पर्यानुपपत्तिप्रतिसन्धानमेव वस्तुतो लक्षणाबीजम्। 'गङ्गायां घोषः' इत्यत्र वक्तुः शीतत्वपावनत्वादितात्पर्यमेव तत्र बीजम्। यदि ह्यन्वयानुपपत्तिरेव तत्र बीजं स्यात्तदा गङ्गापदे स्वार्थसम्बन्धिनौकादौ घोषपदे वा मीनमकरादिलक्षणापत्तिस्तावताप्यन्वयोपपत्तेः। तथैव 'पापी गच्छति गङ्गायाम्' इत्यत्र गङ्गापदे नरके लक्षणापत्तिरपि स्यात् किन्तु पूर्वार्जितपापविच्छिन्नलक्ष्यकत्वे तात्पर्यान्न दोषः। एवञ्च 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति विधौ अन्वयसम्भवेऽपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारः। यथोक्तम्—'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इति विधौ नक्षत्रविशेषस्य कालविशेषोपलक्षकत्वात् सत्यपि दिवा नक्षत्रदर्शने वाङ् न विसृज्यते। उपलक्षितस्य कालविशेषस्याभावात्। रात्रावसत्यपि नक्षत्रदर्शने वाक् विसृज्यते तस्य सत्त्वात्।' इति। इत्यादिप्रसङ्गो बालबोधिन्यां स्पष्टः। कारिकायां हि गङ्गापदे यमुनाद्यतिव्याप्तिवारणाय **तद्योगे** इति। शाब्दव्यञ्जनाविषयेऽतिव्याप्तिवारणाय **मुख्यार्थबाधे** इति। रूढिप्रयोजनान्यतरशून्यत्वेऽपि यदि लक्षणा स्यात्तदा रूपवान् घट इत्यर्थे रूपो घट इति प्रयोगापत्तिः

स्यादतस्तद्वारणाय 'रूढितोऽथ प्रयोजनात्' इति । न च रूढिप्रयोजने भेदकधर्मत्वेन ग्राह्ये ऽनुगमस्य दर्शितत्वात् लक्षणाभासेऽतिप्रसङ्गाच्चेति विस्तारिकायाम् ।

[वि० वृ०] लाक्षणिकनिरूपणाय तदुपाधिमाह —

'कलिङ्गः साहसिकः' इत्यादौ देशविशेषादिरूपार्थानां साहसाद्यसम्भवात् 'गङ्गायां घोषः प्रतिवसति' इत्यादौ प्रवाहादिरूपार्थानां घोषाधारत्वाद्यसम्भवाच्च मुख्यार्थ-बाधायानाधाराधेयभावादौ सामीप्यादौ च सम्बन्धे रूढेः प्रयोजनाच्च हेतोर्मुख्येना-मुख्योऽन्योऽर्थो यया लक्ष्यते सा लक्षणा नाम क्रियावृत्तिरर्थनिष्ठाऽर्पिता शब्दे । तत्र रूढिः प्रसिद्धिस्तामनुसृत्य तत्संयुक्तपुरुषादिरन्योऽर्थः पूर्वत्र लक्ष्यते । परत्र तु गङ्गागतशैत्यपावनत्वादेस्तटादौ प्रतिपादन प्रयोजनं तदुद्दिश्य तटादिरन्योऽर्थः । सा चेयं जहत्स्वार्था । 'कुन्ताः प्रविशन्ति' इत्यादावजहत्स्वार्था कुन्तधारिसहित-प्रवेशात् छत्रिणो गच्छन्ति इति छत्रिपदस्यैकसार्थवाहित्वे लक्षणा । तत्वेन रूपेण छत्रितदन्ययोर्बोधात् । 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदस्य दध्युपघातकेषु लक्षणा । तेन तन्मात्रस्य बोधनात् । 'सोऽयं देवदत्तः' इत्यादौ जहदजहत्स्वार्था । अत्र तत्कालैककालयोस्त्यागाज्जहत्स्वार्था । पिण्डमात्रस्यात्यागादजहत्स्वार्था च । एवं 'रथो गच्छति' इत्यादौ च । इयमेव भागलक्षणोच्यते ।

[कारिका] स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणञ्चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥

[वृत्तिः] 'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभि-रात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते तत उपादानेनेयं लक्षणा । 'गौरनुबन्ध्यः' इत्यादौ श्रुतिचोदितमनुबन्धन कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते न तु शब्देनोच्यते । 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायादित्युपादानलक्षणा तु नोदाहर्तव्या । न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम् । व्यक्त्यविनाभावित्वात्तु जात्या व्यक्ति-राक्षिप्यते । यथा 'क्रियताम्' इत्यत्र कर्ता । कुर्वित्यत्र कर्म । प्रविश पिण्डी-मित्यादौ गृहं भक्षयेत्यादि च । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात् । गङ्गायां घोष इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति इत्येवमादौ लक्षणेनैषा लक्षणा । उभयरूपा चेयं शुद्धा उपचारेणा-मिश्रितत्वात् । अनयोर्भेदयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम् । तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषित-

प्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ॥१०॥

[कमला०] रूढिलक्षणाभेदाभावात्प्रयोजनलक्षणायाः षड्भेदान् व्यङ्ग्यस्य गूढागूढत्वविवेकाय श्लोकत्रयेणाह स्वसिद्धय इति। प्रयोजनलक्षणा द्वेधा शुद्धा गौणी च। अन्त्या मिश्राऽप्युच्यते। आद्याऽपि द्वेधा। उपादानलक्षणा लक्षणलक्षणा चेति। गौणी च द्वेधा सारोपा साध्यवसाना चेति। साऽपि प्रत्येकं द्वेधा सादृश्यहेतुका सम्बन्धान्तरहेतुका चेति षोढा। स्वसिद्धये स्वार्थान्वयसिद्ध्यर्थं परस्याशक्यस्योपस्थितिरुपादानं स्वार्थत्यागः। तेन काकेभ्यो दधि रक्ष्यतामित्यस्या एव भेदः। परार्थमशक्यान्वयबोधार्थम्। स्वस्य स्वार्थस्य। समर्पणं त्याग इति प्राञ्चः। स्वार्थविशेषीकरणमिति वयम्। लक्षणमुपलक्षणम्। एते एवाजहत्स्वार्थाजहत्स्वार्था चोच्यते। शुद्धैव द्विधा न तु गौणीत्यर्थः। ननु शुद्धैवेत्ययुक्तं गौण्या अपि तथात्वात्। गाव एते सन्तीति यत्र गोवाहिकोभयधीस्तत्रोपादानम्। गौर्वाहिक इत्यत्र स्वार्थे त्यागाल्लक्षणलक्षणेति चेच्छृणु। आद्ये स्वसादृश्यस्य स्वावृत्तितया गौण्यामुपादानासम्भवात्। गौश्च गौश्च गाव इत्येकशेषेण नानापदेषु शक्यलक्ष्योभयधीः सम्बन्धान्तरे च गौणत्वाभावात्। उपादानलक्षणामुदाहरति कुन्ता इति कुन्तादीनामचेतनत्वादाख्यातार्थयत्नान्वयायोग इति स्वार्थे बाधः। संयोगिन इति तद्योग उक्तः। ततः हेतोरुपादानेन स्वार्थत्यागेन परेषामुपादानलक्षणोदाहरणं दूषयितुमुपन्यस्यति गौरनुबन्ध्य इति। श्रुतिविहितानुबन्धनक्रिया मे मम गोपदार्थस्य जातेः कथं स्यादिति मुख्यार्थबाधः। इति हेतोर्व्यक्तिराक्षिप्यते लक्ष्यते। न चेयं लक्षणलक्षणा जातेः प्रकारत्वात्। सा चोपादानरूपैवेति मण्डनमिश्राः। शक्तिः कुतो न तत्राह विशेष्यमिति। अभिधाशक्तिर्विशेष्यं व्यक्ति न गच्छेन्न स्पृशेत्। तत्र हेतुः। विशेषणे जातौ क्षीणशक्तिर्विरतव्यापारा। यतोऽनन्यलभ्यो हि शब्दार्थ इति भावः। दूषयति नोदाहर्तव्येति। हेतुमाह न हीति। अनुपलब्धेः प्रयोजनाभावः। अयम्भावः—न क्रियान्वयधीस्तथा तस्य विषयत्वेन फलत्वाभावात्। एतच्चाग्रे वक्ष्यति बाधाच्च। तथा हि जात्या शुद्धा व्यक्तिर्लक्ष्यते। स्वविशिष्टवानाद्यः व्यक्तेर्निर्विकल्पकापत्तेः। नान्त्यः। विशेषणतया विशेष्यान्तर्गतताऽतो लक्षणायां युगपद्वृत्तिद्वयविरोधात्। न च शक्त्या जातिधीः लक्षणया व्यक्तिमात्रधीः। अर्थसमाजमहिम्ना च विशिष्टधीरिति वाच्यम्। विशिष्टस्याशाब्दत्वेन शाब्दक्रियान्वयानुपपत्तेः शब्दान्निर्विकल्पकापत्तेश्चेति। न वेति। निरूढत्वं त्वनादित्वम्। सास्नादिषु तदभावात् प्रवाहानादिता च नोपलक्षणं विनेति न लक्षणा। कथं तर्हि व्यक्तिधीरत आह व्यक्तीति। अविनाभावो गुरुमते जातेर्व्यक्तिदेशत्वं

भट्टमते तादात्म्यं जातिव्यक्त्योरभेदेनैकाश्रयत्वञ्च। आक्षिप्यतेऽनुमीयते जातिर्व्यक्त्याश्रिता जातित्वात्। यद्वा इयं गौर्गोत्वादित्यनुमानान्न लक्षणेत्यर्थः। न चानुमिताया व्यक्तेरशाब्दत्वात्कथं शाब्देनान्वय इति वाच्यमनुमितेः शब्दपरिकरत्वात्। न च वृत्त्या पदजन्यधीविषयत्वं शाब्दत्वे तन्त्रं लाघवेन पदजन्यत्वस्यैव तत्वादित्यर्थः। अध्याहारावादिगुरुमतेनेदमिति परमानन्दः। आक्षेपे दृष्टान्तमाह यथेति। कृतिः सकर्तृका सकर्मिका च क्रियात्वादिति पच्यत इति यथा कर्तेति। अत्र प्रत्ययेन चैत्रेणेति कर्तुराक्षेपः। कुर्विति कर्त्रुत्पन्नेन घटमिति कर्माक्षेपः। तदुक्तं जातिव्यक्त्योरभेदाच्च व्यवहारोपयोगितेति। एवं गुरुमतेऽर्थाक्षेपे दृष्टान्तमुक्त्वा भट्टमते शब्दाक्षेपे दृष्टान्तमाह प्रविशेति। प्रविशेत्यत्र गृहमिति कर्माक्षिप्यते कल्प्यते। पीण्डीमिति कर्मपदे भक्षयेति क्रिया यथाऽऽक्षिप्यत इति क्रमेणान्वयः। एवं जात्या व्यक्तिरिति दृष्टान्तार्थः। पिण्डी गुडः पिण्याकं वा: केचित्त 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्ये रात्रिभोजनवानिति लक्ष्यते। सेयमुपादानरूपार्थवादे प्राशस्त्यलक्षणावदर्धमन्तर्वेदीतिवच्च वाक्येऽपि लक्षणा साध्वी। पीनत्वेनैव वा सामानाधिकरण्याद्रात्रिभोजनं लक्ष्यत इत्याहुस्तद् दूषयति पीन इति। कुतो न लक्षणा ? तत्राह श्रुतेति। भट्टमते 'रात्रौ भुङ्क्ते' इति शब्दः कल्प्यते गुरुमते त्वर्थमात्रमित्याहुः। गङ्गापदे तीरधीरर्थापत्त्या किं न स्यात्तेन लक्षणोच्छेद इति चेन्न। न हि प्रयोजनमात्रं लक्षणाहेतुः किन्तु बाधाद्यपि। न च दिवाभोजनाभावे पीनत्वं बाधितं येन सा स्यात्। योगिरात्रिभोज्यादौ तस्मिन् सत्यपि तद्दर्शनादित्याशयः। यद्वाक्षिप्यते-यथापदयोः सर्वत्रानुषङ्गेणैव योज्यम्। यथा क्रियतामिति कर्ताऽऽक्षिप्यते न लक्ष्यते। यथा प्रविशेत्यादौ गृहमित्याद्याक्षिप्यते। पीन इत्यत्र रात्रिभोजनं यथाऽऽक्षिप्यते न लक्ष्यते तथा जात्या व्यक्तिर्न लक्ष्यत इति लक्षणलक्षणामाह गङ्गायामिति स्वार्थमर्पयति त्यजति यद्वा स्वार्थं विशेषणीकरोति पूरविशिष्टे तीरे लक्षणेत्यर्थः। उपादाने शक्यस्यापीतरपदार्थान्वयः। इह तु लक्ष्यस्यैवेति भेदः। लक्षणेनोपलक्षणेन शुद्धैवेति व्याचष्टे उभयरूपा चेति। उक्तेयं द्विरूपा शुद्धैव न गौणीत्यर्थः। हेतुमाह उपचारेणेति। सादृश्येन प्रवृत्तिरुपचारः। तेनामिश्रत्वादसम्बन्धाल्लक्ष्यवाचकपदाभाववती शुद्धा। सादृश्यान्यसम्बन्धवती शुद्धेति देवनाथः। लक्ष्यवाचकपदवती गौणी यथा सिंहो देवदत्त इति। अत्र केचिदाहुः। गौण्यां शक्यलक्ष्ययोः सादृश्यादिसम्बन्धैरभेदः प्रतीयते। शुद्धायां तु मुख्यलक्ष्ययोर्भेदः प्रतीयते। तदेव च तटस्थत्वं नाम। इदमेव शुद्धाया गौणीतो भेदकं न तूपचाराभाव इति तन्मतं निराचष्टे अनयोरिति। उक्तयोरुपादानलक्षणलक्षणयोः शुद्धाभेदयोर्लक्ष्यस्य लक्षकस्य च ताटस्थ्यं भेदेन प्रतीयमानत्वम्। न भेदरूपम्। भेदो रूप्यतेऽनेनेति भेदरूपं न

भेदकमित्यर्थः। कुतो न भेदकमत आह तटादीनामिति। तत्त्वप्रतिपत्तावििति निमित्तसप्तमी। गङ्गात्वेन तटस्याभेदबोधार्थं हि तटादीनां गङ्गादिशब्दैः प्रतिपादने बोधने सति प्रतिपादयितुमिष्टस्य शैत्यपावनत्वादेः प्रयोजनस्य प्रतीतिर्न तु भेदप्रतीतौ अभेदबुद्धिं विना प्रयोजनाप्रतीतेः। अतो न ताटस्थ्यं भेदकमित्यर्थः। अयं भावः—

कौण्डपायिनामयने मासमग्निहोत्रमिति वदन्यत्राऽन्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थ इति तीरे गङ्गाशब्दप्रयोगस्तद्गतशैत्यादिप्रतीत्यर्थः। शैत्यादिधीस्तु तीरे गङ्गात्वेन प्रतीतावेव जायते न तु गङ्गासम्बन्धप्रतीत्या। न वा तीरमात्रप्रतीत्या। तथा सति 'गङ्गातटे घोष' इत्यत्रापि सम्बन्धप्रतीतेः शक्यलक्ष्यप्रतीत्योः फलभेदो न स्यात्।

तदेतदाह को भेद इति शक्त्यैव लक्ष्यप्रतीतेर्लक्षणा निष्फलेत्यर्थः। अतः शुद्धायामप्य-भेदप्रतीतेर्न ताटस्थ्यं भेदकमिति। ननु गङ्गापदात्तीरे कथं गङ्गात्वबोधः कथं वा पूरे घोषान्वयो बाधात्। किञ्च स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा न च पूरत्वेन बोधेऽन्यथाबोधोऽस्ति न च गङ्गात्वेन तीरानुभवोऽस्ति येन गङ्गापदाल्लाक्षणिकात्तथा स्मृतिः स्यात्। अनुभवस्मृत्योः समानप्रकारकत्वभेदबोधाच्छैत्यपावनत्वादिधीः तत्र बाधस्याप्रतिबन्धकत्वात्। व्यङ्ग्यबोध्यस्यारोपतया तस्या धर्मिग्राहकमानेन बाधितबोधकत्वे नैव सिद्धेरित्याहुः। नव्यास्तु बाधास्फूर्तिदशायां तद्धीबाधेऽपि धर्मिणस्तीरस्य योग्यत्वाद् घोषान्वयः। यच्च स्वार्थादन्येनेत्युक्तं तन्न। शक्तिलक्षणयोर्न समानप्रकारकत्वेन विरोधः। किन्तु समानविषयत्वविशिष्टेन न चात्र तदस्ति।

पूरत्वेन तीरस्य विषयत्वात्पूरस्य तदभावात्। न च स्वार्थादन्येनेति नियमः नीलमानयेत्यत्राभावात्। यद्वाऽत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हीति नीत्याऽयोग्यताधीनं प्रतिबन्धिका। शक्यलक्ष्ययोरभेदपावनत्वादिज्ञानमाहार्यम्। अत एव बाधेऽपि मुखं चन्द्र इति चन्द्रत्वेन मुखधीरित्याहुः। परम्परासम्बन्धेन रक्तस्फटिक इतिवद् गङ्गात्वेन तीरानुभवो नाहार्यवद् गङ्गापदाच्च लक्षणया तादृशी स्मृतिः शाब्दबोधश्चेत्यन्ये। लाक्षणिकमनुभावकमेव न तु न्यायमत इव स्मारक-मित्यप्याहुः।

[सरि०] तात्पर्यानुपपत्तिप्रतिसन्धानबीजायाः प्रयोजनहेतुकाया लक्षणाया वृत्ते-र्भेदान् सोपपत्तिकं निरूपयितुं प्रथमं शुद्धायास्तस्या भेदनिरूपककारिकामवतारयति स्वेत्यादि। अन्वयानुपपत्तिप्रतिसन्धानबीजाया रूढिहेतुकायास्तस्या भेदोपभेदा-भावेनायमुपक्रमः। शुद्धा सा स्वसिद्धये पराक्षेप उपादानम् परार्थम् स्वसमर्पणम् लक्षणम् च इति द्विधा एव उक्ता इत्यन्वयः। शुद्धा उपचारामिश्रा। सा तात्पर्यानुपपत्तिप्रतिसन्धानबीजा प्रयोजनहेतुका शक्यव्यवहितलक्ष्यार्थविषयत्वाच्छब्दे आरोपिता वस्तुतोऽर्थनिष्ठा लक्षणाख्या वृत्तिः। स्वसिद्धये—स्वस्य स्वार्थस्य

सिद्धिरन्वयप्रवेशलाभस्तदर्थम्। असिद्धिश्च तात्पर्यानुपपत्तिरेव न त्वन्वयानुपपत्ति-मात्रम्। **पराक्षेपः** परस्य स्वेतरस्यार्थस्य स्वसम्बद्धस्यैव न तु पृथग्धर्मस्य आक्षेप आदानं यत्तत्। **उपादानम्** उपादानसंज्ञकमित्येको भेदस्तस्याः। यथा हि 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदेन दध्युपघातकानामपि ग्रहणं यदि तत्र तथातात्पर्यम्। काकमात्रतात्पर्ये तु नायमस्या विषयः। इयमेव स्वार्थमपरित्यजन्त्री अजहत्स्वार्थे-त्युच्यते अजहत्स्वार्थो यां सेति द्वितीयान्तान्यपदार्थे बहुव्रीहिः। द्वितीयं भेदमाह परार्थमिति। **परार्थं** परस्य स्वेतरस्यार्थस्य तात्पर्योपपत्त्यर्थं निमित्तम्। स्वसमर्पणं स्वस्यात्मन एव समर्पणमुत्सर्गः। यत्तत्। **लक्षणं** लक्षणसंज्ञकमित्यपरो भेदः। इयमेव जहत्स्वार्थाऽपि जहत्स्वार्थो यां सेति विग्रहः। चेति समुच्चयार्थे। इति इत्थम् स्वतात्पर्योपपत्त्यर्थं परार्थोपादानेन या सोपादानलक्षणाऽजहत्स्वार्था परतात्पर्यसिद्ध्यै स्वार्थत्यागलक्षणेन या सा लक्षणलक्षणा जहत्स्वार्थेति। द्विधा द्विप्रकारका। एवेति व्यवच्छेदे न तु तदितरा काचित्तृतीया यथा हि काकेभ्यो दधि रक्ष्यतामित्यत्र कैश्चित्कल्प्यते। उक्ता कथितेति। यद्वा एताभ्यामुपादान-लक्षणरूपाभ्यामुपाधिभ्यां शुद्धैव द्विविधोक्ता न तु गौण्यपीत्यपि। उपादानं लक्षणञ्चेति भेदकोपाधिरेव। निदर्शनमुखेन कारिकां व्याचक्षमाणः प्रथममुपादानलक्षणां विवृणोति कुन्ता इत्यादि। 'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्येकस्या एवोदाहरणद्वयं स्पष्टार्थं भेदस्य। कुन्तो हि शस्त्रविशेषो यष्टिश्च लगुडम्। इत्यादौ इतिवाक्ययोः। आदिपदात्तथाप्रकृतिकानामन्येषामपि ग्रहणम्। **कुन्तादिभिः** कुन्तयष्टिप्रभृतिपदैर्जडप्रकृतिकत्वेनासम्भविप्रवेशक्रियैः। **आत्मनः** स्वस्य स्वस्य। प्रवेशसिद्ध्यर्थं प्रवेशक्रियासम्पादनरूपार्थोपपत्तये। **स्वसंयोगिनः** स्वस्वसम्बद्धाः। **पुरुषाः** जनाः। आक्षिप्यन्ते लक्षणयाऽऽनीयन्ते मुख्यार्थेन सह समवायसम्बन्धेन। तत्र प्रयोजनञ्च पुरुषाणां शीघ्रप्रहर्तृत्वप्रकाशनम्। तथा हि 'कुन्तधारिणो जनाः प्रविशन्ति' इत्युक्ते तेषामस्त्रधारणमात्रं व्यज्यते न तु सद्यः प्रहरणपरत्वम्। तेषां सद्यःप्रहरणपरकत्वद्योतनाय लाक्षणिकोऽयं विशेषः। ततः तेनैव हेतुना यतो हि तत्र कुन्ताद्यर्थैः स्वक्रियासिद्धये पुरुषाद्यर्थाः संयोगसम्बन्धेनाक्षिप्यन्ते। कुन्तादीना-मचेतनत्वात्तेषां प्रवेशासम्भवेन तत्र मुख्यार्थबाधः। **उपादान** परार्थादानरूपा। इयमेषा। **लक्षणा** लक्ष्यलक्षकयुगलमेलकाध्यवसायरूपा वृत्तिरिति। प्रसङ्गादुपा-दानाभासमुपस्थाप्य। दूषयितुं पर(मुकुलभट्ट)मतमुद्धरति गौरिति। अनुमान-वादी मुकुलभट्टः 'गौरनुबन्ध्यः' इति उपादानलक्षणाया निदर्शनत्वेन प्रस्तौति। तदनुसारेण हि 'गौरनुबन्ध्यः' इत्यत्र जातौ सङ्केतग्रहाद् गोत्वजातिबोधनानन्तरम-भिधा निवर्तते। यतो हि विशेषणे गोत्वरूपे क्षीणशक्तिः सा विशेष्यं गोव्यक्तिं नैव

स्पृशति। अतः गौरित्यत्र गोव्यक्तिर्न शब्देनोच्यतेऽपितु जात्याऽऽक्षिप्यत एव। अतोऽत्रोपादानलक्षणेति। तदेवाह--गौरिति। गौः अनुबन्ध्यः। अनुबन्ध्यो हिंस्यः। इत्यादौ इतिवाक्ये। मे मम। श्रुतिचोदितं श्रुतिराम्नायस्तया चोदितं श्रुतीनां प्रभुसम्मितत्वेनानुबन्धनस्यावश्यकर्तव्यता। अनुबन्धनं हिंसनम्। कथं केन प्रकारेण। स्यात् सम्भवेत्। इति हेतोः। जात्या गोत्वरूपेणार्थेन तस्या एव सङ्केतविषयत्वात्। व्यक्तिः गोव्यक्तिः। अनुबन्धनयोग्यः पिण्डः जातेरमूर्तत्वेन तदनुबन्धासम्भवात्। आक्षिप्यते उपादीयते न तु लक्ष्यते जातेः प्रकारत्वात्। तस्याभिधाविषयनिरासाय कथयति नेति न तु शब्देन उच्यते न ह्येष शब्दबोध्य इति। तत्र युक्तिमाह विशेष्यमिति—विशेषणे क्षीणशक्तिः अभिधा विशेष्यम् न गच्छेत् इत्यन्वयः। विशेषणे जातौ। क्षीणशक्तिः विरतव्यापारा। अभिधा वृत्तिः। विशेष्यं व्यक्तिम्। न। गच्छेत् न स्पृशेदिति। अयमाशयः—जातौ सङ्केतस्य प्रतिपादितत्वाद् गोशब्दस्याभिधावृत्तिस्तत्रैव परिसमाप्तसमस्तसामर्थ्या सती तस्याः शब्दविषयत्वेन विरम्य व्यापाराभावाद् व्यक्तेर्वार्तामपि न जानात्यतिप्रसङ्गादिति। यतो हि गोत्वजातावेव विशेषणे सा क्षीणशक्तिरिति विशेष्ये व्यक्तौ न तस्या गमनसम्भवः। इति इत्थम्प्रकारकात्। न्यायात् सिद्धान्तितात्। इति—इति प्रकरणसमाप्तौ। इत्थं परमतमनूद्य तद्दूषणायोपक्रमते इतीति। इति इत्थम्। उपादानलक्षणा स्वसिद्धिनिमित्तं पराक्षेपस्वरूपाऽजहत्स्वार्था लक्षणा। तु--इति व्यवच्छेदे। न। उदाहर्तव्या निदर्शनीया। दूषणे हेतुमाह नेति न नैव। हि इति निश्चये। अत्रेति वाक्येऽस्मिन् 'गौरनुबन्ध्यः' इत्यत्र। प्रयोजनं फलम्। अस्ति। न। वा इति पक्षान्तरे। इयम् एषा। रूढिः आजानिका। एवेति। अयमाशयोऽस्य --लक्षणाविषयनिमित्तं रूढिप्रयोजनान्यतरसद्भाव आवश्यकः। गौरित्यत्र जातित्वबाधेन व्यक्तिबोधने न प्रयोजनमेव फलति न च रूढिरेव तत्र सहायिकेति। किं तर्हि इत्यपेक्षायामाह व्यक्त्यविनाभावित्वात् व्यक्तिं विना जातेरभावात्। तु इति अवधारणे। जात्या गोत्वरूपार्थेन। व्यक्तिः गोव्यक्तिः। आक्षिप्यतेऽनुमीयते। इयं गौर्गोत्वादीति अनुमानान्न लक्षणा। यदि तथाऽनुमिताया व्यक्तेरशाब्दत्वेऽपि 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते' इति न्यायादनुमानस्य शब्दसहकारित्वाच्च तस्याः शाब्देन सङ्ख्याकर्मत्वादिनाऽन्वयः। तस्य दृष्टान्तमाह यथेति—अर्थाक्षेपमुदाहरति 'क्रियताम्' इत्यत्र वाक्ये कर्ता सम्मुखीन आक्षिप्यते कृतिः साश्रया भवति गुणत्वादित्यनुमानेन। कुरु इत्यत्र कथने। कर्म कटादि आक्षिप्यते कृति, सविषया कृतित्वादित्यनुमानेन। इदञ्च गुरुमतेन। भाट्टमतमवलम्ब्य शब्दाक्षेपे दृष्टान्तमाह—प्रविश इत्यत्र गृहमिति कर्मणः 'पिण्डीम्' इत्यत्र तु भक्षय इति क्रियापदस्य चाक्षेप इति।

एवमेव द्वितीयमपि परमतमुद्धृत्य दूषयति **पीन** इत्यादिना। पीनः पीवरतनुः। **देवदत्तः**। **दिवा** दिवसकाले। **न**। **भुङ्क्ते** अत्ति। **इत्यत्र** वाक्येऽस्मिन्। चेति पूर्वोदाहरणसमुच्चयार्थः। यथा पूर्वोदाहरणे तथाऽत्रापीति। **रात्रिभोजनं** निशाकाले भक्षणम्। **न** नैव। **लक्ष्यते** लक्षणया बोध्यते। अयम्भावोऽस्य – केचिद्धि 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र भोजनाभावे पीनत्वासम्भवात् स रात्रौ भुङ्क्ते इति अर्थो लक्ष्यते भोजनाभावसमानाधिकरणपीनत्वयुक्तोत्कर्षस्य प्रतीतेः प्रयोजनस्य सत्त्वात्। सा हि 'दिवा न भुङ्क्ते' इति मुख्यार्थमादायैव भवतीति उपादानरूपा। अर्थवादे प्राशस्त्यलक्षणावद्वाक्येऽपि सा सम्भवत्येव। पीनत्वेनैव सामानाधिकरण्या रात्रिभोजनं वा लक्ष्यत इति यदुच्यते तन्न साधु। तत्र हेतुमाह **श्रुतेत्यादि श्रुतार्थापत्तेः** श्रुतं शब्दस्तस्मादर्थस्यापत्तिरापतनमिति तस्याः। यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः। यथा द्वारशब्देन पिधेहीति क्रियापदाध्याहारः। दिवाभोजनाभाववतः पीनत्वं रात्रिभोजनं विनाऽनुपपन्नमिति अनुपपत्या रात्रौ भुङ्क्ते इति शब्दः कल्प्यत इत्याशयः। एतच्च भाट्टनये। गुरुनयानुसारं तु **वा** इति पक्षान्तरे। **अर्थापत्तेः** अर्थादर्थस्यापत्तिरापतनं तस्याः। यत्र च दृष्टः श्रुतो वाऽर्थोऽनुपपन्नोऽर्थान्तरं कल्पयति साऽर्थापत्तिः। यथा द्वारमित्यर्थोऽनुपपन्नः पिधेहीति क्रियां कल्पयतीति। **तस्य** रात्रिभोजनरूपार्थस्य। **विषयत्वात्** क्षेत्रत्वात्। यत्र ह्यन्यत एव सिद्धिस्तत्र न लक्षणेति पर्यवसितोऽर्थः। परार्थं स्वसमर्पणमिति यदुक्तं तत्स्वरूपाया लक्षणलक्षणाया उदाहरणं प्रस्तौति **गङ्गेति** 'गङ्गायां घोषः' इत्यत्र वाक्ये। **तटस्य** तीरस्य। **घोषाधिकरणत्वसिद्धये** घोषाधारत्वान्वयलाभाय। **गङ्गाशब्दः** प्रवाहरूपार्थवान् गङ्गाशब्दः। **स्वार्थं** स्वप्रवाहरूपार्थम्। **अर्पयति** तटबोधननिमित्तमुज्झतीति। **इति** इत्थम्। **एवमादौ** इत्यादिवाक्ये। **लक्षणेन** प्रयोजनवता धर्मेण। **एषा**। **लक्षणेति**। वाक्ये गङ्गापदं स्वप्रवाहरूपमर्थं तटस्य घोषाधारत्वलाभायोज्झतीत्यत्र लक्षणेन लक्षणा भवतीति। शुद्धेतिपदं व्याचष्टे **उभयेति**। इयम् एतादृशलक्षणा। **उभयरूपा** उपादानलक्षणेत्युभयस्वरूपा। **शुद्धा** न गौणीति। शुद्धात्वे हेतुमाह **उपेति** उपचारेण सादृश्यसम्बन्धमात्रेण प्रतीतिरुपचारः। अत्यन्तं पृथग्भूतयोरपि सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमुपचारस्तेन। **अमिश्रितत्वात्** असम्बन्धात्।

यच्च कैश्चिद्विशेषतो मुकुलभट्टादिभिः शुद्धाया गौणीतो भेदकं नोपचारामिश्रणमपितु लक्ष्यलक्षकयोर्भेदाभेदौदासीन्येन ताटस्थ्यमेवार्थात्तयोरभेदप्रतिपत्तेरभाव एव शब्दान्तरेण कथने 'गौर्वाहिकः' 'गौरयम्' इत्यादौ भेदेऽपि शक्यलक्ष्ययोरभेदः प्रतीयते तद्विपरीतं 'गङ्गायां घोषः' इत्यादौ तयोर्भेदमात्रप्रतीतिरेवेति लक्ष्यलक्षकयोरन्योऽन्यताटस्थ्यमेव

शुद्धागौण्योर्भेदकं न तूपचारमिश्रणामिश्रणत्वमिति प्रतिपादितं तन्निरासायाह अनयोरिति अनयोः शुद्धागौण्योः। लक्ष्यस्य तटादेरर्थस्य। लक्षकस्य गङ्गादि-शब्दस्य। चेति समुच्चये। ताटस्थ्यं भेदाभेदयोरौदासीन्यम्। न नैव। भेदरूपं भेदो रूप्यतेऽनेनेति। भेदकम्। यद्धि लक्ष्यलक्षकयोस्ताटस्थ्ये शुद्धाऽभेदप्रतीतौ तु गौणीत्युक्तं तन्नेत्याशयः। तत्र युक्तिमाह तटेति तटादीनां तटाद्यर्थानाम्। गङ्गादिशब्दैः गङ्गाप्रभृतिपदैः। प्रतिपादने बोधने। तत्त्वप्रतिपत्तौ तत्त्वस्य गङ्गात्वस्य तत्रैव प्रयोजनीभूतशीतत्वपावनत्वादेः सत्त्वात् प्रतिपत्तौ ज्ञाने। हि एव। प्रतीतिः प्रतिपिपादयिषितस्य प्रतिपादयितुमिष्टस्य प्रयोजनस्य फलस्य शैत्यपावनत्वादेः सम्प्रत्ययः प्रतीतिः। अयम्भावः—लक्षणया तटत्वेन तटेऽवगते घोषपदसन्निधि-कुण्ठितशक्तिकं गङ्गापदं व्यञ्जनया गङ्गां बोधयति। तत एकपदोपादानबलाद् गङ्गातटयोरभेदावगमो यतस्तटाटौ गङ्गाधर्मस्य पावनत्वादेरवगमो यद्धि लक्ष्यलक्ष-कयोस्ताटस्थ्ये न सम्भवति इति। न च गङ्गापदेन लक्षणया गङ्गात्वेन तटो बोध्यते इति वाच्यं बाधितस्यार्थस्य लक्षणाया अविषयत्वात्। तथा हि सति तु तदभिधयैव प्रतीयत इति किं न स्यात्। तदेवाह गङ्गेत्यादि गङ्गाया शैत्यपावनत्वादिधर्म-विशिष्टायाः सम्बन्धः सन्निधिः स एव समात्रं रास्य प्रतीतौ बोधे तु 'गङ्गातटे घोषः' इति मुख्यशब्दाभिघानाद्वाचकशब्दप्रयोगापेक्षात्वेन। लक्षणायाः बाधितार्थेतरार्थ-बोधनपरायाः वृत्त्याः। को भेदः को विशेषः न किमपि वैशिष्ट्यमिति। सम्बन्धमात्रप्रतीतौ तु प्रयोजनाप्रतीत्या वाचकशब्दं विहाय अवाचकशब्दोपपत्तिरेव स्यात्। 'अन्यत्रान्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थः' इति न्यायेन तटे गङ्गाशब्दप्रयोगो गङ्गागतशैत्यपावनत्वादिप्रतीतिहेतुकः तच्च गङ्गात्वविशिष्टतटबोधन एव फलति न तु गङ्गासम्बन्धमात्रप्रतीतौ न वा तीरमात्रप्रतीतौ। अतः शुद्धायामप्यभेदप्रतीतेर्न लक्ष्यलक्षकयोस्ताटस्थ्यं भेदकं किन्तूपचारामिश्रणमेवेति पर्यवसितम्।

[वि० वृ०] अथ प्रयोजनवतीं विभजते—

कुन्ताः प्रविशन्ति' इत्यादौ कुन्तादिभिः स्वप्रवेशसिद्धये स्वसम्बन्धिनः पुरुषा उपस्थाप्यन्ते। एवं 'वेणुर्गायति' इत्यत्र वेणुना स्वगीतिसिद्धये स्ववादकस्य हरेराक्षेपः। मुख्यार्थस्याप्यत्रोपादानादियमुपादानलक्षणा कुन्तादीनामतिगहनत्वादि फलम्। यत्र स्वविनाभावोऽर्थापत्तिर्वा तत्र नेयं लक्षणा रूढिफलयोरभावात्। यथा 'गौरनुबन्ध्यः' इति श्रुतिनोदितमनुबन्धनं ये कथं स्यादिति जात्या व्यक्तिराक्षिप्यते। 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इत्युक्तेः। न तु शब्देनोच्यते। एवं क्रियतामित्यत्र कर्ता प्रविश पिण्डीमित्यादौ गृहं भुङ्क्ष्वेत्यादि च। अविनाभावो

ह्याक्षेपः। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनमर्थापत्त्यैव लभ्यते न तु लक्ष्यते। असिध्यदर्थंदृष्टया साधकान्यार्थकल्पनं ह्यर्थापत्तिः।

'गङ्गायां घोषः' 'मञ्चाः क्रोशन्ति' इत्यादौ तटादीनां घोषाधारत्वादिसिद्धये गङ्गादिशब्दास्तत्र स्वार्थमर्पयन्तीति परोपलक्षणादेषा लक्षणलक्षणा। द्विधा चेयं शुद्धैवोपचारेणामिश्रत्वात्। सादृश्येन सम्बन्धेन प्रवृत्तिभेदेन प्रतीतयोरैक्यारोपो वोपचारः।

**[कारिका] सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा।**

**[वृत्तिः] आरोप्यमाण आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा।**

[कमला०] गौण्या लक्षणानन्तर्गत्या भाट्टसम्मतवृत्त्यन्तरत्वं निराकुर्वन् गौण्या भेदानाह **सारोपेति**। तु शब्दो वैलक्षण्ये। शुद्धैवद्वयीत्युक्तम्। अन्या तु शुद्धा गौणी चेत्यर्थः। तथा तेनैव रूपेणेत्यर्थः। यत्रोक्तौ भवतः इति शेषः। यद्वोच्यत इत्युक्तिर्वाक्यम्। यथ वाक्ये इत्यर्थः। **अनपह्नुतभेदौ** ज्ञातवैधर्म्यौ ज्ञातभेदौ वा। अपह्नुतेति पाठे गृहीतान्योन्याभावौ। विषयी आरोप्यमाणः। विषय आरोपाधिकरणमित्यर्थः। यथा 'गौर्वाहिकः' इति। अत्र भिन्नविभक्त्यभावात् सामानाधिकरण्यम्।

[सरि०] शब्दार्थयोस्त्रैविध्यं यदुक्तं तत्सिद्धये गौण्याख्यां वृत्तिमपि लक्षणायामेवान्तर्भावयंस्तस्या एव विभागान्तरनिर्देशककारिकामवतारयति **सारोपेति**। अत्रेदमवधेयं यत्केचन कुमारिलभोजराजप्रभृतयो हि विपश्चितो मुख्यालक्षणाभ्यां सह गौणीमपि पृथग्वृत्तित्वेन गृह्णन्ति। तन्मते शब्दो हि मुख्यागौणीलक्षणाभिर्वृत्तिभिरर्थविशेषप्रतिपत्तिनिमित्तं भवति। तद्यथा गौरिति पदं मुख्यया वृत्त्या सास्नादिमन्तमर्थं प्रतिपादयति। तदेव तिष्ठन्मूत्रत्वादिगुणसम्पदमपेक्ष्य वाहीकादौ प्रयुज्यमानो गौणीं वृत्तिमनुभवति। यदा तदेवोभाभ्यामुपात्तक्रियासिद्धौ साधनभावं गन्तुमसमर्थं भवति तदा लक्षणया तस्य स्वार्थाविनाभूतमर्थान्तरं लक्ष्यते। यथा हि 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दो जलप्रवाहे निरूढाभिधानशक्तिर्घोषाधारत्वं गन्तुमसमर्थः स्वार्थाविनाभूतं तटं लक्षयतीति। तथाव्याख्यातायाः गौण्या लक्षणायाः सारोपासाध्यवसानिकाभेदद्वयेऽन्तःपातं निर्दिशन् प्रथमं सारोपां व्याचष्टे इति। अन्या तु सारोपा यत्र विषयी विषयः तथा उक्तौ इत्यन्वयः। **अन्या** शुद्धेतरा गौणी। तु इति व्यवच्छेदे तद्विपरीतमिति। **सारोपा** आरोप्यमाणारोपाधिकरणविषया लक्षणा भवति। यत्रेति वाक्ये। विषयी आरोप्यमाणः। **विषयः**

आरोपाधिकरणञ्च। तथा ज्ञातवैधर्म्यत्वेन समुच्चयेऽपि। **उक्ता** सन्निविष्टा भवत इति शेषः। कारिकां व्याचष्टे वृत्तिकृत् **आरोप्यमाण** इत्यादि। कारिकागत-विषयिपदं, व्याचष्टे **आरोप्यमाण** इति आरोप्यमाणः आरोपविषयीक्रियमाणो गवादिः। विषयपदं विवृणोति **आरोपेति** आरोपस्य एकस्य धर्मस्यान्यस्मिन् समाकलनस्य विषयो वाहीकादिः। यत्रेति वाक्ये। तथापदं व्याचष्टे **अनपह्नुत-भेदौ** अनपह्नुतोऽनपलपितो भेदो वैधर्म्यं गोत्ववाहिकत्वादि ययोस्तौ। 'उक्तौ भवतः' इति विवृणोति **सामानेति** सामानाधिकरण्येन समानविभक्तिकत्वेन। निर्दिश्येते सप्रयोजनं समुपस्थाप्यते **सा** तथालक्षणा। लक्षणा। सारोपा विषयिविषययोर्भेदेनोपन्यास आरोपस्तेन सहिता तदाख्या। भवतीति शेषः।

अयम्भावः—यत्र हि तात्पर्यानुपपत्तिप्रतिसन्धानत्वेन विषयविषयिणोः समान-विभक्तिकपदाभ्यां ज्ञातधर्मयोर्निर्देशः सम्प्रयोजनस्तत्र या भवति लक्षणा सा सारोपाख्येति। अत्र ह्युपचारमिश्रणादस्या शुद्धातः पार्थक्यम्। तथैव ज्ञात-वैधर्म्यत्वात्साध्यवसानाया अप्यस्या भेदः। यथा 'गौर्वाहीकः' इत्यत्र गोशब्दे। गोशब्दस्य सास्नादिमत्पिण्डार्थस्य वाहिकशब्देन सह तात्पर्यानुपपत्तेरन्वयानुपपत्तेश्च मुख्यार्थबाधेन लक्षणाया विषयत्वम्। प्रयोजनमत्र वाहिकस्य मान्द्यातिशयद्योतनम्। नात्रोपादाना स्वनिमित्तं पराक्षेपाभावात् न हि गोशब्दोऽत्र परमाक्षिपति अपितु स्वस्वाभाविकधर्ममेव द्योतयतीति। न च लक्षणलक्षणा वाहीकार्थे स्वसमर्पणा-भावात्तस्य। न च साध्यवसानाऽनपह्नुतभेदत्वात्। तेन ह्यत्र सारोपा लक्षणा। अत्र हि विषयी गौः विषयो वाहीकश्चोभौ प्रथमाविभक्त्यन्तत्वेन स्थिताविति तयोः सामानाधिकरण्यम्। गोमान्द्यातिशयधर्मादिः वाहिके आरोप्यत इति सारोपात्वमस्याः।

[वि० वृ०] यत्रारोप्यमाणआरोपविषयश्च स्फुटः सा लक्षणा सारोपा नाम। यथा 'गौर्वाहीक' इत्यादौ। इह गौरारोप्यमाणः। वाहीक आरोपविषयः। तौ द्वौ व्यक्तौ निर्दिष्टौ। अत्र गोशब्दः साधारणगुणाश्रयणेन परार्थं लक्षयति। तदुक्तम्—

"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥" इति।

एवम् 'अमृतं हरिकीर्तनम्' इत्यादौ च।

**[कारिका] विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका।**

[वृत्तिः] विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात् ।

[कमला०] भेदान्तरमाह विषयीति निगीर्णे स्ववाचकपदेन भेदेनाज्ञापिते यत्रारोप्यमात्रमुच्यते न त्वारोपाधिकरणमित्यर्थः । 'गौरयम्' इति । यद्यप्ययमित्यस्त्येवारोपविषयपदं तथापि न तदसाधारणधर्मबोधकम् । इदन्त्वस्य साधारणत्वादिति सुबुद्धिमिश्राः । वैधर्म्यस्याज्ञानाद् भेदाज्ञानं सारोपारूपकं साध्यवसाना चातिशयोक्तिः ।

[सरि०] तस्या एव भेदान्तरनिरूपककारिकामवतारयति विषयीति । अन्यस्मिन् विषय्यन्तः कृते सा साध्यवसानिका स्यात् इत्यन्वयः । अन्यस्मिन् विषये वाहीकादौ । विषय्यन्तःकृते विषयिणा गवादिना अन्तःकृते भेदाभावत्वेन समुपन्यस्ते । सप्रयोजनं सामानाधिकरण्यं तयोरत्रापि । सति । या लक्षणा भवति सा । साध्यवसानि ः । विषयिणा विषयतिरोभावो वा विषयिवाचकपदेनैव विषयप्रतिपादनमध्यवसायस्तेन विशिष्टा तदाख्या लक्षणेति । स्यादिति । कारिकां व्याचष्टे विषयिणेत्यादि विषयिणेति आरोप्यमाणेन आरोपविषयीक्रियमाणेन गवादिना । अन्तःकृते इति निगीर्णे स्वस्मिन्नेवान्तर्भाविते । अन्यस्मिन्निति आरोपविषये वाहीकादौ । सति । साध्यवसानिका अध्यवसानविशिष्टा लक्षणा । स्यात् भवतीति । निदर्शनमत्र 'गौरयम्' इति । अत्र हि विषयिणा गवा विषयो वाहीकः स्वस्मिन्नेवान्तःपातितोऽस्तीति न तयोर्वैधर्म्यप्रतीतिरतो न सारोपा विषयिसिद्धये विषयाक्षेपाभावान्नोपादाना विषयकृते विषयिसमर्पणाभावान्न लक्षणंजनिता किन्तु सास्नादिमत्पिण्डस्यात्र तात्पर्यानुपपत्या मुख्यार्थबाधेन मान्द्यातिशयद्योतनप्रयोजनमाश्रित्य लक्षणेति एषा साध्यवसानिकेति । यत्र विषयिण एव निर्देशो न तु विषयस्यापि तादृशस्थले या लक्षणा सा साध्यवसानिकेति कथितेत्यस्याशयः । अत एवोक्तम्--'यत्र विषयनिष्ठासाधारणधर्मप्रतिपत्तिसहकृताऽन्यस्यान्यतादात्म्यप्रतीतिः सा सारोपा, यत्र तु तत्प्रतिपत्त्यसहकृता सा साध्यवसानेति । तेन हि लक्ष्यवाचकपदसत्त्वे सारोपा तदसत्त्वे साध्यवसानेति पर्यवसितोऽर्थः । गौरयम्' इत्यत्र अयमिति पदस्य आरोपविषयत्वे सत्यपि तस्यासाधारणधर्माबोधकत्वान्न विषयत्वेन तस्य ग्राह्यतेति । तथैव पुरुषस्य हीनवीर्यस्य कृते 'स्त्र्ययम्' इत्यादिवाक्ये । अयमिति पुरुषावबोधकपदेन सह स्तनकेशवत्पिण्डार्थस्य स्त्रीशब्दस्यान्वयानुपपत्तेर्मुख्यार्थबाधेन वीर्यहीनतातिशयद्योतनप्रयोजनमाश्रित्य लक्षणाविषयत्वे लक्ष्यवाचकपदाभावेन तस्याः साध्यवसानत्वमिति ।

[वि० वृ०] विषयिणाऽऽरोप्यमाणेनान्यस्मिन्नारोपविषयेऽन्तःकृते निगीर्णे सैव साध्यवसानोच्यते। यथा 'गौरेवायम्' इत्यादौ। गवेह वाहीकोऽन्तर्निगीर्णः। एवम् 'अमृतमवेदम्' इत्यादौ च। अस्मिन् भेदद्वये सत्यपि भेदे ताद्रूप्यप्रतीतिः सर्वथाभेदावगमश्च फलम्।

[कारिका] भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।
गौणौ शुद्धौ च विज्ञेयौ............ ॥

[वृत्तिः] इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ 'गौर्वाहीकः' इत्यत्र गौरयम्' इत्यत्र च। अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित्। स्वार्थसहचारिगुणाभेदेन पदार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयत इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे। उक्तञ्चान्यत्र—

"[मानान्तरविरोधेन मुख्यार्थस्यापरिग्रहे।]
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता॥" इति।

अविनाभावोऽत्र सम्बन्धमात्रम्, न तु नान्तरीयकत्वम्। तत्त्वे हि 'मञ्चाः क्रोशन्ति' इत्यादौ न लक्षणा स्यात्। अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्। 'आयुर्घृतम्' 'आयुरेवेदम्' इत्यादौ च सादृश्यादन्यात् कार्यकारणभावादि सम्बन्धान्तरम्। एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्तु अन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि। क्वचित्तादर्थ्यादुपचारः। यथा इन्द्रार्था स्थूणा इन्द्रः। क्वचित्स्वस्वामिभावात्। यथा राजकीयः पुरुषो राजा। क्वचिदवयवावयविभावात्। यथा 'अग्रहस्त' इत्यत्राग्रमात्रेऽवयवे हस्तः। क्वचित्तात्कर्म्यात्। यथा अतक्षा तक्षा।

[कमला०] एतौ भेदौ शुद्धायामपि स्त इति सूचयन् गौणीशुद्धयोर्लक्षणमाह भेदाविति। सादृश्याद् गौणौ सम्बन्धान्तरतः शुद्धावित्यन्वयः। मूलव्याख्यया सारोपाध्यवसानौ गौणीभेदावुदाहरति इमाविति। 'गौर्वाहीकः' इति सारोपा। वाहीकदेशस्थः पुमान् वाहीकः। गौरयमिति साध्यवसाना। यद्यप्यत्र वाहीकत्वेनेदन्तया वा ज्ञाने सारोपात्वमर्हं तथापीदं त्वस्यारोपाविषयत्वान्न तत्त्वम्। न चान्वयप्रतियोगिपदाभावादनन्वयो 'गौः पठति' इत्यादौ तल्लाभात्। अयम्भावः—

गौणी न वृत्त्यन्तरं मानाभावात् । न च सादृश्यादिसम्बन्धस्यात्र प्रकारकत्वं पदान्तर-समभिव्याहारो वा । लक्षणायां च तदभावो भेदकोऽध्यारोपे सम्बन्धाभावात् मुख्य-बाधादिहेतुत्रयस्य तौल्याच्च । अतो लक्षणैवेयम् । शक्यसम्बन्धस्तु सजातीयगुणवत्त्वं स्वसमवेतसमवायित्वरूपः परम्परा न तु साक्षादित्यसदेतत् । सिंहनिष्ठस्य क्रौर्यस्य देवदत्तेऽसत्त्वेन तद्गुणयोगाख्यगौण्यसम्भवाच्च गुणानां नानात्वात् । भट्टास्तु नाध्या-रोपितार्थत्वं गौणत्वम् । खपुष्पं भवत्सिद्धान्त इत्यादौ खेपुष्पस्यारोपितत्वेन वाऽऽरोपासम्भवाद् वाहीकादौ लाङ्गूलादिमत्वाप्रतीतेश्च गुणानां स्वगतभेदशून्यत्वेन तद्गुणयोगस्य सादृश्यस्य सम्भवात् । सम्बन्धस्य प्रकारत्वेनोपपदसमभिव्याहारेण च लक्षणातो भिन्नस्योद्गीर्णा वृत्त्यन्तरमेव । यद्यपि 'अग्निरधीते' इत्यादौ न पदान्तर-समभिव्याहारस्तथापि सादृश्यस्य प्रकारकत्वमेव भेदकम् । अन्ये तु तत्र लक्षित-लक्षणैव न तु गौणीत्याहुः । किञ्च सादृश्यान्न सम्बन्धः प्रतिव्यक्तिभिन्नत्वात् । अतो 'लगा तेन षड्विधा' इति ग्रन्थः प्रौढया छत्रिन्यायेन वा व्याख्येयमित्याहुः । गौण्याः स्वरूपे मतभेदानाह अन्हीति । स्वार्थो गोत्वं पदार्थो वाहीकः । गोशब्दो हि भिन्नार्थत्वेन वाहीकसामानाधिकरण्यसम्भवाद् बाधितमुख्यार्थः स्वार्थैकाश्रयगुण-लक्षणया तानेव निमित्तीकृत्य तत्सदृशगुणद्वारा एकाश्रयत्वसम्बन्धाद् वाहीके उपचाराद् ? प्रतिपादयतीत्यर्थः । केचिदिति तु तुच्छत्वमुक्तम् । गोपदस्य वाहीके सङ्केताभावेनाभिधाभावाल्लक्ष्यतावच्छेदकैर्निमित्तत्वायोगात् शक्यत्वे शक्यवृत्तित्वे स्वभिन्नशक्यावृत्तित्वस्य तत्त्वात् । मतान्तरमाह स्वार्थेति । अभेदसाजात्येन गुणमात्रं लक्ष्यं न तु गुणी । आक्षेपाद्वाहीकशब्दात्तद्धीसम्भवादित्यर्थः । न त्विति । अन्यलभ्यत्वादित्यर्थः । इदमप्ययुक्तम् । आक्षेपे शाब्दवाहीकसामानाधिकरण्या-योगात्प्रत्ययार्थैकत्वकर्मत्वाद्यनन्वयाच्च अन्त्ये लक्ष्यमाणगुणानां वाहीके षठ्यादिकं विनाऽनन्वयापत्तेः । अभेदस्यायोग्यत्वाद् भेदोपस्थापकविभक्तिं विना भेदान्वया-योगाच्च । सिद्धान्तमाह साधारणेति सजातीयेत्यर्थः । सादृश्येन सम्बन्धेन लक्ष्यता-वच्छेदकेन तल्लक्षणया वाहीकबोधे युज्यते सामानाधिकरण्यम् । सादृश्यञ्च तद्भिन्नत्वे सति तद्गतं भूयो धर्मवत्त्वमित्यर्थः । यत्तु श्रीवत्सलाञ्छनः गौर्वाहीकः गौरयमित्यत्र रूपके सादृश्ये लक्ष्यतावच्छेदके उपमायाः को भेदः स्यात् । भेदाग्रहयुते वा सादृश्ये लक्ष्यतावच्छेदके गौणी । तदुक्तम्—'उपमैव तिरोभूतभेदा रूपकमिष्यत' इति । तन्न । सादृश्यवदित्यादिशब्दोपात्तत्वतदनुपात्तत्वाभ्यां भेदस्य स्पष्टत्वात् । यत्तु काव्यप्रदीपः साधारणं जाड्यादि लक्ष्यतावच्छेदकमाश्रित्य वाहीको लक्ष्यत इति तन्न । गोपदाज्जडो वाहीक इत्यप्रतीतेः । अपरे अपरे स्वीया इत्यर्थः । उक्तेऽर्थे भट्टवार्तिकसम्मतमाह उक्तञ्चेति । बोद्धव्योऽर्थः । प्रतीतिरिति करणे क्तिः । तद्धेतुः

शक्यसम्बन्ध इत्यर्थः। प्रवृत्तिरिति पाठो मुख्यः। स एवार्थः। शक्यसम्बन्धित्वेन प्रतीतौ लक्षणेत्यर्थः। तेन लक्ष्यार्थधीरेव लक्षणेति प्राचां मतेन चैतदिति परमानन्दः। योगादिति ल्यब्लोपे पञ्चमी। लक्ष्यमाणाः साधारण्येन दृश्यमानाः यद्वा लक्ष्यमाणस्य प्रतीयमानस्य गोपदार्थस्य गुणा जाड्यादयः। तैर्योगं लक्ष्यतावच्छेदकमवाप्य वृत्तेर्गौणतेत्यर्थः। न तु लक्षिता गुणास्तैर्योगः प्रतीत्यविश्रान्त्याद्यलक्षणायोगात् योगपद्ये वृत्तिद्वयविरोधात् क्रमे च शब्दस्य विरम्य व्यापाराभावात्। अत एव न क्वापि लक्षितलक्षणा। किञ्च लक्षितार्थे वा लक्षणा लक्षितशब्दे वा? नाद्यः शक्यसम्बन्धत्वेन लक्ष्यसम्बन्धाभावात्। न चार्थसम्बन्धमात्रं लक्षणाऽतिप्रसङ्गात् अर्थवृत्तित्वेन शब्दवृत्तित्वाभावाच्च। नान्त्यः। मध्ये शब्दकल्पने मानाभावात् लक्षितशक्तिसम्भवाच्च। एतेन द्विरेफपदे सा निरस्ता लक्षितशक्त्यापत्तेश्च। न च शक्तिशक्त्यापत्तिः रेफद्वयवत्। प्रभाकरादिपदान्तरनिवृत्तये प्रत्ययार्थकर्मत्वैकत्वान्वयार्थं च तदावश्यकत्वादिति केचिदर्थमाहुः। परम्परासम्बन्धेन लक्षणैव लक्षितलक्षणेत्यप्याहुः। भट्टसोमेश्वरादयस्तु सिंहपदेन क्रौर्यादयो गुणा लक्ष्यन्ते। तैर्योगाद् वृत्तिर्गौणी। शब्दस्य च विरम्य व्यापारेऽपि बाधकाभावः। 'आपो वै शान्ताः' इत्यादौ लक्षितलक्षणा वार्तिके स्पष्टैव। तेन सा गौणीतो भिन्नैवेत्यप्याहुः। अन्ये तु द्विरेफादौ लक्षितलक्षणैवोपपदाभावात्। सिंहो देवदत्त इति तु सोपपदप्रयोगाद् गौणीत्याहुः। लक्ष्यमाणस्य पदार्थस्य गुणा जाड्यादय इति अपव्याख्या लक्ष्यमाणस्य वाहीकस्य गुणानां गवि योगात् वाहीकशब्दो गौणः स्यान्न तु गोशब्दः। अत्र पूर्वार्द्धे शुद्धोक्ता। उत्तरार्धे उपचाराद् गौणीति केचित्। गौणीवृत्त्यन्तरवादिनां सम्मत्यामूले गौणी वृत्त्यन्तरमेव सम्मतं लक्ष्यते। न त्वविनाभावो व्याप्तिः। सा चानुमानोत्थापकत्वान्न लक्षणाहेतुरत आह **अविनाभाव** इति। अविनासत्त्वे भावः सम्बन्धोऽभिप्रेतः न तु नान्तरीयकत्वे व्याप्तिरित्यर्थः। तत्त्वे नान्तरीयकत्वे मञ्चपुरुषयोरन्वयव्यतिरेकाभावेन दैशिककालिकव्याप्त्यभावादित्यर्थः। ननु कालविशेषे तत्राप्यस्त्येव व्याप्तिरत आह **अविनाभावे** चेति। आक्षेपेणानुमानेनेत्युक्तं स्वसिद्धये पराक्षेप इत्यत्र क्रियतामित्यत्र कर्तेत्यत्र वेत्यर्थः। सादृश्याद् गौणीभेदावुक्तौ। सम्बन्धान्तराच्छुद्धाभेदावाह **आयुरिति**। आद्या सारोपा। अन्त्या सा आयुर्जनकत्वाद् घृतमायुः शब्देनोच्यते इत्यर्थः। उपसंहरति **एवमादाविति**। कार्यकारणभावादिलक्षणस्तत्स्वरूपः पूर्वो ययोस्ते। यद्वा कार्यकारणभावादिर्लक्ष्यतेऽनेनेति लक्षणं ज्ञानं तत्पूर्वंप्रयोगश्च तत्पूर्वे इत्यर्थः। न हि सम्बन्धान्तरस्य सत्तामात्रेण शुद्धात्वम्। गौर्वाहीक इत्यत्र स्वस्वामिभावादेः सत्त्वेन शुद्धत्वापत्तेः। आयुर्घृतमित्यत्र च प्रमेयत्वेन सादृश्याद् गौणीत्वापत्तेः। किन्तु तद्धीपूर्वकप्रयोगात्तच्चात्रापीत्यर्थः। उक्तेषु

गौणीशुद्धोदाहरणेषु रूढ्यभावात्प्रयोजनविवेकं क्रमेणाऽऽह । गौणभेदयोः सारोपसाध्यवसानयोर्गौर्वाहीकः गौरयमित्यत्र च भेदे वैधर्म्ये भासमानेऽपि ताद्रूप्यं तादात्म्यमाहार्यं सारोपे । साध्यवसाने तु सर्वथाऽनाहार्यो भेदावगमः वाहीकादिपदाप्रयोगात्तद्गतवैधर्म्याप्रतीतेः । सारोपायां धर्मयोरभेदः साध्यवसानायां धर्मिणो धर्मयोश्चेत्यर्थः । ननु अभेदस्य 'धान्येन धनी' इतिवद्विशेषणविभक्त्यर्थत्वान्न व्यङ्ग्यत्वम् । एवं ताद्रूप्येऽपि । अन्यथा नीलोत्पलमिति कर्मधारयेऽप्यभेदे लक्षणापत्तेरिति चेन्न । पाणिन्याद्यनुशासनाभावेन विशेषणविभक्तेरभेदार्थत्वे मानाभावात् । धान्येन धनीत्यत्रेत्थम्भूतलक्षणे तृतीया । यद्वा धनपदेन धनकार्यं लक्ष्यते । क्वचिच्च धर्मिधर्मभावे संसर्गमर्यादया तद्धीः प्रकृते च तदभावाद् व्यङ्ग्य एवाभेद इत्यर्थः । शुद्धभेदयोरायुर्घृतमित्यादौ क्षीरादिवैलक्षण्येन कार्यकारित्वम् । आयुरेवेदमित्यत्र घृतं क्षीरवदायुर्न व्यभिचरतीति तत्कार्यकारित्वं प्रयोजनमित्यनुषङ्गः । इदञ्चावान्तरपदार्थधीरूपं महाप्रयोजनं तु गोगतजाड्यादिवाक्यार्थः । धर्मयोरभेदबुद्धिः फलमित्यन्ये । सम्बन्धान्तराच्छुद्धाभेदान् प्रपञ्चयति क्वचिदिति । उपचारो लक्षणा । इन्द्रार्था इन्द्रपूजार्था स्थूणा स्तम्भः अग्रहस्त इति । अग्रश्च तद्धस्तश्चेति कर्मधारयेऽग्रमात्रे हस्तशब्दो गौणः । यदा तु हस्तस्याग्रमिति विग्रहस्तदा पीता कार्पटिकैर्गङ्गेति गङ्गावयवे गङ्गापदं ज्ञेयं तात्कार्म्यात्तत्कर्मकरित्वात् । तक्षावर्द्धकिः । अत्र क्रमेण वन्द्यत्वमान्यत्वसामर्थ्यनैपुणानि प्रयोजनानि ।

[सरि०] इत्थमुपादानलक्षणारोपाध्यवसानभेदेन लक्षणायाश्चातुर्विध्यमुक्त्वा सम्प्रति सारोपासाध्यवसानयोः पुनः प्रत्येकं द्वैविध्यनिर्देशाय तन्निरूपककारिकामवतारयति भेदावित्यादि । इमौ भेदौ च सादृश्यात् तथा सम्बन्धान्तरतः गौणौ शुद्धौ च विज्ञेयौ इत्यन्वयः । इमौ अनन्तरोक्तौ सारोपासाध्यवसानाख्यौ । भेदौ विभागौ । चेति पूर्वोक्तसमुच्चये सादृश्यात् सादृश्यसम्बन्धात् सादृश्यं च गुणादिसाम्यमेव । तथा एवमेव । सम्बन्धान्तरतः सादृश्येतर( कार्यकारणभावादिरूप)-सम्बन्धात् । गौणौ गुणेभ्यो जाड्यमान्द्यादिरूपेभ्य आगताविति । अनेन गौण्यामपि मुख्यार्थबाधादिहेतुत्रयसत्त्वात्तस्या लक्षणाया भेदयोरनयोरन्तर्भाव इति स्पष्टम् । द्विवचनञ्च गुणसम्बद्धत्वेन सारोपा साध्यवसाना इतिहेतुकम् । शुद्धौ कार्यकारणभावादिरूपाश्रितौ तौ च सारोपा साध्यवसानेति द्वावेव । चेति समुच्चये । विज्ञेयौ अवगन्तव्यौ । इति । गुणसादृश्येन या लक्षणा भवति तस्याः सारोपा साध्यवसानेति द्वौ भेदौ । तथैव कार्यकारणभावादिरूपेण या भवति तस्या अपि तावन्तावेव तावेव भेदौ भवतः । उभयोरर्थयोः सजातीयगुणवत्त्वमेव सम्बन्धः । सादृश्यात्सम्बन्धान्तरतश्चेति पञ्चम्यर्थो हेतुत्वावबोधाय । कारिकां व्याचष्टे इमावित्यादि । इमाविति

आरोपाध्यवसानरूपौ । **सादृश्यहेतू** सादृश्यं गुणसाम्यं हेतुः कारणं ययोस्तौ । मुख्यार्थसम्बन्धस्य लक्षणायाः स्वरूपनिर्वाहकत्वेन हेतुत्वमिति विस्तारिकायाम् । **भेदौ** विभागौ । यथा 'गौर्वाहीक' इत्यत्र 'गौरयम्' इत्यत्र च क्रमेणोभयोः प्रथममारोपरूपस्य भेदस्योदाहरणमपरं तु साध्यवसानरूपस्येति । अत्र हि गोसादृश्येन वाहीको लक्ष्यते । ततस्तयोर्विद्यमानभेदस्थगनं ततस्तादात्म्यावगमस्ततो गोनिष्ठ-जाड्यादिगुणानां प्रत्यायनं व्यञ्जनयेति । **अयमिति** वाहीकनिर्देशः । उभयोरति-सादृश्यात्तथा निर्देशो न तु वाहीकत्वेन । वादिभेदेन लक्ष्यविकल्पं निर्दिशति **अत्रेत्यादि** । अत्र गौर्वाहीक इत्यादौ । हि इति अवधारणे । **स्वार्थसहचारिणः** स्वस्य गोशब्दस्यार्थो गोत्वं जातौ शक्तेः तस्य सहकारिणः समानाधिकरणाः । **जाड्यमन्दादयः** जडतामन्दबुद्धितातिष्ठन्मूत्रत्वादयः । **गुणाः** धर्माः । **लक्ष्यमाणाः** वाहीकेऽन्वयाभावेन गोशब्देन लक्षणया बोध्यमानाः । **अपि** । **गोशब्दस्य** । **परार्थाभिधाने** परार्थोऽत्र वाहीकस्तस्याभिधानेऽभिधया बोधने । **प्रवृत्तिनिमित्तत्वं** प्रवृत्तिस्तत्परतास्तस्या निमित्तं कारणं तत्त्वम् शक्यतावच्छेदकत्वम् । **उपयान्ति** प्राप्नुवन्ति । इति । **केचित्** केचन विचक्षणाः । इति । केचिदितिपदं तेषामग्राह्यत्व-बोधकम् । सास्नादिमत्पिण्डत्वार्थस्य गोशब्दस्य वाहीकेन सहानुपपद्यमानसामानाधि-करण्यत्वान्मुख्यार्थबाधः । ततश्च सः स्वार्थसहचारित्वसम्बन्धेन जाड्यादिगुणान् लक्षयित्वा तानेव शक्यतावच्छेदकीकृत्य वाहीकमभिधया बोधयतीति सारम् । गोपदस्य वाहीके सङ्केताभावेनाभिधाभावाज्जाड्यादिगुणानां लक्ष्यत्वादशक्यतया प्रवृत्तिनिमित्तासम्भवाच्च नेदमुपयुक्तमिति नाऽत्र स्वरस । तत्र मतान्तरमाह स्वार्थेति **स्वार्थसहचारिगुणाभेदेन** स्वार्थस्य गोत्वस्य सहचारिणः समानाधिकरणा ये गुणा जाड्यमान्द्यादयस्तेषामभेदेन साजात्येन । **परार्थगता** परार्थो वाहीकस्तस्मिन् गताः स्थिताः । **गुणाः** जाड्यमान्द्यादि धर्माः । **एवकारो** धर्मिव्यवच्छेदनिमित्तकः । न तु धर्म्येवेत्याशयः । तस्याक्षेपेण वाहीकशब्दादेव लाभात् । **लक्ष्यन्ते** लक्षणया बोध्यन्ते । **न तु** गोशब्देन । **परार्थः** वाहीकार्थ । **अभिधीयते** अभिधया बोध्यतेऽन्यलभ्यत्वेन । तेन हि गोगतजाड्यादिसजातीयगुणवान् वाहीक इति लक्षणया बोध्यत इति । **अन्ये** इतरे पण्डिताः । उभयोरेकधर्मिबोधकत्वाभावात्तत्र न सामानाधिकरण्योपपत्तिः । अन्वयालाभेन प्रवृत्ता लक्षणाऽन्वयानुकूलमेवार्थं बोधयेदिति च न तत्र स्वारस्यम् । तथैव अनन्यलभ्यतया धर्मिणोऽलक्ष्यत्वे तीरादेरपि गङ्गापद-लक्ष्यानापत्तिरित्यप्यस्वारस्ये हेतुः । मतान्तरमाह साधारणेति । **साधारणगुणा-श्रयत्वेन** साधारणाः सजातीया ये गुणा जाड्यमान्द्यादयस्तेषामाश्रयत्वेनाधारत्वेन । गोवृत्तिजाड्यादिगुणसमानजाड्यादिगुणाश्रयत्वरूपसम्बन्धेनेति बालबोधिन्याम् ।

परार्थः वाहीकार्थः । एव इति तद्गतगुणरूपान्ययोगव्यवच्छेदायेति बालबोधिनीकाराः न तु साक्षाद् गुणा इति एवकार इति वयम् । **लक्ष्यते** लक्षणया बोध्यते । **इति** । **अपरे** अन्ये । न परे अपरे स्वीया इति बालबोधिनीकाराः । इदमेव वृत्तिकृत्सम्मतमित्याशयः । सिद्धान्तत्वेनोपन्यासात् । अत्रायमाशयः—सास्नादिमत्पिण्डार्थको गोशब्दो वाहीकेन सहान्वयमलभमानो मुख्यार्थबाधेन स्वगतजाड्यादिगुणान् लक्षणया बोधयित्वा तानेव गुणांस्तत्र प्रवृत्तौ निमित्तीकृत्य वाहीकार्थमभिधत्ते इत्येकः पक्षः । तन्मन्दं गोशब्दस्य वाहीकार्थे सङ्केतविरहेणाशक्यत्वात् । गोशब्देनाऽत्र न धर्मी वाहीको बोध्यतेऽपितु ये हि स्वार्थस्य गोत्वस्य सहचारिणो गुणा जाड्यादयस्तेषां साजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते इति द्वितीयः पक्षः । लक्ष्यमाणगुणानां वाहीकेन सहान्वयापत्तेर्भेदोपस्थापकविभक्तिं विना नामार्थयोर्भेदान्वयस्य स्वरूपायोग्यत्वाच्चाभेदस्यायोग्यत्वेन नायमपि पक्षः साधुः । गोशब्देन न तु जाड्यादिस्वार्थसहचारिगुणा अपि तु वाहीकार्थ एव लक्ष्यते सजातीयगुणाधारत्वेनेति तृतीयः पक्षः । अनेन हि वाहीकस्य गोस्वरूपाभेदत्वं लक्ष्यत इत्यस्य बीजम् । साधारणधर्मश्च क्वचिद् गोसादृश्यं क्वचिद् गोसाधर्म्यं क्वचिज्जडत्वादि गोपदप्रवृत्तिनिमित्तम् । तत्र गौरिव वाहीकः इति सादृश्यम् । अत्र सम्मतिमाह **उक्तमिति** । **अन्यत्रेति** ग्रन्थान्तरे तन्त्रवार्तिके । उक्तं प्रतिपादितम् । **च** एव । तदेवोद्धरति **मानान्तरेति** ।

मानान्तरविरोधेन मुख्यार्थस्य अपरिग्रहे अभिधेयाविनाभूतप्रतीतिः लक्षणा उच्यते लक्ष्यमाणगुणैः योगात् वृत्तेः गौणता तु इष्टा इति पदव्यवस्था । **मानान्तरविरोधेन** अन्वयतात्पर्यानुपपत्त्या **मुख्यार्थस्य** शक्यार्थस्य । **अपरिग्रहे**ऽसिद्धे सति । मानान्तरविरुद्धे तु मुख्यार्थस्य 'परिग्रहे' इति पाठे मुख्यार्थस्य परिग्रहे मानान्तरविरुद्धे सति इत्यन्वयः । मुख्यार्थबाधो हि परसम्बन्धेनैव न तु साक्षादेव । **अभिधेयाविनाभूतप्रतीतिः** अभिधेयस्य शक्यार्थस्य अविनाभूता सम्बद्धा न तु व्याप्तिरूपा तथा हि सति 'मञ्चाः क्रोशन्ति' इत्यत्र लक्षणा न स्यान्मञ्चे पुरुषाणां व्याप्त्यसम्भवात् । प्रतीतिः प्रतीयतेऽनयेति करणे क्तिन् । **लक्षणा इति** । **उच्यते** कथ्यते । मानान्तरविरोधेन शक्यार्थस्यानन्वये अभिधेयेन सह साक्षात्सम्बद्धस्यार्थान्तरस्य यया प्रतीतिः सा लक्षणेति । **लक्ष्यमाणगुणैः** ये हि गुणाः स्वार्थसहचारिणो लक्ष्यन्ते तैः । **योगात्** उपस्थितेः । **वृत्तेः** शब्दशक्तेः । **गौणता** गुणाश्रितत्वेन गौणीत्वम् । **इष्टा** मतेति । तु इति लक्षणाव्यवच्छेदाय । अन्यसहस्थितया मुख्यार्थबाधे यया शक्यार्थेन सह साक्षात्सम्बद्धमर्थान्तरं प्रतीयते सा लक्षणा । यदा लक्ष्यमाणगुणयोगस्तदा सा गौणी वृत्तिरिति लक्षणागौण्योर्भेद इति । संवादग्रन्थं विमृशति **अविनेति** । अत्रेति संवादग्रन्थे । **अविनाभावः** इति **सम्बन्धमात्रं** अभिधेयेन सह साक्षात्सम्बन्ध एव

सामीप्यादिरूपः । **नान्तरीयकत्वम्** अन्तरा विना भव इत्यन्तरीयः गहादित्वाच्छः स एवान्तरीयकः न अन्तरीयको नान्तरीयक. सह सुपेति समासो नैकधेतिवत् तस्य भावस्तत्त्वं येन विना यन्न भवति तन्नान्तरीयकं व्याप्तिः । तु इति व्यवच्छेदे । न नैव । तत्र नान्तरीयकत्वे प्रतिपत्तिमाह **तत्त्वे** इति । तत्त्वे तदिति नान्तरीयकं तेन नान्तरीयकत्वे 'मञ्चाः क्रोशन्ति' इत्यादौ मञ्चाः हसन्ति 'गिरिर्दह्यते' इत्यादौ च । **लक्षणा न स्यात्** । अयमाशयः—व्याप्तिर्हि सामान्यतो द्विविधा दैशिकी कालिकी च । मञ्चस्य भूतलावस्थितेर्मञ्चस्थानां तु मञ्चवृत्तितया न पूर्वा तान् विनाऽपि मञ्चप्रतीतेर्न चापराऽपि । मञ्चानामचेतनत्वेन क्रोशनासम्भवेन मुख्यार्थबाधे तस्य तत्रत्यपुरुषादौ लक्षणा । सा च व्याप्त्यभावान्न भवेदिति । ननु क्रोशनकाले तु साऽस्त्येवेत्युच्यते **अविनाभावे** इति अविनाभावे व्याप्तेः सम्भवे तु । च पुनः । आक्षेपेण अनुमानादिना । **सिद्धेः** अर्थलाभात् । **लक्षणायाः न उपयोगः** प्रयोजनमिति । इति । **उक्तः** कथितम् । तेन यथा जातिव्यक्त्योर्नान्तरीयकत्वं तथा वाच्यलक्ष्यार्थयोस्तु न तत्र तु अभिधेयेन साक्षात्सम्बन्ध एवाभीष्ट इति ग्रन्थाशयः । अनेन सिध्यति यन्न हि गुणानां प्रवृत्तिनिमित्तत्वे न च तेषां लक्ष्यत्वे एव गौणी भवत्यपि तु तैर्योग एव सा भवतीति तृतीयस्य पक्षस्य साधुत्वमिति । कारिकागतं 'सम्बन्धान्तरतः' इति पदं व्याचष्टे उदाहरणमुखेन **आयुरित्यादि** । 'आयुर्घृतम्' 'आयुरेवेदम्' इत्यादिवाक्येषु । **सादृश्यात्** गुणसाजात्याद् । **अन्यत्** इतरत् । यत् कार्यकारणभावादि कार्यं फलितं कारणं साधकम् । एवमेव जन्यजनकभावोऽपि । तदेव सम्बन्धान्तरमिति । एवमादौ अनन्तरोदाहरणयोः **कार्येति** कार्यकारणभावो जन्यजनकभावादिर्लक्षणं स्वरूपं यस्य स एव पूर्वो हेतुर्ययोस्ते तथाविधे कार्यकारणभावादिसाधिते । **आरोपाध्यवसाने** आयुर्घृतमित्यत्र शुद्धसारोपा आयुरेवेदम् इत्यत्र शुद्धाध्यवसानेति । आदिपदात् 'आयुर्घृतं यशस्त्यागोभयश्चौरं सुखं क्रिया । वैरं द्यूतं गुरुर्ज्ञानं श्रेयस्तीर्थनिषेवणम्' ॥ इत्यादावपि । तथा हि 'आयुर्घृतम्' इत्यत्र शुद्धसारोपत्वमुक्तम् । तत्रायुर्दीर्घकालजीवनम् । घृतं तज्जनकमिति तयोर्जन्यजनकभावसम्बन्धः । आयुर्जनकत्वाद् घृतमायुःशब्देन लक्ष्यते । तेनायुरभिन्नं घृतमित्यर्थः । शुद्धत्वञ्च गुणायोगादेव सारोपत्वं घृते आयुषोऽभिन्नत्वेन कल्पनात् । 'आयुरेवेदम्' इत्यत्रेदंशब्देन पुरोवर्तित्वरूपेणैव धृतादेरुपस्थितिर्न तु घृतत्वादिरूपेणेति न तत्र विषयवाचकपदोपस्थितिरिति साध्यवसानत्वम् । तथैव 'आयुः पिब' इत्यादावपि । अत्र हि जन्यजनकाभावादिसम्बन्धहेतुभूतत्वमेव तथात्वप्रयोजकं न तु तस्य विद्यमानतामात्रम् । तथा सति तु 'गौर्वाहीकः' इत्यादौ सम्बन्धान्तररूपैकबुद्धिविषयत्वादेः सत्त्वात् शुद्धात्वमापतेत्तथैव आयुर्घृतमित्यत्र प्रमेयत्वादिना सादृश्यसत्त्वाद

गौणीत्वम् । दीर्घकालजीवनार्थस्यायुषो घृतेन सहान्वयानुपपत्तेर्मुख्यार्थबाधेन लक्षणाया विषयत्वमुत्पद्यते । तत्र आयुर्घृतयोर्जन्यजनकभावरूपसादृश्येतरसम्बन्धस्य पूर्ववर्तिहेतुत्वेन घृतं ह्यायुर्जनकत्वादायुःशब्देन लक्ष्यते, यतो ह्यायुरभिन्नं घृतमिति बोध्यते । शुद्धभेदाभ्यां सह गौणभेदयोरभेदं दर्शयन् तत्र रूढ्यभावेन प्रयोजनविवेकं प्रपञ्चयति अत्रेत्यादिना । अत्रेति अनन्तरोक्तेषु 'गौर्वाहीकः' 'गौरयम्' 'आयुर्घृतम्' 'आयुरेवेदम्' इत्युदाहरणेषु । गौणभेदयोः गौणसारोप-गौणसाध्यवसानरूपयोः 'गौर्वाहीकः' 'गौरयम्' इत्येतयोः । मध्ये आद्ये इति यावत् । भेदे गोवाहीकयोर्वैधर्म्ये सति । अपि इति तन्नियामकत्वेन । ताद्रूप्यप्रतीतिः ताद्रूप्यं तादात्म्यं तस्य प्रतीतिर्भासः । प्रयोजनं फलमिति । गोत्ववाहीकत्वरूपभिन्नधर्मप्रकारकोपस्थितावपि तयोः सादृश्यातिशयमहिम्ना ताद्रूप्यप्रत्ययस्तत्र प्रयोजनं तदाश्रित्य लक्षणा प्रवृत्ता । तथैवान्त्ये गौरयमित्यत्र । सर्वथैव गोवाहीकत्वयोर्भेदप्रतीतिं विनैव । विषयवाचकवाहीकपदानुपादानेन वाच्यार्थबोधवेलायामपि शब्दजभेदकधर्मानुपस्थितेर्हेतोरिति । अभेदावगमः अभेदस्य तादात्म्यस्य अवगमः प्रतीतिरिति । प्रयोजनं व्यङ्ग्यमेवेति । शुद्धोदाहरणयोरपि तन्निरूपयति शुद्धेत्यादि । शुद्धभेदयोः शुद्धसारोपशुद्धसाध्यवसानरूपत्वेनोदाहृतयोः 'आयुर्घृतम्' 'आयुरेवेदम्' इत्येतयोः । तु इति तद्विपरीतम् । आद्ये इति यावत् । अन्यवैलक्षण्येन अन्येभ्यो जनकान्तरेभ्यः क्षीरादिभ्यो वैलक्षण्यं वैसादृश्यं तेन । कार्यकारित्वादि जन्यजनकत्वादिभावः प्रयोजनमिति । अन्त्ये तु । अव्यभिचारेण घृतमायुष्यं प्रति क्षीरादिवन्न व्यभिचरतीति तेनैकरूप्येण । चेति समुच्चये । प्रयोजनमिति । ग्रन्थे कार्यकारणभावादि इत्यत्र आदिपदं यदुक्तं तत्सूचिततदितरसम्भाव्यसम्बन्धाद् विशदीकर्तुमुपक्रमते क्वचिदित्यादिना । क्वचित् कुत्रचित्तु तथा तात्पर्योपपत्तौ सति । तादर्थ्यात् तादर्थ्यरूपोपकार्योपकारकभावसम्बन्धात् । उपचारः लक्षणाऽर्थात् लक्षणया सामानाधिकरण्येन प्रयोग इति । तदुदाहरति यथेति । प्रस्तौति इन्द्रार्था इति । इन्द्रार्था इन्द्रपूजानिमित्तका या स्थूणा स्तम्भः सा इन्द्रः इति 'स्थूणा इन्द्रः' इति । अत्र हि आरोप्यमाणः स्थूणाः आरोपविषय इन्द्र इति सारोपा लक्षणा अत्रेन्द्रसम्बन्धेन स्थूणा इष्टप्रदत्वं प्रयोजनम् । यज्ञादौ स्थूणायामिन्द्रं सम्पूज्य सा तस्मै निवेद्यते इति परम्परा । सम्बन्धान्तरमुदाहरणमुखेनोपस्थापयति क्वचिदित्यादि । क्वचित् कुत्रचित्तु । स्वस्वामिभावात् स्व-स्वामिभावसम्बन्धात् उपचार इति । उदाहरति यथेति । प्रस्तौति राजेति । राजकीयः राज्यसम्बद्धो राजसेवायां नियुक्तो वा । पुरुषः जनः । राजा इति । राजकीये हि पुरुषे गच्छति राजाऽसौ गच्छति इति पुरुषराज्ञोः स्व-स्वामिभावसम्बन्धेन राज्ञः पुरुषे आरोप इति

उपचारविषयः। पुरुषस्यापि राजवत् अलङ्घनीयाज्ञत्वं प्रयोजनम्। तथैव सम्बन्धान्तरमपि प्रस्तौति क्वचिदित्यादिना। क्वचित् कुत्रचित्तु यत्र तदपेक्षा। अवयवेति अवयवमङ्गमवयव्यङ्गीतद्भावात् उपचार इति शेषः। उदाहरति यथेति। व्याचष्टे प्रस्तौति च अग्रेति। अग्रहस्तः अग्रं च तद्धस्तश्चेति कर्मधारयः। इत्यत्र कथनेऽस्मिन्। अग्रमात्रे अग्रभागमात्रे। अवयवे अङ्गे। हस्तः इति। हस्तशब्दस्य अवयवावयविभावसम्बन्धेनाग्रमात्रे लक्षणा। प्रयोजनञ्चास्य अग्रभागमात्रेण हस्तव्यापारं करोतीति बलाधिक्यमेव। ये खलु अग्रहस्त इत्यखण्ड एव हस्ताग्रवाचक इति वा हस्तस्याग्रमिति विगृह्य अग्रशब्दस्य आहिताग्न्यादिपाठात् पूर्वनिपातं वा राजदन्तादिपाठाद्धस्तशब्दस्य परनिपातं मन्यन्ते तेषां कृते 'पीता कार्पटिकैः गङ्गा' इत्युदाहरणम्। तत्र गङ्गापदं गङ्गावयवे लाक्षणिकम्। पुनः सम्बन्धान्तरादुपचारं व्याचष्टे क्वचिदिति क्वचित्। तात्कर्म्यात् तत्कर्मकारित्वात्। उपचार इति शेषः। उदाहरति यथेति। प्रस्तौति अतक्षा इति। अतक्षा अभ्यस्तगृहनिर्माणो गोपालादिः। तक्षा वर्द्धकिः। तक्षेति जातिविशेषावच्छिन्ने रूढम्। नैपुण्यञ्च प्रयोजनम्। व्याख्याता लक्षणा। सा हि शक्यसम्बन्ध एव तात्स्थ्यादिनिमित्तिका। तात्स्थ्यादि च तात्स्थ्यताध्दर्म्यतादर्थ्यतत्सामीप्यतत्साहचर्याणि। यथा मञ्चा हसन्ति ग्रामो रोदिति गिरिर्दह्यते इत्यादौ तात्स्थ्यात्। सिंहो माणवकः आदित्यो यूप इत्यादौ ताध्दर्म्यात्। स्थूणा इन्द्र इति तादर्थ्यात्। गङ्गायां घोष इत्यत्र सामीप्यात्। 'यष्टीः प्रवेशय' इत्यत्र साहचर्याच्चेति बालबोधिन्यां सङ्गृहीतं नागोजीभट्टवाक्यम्।

[वि० वृ०] इमावारोपाध्यवसानरूपौ भेदौ सादृश्यात्सम्बन्धाद् गौणौ। सम्बन्धान्तरतस्तु शुध्दौ। तत्र गौणौ दर्शितौ। शुध्दौ यथा आयुर्घृतम् आयुरेवेदमित्यादौ। अत्र सादृश्यादन्यत्कार्यकारणभावादिसम्बन्धान्तरं तत्पूर्वके आरोपाध्यवसाने। एवं 'हरिभक्तिर्महत्सङ्गः' 'हरिभक्तिरेवायमि'त्यादौ च। अस्मिन् भेदद्वयेऽन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि फलम्। क्वचित्तादर्थ्यात्सम्बन्धादुपचारः। यथा इन्द्रार्था स्थूणा इन्द्रः। कृष्णसेवार्थो व्यापारः कृष्णसेवा। अत्रेष्टार्थप्रदत्वम्। क्वचित्स्वस्वामिभावात्। यथा राजसेवको राजा। हरिसेवको हरिः। अत्रानुल्लङ्घ्याज्ञत्वादि। क्वचिदवयवावयविभावात्। यथा हस्ताग्रे हस्तः। जगद्विष्णुः। अत्र हस्तव्यापारकारि सामर्थ्यादि। क्वचित्तात्कर्म्यात्। यथा ब्राह्मणोऽपि तक्षाऽसौ। ईश्वरोऽपि क्षत्रियोऽसौ। अत्र तत्कर्मनैपुण्यम्।

**[कारिका] ……………लक्षणा तेन षड्विधा ॥१२॥**

**[वृत्तिः] आद्यभेदाभ्यां सह ॥१२॥**

[कमला०] ननु गौणशुध्दचतुष्के प्रक्रान्ते कथं षड्विधोक्तिरत आह आद्येति। उपादानलक्षणलक्षणाभ्यामित्यर्थः। केचित्तु लक्षणैव षड्विधा न गौणी। तेन तत्सिध्दि-जाति-सारूप्य-प्रशंसा-लिङ्ग-भूमभिः षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पितेति भट्टोक्तम्। गौण्याः षड्विधत्वमयुक्तम्। तत्सिध्दिसारूप्योर्भूमलिङ्ग-समवाययोश्च भेदाभावात् व्यतिरेककारणस्य सम्बन्धविशेषत्वात्सादृश्यस्य च लक्ष्यता-वच्छेदकत्वेन वृत्तिभेदाप्रयोजकत्वादित्याहुः। फलन्तूपादानलक्षणाभ्यामर्थान्तर-सङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्ययोर्गौणीभ्याञ्च रूपकातिशयोक्त्योः शुध्दाभ्याञ्च हेत्वलङ्कारस्य सिध्दिरिति लक्षणाभेदस्य व्यङ्ग्यधीफलत्वाद् व्यङ्ग्यभेदे भेदमाह सा चेति। न च षड्विधात्वहानिस्तत्र प्रयोजनवत्या विभागात्।

[सरि०] लक्षणोपसंहाराय तन्निर्दिशककारिकामवतारयति **लक्षणेति**। तेन लक्षणा षड्विधा इत्यन्वयः। तेन सारोपासाध्यवसानयोः प्रत्येकं गौणशुध्दभेदेन चातुर्विध्यात् उपादानलक्षणलक्षणाभेदाभ्याञ्च सह। **लक्षणा** प्रयोजनाश्रिता शक्यसम्बन्धवृत्तिः। **षड्विधा** षट्प्रकारा भवतीति शेषः। तदेव व्याचष्टे आद्येति। आद्यभेदाभ्यामाद्यौ आदिमौ यौ भेदौ उपादानलक्षणाजनितौ विभागौ ताभ्यां **सह** तावपि समावेश्य लक्षणायाः षाड्विध्यमिति। तच्चेत्थम्।

१. प्रयोजनहेतुका स्वसिध्दिनिमित्तकपराक्षेपलक्षणा उपादानलक्षणा एका। यथा 'कुन्ताः प्रविशन्ति' इत्यत्र कुन्तशब्देन तध्दारकपुरुषाक्षेपः। प्रयोजनञ्च सद्यःप्रहारतत्परत्वम् प्रहारकाठोर्यं वा।

२ प्रयोजनहेतुका परनिमित्तकस्वसमर्पणलक्षणा लक्षणलक्षणा द्वितीया। यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य गङ्गात्वविशिष्टतटार्थे प्रयोगः। प्रयोजनं शैत्यपावनत्वातिशयः।

३. प्रयोजनहेतुका गौणी सारोपा विषयिविषयोभयोपस्थितिलक्षणा इति तृतीया। यथा गौर्वाहीकः इत्यत्र गुणसाजात्याश्रयेण गोपदेन वाहीकार्थो लक्ष्यते। प्रयोजनं जाड्यमान्द्यातिशयः।

४. प्रयोजनहेतुका गौणी साध्यवसाना निगीर्णविषयलक्षणा इति चतुर्थी। यथा 'गौरयम्' इत्यत्र। प्रयोजनञ्च नितान्तभेदावगमः।

५. प्रयोजनवती शुध्दा सारोपा कार्यकारणभावादिरूपा इति पञ्चमी। यथा 'आयुर्घृतम्' इत्यत्र आयुर्जनकत्वाद् घृतमायुशब्देन लक्ष्यते। प्रयोजनञ्च घृतस्यान्यवैलक्षण्येन कार्यकारित्वख्यापनम्।

६. प्रयोजनहेतुका शुद्धसाध्यवसाना लक्षणेति षष्ठी। यथा आयुः पिबति इत्यत्र आयुःशब्देन घृतार्थो लक्ष्यते। प्रयोजनञ्चाव्यभिचारेण कार्यकारित्व-द्योतनम्।

मूलतो लक्षणा द्विविधा रूढिहेतुका प्रयोजनहेतुका च। तत्र प्रयोजनहेतुका द्विविधा शुद्धा गौणी च। आद्या चतुर्विधा उपादानलक्षणा लक्षणलक्षणा सारोपा साध्यवसाना चेति। गौणी तु सारोपा साध्यवसाना चेति द्विविधैव। तेन प्रयोजनाश्रिता लक्षणा षड्विधेति। शब्दान्तरेण कथने शुद्धाया द्वावेव भेदौ उपादान-लक्षणनिमित्तकौ। उपादानलक्षणायाः पुनर्द्वौ भेदौ सारोपा साध्यवसाना चेति। यथा 'कुन्ताः पुरुषाः प्रविशन्ति' 'कुन्ताः प्रविशन्ति' इति। लक्षणलक्षणाया अपि तावन्तावेव भेदौ यथा आयुर्घृतम्' 'आयुरेवेदम्' इत्यादौ। गौण्याः सारोपा-साध्य-वसानाभेदाभ्यां भवति लक्षणायाः षाड्विध्यम्। रूढिलक्षणायाः कथं न गणनेति न चिन्त्यं प्रयोजनवत्या एव प्रसङ्गात् तस्या एव व्यङ्ग्ये उपयोगाच्च। यथा हि उपादानलक्षणाया अर्थान्तरसङ्क्रमितवाच्ये लक्षणलक्षणाया अत्यन्ततिरस्कृतवाच्ये गौणसारोपाया रूपकालङ्कारव्यङ्ग्ये गौणसाध्यवसानायाः प्रथमातिशयोक्तौ शुद्ध-सारोपायाश्चतुर्थातिशयोक्तौ चरमायाश्च सामर्थ्यातिशयरूपव्यङ्ग्ये उपयोग इति बालबोधिन्यां स्पष्टम्। यत्तु कमलाकरभट्टाः 'शुद्धाभ्याञ्च हेत्वलङ्कारसिद्धिः' इति सारबोधिनीकारेण सह संवदते तच्च ग्रन्थकृता हेत्वलङ्कारस्य स्वयमेव खण्डितत्वा-च्चिन्त्यमिति बालबोधिनीकाराः। अत्र केचिद् विशिष्य चण्डीदासादयः। गौण्यामपि उपादानलक्षणरूपभेदद्वयसम्भवात्प्रयोजनवत्या अपि षाड्विध्ये वैमत्यं भजन्ते। तन्मतेन गोवाहीकसाधारण्येन 'गाव एते समानीयन्ताम्' 'गावः समानीयन्ताम्' इति सारोपसाध्यवसानयोरुदाहरणद्वयसम्भवः। तेन षड्विधेत्यस्याशयो न प्रयोजन-वत्याः षाड्विध्यमेवापितु षड्भिरुपाधिभिः कल्पिता विधाः प्रकारा यस्यामिति आशयः इति। तन्नेति बालबोधिनीकाराः। 'शुद्धैव सा' इत्यत्र एवकारेण गौण्या तथाविधभेदसम्भवनिराकरणात् 'सारोपाऽन्या तु' इत्यत्र तुकारेणापि तत्सम्भावना-निरासात्। अनालोचितेऽपि एवतुपरद्वये स्वसादृश्यस्य स्वावृत्तित्वेन तत्रोपादानत्व-सम्भवात्सम्बन्धान्तरेण च गौणत्वायोगादुदाहरणद्वयेऽपि न लक्षणसङ्गतिः। 'रूढितोऽथ प्रयोजनात्' इत्यत्रोक्ते रूढिप्रयोजने न विभाजकत्वेन प्रस्तुतेऽपितु हेतुत्वेनैवान्यथा पुनरुक्तिप्रसङ्गः स्यादिति स्पष्टं प्रदीपे।

[वि० वृ०] सङ्कलयति—

तेनोपादानादिप्रकारेण षोढा फलवती। इहोपादानलक्षणादिषु भेदेष्वाद्याभ्या-मर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यौ मध्याभ्यां रूपकप्रथमातिशयोक्ति-शेषाभ्यां हेत्वलङ्कारश्च निरूपयिष्येते।

[वृत्तिः] सा च—

[कारिका] व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।

[वृत्तिः] प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ।

[कमला०] प्रयोजनवत्यां कुतो व्यङ्ग्यत्वमत आह प्रयोजनं हीति । तच्च वक्ष्याम इति भावः ।

[सरि०] एवं लक्षणायाः प्रयोजनहेतुकायाः उपाधिकृतान् षड्भेदान् सयुक्तिकं प्रतिपाद्य तस्याः व्यञ्जनकृतभेदनिरूपककारिकावतारणायोपक्रमते सा चेत्यादिना । सा तथाविधा लक्षणा । च पुनः इति । कारिकामवतारयति व्यङ्ग्येनेत्यादि । रूढौ व्यङ्ग्येन रहिता प्रयोजने तु सहिता भवतीत्यर्थः । सा हि मुख्यबाधादि-हेतुत्रयाधारा लक्षणा । रूढौ समुदायशक्तिमात्रसापेक्षत्वं रूढिस्तस्याम् । व्यङ्ग्येन व्यङ्ग्यार्थेन । रहिता शून्या । प्रयोजने हेतुत्वेन प्रयोजनस्य सत्त्वे तु इति रूढिहेतुकाव्यवच्छेदस्तद्विपरीतमित्याशयः । व्यङ्ग्येन सहिता विशेषिता । भवतीति शेषः । तदेवमव्यङ्ग्या सव्यङ्ग्या चेति द्विविधा लक्षणा । तत्र रूढिलक्षणाऽव्यङ्ग्या प्रयोजनवती तु सव्यङ्ग्येति । कारिकां व्याचष्टे प्रयोजनमिति । प्रयोजनवत्यां कथं व्यङ्ग्यनियम इत्युच्यते प्रयोजनं यदुद्दिश्य लक्षणाऽपेक्ष्यते तत् । व्यञ्जन-व्यापारगम्यम् व्यञ्जनं शक्यलक्ष्यव्यतिरिक्तार्थप्रत्यायनं तन्निमित्तको यो व्यापारो वृत्तिर्व्यञ्जना तेन गम्यं बोध्यम् व्यञ्जनावृत्तिसाधनीयम् । एवेति तदतिरिक्त-गम्यत्वव्यवच्छेदः । तेन प्रयोजनव्यङ्ग्ययोरेकार्थत्वादिति । यदेव प्रयोजनं तदेव व्यङ्ग्यार्थो यो हि प्रतीयमानार्थः स एव प्रयोजनमिति भावः । प्रयोजनं तु न मुख्यार्थो न च लक्ष्यार्थ एवापितु प्रतीयमानार्थ एव । तच्च रूढौ न सम्भवति इति । उक्तमेव—'निरूढा लक्षणा काश्चित् सामर्थ्यादभिधानवत् ।' इति ।

[वि० वृ०] रूढिलक्षणायां न किञ्चिद् व्यङ्ग्यम् । फलवत्यां त्वस्ति तत् ।

[कारिका] तच्च गूढमगूढं वा………… ।

[वृत्तिः] तच्चेति व्यङ्ग्यम् । गूढं यथा—

मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं,
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं,
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥१॥

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१०॥

अत्रोपदिशतीति अनायासेन शिक्षादानमभिधेयवत्स्फुटं प्रतीयते ।

[कमला०] तत्रापि व्यङ्ग्यभेदाद् भेदमाह तच्चेति । वाशब्दश्चार्थे । तेन षड्विधाऽपि गूढागूढभेदाद् द्वादशविधेत्यर्थः । चस्त्वर्थे । गूढं सहृदयमात्रवेद्यम् । अगूढं सहृदयेतरैरपि वेद्यम् । सहृदयत्वं काव्यवासनापरिपक्वबुद्धित्वम् । मुखमिति । स्मिते पुष्पधर्मविकासबाधात्प्रकाशो लक्ष्यः । मनोहारित्वं व्यङ्ग्यम् । वशितः स्वीकृतो वक्रिमा येन कटाक्षयुक्तमित्यर्थः । मतिरपास्तसंस्था निरस्तमर्यादाऽनेकविषयत्वात् । जघनमंसम्बन्धे आलिङ्गनविशेषे सुरतरूपे सङ्घट्टने निपुण चतुरं विपुलत्वात् । बन्धो दृशोर्निबन्धो वा यथा कुचोच्चतयांऽसे दृशोर्बन्धस्तथा जघनेऽपीति भावः । प्रकृत्यैवेन्दुवदना तत्रापि यौवनाङ्कुरस्येदृगुज्जृम्भणे यूनां पतितोऽनर्थः । परिपाके तु किं स्यादिति वर्तेति सूच्यते । एवं वशिते स्वाधीनत्वं लक्ष्यम् । समुच्छलिते बाहुल्यम् अंसे जघने च दृष्टेर्निबन्धाद् दृश्यत्वं अपास्तेऽधीरत्व मुकुलिते काठिन्य उद्धुरे रम्यत्वं मोदनेऽनर्गलत्वञ्च लक्ष्यम् । तदतिशयः सम्भागश्च व्यङ्ग्यः । सहृदयैर्वेद्यत्वाद् गूढः । श्रीपरिचयादिति मूर्खा अपि धनसम्बन्धाच्चतुरचेष्टितानां ज्ञातारो भवन्ति । यथा यौवनस्य मदो गर्वः स्त्रीणां ललितानि विभ्रमाच्छिक्षयतीत्यर्थः । कामिनीनामिति चतुर्थ्यर्थे वा षष्ठी । 'विभ्रमो ललितं तथे'त्यमरः । उपदेशो वाग्व्यापारः अचेतने मदे बाधात्प्रकाशं लक्षयति । आनायासादानञ्च व्यङ्ग्यं सर्वजनवेद्यत्वादगूढम् ।

[सरि०] सव्यङ्ग्यायामपि व्यङ्ग्यभेदेन द्वैविध्यनिर्देशककारिकांशमवतारयति तच्चेति । तत् इति व्यङ्ग्यार्थः । च पुनः तु इत्यर्थे वा । गूढं सहृदयमात्रवेद्यम् । अगूढ सर्वजनवेद्यम् । वा इति समुच्चयार्थे । अयमाशयः—व्यङ्ग्यं हि द्विविधं गूढमगूढञ्च । तेन हि लक्षणाऽपि द्विप्रकारा गूढव्यङ्ग्याऽगूढव्यङ्ग्या च । तदेषाऽनन्तरोक्तोपाधिभिः षड्विधा लक्षणा पुनः प्रत्येकं व्यङ्ग्यस्य गूढागूढत्वभेदेन द्विविधेति द्वादशविधा प्रयोजनवती लक्षणा । तच्च गूढव्यङ्ग्योपादानलक्षणा अगूढव्यङ्ग्योपादानलक्षणा चेत्यादिक्रमेणेति । अव्यङ्ग्या निरूढलक्षणा चैकेति मिलित्वा त्रयोदशविधा लक्षणेति । गूढव्यङ्ग्या षड्विधा तावत्य एवागूढव्यङ्ग्या एकाऽव्यङ्ग्येति पर्यवसितोऽर्थः । कारिकां व्याख्याति तदिति । तत् इति व्यङ्ग्यम् प्रतीयमानार्थः । चेति पुनः । गूढव्यङ्ग्योदाहरणायोपक्रमते । गूढं यथेति । प्रस्तौति मुखमिति । मुखम् विकसितस्मितम् प्रेक्षितम् वशितवक्रिम गतिः समुच्छलितविभ्रमा मतिः

अपास्तविभ्रमा उरः मुकुलितस्तनम् अंसबन्धोद्‌धुरम् जघनम् इन्दुवन्दनातनौ तरुणिमोद्गमः मोदते बत इति पदव्यवस्था। **मुखमाननं विकसितस्मितं** विकसितं प्रसृतं स्मितमीषद्धास्यमीषद्विकसिताननस्पन्दिताधरादिलक्षणं यस्मिस्तत्। **प्रेक्षितं** विलोकनम्। भावे क्तः। **वशितवक्रिमं** वशितः स्वाधीनीकृतो वक्रिमा वक्रमास्तिर्यग्गामित्वं येन तत्। **गतिः** गमनम्। **समुच्छलितविभ्रमा** समुच्छलिता नितान्तप्रादुर्भूताः स्फुटा विभ्रमा हावाः यस्यां सा। **मतिः** बुद्धिः। **अपास्तसंस्था** अपास्ता व्यक्ता शिथिलीकृता वा संस्था एकत्रावस्थानं यया सा विचारपरेति। **उरः** वक्षःस्थलम्। **मुकुलितस्तनं** मुकुलितौ ईषदुत्थितौ स्तनौ कुचौ यस्मिस्तत्। **जघनं** नितम्बपुरोभागः ऊरुप्रदेश इति। **अंसबन्धोद्‌धुरम्** अंसबन्धोऽविभक्तत्वं तेनोद्‌धुरमुत्कृष्टं पीनमिति यद्वा अंसबन्धः सुरतासनविशेषस्तन्निमित्तमुद्‌धुरमुपयुक्तम्। इति। **इन्दुवदनातनौ** इन्दुवदनायाश्चन्द्रमुख्यास्तनौ शरीरे। **तरुणिमोद्गमः** तरुणिम्नस्तारुण्यस्य यौवनस्य उद्गमः आविर्भावः। **मोदते** विलसतीति। **बतेति** पाठे हन्तेति। विदग्धयुवजनानां खेदकारित्वात्। वृत्तं पृथ्वी। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति। अत्र हि कुसुमधर्मस्य विकासस्य स्मिते चेतनधर्मस्य वशीकरणस्य प्रेक्षिते मूर्तद्रवधर्मस्य ऊर्ध्वगतिविशेषरूपसमुच्छलनस्य विभ्रमे चेतनधर्मस्य संस्था (मर्यादा) त्यागस्य मतौ पुष्पधर्मस्य मुकुलितत्वस्य स्तनयोः चेतनधर्मस्योद्‌धुरत्वस्य जघने चेतनधर्मस्य मोदस्य यौवनोद्गमे बाधेन हि विकासेन सातिशयत्वमसङ्कुचितत्वसम्बन्धात् वशीकरणेन स्वाधीनत्वमभिमतविशेषप्रवृत्तिसम्बन्धात् समुच्छलनेन बाहुल्यं प्रयोज्यप्रयोजकभावसम्बन्धात् संस्थापासनेनाधीरत्वं हेतुहेतुमद्भावसम्बन्धात् मुकुलितत्वेन काठिन्यं निविडावयवत्वसम्बन्धात् उद्भिन्नत्वं वा उद्‌धुरत्वेन रतियोग्यत्वं भारसहनक्षमत्वसम्बन्धात् मोदेनोत्कर्षो जन्यजनकभावसम्बन्धात् क्रमेण लक्ष्यन्ते। तत्र प्रयोजनरूपानि व्यङ्ग्यानि क्रमशः सौरभत्वं युक्तानुरागित्वं मनोहारित्वं मौग्ध्यहानेनानुरागातिशयत्वम् आलिङ्गनयोग्यत्वं रमणीयत्वं स्पृहणीयत्वञ्च। एतानि हि सहृदयस्य भासन्त इत्यस्य गूढव्यङ्ग्यत्वम्। यौवनोद्गमे एवैतादृश्यास्तत्पाके तु तदतिशयत्वमेव निश्चितमिति वाक्यौघतात्पर्यम्।

अगूढव्यङ्ग्योदाहरणायोपक्रमते अगूढं यथेति। प्रस्तौति **श्रीति**। जडा अपि श्रीपरिचयात् विदग्धचरितानाम् अभिज्ञा भवन्ति यौवनमद एव कामिनीनाम् ललितानि उपदिशति इत्यन्वयः। **जडाः** मूर्खाः। **अपि** किमुत किञ्चिदभिज्ञाः। **श्रीपरिचयात्** श्रियो लक्ष्याः सम्पदः परिचयात् प्रथमसम्बन्धादेव। **विदग्धचरितानां** विदग्धानामभिज्ञानां चरितानि तेषाम्। कर्मणि षष्ठी। **अभिज्ञाः**

ज्ञातारः। भवन्ति जायन्ते। तथा हि **यौवनमदः** यौवनस्य तारुण्यस्य मदः उत्कर्षः। **एव** इति नान्ये। **कामिनीनां** रमणीनां चतुर्थ्यर्थे षष्ठी तेन कामिनीभ्यः। **ललितानि** विलासान् हावभावविव्वोकविभ्रमादीन्। बहुवचनं तत्कक्षेतरविलासानां ग्रहणार्थम्। **उपदिशति** शिक्षयति। सम्पल्लाभेन मूर्खा अपि पण्डितानां चरितस्य ज्ञातारो भवन्ति, यथा हि तारुण्यभर एव रमणीभ्यो विलासादीन् शिक्षयतीत्याशयः। अर्थान्तरन्यासः। लक्ष्ये लक्षणं घटयति **अत्रे**त्यादि। **अत्र** अस्मिन् काव्ये। **उपदिशति** इति पदे चेतनधर्मस्योपदेशस्याचेतने यौवनमदे बाधात् सामान्यविशेषभावसम्बन्धेन आविष्कारमात्रं लक्ष्यम्। अनायासेनैव ललितादिज्ञानञ्च व्यङ्ग्यम्। किन्तु तस्य नितान्तोत्तानत्वेनागूढत्वं सर्वजनविषयत्वञ्चेति अगूढव्यङ्ग्यकाव्यमिदं गुणीभूतव्यङ्ग्यभेदेऽन्तर्भावितमिति। तदेवाह **अनायासेने**ति। **अनायासेन** विशेषपरिश्रमं विनैव। **शिक्षादानं** अभिज्ञानग्रहणम्। **अभिधेयवत्** शक्यार्थ इव। **स्फुटं** स्पष्टत्वेन। **प्रतीयते** ज्ञानविषयीभवति इति।

[वि० वृ०] तच्च व्यङ्ग्यम्। तत्र गूढं यथा—

उत्कीर्णैरिव चित्रितैरिव नवोद्भिन्नैरिवोद्यद्वयः
कुन्दे विभ्रमितैरिव स्मरकलाशाणे निशातैरिव।
मग्नोन्मग्नतया रसैरिव भृशं लावण्यवापीजले
केयं केलिकल्पनिधिः सुबलं मे चेतो हरत्यङ्गकैः॥

अत्रोत्कीर्णादिपदानि तत्सदृशेषु लाक्षणिकानि। तेषां व्यङ्ग्यं निगूढं प्रतीयते। तथा हि—उत्कीर्णैरिति निर्माणसौष्ठवम्। चित्रितैरिति पादादिगतरागादिप्रद्योतः। नवोद्भिन्नैरिति सौकुमार्यम्। उद्यदिति सुवलितत्वम्। स्मरेति हृद्भेदकत्वम्। मग्नेति लावण्याधिक्यमिति गूढमेव।

अगूढं यथा—

गोप्यस्तपः किमचरन् यदमुष्यरूपं
लावण्यसारमसमोर्ध्वमनन्यसिद्धम्।
दृग्भिः पिबन्त्यनुसवाभिनवं दुराप-
मेकान्तधाम यशसः श्रिय ऐश्वरस्य॥

अत्र दृग्भिः पानस्यासम्भवात्सादरावलोको लक्ष्यते। गाढासक्तिर्व्यङ्ग्या। सा च वाच्यवत्प्रतीतेरगूढा।

**[कारिका] ............तदेषा कथिता त्रिधा ॥१३॥**

**[वृत्तिः] अव्यङ्गचा गूढव्यङ्गचा अगूढव्यङ्गचा च ॥१३॥**

[कमला०] × × ×

[सरि०] व्यङ्ग्याभावभावतो लक्षणाया ये भेदास्तदुपसंहाराय सम्बद्धकारिकामवतारयति तदित्यादि। तत् तस्मात्कारणात् अव्यङ्ग्यत्वगूढव्यङ्ग्यत्व।गूढव्यङ्ग्यत्वरूपभेदात्। एषा लक्षणा मुख्यार्थबाधादिहेतुत्रयभावभावितवृत्ति। त्रिधा त्रिप्रकारात्मिका। कथिता सप्रपञ्चं निरूपितेति: रूढौ व्यङ्ग्यरहितत्वेन प्रयोजने व्यङ्ग्यस्य गूढत्वागूढत्वाभ्याञ्चेति। तदेव व्याचष्टे—अव्यङ्ग्येत्यादि।

[वि० वृ०] अगूढा गूढव्यङ्ग्याऽगूढव्यङ्ग्या चेति लक्षणा नामवृत्तिस्त्रिधा।

**[कारिका] तद्भूर्लाक्षणिकः............ ।**

**[वृत्तिः] शब्द इति सम्बध्यते। तद्भूस्तदाश्रयः।**

[कमला०] लक्षणामुक्त्वा लाक्षणिकमाह तद्भूरिति। विशेष्यापेक्षायामाह शब्द इति। सम्बध्यते स्याद्वाचक इत्यतोऽध्याह्रियते न त्वनुषज्यते 'व्यवायान्नानुषज्यते' इति न्यायविरोधात्। लक्षणातः शब्दोत्पत्तेस्त्वर्थस्य बाधादाह तदाश्रय इति।

[सरि०] लक्षणाया उपाधिमुक्त्वा तदाश्रयनिर्देशककारिकामवतारयति तदित्यादि। तद्भूः तस्या लक्षणाया भूर्भूमिराश्रयः। लाक्षणिकः तदाख्यः। शब्द इति शेषः। कारिकां व्याचष्टे शब्द इत्यादि। लाक्षणिकस्य विशेष्यत्वेन शब्द इति। सम्बध्यते पूर्वकारिकातः 'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा' इत्येतस्मादध्याह्रियते न त्वत्रानुषज्यते तथा सति 'व्यवायान्नानुषज्यते' इति न्यायस्य विरोधः स्यादिति कमलाकर्याम्। तद्भूरिति तदाश्रयः तस्याः लक्षणाया आश्रय इति। तद्भूरिति ततो भवतीति भ्रमो मा भूदिति। शब्दस्य लक्षणाप्रभवत्वं बाधादिति परमानन्द.। प्रवाहरूपार्थस्य लक्षणाश्रयत्वेनोपचारात्तद्वाचकोऽय शब्दोऽपि लक्षणारूपव्यापाराश्रयः इति भाव इति वामनाचार्याः। 'अत्र च यः शब्दो यदर्थविषयकलक्षणाश्रयः स तल्लाक्षणिक इति प्रत्येकमेव लक्षणम्। अन्यथा वाचकादावतिव्याप्तिरिति बोध्यम्' इति नरसिंहाचार्याः। लाक्षणिकशब्दप्रतिपाद्यत्वमेव हि लक्ष्यार्थस्य लक्षणमिति।

[वि० वृ०] एवमुपाधिमुक्त्वा तदाश्रयमाह—

**शब्द इति सम्बध्यते। तद्भूर्लक्षणाश्रयः शब्दो लाक्षणिकः कथ्यते।**

[कारिका] तत्र व्यापारो व्यञ्जनात्मकः ।।

[वृत्तिः] × × ×

[कमला०] व्यञ्जकं वक्तुं व्यञ्जनामाह तत्रेति ।

[सरि०] इत्थं लक्षणामुखेन लाक्षणिकशब्दं निरूप्य सम्प्रति व्यञ्जनामुखेन व्यञ्जकशब्दनिरूपणाय तन्निर्देशककारिकामवतारयति तत्रेत्यादि । तत्र प्रयोजनविषये । व्यापारः शब्दवृत्तिः । व्यञ्जनात्मकः व्यञ्जना व्यङ्ग्यार्थप्रत्यायिका तदाख्या च या वृत्तिः सा एव आत्मा प्राणाः यस्य स तादृशो व्यञ्जनस्वरूप इति । वाचकलाक्षणिकशब्दनिरूपणानन्तरं व्यञ्जकशब्दस्यैव क्रमो निरूपणाय । तल्लक्षणाय प्रथमं व्यञ्जनैव विवेचनीया भवति । सा शब्दार्थनिष्ठात्वेन द्वेधा । शब्दनिष्ठाऽपि पुनर्द्वेधा अभिधामूला लक्षणामूला च । प्राथम्यादितरेषामुपजीव्यत्वाच्चाभिधाया स्तन्मूलायाः प्रथमं विवेचनीयत्वेऽपि प्रकृतत्वेन लक्षणामूलामेव प्रथमं निरूपयति तत्रेति ।

[वि० वृ०] अथ व्यञ्जकं निरूपयितुं तदुपाधिमुद्दिशति—

तत्र लाक्षणिके शब्दे व्यङ्ग्यबोधके सतीत्यर्थः । सा च लक्षिताऽन्यैः—

> 'विरतावभिधादीनां ययार्थो बोध्यतेऽपरः ।
> सा वृत्तिर्व्यञ्जना नाम शब्दादीनां निगद्यते ।।' इति ।

द्वेधा चैषा शाब्दी आर्थी चेति । शाब्दी द्वेधा अभिधालक्षणामूलत्वात् ।

[वृत्तिः] कुत इत्याह—

[कारिका] यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।।१४।।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।।

[वृत्तिः] प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिरपितु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः ।

[कमला०] तत्र प्रयोजनावगमे मानाभावं शङ्कते कुत इति । इति प्राप्ते आहेत्यर्थः । यद्यपि प्राथम्यादभिधामूलाव्यञ्जनाऽऽदौ वक्तुमर्हा तथाऽपि सन्निधानाल्लक्षणामूलोच्यते । तत्रार्थापत्तिमाह यस्येति । यस्य पावनत्वादेः सत्यपि बाधे प्रतीतिं कर्तुं लक्षणा लाक्षणिकः शब्दः समुपास्यते गङ्गातीरे इति वाचकं विहाय प्रयुज्यते लाक्षणिकशब्दमात्रगम्ये न त्वनुमानादिगम्ये फले पावनत्वादौ व्यञ्जनं विनाऽन्यक्रियाव्यापारो नेत्यर्थः । अन्यतो मानान्तरान्न किन्तु तस्मादेव सप्रयोजनलक्षणाशब्दादित्यर्थः । क्रियापदं व्याचष्टे अन्यो व्यापार इति ।

[सरि०] तत्र लाक्षणिके शब्दे व्यापारो व्यङ्ग्यप्रकाशानुकूल इति यदुक्तमनन्तरोक्तकारिकायां तत्र प्रमाणोपस्थापककारिकावतारणाय वृत्तिकृदुपक्रमते कुत इति। कुतः कथं तथा तत्र किं प्रमाणमित्याशङ्कानिरासाय। आह कथयति इति। कारिकामवतारयति यस्येत्यादि। यस्य प्रतीतिम् आधातुम् लक्षणा समुपास्यते अत्र शब्दैकगम्ये फलेन व्यञ्जनात् अपरा क्रिया इति पदव्यवस्था। यस्य यस्यैव फलस्य शैत्यपावनत्वादिरूपस्य। प्रतीतिमनुभवविषयताम्। आधातुं जनयितुम्। लक्षणा लाक्षणिकः शब्दस्तस्यैव वृत्तेराश्रयत्वात्। समुपास्यते सत्यपि बाधादौ बलादिव प्रापयितुं प्रयत्यते सत्यपि वाचकशब्दे तमपहायाद्रियते। अत्र एतादृशस्थले। शब्दैकगम्ये शब्देन लाक्षणिकशब्दमात्रेण एकगम्ये बोध्ये न त्वनुमानादिगम्ये इति निर्देशार्थैकपदम्। फले प्रयोजनविषये शैत्यपावनत्वादौ। न नैव। व्यञ्जनात व्यञ्जनव्यापारात्। अपरा अन्या। क्रिया वृत्तिः। नाभिधा न च लक्षणा न च वृत्तेश्चातुर्थ्यमिष्टं न च शब्दस्य स्खलद्गतित्वमेव। तेन तथाविधे व्यञ्जनैवैका वृत्तिरिति। कारिकां व्याचष्टे प्रयोजनेत्यादि। प्रयोजनप्रतिपिपादयिषया प्रयोजनस्याभीष्टफलस्य शैत्यपावनत्वादेः प्रतिपिपादयिषा प्रतिपादयितुमिच्छा तया। यत्र यस्मिन् वाक्ये। लक्षणया लक्षणावृत्तिविषयत्वेन। शब्दप्रयोगः शब्दव्यवहारः स्वायत्ते शब्दप्रयोगेऽपि लाक्षणिकशब्दप्रयोग इत्याशयः। तत्र तथाविधे वाक्ये। न नैव। अन्यतः वृत्त्यन्तरविषयशब्दात् प्रमाणान्तरात्। तत्प्रतीतिः तस्य प्रयोजनस्य प्रतीतिः बोधनम्। अपितु किन्तु। तस्मात् तथाविधाल्लक्षणाश्रितात्। एवेत्यवधारणे। शब्दात् शब्दतः। न नैव। च अपि। अत्र एतद्विधप्रयोजनबोधने। व्यञ्जनात् व्यङ्ग्यावबोधकात्। ऋते विना। अन्योऽपरः। व्यापारः वृत्तिरिति। अयमाशयः—यत्प्रयोजनप्रत्यायनाय वाचके शब्दे सत्यपि बाधादिजटितस्य लाक्षणिकत्वेन शब्दस्य प्रयोगः क्रियते तद्धि प्रयोजनं लाक्षणिकशब्दमात्रगम्यं भवति न चानुमानादिगम्यमपि। तस्य शब्दस्य च तथाविधप्रयोजनप्रत्यायकव्यापारश्च व्यञ्जनैव नाभिधा तादृशसङ्केताभावात् न लक्षणा मुख्यार्थबाधादिहेतुत्रयाभावात्। नैव च वृत्तेश्चातुर्थ्यमभीष्टमिति। न च शब्दोऽवृत्तिकोऽर्थबोधनक्षम इति। इदमुक्तं भवति। गङ्गायां घोषः इत्यत्र तटावबोधनाय तटादिशब्दे वाचके सत्यपि गङ्गापदस्य तत्र लाक्षणिकत्वेन प्रयोगः शैत्यपावनत्वादिप्रयोजनप्रतीतये एव। तद्धि न वाचकशब्दगम्यं तत्राभीष्टवर्माभावात्। गङ्गातटे घोष इत्युक्तेऽपि वाक्येऽन्वयस्य सिद्धिस्तु भवत्येव किन्तु प्रयोजनीभूतं यच्छैत्यपावनत्वादिकं तन्न तटस्य धर्मोऽपितु गङ्गाया एवेति। तेन तद्धि लाक्षणिकशब्दमात्रगम्यम्। शब्दस्य सम्भृतसामग्रीकत्वादनुमानस्य व्याप्त्यादिप्रतिसन्धानादिविलम्बेन विलम्बितत्वान्नेदमनुमानगम्यमपि। न हि तटे

एव गङ्गात्वमस्ति। तथा हि सति परिवर्तितप्रवाहे स्थलेऽपि तत्सत्त्वापत्तेः। यद्धि लाक्षणिकत्वेन प्रयुक्तः शब्दो न वाचकत्वेन न वा अनुमानविषयत्वेन च तादृशमभीष्टं शैत्यपावनत्वादि प्रयोजनं प्रत्याययति तत्र तस्य व्यापारो व्यञ्जनैव नापरः। यथोक्तं ध्वनिकारेणाऽपि—

'मुख्यां वृत्तिं परित्यज्य गुणवृत्त्याऽर्थदर्शनम्।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः॥' इति।

[वि० वृ०] तत्र प्रसङ्गाल्लक्षणामूला निरूप्यते—

फलं प्रतिपादयितुं यत्र लाक्षणिकः शब्दः प्रयुज्यते तत्र नान्यतस्तत्प्रतिपत्तिः अपितु तस्मादेव शब्दात्। तत्र वृत्तिर्व्यञ्जनैव।

[वृत्तिः] तथा हि—

**[कारिका] नाभिधा समयाभावात्........।**

**[वृत्तिः] 'गङ्गायां घोषः' इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः सङ्केतिताः।**

[कमला०] परिशेषमाह नाभिधेति। समयः सङ्केतस्तद्ग्रहश्चाभिधाख्यशक्तिजन्यः। अतो न साध्यसमत्वम्। प्रयोगस्तु पावनत्वादि न गङ्गापदाभिधाप्रतिपाद्यं तद्गतसङ्केताविषयत्वाद् घटवत्।

[सरि०] प्रयोजनञ्च लाक्षणिकमात्रगम्यं तत्र व्यापारश्च व्यञ्जनैव नापरेति यदुक्तमनन्तरोदीरितकारिकायां तत्र युक्तिनिर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते तथेत्यादि। तथा हि एतत्सिद्धमेव यत्। कारिकामवतारयति नाभिधेत्यादि। **समयाभावात्** समयस्य गङ्गादिपदे शैत्यपावनत्वाद्यर्थरूपस्य सङ्केतस्य अभावात् विरहात्। न नैव। **अभिधा** मुख्यवृत्तिस्तत्र साधिकेति शेषः। न हि गङ्गाशब्दः शैत्यपावनत्वाद्यर्थे लब्धसङ्केत इति शैत्यपावनत्वादि न तस्या व्यापार इति। अभिधा हि सङ्केतग्रहसहायैवोपयुज्यते न तु स्वरूपसतीति। तेन नाम तस्या विषय इति। कारिकां व्याचष्टे गङ्गायामित्यादि। 'गङ्गायां घोषः' इत्यादौ वाक्ये। ये यादृशाः। पावनत्वादयः शैत्यपावनत्वप्रभृतयः। उभयत्रादिपदं तथाविधान्यवाक्यग्राहकम्। यथा गौर्वाहीक इत्यादौ जाड्यादयः। धर्माः।' तटादौ तटे आदिपदात् वाहीकादौ च। प्रतीयन्ते द्योत्यन्ते, तत्र तथाविधे पावनत्वजाड्याद्यर्थे। **गङ्गादिशब्दाः** गङ्गा-गो-प्रभृतिशब्दाः। **सङ्केतिताः** लब्धसङ्केता इति। गङ्गाशब्दः प्रवाहरूपेऽर्थे एव सङ्केतितो न पावनत्वाद्यर्थे। तेन न पावनत्वमभिधाविषय इति।

[वि० वृ०] तथा हि—

गङ्गायां घोष इत्यादौ शैत्यादयो धर्मास्तटादौ प्रतीयन्ते तत्र गङ्गादि शब्दानां नाभिधा सङ्केताभावात् ।

**[कारिका] ……………हेत्वभावान्न लक्षणा ॥१५॥**

**[वृत्तिः] मुख्यार्थबाधादित्रयं हेतुः ।**

[कमला०] त्रयमिति मुख्यबाधः योगो रूढिप्रयोजनान्यतरच्चैकमिति त्रयमित्यर्थः । हेतुरिति फलोपहितपरमेकवचनम् । स्वरूपयोग्यता तु प्रत्येकमेव ।

[सरि०] यदि गङ्गादिशब्दानां पावनत्वाद्यर्थे सङ्केताभावान्मैवास्त्वभिधा किन्तु तेषां तीरादौ लक्षणायां सत्यां पुनस्तेषामेव शैत्यपावनाद्यर्थेऽपि लक्षणैव किं न स्यात्किमिति व्यञ्जनया गौरवादित्याशङ्कापरिहाराय तन्निरूपककारिकामवतारयति हेत्वभावादिति । हेत्वभावात् हेतोः मुख्यार्थबाध-योग-रूढिप्रयोजनान्यतररूपस्य कारणस्याभावाद् विरहात् । लक्षणा लक्षणाविषयत्वम् । न । तत्रेति शेषः । हेतुशब्दं व्याचष्टे मुख्येति मुख्यार्थबाधः शक्यार्थानन्वयः आदिपदात् तद्योगसत्त्वं रूढिप्रयोजनान्यतरोपस्थितिश्चेति त्रिकम् । हेतुः हेतुशब्दबोध्यविषय इति । अयमाशयः—मुख्यार्थबाधादित्रये एव लक्षणाया विषयत्वमुत्पद्यते । नाऽत्र मुख्यार्थबाधसम्भवस्तटरूपार्थस्यैवामुख्यत्वात् । मुख्यार्थस्य बाधो न लक्ष्यस्य । तटे घोषाधिकरणत्वासम्भवरूपो बाधोऽपि नास्ति । अतो न तद्युक्तताऽपि सिध्यति । प्रयोजनेन पावनत्वादिना तटादेर्मुख्यार्थस्य बाधोऽपि नास्ति । तेन नाम लक्षणाविषयोऽपि ।

[वि० वृ०] मुख्यार्थबाधः शक्यसम्बन्धः रूढिफलान्यतरच्चेति लक्षणाया हेतुस्तदभावान्न सा ।

[वृत्तिः] तथा च—

**[कारिका] लक्ष्यं न मुख्यं नाऽप्यत्र बाधो योगः फलेन नो ।**
**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥**

[वृत्तिः] यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः नाऽप्यत्रबाधः । न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः । नाऽपि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम् नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः ।

[कमला०] हेत्वभावमेवाह **तथा चेति** चो ह्यर्थो तथा हीति तु युक्तः पाटः। लक्ष्यन्तीरं न मुख्यं न शक्यम्। शक्यसम्बन्धो लक्षणा न तु लक्ष्यसम्बन्धः। एवं मुख्यबाधो लक्षणाहेतुर्न तु लक्ष्यबाधः। अतो न पावनत्वे लक्षणेत्यर्थः। एतेन लक्षितलक्षणा परास्ता। तस्याः पूर्वं निरस्तत्वाच्च। ननु ज्ञाप्यार्थबाध एव तद्बीजमत आह **नाऽप्यत्रेति** अत्र लक्ष्ये बाधो न न हि तीरेऽपि घोषान्वयस्य बाधो येन लक्षणा स्यात्। ननु बाधाभावेऽपि तात्पर्यानुपपत्त्या साऽस्त्वत आह **योगः फलेनेति**। फलेन पावनत्वादिना तीरस्य योगः साक्षात्सम्बन्धो न पूरसमवेतत्वादित्यर्थः। ननु परम्परासम्बन्धेऽपि साऽस्त्वत आह **न प्रयोजनमिति**। एतस्मिन् फले प्रयोजनेऽपि प्रयोजनान्तरेऽनवस्थापत्तेरित्यर्थः। ननु मुख्यार्थबाधादित्रयं विनैव निरूढलक्षणावन्निष्फललक्षणाऽस्त्वत आह **न चेति** पावनत्वे हि तीरपूरधीसमानकालीना लक्षणा क्रमेण वा? नाद्यः। युगपद्वृत्तिद्वयविरोधात्! नान्त्यः शब्दे विरम्य व्यापाराभावादित्यर्थः। लक्ष्यार्थबाधोऽप्यस्तु लक्षणाहेतुरिति शङ्कानिरासार्थं बाधाभावमादौ व्याचष्टे **यथेति**। मुख्याभावमाह **न चेति**। फलाभावमाह न चेति। प्रयोजने पावनत्वे स्खलद्गतित्वाभावमाह **न चेति**। **समर्थ इति**। गङ्गानिष्ठपावनत्वादिस्तीरे बाधान्न गङ्गापदं तीरगतपावनत्वादि बोधयितुं समर्थम्। यद्वा फलस्यान्वयप्रतियोगित्वाभावाद् गङ्गापदं न तत्र समर्थमन्वयानुपपत्तिमूलायां तदावश्यकत्वादित्यर्थः। असमर्थ इति पाठे ननु शक्तिलक्षणयोरभावान्न गङ्गापदं पावनत्वादिबोधकमत आह **न चेति**। गतिर्बोधकत्वम्। गङ्गापदात्तत्प्रतीतेर्वृत्तिं विना च तदयोगात् सिद्धा व्यञ्जनेत्यर्थः। असमर्थ इति पाठे तु मुख्यार्थबाधाद्यपेक्ष्येति शेषः। समर्थ इति पाठे तु मुख्यार्थबाधादिकं विनेति शेषः।

[सरि०] लक्षणाऽभावमेवोपपादककारिकावतारणाय वृत्तिकृदुपक्रमते तथेत्यादि। **तथा च** एवमेव चकारो ह्यर्थे इति। तथा हि इति। कारिकामवतारयति लक्ष्यमित्यादि। लक्ष्यम् न मुख्यम् अत्र बाधः अपि न फलेन योगः अपि नो एतस्मिन् प्रयोजनम् अपि न शब्दः च स्खलद्गतिः न इत्यन्वयः। लक्ष्यं तटादिरूपो लक्ष्यार्थः आत्मना प्रतिपादयितुमशक्यस्य पावनत्वादेः प्रतीतिं प्रयोजनमाश्रित्य गङ्गापदेन लक्षितम्। मुख्यं शक्यम्। न। न हि लक्ष्यार्थो मुख्यत्वं भजते तस्य गौणत्वात्तथा सङ्केताभावेन। तेन तटाद्यर्थो न शक्यत्वं भजते। तथैव अत्र गङ्गायां घोष इत्यादौ तटादिलक्ष्यार्थस्य। बाधः वाक्येऽनन्वयात्तात्पर्यानुपपत्तेर्वा कुण्ठितार्थत्वम्। अपि च। न नैव। बाधस्तु शक्यार्थस्यैव भवति न तु लक्ष्यस्य। यदि हि तटं मुख्यं स्यात्तदा तस्य बाधः सम्भवेत्। फलेन प्रयोजनेन। **योगः** सम्बन्धः। अपि। नो नैव। न च लक्ष्यार्थेन सह प्रयोजनस्य सम्बन्ध एवेत्याशयः।

न नैव। च अपि। एतस्मिन् प्रयोजने। प्रयोजनम् अन्यत्प्रयोजनम्। अस्तीति शेषः। इत्थमुक्तं भवत्येतावता। लक्षणाया विषये यः खलु प्रयोजनहेतुको व्यापारो भवति स व्यञ्जनाश्रयादेव सिध्यतीति प्रतिपादितम्। तत्र हि प्रयोजनव्यञ्जनं नाभिधाव्यापारः सङ्केताभावात्। गङ्गायां घोष इत्यादौ न गङ्गापदादेः शैत्यपावनत्वाद्यर्थः सङ्केतित इति। न तल्लक्षणाव्यापारस्तत्र हेतुत्रयाभावात्। मुख्यार्थस्य बाधो लक्षणायाः प्रथम आधारः। तटाद्यर्थो नैव मुख्योऽपि गौणो गङ्गापदादेः। न च तस्य तटाद्यर्थस्य बाध एव भवति तटादेर्घोषाद्यधिकरणसिद्धेः। गङ्गापदस्य तु प्रवाहरूपार्थस्य घोषाधारासम्भवान्मुख्यार्थबाधः किन्तु तटेऽर्थे तु न तथा तत्र घोषस्य सम्भवादिति। असत्यपि तटाद्यर्थे मुख्येऽसत्यपि चार्थबाधप्रसङ्गे यथा हि 'काकेभ्यो दधि रक्षताम्' इत्यादौ तात्पर्यार्थबाध एव लक्षणाबीजं स्यादित्युच्यते चेदुच्यते। न हि प्रयोजनस्य लक्ष्यार्थे न साक्षात्सम्बन्धः। प्रयोजनस्य शैत्यपावनत्वादेर्लक्ष्यार्थेन तटेन सह न साक्षात्सम्बन्धस्तस्य प्रवाहसमवेतत्वात्। साक्षात्सम्बन्ध एव लक्षणाप्रयोजको भवति न त्वसाक्षात्सम्बन्धोऽपि। तेन ह्यु न केवलं लक्ष्यार्थस्य मुख्यताऽभावस्तद्बाधाभावश्चापितु तेन सह प्रयोजनस्य योगाऽपि न। न च प्रयोजने लक्षयितव्येऽन्यत्प्रयोजनमेव सम्भवति। सम्भवेऽपि प्रयोजनस्य प्रयोजनान्तरमिति अनन्ततयाऽनवस्थापत्तिः स्यात्। शैत्यपावनत्वव्यञ्जनस्य नापरं प्रयोजनं यदाधृत्य लक्षणाऽऽपतेदिति। न केवलं मुख्यार्थबाधतद्योगप्रयोजनादिहेतुत्रयाभावमात्रमत्रापितु तेषामपेक्षाऽपि नास्तीत्याह **न चेति**। न नैव। शब्दः। स्खलद्गतिः स्खलन्ती मुख्यार्थबाधादिहेत्वनुसन्धानेन विलम्बिता भवन्ती गतिः प्रसरणं बोधकत्वं यस्य तादृशः। भवतीति बोधः। मुख्यार्थबाधादित्रयमपेक्ष्यैव बोधकत्वं स्खलद्गतित्वम्। न हि गङ्गाशब्दस्तटावबोधनं विनैव प्रयोजनं प्रत्याययितुं प्रभवति किन्तु तटावबोधनानन्तरमेव तत्प्रतीतिरिति सुधासागरकाराः वामनाचार्यास्तु 'शब्दो लाक्षणिकशब्दः स्खलन्ती प्रच्युता भवन्ती गतिर्बोधकतारूपसामर्थ्यं यस्य तादृशो नेत्यर्थः। प्रयोजने इति शेषः। गङ्गादिशब्दः प्रयोजनप्रतिपादनविषये प्रच्युतसामर्थ्यो नापितु तस्मादेव शब्दात्प्रयोजनं लभ्यते। गङ्गादिशब्दात्पावनत्वादिप्रयोजनं न प्रतीयत इति न किन्तु प्रतीयत एवं' इति व्याख्यान्ति। कमलाकरभट्टास्तु 'वृत्तिर्बोधकत्वम्। गङ्गापदात् तत्प्रतीतेर्वृत्तिं विना च तदयोग' इति व्याख्यान्ति। वयन्तु स्खलद्गतिः स्खलन्ती प्रच्युता भवन्ती गतिर्वृत्तिर्यस्य स तादृशो निर्वृत्तिकः शब्दो न कमप्यर्थं बोधयितुं प्रभवतीति अत्र अभिधालक्षणयोरविषयत्वेनैव प्रयोजनव्यञ्जनागम्यमित्याशयः इत्यनुवदामः। शब्दस्य ह्यस्खलद्गतिकत्वात्प्रयोजनबोधने सङ्केताभावेनाभिधाया असामर्थ्यात् मुख्यार्थबाधादित्रया-

भावेन लक्षणायाश्च विषयबाह्यत्वाद्वचक्नैव समर्थेत्यस्याशयः। कारिकां व्याचष्टे यथेति। यथा येन प्रकारेण। गङ्गाशब्दः गङ्गायां घोष इत्यत्र गङ्गेतिशब्दः। स्रोतसि प्रवाहरूपे सङ्केतितार्थे। सबाधः स्रोतसि घोषाधारत्वासम्भवाद्वाक्येऽन्वयानुपपत्तेः। इति हेतोः। तट परार्थे स्वसर्पणत्वलक्षणलक्षितत्वेन गङ्गात्वविशिष्टतटरूपमर्थम्। लक्षयति लक्ष्यत्वेन बोधयति। तद्वत् तेनैव प्रकारेण। यदि चेत्। तटे तटरूपार्थे। अपि च। सबाधः वाक्येऽनान्वितः स्यात् भवेत्। तत् तथा सत्येव। प्रयोजनं शैत्यपावनत्वादिकम्। लक्षयेत् लक्ष्यत्वेनोपस्थापयेत्। किन्तु तटे घोषावस्थितेः सम्भवान्न तत्रार्थबाध इति। तदेव व्याचष्टे। न नैव। च हि। तटं तटरूपोऽर्थः। मुख्य शक्यः। अर्थः। न नैव। अपि इति समुच्चये। अत्र तटेऽर्थे। बाधः अनन्वितत्वञ्च। न नैव। च एवमेव। गङ्गाशब्दार्थस्य गङ्गाशब्दस्यार्थत्वेन तल्लक्षितस्य। तटस्य तीरस्य। पावनाद्यैः पावनशैत्यप्रभृतिभिः। लक्षणीयैः लक्ष्यविषयैः। सहेति यावत्। सम्बन्धः योगः। न नैव। अपि च। लक्ष्ये लक्षणाविषयभूते। प्रयोजने शैत्यपावनत्वादौ। किञ्चित् किमपि। प्रयोजनं प्रयोजनान्तरम्। न नैव। अपि च। गङ्गाशब्दः। तटम् इव। प्रयोजनं शैत्यपावनत्वादिकम्। प्रतिपादयितुम् साधयितुम्। असमर्थः अक्षमः इति। अयम्भावः— न तटो हि गङ्गाशब्दस्य मुख्यार्थो नैव च तस्य बाधोऽनन्वयाभावात्। गङ्गाशब्दार्थभूतस्य तटस्य शैत्यादिभिः सह न कोऽपि सम्बन्धः। शैत्यादिकं तु गङ्गात्वेनैव न तु तटत्वेन। न च प्रयोजनस्य शैत्यादेः प्रयोजनान्तरमेव यद्धि समाधृत्य तटेऽपि लक्षणाऽऽपातेत्। एकन्तु तथा सति प्रयोजनशृङ्खलाय आनन्त्येनाव्यवस्थैव स्यादपरतश्च लक्षणा हि शक्यसम्बन्ध एव न तु लक्ष्यसम्बन्धः। गङ्गाशब्दस्तट इव न हि प्रयोजनप्रतिपादनायासमर्थोऽपितु समर्थ एवेति। अत्र हि वृत्तौ 'असमर्थः' 'समर्थः' इत्यपि च पाठौ दृश्येते। असमर्थ इति पाठे न असमर्थ इति समर्थ एवेत्याशयः। समर्थ इति पाठे तु मुख्यार्थबाधादिकं विना न समर्थः इत्याशय। मुख्यार्थबाधे एव गङ्गाशब्दोऽपि प्रयोजनं प्रतिपादयितुं प्रभवति न तु तदभावे इति तटस्य लक्ष्यस्य तु न मुख्यत्वं न च बाधो नैव च तस्य प्रयोजनभूतेन शैत्यादिना सम्बन्धः न च बाधे प्रयोजनमेवेति तस्य प्रयोजनप्रतिपादनाक्षमत्वमेवेति। तथैव 'स्खलद्गतिः' इत्यस्यापि बहव आख्यानभेदाः।

[वि० वृ०] तमुपपादयति—

गङ्गाशब्दस्य प्रवाहो मुख्योऽर्थस्तत्र बाधस्तस्य तीरेण सह सम्बन्धः। लक्षिते च तीरे शैत्यादिफलमिति गङ्गाशब्देन तीरं लक्ष्यते। एवञ्चेत्तीरमपि मुख्यं स्यात्तत्र च बाधा भवेत्। तीरस्य च शैत्यादिना सम्बन्धः स्यात्। फले च

तस्मिल्लक्षिते फलमन्यद्भवेत्। तदा फलमपि तेन लक्ष्यते। न चैतत्किमप्यस्तीति। न च गङ्गाशब्दस्तीरमिव शैत्यादि बोधयितुं मन्थरः। लक्षणया तीरप्रत्ययानन्तरमेव झटित्येव व्यञ्जनया तत्प्रत्ययात्। तस्माद्विवक्षितान्वयानुपपत्त्यभावाच्च फले न लक्षणा।

[कारिका] एवमप्यनवस्था स्याद्या मूलक्षय(ति) कारिणी।

[वृत्तिः] एवमपि प्रयोजनं चेल्लक्ष्यते तत्प्रयोजनान्तरेणेति तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृदनवस्था भवेत्।

[कमला०] नन्वस्तु तीरे पावनत्वस्य घोषे पावनत्वं प्रयोजनान्तरम त आह एवमिति। बीजाङ्कुरवदनवस्थानदोष इत्याशङ्क्य मूलेत्युक्तम्। तद् व्याचष्टे प्रकृतेति। पावनत्वं प्रयोजनान्तरसञ्चाराद्यत्राग्रिमलक्षणाभावस्तत्रोपपाद्यपूर्वप्रयोजनाभावान्न मूललक्षणा स्यात्। उपपादकप्रयोजनपरम्पराज्ञानं विना प्रतीतिविश्रान्तिश्च न क्वापि स्यादित्यर्थः।

[सरि०] प्रयोजनस्य प्रयोजनान्तराभ्युपगमे विप्रयतिपत्तिनिरूपककारिकां वृत्तिकृदवतारयति एवमित्यादि। एवम् अपि अनवस्था स्यात् या मूलक्षयकारिणी भवेत् इत्यन्वयः। एवम् प्रयोजनस्य शैत्यादेः प्रयोजनान्तराभ्युपगमे। यथा तटे पावनत्वस्य घोषेऽपि पावनत्वमित्यादिरूपे। अपि हि। अनवस्था प्रयोजनान्तरास्यानन्त्यादव्यवस्था। स्यात् भवेदेव। तेन किमिति आह येति। या अनवस्था। मूलक्षयकारिणी मूलं मूलभूतलक्षणाप्रयोजनं तस्यैव क्षयो नाशस्तत्कारिणी विधायिका। भवेत् इति। कारिकां व्याचष्टे एवमित्यादि। एवमपि प्रयोजनस्य प्रयोजनान्तरसद्भावत्वेन। प्रयोजनं प्रयोजनस्य शैत्यादेरपि प्रयोजनं घोषेऽपि पावनत्वादिरूपम्। लक्ष्यते लक्षणाविषयत्वेन गृह्यते। चेत्। तदा। तत् प्रयोजनम्। प्रयोजनान्तरेण अन्येन प्रयोजनेन। तत् प्रयोजनम्। अपि च। प्रयोजनान्तरेण अपरेण प्रयोजनेन। इति इत्थम्। यथा हि गङ्गाशब्दस्य स्वार्थबाधस्तटे पावनत्वप्रयोजनाय तस्य प्रयोजनं घोषे पावनत्वाय तस्यापि प्रयोजनं तत्रत्यजने पावनत्वायेत्यादि। प्रकृतेति प्रकृतस्य पावनत्वादेस्तटादेरेव वा अप्रतीतिर्बोधाभावस्तत्कृत् तादृशी। अनवस्था अनवस्थितिरेव। भवेत् जायेतेति। अयमाशयः—प्रयोजनपरम्परामाश्रित्य लक्षणास्वीकारे लक्षणाशृङ्खलया मूलभूतलक्षणाप्रयोजनप्रतीतिरपि न स्यादिति। न चात्र बीजाङ्कुरन्यायोऽपि सङ्गच्छते प्रयोजनान्तरेण पुनर्मूलप्रयोजनबोधाभावात्। यथा बीजादङ्कुर उत्पद्यतेऽङ्कुरात्पुनर्बीजं न तथाऽत्र। गङ्गाशब्दस्य तटे या लक्षणा तस्या एव प्रकृतत्वं नान्यासामिति।

[वि० वृ०] एवमपीति। फलं चेल्लक्ष्यं तर्हि तदपि फलान्तरेण तदपि तदन्तरेणेत्येवं मूलभूतफललक्षणाक्षतिरित्यर्थः।

[वृत्तिः] ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते। 'गङ्गायास्तटे घोषः' इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति विशिष्टे लक्षणा तत् किं व्यञ्जनयेत्याह—

[कारिका] **प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥**

[वृत्तिः] कुत इत्याह—

[कारिका] **ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।**

[वृत्तिः] प्रत्यक्षादेर्नीलादिविषयः। फलं तु प्रकटता संवित्तिर्वा।

[कारिका] **विशिष्टे लक्षणा नैवं·········।**

[वृत्तिः] व्याख्यातम्।

[कारिका] ···············**विशेषाः स्युस्तु लक्षिते ॥१८॥**

[वृत्तिः] तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः। तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम्। एवं लक्षणामूलं व्यञ्जकत्वमुक्तम्।

[कमला०] पावनत्वविशिष्टतीरे लक्षणामाशङ्क्य निराचष्टे नन्विति। अन्वयप्रतियोगिनि तीरे एव मुख्यार्थबाधाद्यपेक्षा न तु तदवच्छेदके प्रयोजने तीरत्ववदिति शङ्कार्थः। अधिकस्य पावनत्वविशिष्टस्येत्यर्थः। लक्षणीयं लक्षणाजन्यधीविषयः। सहितन्न युज्यते। हेतुमाह ज्ञानस्येति। यथा कारणत्वेन विषयो ज्ञानाद्भिन्नस्तथा कार्यत्वात्फलमपि। सिद्धो हि विषयः। असिद्धं जन्यञ्च फलमिति कथमैक्यमित्यर्थः। ननु पावनत्वादिधर्मिलक्ष्यप्रतीतेः फलं विशिष्टगोचरत्वात्तस्याः किन्तु शक्यसम्बन्धरूपलक्षणया इति चेदत्राहुः। अन्वयानुपपत्तौ हि लक्षणान्वयप्रतियोगिनमेव लक्ष्यमादत्ते न च पावनत्वं तथा। अथानुद्देश्यमपि लक्ष्यधीः फलं विषयीकुर्याद्यथा तापशामकं चन्दनं शैत्यं जनयतीति चेन्न। चन्दनस्य सन्निधिमात्रेण शैत्यजनकत्वात्। लक्षणा त्वनुपपत्यशामकं कथं विषयीकुर्यात्। न च तात्पर्यानुपपत्यातद्धीस्तदनुपस्थितावपि तत्सत्त्वात्। किञ्च न लक्षणातः पूर्वं तीरे पावनत्वं ज्ञातं सिद्धं वाऽस्ति येन विशिष्टे सम्बन्धस्मृतेर्विशिष्टे लक्षणा स्यात्। लाक्षणिकधीजन्यत्वेन प्रागसिद्धत्वात्। एवं तत्सम्बन्धोऽप्यसिद्धः शुक्तौ रजतसम्बन्धस्येव तत्सम्बन्धस्य प्रतीतिकत्वात्। किञ्च न गङ्गापदशक्यस्य तीरपावनत्वाभ्यामेकः सम्बन्धः। अतः

कथमेका विशिष्टे लक्षणा । न च तीरत्वविशिष्टलक्षणातो भिन्नया पावनत्वविशिष्ट-लक्षणया तद्धीरिति वाच्यम् । यौगपद्ये वृत्तिद्वयविरोधात् क्रमे च विरम्य व्यापारा-भावादित्युक्तत्वात् लक्षितलक्षणायाश्च निरस्तत्वात् । अस्तु वा सा । तथापि बाधित-बोधकत्वादिर्वैधर्म्याद् वृत्त्यन्तरव्यञ्जनेति सिद्धम् । केचित्तु मूले ज्ञानपदे करणव्युत्पत्त्या शक्यसम्बन्ध उच्यते । तस्य विषय आश्रयस्तीरं न तु पावनत्वादि । तस्य सम्बन्धाभावेन बोधाभावादिति न तत्फलत्वमित्याहुः । तदज्ञानकृतं पावनत्वबोधाभावे व्यञ्जनोच्छेदात्प्रतीतिविरोधात् नीलादिविषयफलभेदव्याख्याविरोधाच्च प्रकटता । भट्टमते ज्ञानतान्यायनये संवित्तिर्हानादिबुद्धिरनुव्यवसायो वा । वेदान्तिमते आवरणभङ्गार्था वृत्तिरिति पक्षे प्रकटतासम्बन्धार्थेति पक्षे वृत्तिविषयावच्छिन्नचैतन्यं फलं संवित्तिरित्यर्थः । उपसंहरति **विशिष्टे** इति । एवमुक्तरीत्या ननु लक्ष्यधीकाले व्यङ्ग्यस्य धीरुत्तरकाले वा । नाद्यः । पदार्थज्ञाने व्यञ्जनायोगात् । नान्त्यः शब्दे विरम्य व्यापाराभावात् । अत आह विशेषा इति । लक्षणोत्तरमप्याकाङ्क्षा-नुस्यूतेर्वृत्त्यन्तरे च विरामदोषाभावादित्यर्थः । यद्वा कथन्तर्हि तीरनिष्ठतया तद्धीरत आह विशेषा इति । लक्षिते तीरे विशेषाः पावनत्वादयो व्यञ्जनाऽऽख्येन व्यापारा-न्तरेण गम्याः स्युरिति वृत्तिस्थेनान्वयः । वृत्तिप्रतिपाद्यस्यैव शाब्दत्वमिति नियमश्च संसर्गेण पदार्थबोधेन तु तन्निष्ठतीरत्वपावनत्वादावित्यर्थः । **ते** चेति । शब्दस्या-न्वयव्यतिरेकाभ्यां व्यङ्ग्यबोधे करणत्वं न च व्यापारं विना तत्सम्भवति न चाग्रिमा वा लक्षणा युक्तेत्युक्तम् । नापि तात्पर्याख्या वृत्तिस्तस्याः संसर्गमात्र-गोचरत्वादित्यर्थः । कोऽसौ व्यापारोऽत आह तच्चेति । अत्रेदं तत्त्वम् । न व्यङ्ग्ये शक्तिः सङ्केताभावात् । न हि प्रतीतिमात्रे सा लक्षणोच्छेदापत्तेः । नापि लक्षणयाऽनुमानाद्वा तद्धीः बाधितबोधकत्वेन तद्वैधर्म्यात् । मुख्यार्थबाधाद्यभावे व्याप्त्याद्यप्रतिसन्धाने पक्षतोपरागं विना च प्रतीतेः । 'गतोऽस्तमर्कः' इत्यादौ नियतानियतसम्बन्धतदभावेष्वपि वक्तृवैशिष्ट्यादिवशात्तत्प्रतीतेश्च । किञ्च न व्यङ्ग्ये लक्षणा वाक्यवृत्तिः पदवृत्तिर्वा पदतदेकदेशवृत्तित्वान्नापि शब्दवृत्तिरर्थस्यापि व्यञ्जकत्वात् । विस्तरेण चैतत्पञ्चमोल्लासे वक्ष्यते । किञ्च यथाऽनुमिनोमीति प्रतीतिबलात् प्रत्यक्षादनुमानं भिन्नं तथानेनेदं व्यञ्जितं न तूक्तमिति प्रतीतेर्व्यञ्जना भिन्ना । अन्ये तु तद्धीजनकत्वमेकैव व्यञ्जना सर्वत्र शब्दवृत्तिः शक्तिशरीरघटकतया तस्यावश्यकत्वात्कथं तद्वैभिधादिव्यवहारः । अनुशासनादिवशान्नियतरूपायास्तस्या एवाभिधात्वं मुख्यार्थबाधादिवशाच्च लक्षणात्वम् । ननु धीजनकत्वफलोपधानं स्वरूप-योग्यता वा ? नाद्यस्तस्य पूर्वमज्ञानात् फलोत्तरं तद्वैयर्थ्याच्च । नान्त्यः । योग्यतावच्छेदकं विना तदज्ञानाच्छक्त्यादेरवश्याङ्गीकारात् जनकत्वस्य पदार्था-

न्तरत्वादित्याहुः। किञ्च व्यञ्जनयाऽनुमानमेवान्यथासिद्धमिति वैपरीत्यं किन्न स्यादिति दिक्।

[सरि०] इत्थं हि क्रमिकलक्षणोपपत्तिं युक्त्या निरास्य सम्प्रति उभयविषयकलक्षणानिरासायोपक्रममाणस्तन्निरूपककारिकावतारणाय तद्भूमिकामाबध्नाति नन्वित्यादिना। ननु इति जिज्ञासायाम्। 'गङ्गायां घोषः' इत्यत्र प्रवाहे घोषावस्थित्यसम्भवाद् बाधितमुख्यार्थेन गङ्गाशब्देन पावनत्वादि धर्मयुक्तम् शैत्यपावनत्वादि विशेषधर्मलक्षितम्। एवेति व्यवच्छेदे माऽस्तु तत्र क्रमिका लक्षणेति। तट तटरूपार्थः। लक्ष्यते लक्षणया बोध्यते। ततश्च वाक्यस्य हि गङ्गायास्तटे घोषः इत्यतः गङ्गातटे घोषावस्थानार्थादपि अधिकस्य विशिष्टस्य। अर्थस्य तटे एव शैत्यपावनत्वादिप्रयोजनसमाविष्टार्थस्य। प्रतीतिः प्रत्यायनं प्रयोजनसहिततटादेरेव। प्रयोजनं फलम्। इति हेतोः। विशिष्टे पावनत्वादियुक्ते तटे। लक्षणा। तत् तेन हि। व्यञ्जनया व्यञ्जनाख्यया वृत्त्या प्रयोजनप्रत्यायिकात्वेन कथितया। किम् न किमपि प्रयोजनमिति। अतः तन्निरासाय। आह कथयति। अयमाशयः—माऽस्तु तत्र क्रमिका लक्षणा प्रयोजननिर्देशिका किन्तु गङ्गाशब्देन बाधितमुख्यार्थेन पावनत्वादिविशिष्टतटस्यैव बोधने तु नोक्तदोषः। अतोऽस्तु तत्रोभयविषयिका लक्षणा इति पूर्वपक्षनिरासाय कथयतीति। कारिकांशमवतारयति प्रयोजनेनेत्यादि। लक्षणीयं लक्षणाजन्यज्ञानविषयः। प्रयोजनेन प्रयोजनीभूतज्ञानविषयेण पावनत्वादिना। सहितं विशिष्टम्। न नैव। युज्यते उपलक्षितो भवतीति। प्रयोजनसिद्ध्यर्थमेव मुख्यार्थबाधपुरस्सरं तत्सम्बद्धोऽमुख्यार्थः शब्देन लक्ष्यते न तु प्रयोजनमपि। प्रयोजनं तु सर्वथा लक्ष्यार्थभिन्नमेव। प्रयोजनं हि न मुख्यार्थो नाप्यमुख्यार्थः। तेन तस्य लक्ष्यार्थत्वं वा लक्ष्यार्थेन सहैव बोधनं न कदापि सम्भवति। न तस्य लक्ष्यत्वं प्रयोजनान्तराभावान्न च लक्ष्यार्थसहगम्यत्वं मुख्यार्थेन सह योगाभावात्। तदेव व्याचष्टे कुत इति। कुतः कथं तथा। इति इत्याशङ्कायामाहेति। कारिकामवतारयति ज्ञानस्येति। ज्ञानस्य संवेदनस्य। विषयः क्षेत्रम्। अन्यः तद्भिन्नः। हि इति अवधारणे। फलं ज्ञानस्य परिणामः। अन्यत् ज्ञानात्तद्विषयाच्च पृथगेव। उदाहृतं दृष्टान्तितमिति। अयम्भावः—ज्ञानाद्धि भिन्न एव तद्विषयस्तयोरपि भिन्नमेव तत्फलमिति फलफलिनोः समसमयसमुत्पादासम्भवात्। अत्र हि ज्ञानं लक्षणा तस्य विषयो लक्ष्यार्थः फलञ्च शैत्यादिप्रयोजनमिति। तेन न लक्ष्यार्थप्रयोजनयोः समसमयसमुत्पादासम्भवः। तदेव दृष्टान्तयति प्रत्यक्षादेरिति। प्रत्यक्षादेः प्रत्यक्षमिन्द्रियार्थसन्निकर्षजन्यं ज्ञानम्। आदिपदादनुमानोपमानयोरपि ग्रहणम्। तस्य नीलादि नीलादिगुणो वा घटपटादि-

पदार्थाः। विषयः फलाश्रयः। फलं परिणामः। तु इति व्यवच्छेदे। विषयाद् भिन्नमेव। प्रकटता प्राकट्यम्। इदं भट्टनये। वा पक्षान्तरे। संवित्तिः घटज्ञानानन्तरं 'घटमहं जानामि' इति प्रत्ययरूपा। अयम्भावः—प्रत्यक्षादिना ज्ञाते घटे 'ज्ञातो घट' इति प्रत्ययात् तज्ज्ञानेन तस्मिन् घटे ज्ञाततापरनाम्नी प्रकटता जायते इति भट्टकुमारिलमतम्। प्रकटता वा ज्ञातता ज्ञेयधर्मो ज्ञानस्य फलं तद्भिन्नमिति। तथैव नैयायिकमते प्रत्यक्षादिज्ञानफलमनुव्यवसायस्तद्विषयः संवित्तिरिति ज्ञानफलं ज्ञातृधर्मः। तेन हि भाट्टनये ज्ञाततारूपा प्रकटता ज्ञेयधर्मः प्रत्यक्षं ज्ञानस्य फलम्। तत्र विषयः प्रकटताज्ञानविषयान्नीलादेर्भिद्यते। नैयायिकमते प्रत्यक्षादिज्ञानफलमनुव्यवसायस्तद्विषयः संवित्तिः। व्यवसायः संवित्तिविषयान्नीलादेर्भिद्यते। संवित्तिर्हि ज्ञातृधर्मः। लक्ष्यार्थो हि ज्ञानं विषयो नीलादिवत्। फलञ्च पावनत्वादि प्राकट्यवत् वा संवित्तिवत्। तयोरभेदेन प्रतीतिर्नैव घटत इत्याशयः। अत्रोच्यते—फलत्वे हि जन्यत्वे विषयस्य जनकत्वेन पावनत्वादौ तदभावतज्ज्ञाने विषयाद् भेद एवेति कारिकाग्रन्थो विषयफलयोर्भेद इति फलस्य जन्यप्रतीतिविषयत्वे 'प्रत्यक्षादेरिति' वृत्तिग्रन्थः प्रकटताज्ञानस्य प्रत्यक्षजन्यत्वाभावात् विरुध्यते इति। तत्रोच्यते यथा ज्ञानस्य जनकीभूतो विषयो ज्ञानादन्यस्तथा फलमपि तस्य स्वतो भिन्नम्। कारणस्येव कार्यस्यापि भिन्नकालत्वनियमात्। अत्र पावनत्वादिप्रतीतिः शक्यसम्बन्धरूपलक्षणायाः फलं न तु लक्ष्यप्रतीतेः। एवञ्च अन्वयानुपपत्त्या प्रसरन्ती लक्षणा यावदन्वयोपपादकं तावदेव विषयीकर्तुं प्रभवति न त्वनुपपादकमपि। तेन हि तटार्थ एव तस्या विषयो न तु शैत्याद्यपि। यदुच्यते तापोपशमनाय सेव्यमानं चन्दनं तापोपशमनेन सह शैत्यमपि जनयति यथा तथैव लक्षणा सानुद्देश्यमपि शैत्यं कथं विषयीकर्तुं न प्रभवतीत्यपेक्षायामुच्यते न तथा। चन्दनस्य सन्निधिमात्रेण शैत्यजनकत्वम् लक्षणायास्त्वनुपपत्तिप्रसारितयेति तयोर्वैषम्यादित्यादि काव्यप्रदीपे स्पष्टम्। वस्तुतो यथा कारणत्वेन ज्ञानाद्विषयो भिद्यते तथा कार्यत्वेन फलमपीति। तीरपावनत्वज्ञानयोरभेदे हि जन्यजनकभावानुपपत्तिः स्यादेवेति बालबोधिन्यां स्पष्टम्।

तेन हि न विशिष्टस्य प्रयोजनस्य लक्षणाविषयत्वम्। तन्निरूपककारिकामवतारयति विशिष्ट इति। एवम् विशिष्टे लक्षणा न इत्यन्वयः। एवम् पूर्वोक्तप्रकारेण ज्ञानात्कारणत्वेन विषयस्य कार्यत्वेन फलस्य भेदात्। विशिष्टे प्रयोजनसहितलक्षणीयानुग्राहकत्वेन लक्षिते विषये। लक्षणा शक्यसम्बन्धवृत्तिः। न नैव घटत इति। तदेवाऽऽह वृत्तिकृत् व्याख्यातमेवेति। इदं हि पूर्वमेव व्याख्यातमिति। नैवैतत्पुनर्व्याकर्तव्यमिति। तर्हि किं कारिकांशेनाऽनेनेत्युच्यते विशिष्टस्य प्रयोजनस्य लक्ष्यताऽभावोपसंहारायेति। सिद्धो विशिष्टस्य लक्ष्यताऽभावः। तर्हि तत्कथं

ज्ञायते इत्यपेक्षातृप्त्यै तन्निर्देशककारिकांशमवतारयति **विशेषा** इति। विशेषाः तु लक्षिते स्युः इत्यन्वयः। विशेषाः शैत्यादयः। तु इति व्यवच्छेदे। लक्षिते तटादौ तत्प्रतीत्यनन्तरमेव। स्युः व्यापारान्तरेण प्रत्यायिता भवन्तीति। कारिकांशं विवृणोति **तटादावित्यादि**। **तटादौ** लक्ष्यार्थभूते। **ये** यादृशाः। विशेषाः सामान्येतराः। **पावनत्वादयः** शैत्यपावनत्वादिधर्माः। **ते**। **च** त्वर्थे। **अभिधातात्पर्यलक्षणाभ्यः** ताभ्यो वृत्तिभ्यः। सङ्केतितत्वाभावेनाभिधाया निर्विषयत्वात्प्रयोजनस्य। हेत्वभावाच्च फलफलिनोर्भेदाच्च तस्य लक्षणाबाह्यत्वम्। तात्पर्याख्यायाश्च संसर्गनियतात्वात्प्रयोजनस्य तदभावाच्च नेदं तात्पर्यविषयोऽपि। इति ताभ्यः। **व्यापारान्तरेण** अनन्येनैव व्यापारेण। **गम्याः** प्रतीतिविषयाः। **व्यवहाराय तद्व्यपदेशान् वक्ति तदित्यादि**। **तत्** व्यापारान्तरं येन प्रयोजनं प्रत्याय्यते। **च** पुनः। **व्यञ्जन-ध्वनन-द्योतन-आदि शब्दवाच्यम्** आदिपदात् अञ्जन-प्रकाशन-प्रत्यायन-अवगमन-बोधनसूचनादीनां ग्रहणम्। **अवश्यम्** अपरिहार्यत्वेन। **एषितव्यम्** अनुसन्धातव्यमिति। प्रकरणमुपसंहरति **एवमित्यादि**। **एवम्** अनन्तरोक्तरीत्या। **लक्षणामूलम्** लक्षणावृत्तिहेतुकम् तदन्वयव्यतिरेकानुविधायि। तत्सत्त्वे तत्सत्त्वमन्वयः। तदभावे तदभावो व्यतिरेकः। लक्षणाया सत्त्वे एव तत्प्रतीतिस्तदसत्त्वे नेति। **व्यञ्जकत्वम्** शब्दस्य वृत्तेर्व्यञ्जनव्यापारत्वम्। **उक्तं** प्रपञ्चितमिति। अत्रेदं बोध्यम्। न ह्यभिधा प्रयोजनं बोधयितुं क्षमा तादृशसङ्केतितत्वाभावात्। न च तत्र लक्षणा प्रयोज्या लाक्षणिकार्थस्य बाधाभावात् तेन सह प्रयोजनस्य योगाभावात् तथाबोधने प्रयोजनान्तराभावाच्च। न च विशिष्टलक्षणात एव विशिष्टप्रतीतिः सम्भवति तथाऽनवबोधात्। अन्यद्धि कारणमन्यदेव च कार्यम्। तीरत्वज्ञानपावनत्वज्ञानयोरभेदे तु जन्यजनकतानुपपत्तिः स्यात्। शक्यसम्बन्ध एव लक्षणा न तु लक्ष्यसम्बन्धः। न हि गङ्गाप्रवाहरूपेण शक्येन पावनत्वादिविशिष्टस्य तटस्य सम्बन्धो न च तटत्वे इव पावनत्वेऽपि तटलक्षणातो लक्षणान्तरसम्भवः। न च तटत्वेन शक्यसम्बन्धग्रहात्तटत्वोपस्थितिरेवापितु तटत्वेनैव लक्षणा। यथा अनुमिनोमि न साक्षात्करोमीत्यनुभवबलात् प्रत्यक्षादनुमानं पृथगेव तथैव अनेनेदं नोक्तमपितु व्यञ्जितमिति प्रतीत्योर्वैलक्षण्या व्यञ्जना ह्यभिधातः पृथगेव। नव्यास्तु तद्बीजनकत्वमेव व्यञ्जना या हि सर्वत्र वृत्तिरतो नाभिधा न च लक्षणा। सा हि शक्तिशरीरघटकत्वेन नैयायिकैरपि अभ्युपगम्यते इत्यधिवदन्ति। तेषां मते 'अस्माच्छब्दादयमर्थो बोद्धव्य इत्यंशस्यैव वृत्तित्वं व्यञ्जनात्वमिति सारबोधिन्यां स्पष्टम्। वस्तुतस्तु व्यञ्जनायाः सर्ववृत्तित्वमपि अतिवाद एव। यद्धि वाचकशब्दमनपेक्ष्य मुख्यार्थबाधत्वेन शब्दः प्रयुज्यते तत्र

केनाऽपि प्रयोजनेन तु भाव्यमेव। तच्च प्रयोजनं मुख्यार्थेनैव सम्बद्धं भवति न लक्ष्यार्थेन। न हि लक्षणा प्रथमं लक्ष्यार्थमुपस्थाप्य पुनः प्रयोजनभूतार्थमपि लक्षयितुं प्रभवा तस्या विरम्य व्यापाराभावात्। तेन हि न प्रयोजनविशिष्टे लक्षणाऽपितु लक्षिते एव विशेषः। स विशेषश्च नाभिधेयः सङ्केतितत्वाभावान्न लक्ष्यो लक्ष्य-सम्बन्धाभावात्। तेन स व्यङ्ग्य एव तस्य प्रतीतिरपि व्यञ्जनयैवेति पर्यवसितोऽर्थः। एक एव शब्द एकैव तस्य शक्तिश्च। तावेवोपाधिभेदात्पृथक् पृथक् व्यपदेशेन ज्ञायेते। यदा हि शब्दः सङ्केतितमर्थं बोधयति तदा स वाचक इत्युच्यते शक्तिश्च तस्याभिधाख्या। यदा स एव मुख्यार्थं परित्यज्य तत्सम्बन्धमेव लक्ष्यार्थं बोधयति तदा स लाक्षणिक इत्युच्यते तस्य शक्तिश्च लक्षणाख्या। यदा च स व्यङ्ग्यार्थं प्रत्याययति तदा स व्यञ्जकव्यपदेश्यो भवति तस्य वृत्तिरपि व्यञ्जनाख्या। कामं केचिदभिधाया एव दीर्घदीर्घतरव्यापारकल्पनया शक्त्यन्तरस्थितिं नैव समर्थयेयु-स्तथापि तेऽपि व्यपदेशे एव वैमत्यं दर्शयन्ति न तु कार्येऽपि। बोधयि त्वभिधैव दीर्घतरव्यापारमाश्रित्य व्यङ्ग्यार्थं वयं तमेव व्यञ्जनेति जानीमः। अस्माकं व्यपदेशे न विवादः किन्तु कार्यतत्त्वं तु सर्वैः स्वीक्रियत एव। यदि दीर्घव्यापाराभिधा लक्ष्यार्थं बोधयति वा दीर्घतरव्यापारा व्यङ्ग्यार्थं तत्र नास्माकं हानिः।

[वि० वृ०] ननु शैत्यादिधर्मविशिष्टमेव तीरं लक्षणीयं ततः किं व्यञ्जनयेति चेत्तत्राह—**प्रयोजनेनेति**। कस्मादित्याह ज्ञानस्येति। प्रत्यक्षादेर्हि ज्ञानस्य शुक्लादिर्विषयः। फलं तु ज्ञातता हानोपादानधीर्वा। विषयो ज्ञानस्य हेतुः फलं तु तस्य कार्यमिति युगपदप्रतीतेर्न सह लक्ष्यतेत्यनुशयः। यत्तूक्तं तीरं शैत्यादि च लक्षणयैव बोधयेदिति। तन्न। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। विशिष्टे एवमुक्तयुक्त्या। विशेषाः लक्षिते तीरादौ विशेषाः शैत्यादयस्ते च व्यञ्जनयैव गम्याः स्युः। तथा हि गङ्गाशब्दः पूर्वमभिधया प्रवाहं प्रत्याययति। इतरथा मुख्यार्थबोधो न स्यात्। तद्विरतौ लक्षणया तीरं तद्विरतौ व्यञ्जनया पावनत्वादीति। वाक्यार्थबोधनाय तात्पर्याख्या वृत्तिः साऽप्यत्र नादृता। वाक्यं विनाऽप्येकस्य पदस्य पदांशस्य च व्यञ्जकत्वेन ध्वनिकाव्यताङ्गीकृतेः। तस्माद् व्यञ्जना नाम चतुर्थी वृत्तिर्ध्वननद्योतनादिपर्यायावश्यमन्वेष्टव्यैवेति। ये त्वाहुः—इषुवेगवदभिधाव्यापारो दीर्घदीर्घतरः। तेन सर्वोऽप्यर्थो वाच्य इति। तन्मते गङ्गायां घोषान्वयानुपपत्तेर्मुख्यार्थबाधादभिधैव नास्ति। कुतस्तस्या दीर्घदीर्घतरत्वं येन तटोऽपि बोध्यः। किमिति वैलक्षणोपास्या तेनैव तदर्थसिद्धेः। किमिति च 'ब्राह्मण पुत्रस्ते जातः कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यम्। किञ्च वाच्यार्थव्यङ्ग्यार्थयोः 'त्वदङ्घ्रिमूलं भजतां मुकुन्दः' इत्यादौ निन्दास्तुतिरूपेण

स्वरूपस्य 'गतोऽस्तमर्कः' इत्यादौ वाच्य एकरूपो व्यङ्ग्यस्तु तत्तत्प्रतिपत्त्रादिभेदात् बहुविध इति सङ्ख्यायाः वाच्यः शब्दोच्चारणमात्रेण वेद्यः। स तु तथापि तथाविध-प्रतिभानैर्मल्यादिना चेति निमित्तस्य शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटना-श्रयत्वेन चाश्रयस्य प्रतीतिमात्रचमत्कारयोः करणात् कार्यस्य —

'कस्य वा न भवेत् कोपः क्षतं वीक्ष्य प्रियाधरे।
आघ्रातभृङ्गवत्पद्मे पद्मे दुःखं सहाधुना॥' इति।

सखी तत्कान्तगतत्वेन विषयस्य पदतदर्थमात्रनिपुणैः सहृदयैरेव च वेद्यतया प्रतिपत्तुः केवलरूपतया चमत्कारितया च प्रतीतेः। पूर्वपश्चाद्भावेन कालस्य च भेदः। तथा वाचकव्यञ्जकयोरप्यर्थापेक्षानपेक्षाभ्यां लक्ष्याद् भेदस्तु पूर्वमुक्तः। न चानुमानं व्यङ्ग्यस्य बोधकम्। तत्परम्परायामनेकानुमानकल्पने गौरवात्। तथा हि—

मनस्तव मनस्विन्या मलिनं न वपुस्तथा।
यत्पादनखराः कृष्णं श्लिष्यन्ति प्रतिबिम्बितम्॥

अत्र पादनखरा इति मानादावृतसर्वाङ्गत्वं मुद्रितनेत्रत्वञ्च। अन्यथा पादो-पान्तगतकृष्णवीक्षासहिष्णुत्वोपपत्तेः। पश्चात्सखीवचसा सत्वरं पादसंवृतिश्च। ततो मानशैथिल्यम्। कृष्णस्य च प्रणयजविनयमहिम्ना पादान्तिकमुपेत्यापि तत्स्पर्शाक्षमत्वम्। सख्याश्च तत्पक्षपातित्वं स्वसखीमानहानिसाग्रहत्वं चेत्यादीनि वस्तून्यनेकानुमानैः साध्यानीति गौरवम्। व्यञ्जनावादिनस्त्वेकयैव व्यञ्जनयेति लाघवात्सैव श्रेयसीति।

[वृत्तिः] अभिधामूलं त्वाह—

[कारिका] अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥

[वृत्तिः] संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥

इत्युक्तदिशा सशङ्खचक्रो हरिः अशङ्खचक्रो हरिरित्युच्यते। राम-लक्षणाविति दाशरथौ। रामार्जुनगतिस्तयोरिति भार्गवकार्तवीर्ययोः। स्थाणुं भज भवच्छिदे इति हरे। सर्वं जानाति देव इति युष्मदर्थे। कुपितो

मकरध्वज इति कामे। देवस्य पुरारातेरिति शम्भौ। मधुना मत्तः कोकिल इति वसन्ते। पातु वो दयितामुखमिति साम्मुख्ये। भात्यत्र परमेश्वर इति राजधानीरूपाद् देशाद् राजनि। चित्रभानुर्विभातीति दिने रवौ रात्रौ वह्नौ। मित्रं भातीति सुहृदि। मित्रो भातीति रवौ। इन्द्रशत्रुरित्यादौ वेदे एव न काव्ये स्वरो विशेषप्रतीतिकृत्। आदिग्रहणात्—

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिँ अच्छिवत्तेहिँ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिँ दिअएहिं ॥१॥।
[ एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥२॥

इत्यादावभिनयादयः।

[कमला०] अनेकेति। संयोगाद्यैरन्यार्थवाचकत्वे नियन्त्रिते प्रतिबद्धे इत्यन्वयः। अवाच्येति एकार्थधीकाले तात्पर्याग्रहादभिधयाऽनुपस्थाप्यत्वादवाच्य इवेत्यर्थः। तद्बोधकृत् व्यापारोऽञ्जनं व्यञ्जनेत्यर्थः। अयम्भावः—नानार्थपदस्यानेकार्थेषु अनेकाः शक्तयः शक्यभेदे तद्भेदात्। तेन यत्रार्थे तात्पर्यग्राहकं प्रकरणाद्यस्ति तत्रोद्बुद्धया शक्त्या तद्धीः अन्यस्याश्च निरोधः निरुद्धया तया बोधयितुमशक्यस्यार्थस्य बोधे प्रक्षवती वृत्तिर्व्यञ्जना। अन्यथा सुगन्धिमांसभोजनप्रक्रमे 'सुरभि मांसं भवान् भुङ्क्ते' इत्युक्तौ विदग्धस्य सुरभेर्गोमांसज्ञानाज्जुगुप्सा न स्यात्। न च तत्राभिधाया एव प्रसरणं प्रकरणादिना तत्प्रतिबन्धात्। यत्र तु न प्रकरणादि तत्राभिधानियन्त्रणाभावात् उद्बुद्धस्वस्वसंस्कारेणोभयधीः। यथा 'येन ध्वस्तमनोभवेन' इत्यादौ। ननु 'भद्रात्मन' इत्यादौ कथं व्यञ्जनापदनानार्थत्वज्ञाने तात्पर्यग्राहके सति अभिधानियन्त्रणाभावात् मैवं पदे नानार्थत्वज्ञानस्यार्थज्ञानाधीनत्वेनान्योन्याश्रयापत्तेः। तेनैकार्थबोधे तद् द्वारा तेभ्य एव पदेभ्यो द्वितीयार्थधीस्तेनार्थस्य व्यञ्जकत्वेऽपि शब्दस्य सहकारित्वाद् व्यञ्जनायाः शाब्दत्वम्। यथा वक्ष्यति 'अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः' इति। अन्वयबोधे संस्कारोपनीतभानमित्यन्ये। काव्यप्रदीपस्त्वर्थभेदे शब्दभेद इति मतेऽन्यार्थकशब्दात् शब्दान्तरसदृशं तदभेदभ्रमाच्चैक्यधीः। अतएवोक्तिमवाच्येतीत्याह। तन्न। अभिधानियन्त्रणाभावात्। संयोग इति। विप्रयोगः संयोगध्वंसो विभागो वा। विरोधः सहानवस्थानं वध्यघातकत्वञ्च। अर्थः प्रयोजनम्। प्रकरणं बुद्धिस्थत्वम्। लिङ्गमसाधारणधर्मः। अन्यस्य शब्दस्य सन्निधिः समानाधिकरण्यम्। सामर्थ्यं कारणत्वम्। औचिती योग्यता। व्यक्तिः स्त्रीनपुंसकादिः। स्वर उदात्तादिः आदिपदादभिनयः। स्पष्टमन्यत्। एते शब्दार्थस्यानवच्छेदेऽनिश्चये बाहुल्ये वा सन्देहे सति विशेषः

विवक्षितार्थस्तज्ज्ञानहेतव इत्यर्थः । ननु पदार्थज्ञानं विना कथं संयोगधीः संस्कारादिना तद्बोधे पदार्थस्यापि बोधात् कथं सन्देहः ? उच्यते ।

यावत्स्वार्थेषु शब्दानां प्राक् सम्बन्धोऽवधारितः ।
तावत् स्वान्यविरोधे न स्मृतः स कुरुते मतिम् ॥

इत्युक्तेर्युगपदनेकेष्वर्थेषु उपस्थितेषु तात्पर्यसन्देहेऽर्थप्रकरणादिसहकारेण पुनरनुसंहितात्तस्मादेव पदाद् विशेषार्थधीरित्युक्तदिशा भर्तृहरिप्रोक्तमार्गेणाच्युते विष्णौ हरिपदं नियम्यत इति शेषः । एवमग्रेऽपि सप्तम्यो योज्याः । यद्वाऽच्युते दाशरथावित्यादिसप्तम्यो विशेषप्रतीतिकृदित्यनेन योज्याः । विशेषप्रतीत्यभिधानियन्त्रणे इन्द्राद्यर्थधीर्व्यञ्जनयेति तात्पर्यार्थः । संयोगस्योदाहरणमाह सशङ्खेति । अत्र हरौ शङ्खचक्रेतिव्यत्यासो ज्ञेयः । अन्यथा शब्दसामान्याधिकरण्येन पौनरुक्त्यं स्यादिति देवनाथकाव्यप्रदीपौ । विप्रयोगस्याह अशङ्खेति । संयोगपूर्वकत्वात्तद्ध्वंसस्य विभागस्य च । तेन विष्णुधीरित्यर्थः । उच्यत इति पाठस्त्वज्ञानकृतोऽसम्बन्धश्च । साहचर्यस्याह रामेति । लक्ष्मणसाहचर्याद्रामो न भार्गवादिः रामसाहचर्याच्च लक्ष्मणो न सारसः । किन्तूभयमपि दाशरथौ वर्तते इत्यर्थः । विरोधस्याह रामार्जुनेति । अर्जुनविरोधाद्रामो भार्गवस्तद्वध्यत्वाच्चार्जुनः कार्तवीर्यः । तद्वत्तयोर्योद्ध्रोर्गतिः प्रकारः । सहानवस्थाने तु छायातपावित्युदाहार्यम् । अर्थस्याह स्थाणुमिति । छिदे छेदाय क्विप् । भवच्छेदस्य फलस्य वृक्षाद्यसाध्यत्वात् स्थाणुपदं शिवपरम् । प्रकरणस्याह सर्वमिति । राजामररूपनानार्थस्य देवपदस्य राजानं सम्बोध्य कथाप्रवृत्तौ प्रकृतराजपरत्वम् । स एव युष्मदर्थो बुद्धिस्थत्वात् । लिङ्गस्याह कुपित इति । मकरः ध्वजश्चिह्नं केतु वा यस्येति समुद्रे राज्ञि वा विरहिकोपस्य बाधात्कामपरं मकरध्वजपदमिति परमानन्दादयस्तन्न, मकरध्वजपदस्य समुद्रादौ क्वाऽप्यप्रयोगात् । वस्तुतस्तु कुपितपदात् सर्वकोपवतां प्राप्तौ मकरध्वजेन चिह्नेन कुपितपदं कामपरम् । मधुमत्यामप्येवम् । अन्यशब्दसन्निधेराह देवस्येति । अन्यस्य देवपदार्थस्य त्रिपुरभेदाभावात् देवपदं शम्भुपरम् । यद्यपि भवच्छिदे इत्यत्रान्यशब्दसन्निधिस्तुल्यस्तथापि सामानाधिकरण्याभावादगतार्थता । सशङ्खचक्र इत्यादौ तत्सत्त्वेऽपि व्यत्यासो ज्ञेय इत्युक्तम् । केचित्तु पुराराति पदं न नृपे किन्तु शम्भौ नियम्यते इत्यर्थः । सामर्थ्यस्याह मधुनेति । कोकिलमदहेतुत्वस्यान्यत्राभावान्मधुर्वसन्त एव न सुरादिः । औचित्यमाह पात्विति । मुखपदं साम्मुख्यपर न वदनपरम्, कामत्राणायोगात् । यद्यपि चुम्बनाद्वदनमपि कामत्रायकं तथापि साम्मुख्यमेव योग्यमन्यथा वैरस्यात् । न च सामर्थ्येन गतत्वं तत्र फलोपधानस्यात्र स्वरूपयोग्यताया विवक्षणात् । देशस्याह भातीति । अत्र राजधानीदेशे परमेश्वरो

राजा न विष्णुस्तस्य सर्वगतत्वादत्रेति वैयर्थ्यात्। कालस्याह चित्रेति चित्रा मानवः किरणा यस्येत्यविशेषेऽपि दिने रविः रात्रौ वह्निस्तयोस्तत्रैव दीप्त्याधिक्यात्। व्यक्तिः पुंस्त्वादिस्तस्याह मित्रमिति। मित्रं सुहृदि मित्रोऽर्क इत्यनुशासनात्तत्परत्वम्। भातीति पदाच्च लिङ्गनिर्णयः। अन्यथा द्वितीयैकवचने पुंस्त्वेऽपि तत्सत्त्वात् स्वरस्याह इन्द्रे ति इन्द्रशत्रुपदेऽन्तोदात्ते इन्द्रस्य शत्रुः शातयिता मारयितेति षष्ठीतत्पुरुषार्थः। षष्ठीसमासान्तस्येति सूत्रात्। आद्युदात्ते तु इन्द्रः शातयिता यस्येति बहुव्रीह्यर्थः। बहुव्रीहौ प्रकृत्या पूर्वपदमित्युक्तेः। **न काव्ये** इति। एवं ह्यर्थविशेषावगमे श्लेषभङ्गापत्तेरित्यर्थः। यथा श्लेषे वक्ष्यति काव्यमार्गे स्वरो न गण्यत इति। ननु काव्येऽपि स्वरोऽर्थधीहेतुरस्त्येव। तथाहि ध्वनेः पाठविशेषात्स्वरे विशेषधीः। यथोक्तं वीरबीभत्सरौद्रेषु स्वरितोदात्तं कुर्यादिति। काकोश्च मथ्नातीत्यादिषु व्यञ्जकत्वं वक्ष्यति। कुस्वराच्च रोदनादिधीः। दृष्टे प्रसीदाधुनेति दृष्टे इत्यत्र प्लुते मयोति व्यावृत्तेः। कान्तादृष्टिवर्थः। अतः कथं न काव्ये इत्युक्तम्? अत्र लास्भास्करः स्वरशब्देनोदात्तादिरेव विवक्षित इत्याह। अर्वाञ्चस्तु यथा वेदे बाहुल्येन स्वरादर्थधीर्न तथा काव्ये किन्तु क्वचिदित्याहुः। मधुमतीकारादयस्तु अभिधानियामकः स्वरो वेदे एव अनुशासनान्न काव्ये। तत्र तु काक्वादिसहकृतादर्थाद् व्यञ्जनयाऽर्थधीर्नाभिधयेत्याहुः। मूले आदिपदग्राह्यमभिनयमाह एद्दहेति। एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्यामेतावन्मात्रावस्था एतावन्मात्रैरेव दिवसैः अक्षिपत्राभ्यामुपलक्षितेति शेषः। परिमाणे दघ्नप्रत्ययः। हस्तचेष्टादिना वदरघटाद्याकारेणाल्पस्तनी स्थूलस्तनीति प्रदर्शनमभिनयः। चेष्टया एतावन्मात्रशब्दाः परिणामविशेषपराः। तेन स्तनादीनां स्थूलताकोशाद्याकारधीः सर्वनाम्नाञ्च बुद्धिस्थे शक्तेर्नानार्थता। आदिपदात् 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्' इत्यत्र वक्षोनिहितहस्तादात्मनिर्देशादात्मापदेशोऽभिप्रेतः। एव'मञ्जलिना सूर्यमुपतिष्ठते' 'सक्तून् जुहोति' इत्यादौ ऊर्ध्वाग्रत्वव्याकोशादि।

[सरि०] निरूपिता लक्षणामूला व्यञ्जना। फलञ्चास्या अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यध्वनी। प्राथम्याद्धि प्रथमत्वेनाभिधामूलैव सा वक्तुमर्हा तथापि तात्पर्यसहकारेणाभिधेयव्यङ्ग्यार्थप्रतीतौ व्यञ्जनायां प्रमाणाभावशङ्कानिरासाय व्युत्क्रमेण लक्षणामूला निरूपिता। तेनैव ध्वनावपि प्रथममविवक्षितवाच्य एव निरूपयति। एतेन लक्षणाया एव व्यञ्जनामूलत्वाशङ्का मा भूदिति तन्निरूपणानन्तरमेव विवेचिता साऽभिधामूलाऽपि। तदभिधायककारिकावतारणाय वृत्तिकृदुपक्रमते **अभिधेत्यादि**। **अभिधामूलम्** अभिधा वाचकशक्तिर्मूलं योनिर्यस्य

तदिति तादृशं व्यञ्जनं व्यञ्जनाव्यापारम्। तु इति लक्षणामूलव्यवच्छेदाय। **आह** निरूपयति कारिकाकृदिति। अभिधामूला व्यञ्जना तु पूर्वोक्तलक्षणामूला-वैलक्षण्या वक्ष्यमाणप्रकारेत्याशयः। कारिकामवतारयति **अनेकेति** अनेकार्थस्य शब्दस्य संयोगाद्यैः वाचकत्वे नियन्त्रिते अवाच्यार्थधीकृत् व्यापृतिः अञ्जनम् इति पदव्यवस्था। **अनेकार्थस्य** अनेके एकाधिका अर्थाः वाच्या यस्य तादृशस्यानेकत्र गृहीतशक्तिकस्य। **शब्दस्य** वर्णसमूहात्मनः पदस्य। **संयोगाद्यैः** संयोगः प्रसिद्ध-सम्बन्ध आद्यः प्रथमो येषान्तैः संयोगविप्रयोगादिभिर्वक्ष्यमाणैस्तात्पर्यग्राहकैः। **वाचकत्वे** अभिधायाम्। **नियन्त्रिते** शेषप्रसरणं निरुध्यैकत्र नियमिते। सति। **अवाच्यार्थधीकृत्** अवाच्यो निरुद्धयाऽभिधया इदमित्यन्तया प्रतिपादयितुमशक्यो योऽर्थः इतरेण संस्कारबोधकेन प्रतिरुद्धफलत्वात्संस्कारोद्बोधकान्तररहित इति तस्य धियं प्रतीतिं करोति विदधाति इति। नानार्थस्य शब्दस्य संयोगादिवशादर्थान्तर-स्मृतिजननप्रतिबन्धेन एकार्थमात्रस्मृतिजनकत्वे कृते सति अर्थान्तरप्रत्ययहेतुः। **व्यापृतिः** व्यापारः। **अञ्जनं** व्यञ्जना नामेति। अयमाशयः—एकस्य हि पदस्य शक्यतावच्छेदकभेदेन शक्तिभेदादनेकत्र अनेकैव सा। संयोगादिवशात्स्वेतरा-तिरोधानपूर्वकं यस्मिन्नर्थे तात्पर्यं पर्यवस्यति तद्गोचरशक्त्या तदर्थोपस्थापनम्। तथा निरुद्धयाभिधया बोधयितुमशक्यस्यार्थस्य बोधने प्रभवन्ती वृत्तिर्व्यञ्जनेति सारबोधि-न्याम्। अनुभवसिद्धाप्रकृतार्थस्मृत्यन्यथानुपपत्त्या अभिधानिरोधेऽपि तद्विषयार्थ-प्रतीतिर्व्यञ्जनया। न च श्लेषवदभिधात एव द्वितीयार्थग्रहः सम्भवस्तस्या वाचकत्व-स्यैव निरोधात्। न च संयोगादिभिरभिधेव व्यञ्जनाऽपि नियन्त्रिता भवतीति वाच्यं, तदतिक्रम्य बोधकत्वेनैव तत्सिद्धेः। तदभावे सुगन्धिमांसप्रकरणे सुरभिमांस-कथने गोमांसानुपपत्तिस्थित्या भोक्तुर्जुगुप्सा न स्यात्। कारिकां व्याचिख्यासुर्वृत्ति-कृत्संयोगादीन् गणयति वाक्यपदीयमनुसृत्य **संयोग** इत्यादिना। संयोगः प्रसिद्ध-सम्बन्धः स च स्ववाच्येष्वर्थेषु एकार्थनिष्ठार्थान्तररूपः। **विप्रयोगः** संयोगध्वंसो विभागो वा। **साहचर्यम्** स्ववाच्येष्वर्थेषु एकेन वस्तुना पदार्थान्तरस्य प्रायशः सहचरितत्वम्। एककालदेशावस्थायित्वं सान्निध्यं सादृश्यं वा। **विरोधिता** वध्य-त्वघातकत्वादिः सहानवस्थानं वा। **अर्थः** प्रयोजनम्। **प्रकरणं** प्रस्तावो बुद्धिविषयो वा। **लिङ्गं** वस्तुचिह्नं वा स्ववाच्यान्तरेभ्यो व्यावृत्तो वा परपक्षव्यावर्तको धर्मः। **अन्यस्य** स्वेतरस्य। शब्दस्य नियतार्थस्य पदस्य। **सन्निधिः** सामीप्यम्। पदान्तर-साचिव्यं वा। **सामर्थ्यं** कारणत्वं युक्तिर्वा। **औचिती** युक्तता अन्वययोग्यत्वं वा। **देशः** स्थानमद्रिवनराष्ट्रादि। **कालः** नक्तन्दिनर्तवः। **व्यक्तिः** स्त्रीपुंनपुंसकादिः। **स्वरः** उदात्तानुदात्तस्वरिताः। आदिपदादभिनयस्यापि ग्रहणम्। एते हि

शब्दार्थस्य शब्दवाच्यार्थस्य। अनवच्छेदे कतमो ह्यर्थोऽत्र विवक्षित इति सन्देहे सति। अनेकेष्वर्थेषु कतमोऽत्र विवक्षित इति अनिश्चिते सतीति। विशेषस्मृति-हेतवः विशेषस्य विवक्षितस्यार्थस्य स्मृतिः प्रतीतिस्तस्या हेतवः कारणानि अवच्छेद-प्रतीतिनिबन्धनानीति। इत्थं शिष्टसम्मतिमनूद्य प्रकृते तद्योजयति इतीति।

इत्युक्तदिशा इत्थं निर्दिष्टमार्गेण। अनेनैतयोः प्रकृतकारिकाभ्रमोऽपि निरस्यते। अथ क्रमेण तेषां वाचकत्वनियामकतामुदाहरति। तत्र संयोगो नाम प्रसिद्ध-सम्बन्धस्तस्य वाचकत्वनियामकत्वं यथा 'सशङ्खचक्रो हरिः' इत्यत्र अच्युते विष्णौ। हरिपदस्य वाचकत्वं नियम्यते शङ्खचक्रयोगेनेत्याशयः। हरिशब्दो हि 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥' इति नानार्थकः। विप्रयोगेन वाचकत्वनियमनं यथा 'अशङ्खचक्रो हरिः' इत्यत्र। अत्रापि नानार्थको हरिशब्दः प्रसक्तिपूर्वकत्वात्प्रतिषेधस्य विष्णोरन्यत्र प्रसक्त्यभावाद् अच्युते विष्णौ एव नियम्यते। तेनोभयोरेव हरिशब्देन विष्णुरेवोच्यते। एवमेव 'सवत्सा धेनुः' 'अवत्सा धेनुः' इत्यत्र नवप्रसूतगोमहिषीस्त्रीवाचकस्य धेनुशब्दस्य 'धेनुर्गोमात्रके दोग्ध्र्याम्' इति कोशात् वत्ससयोगवियोगाभ्यां वाचकत्वं गव्येव नियम्यते इति बालबोधिन्याम्। एकस्मिन् कार्ये परस्परसापेक्षत्वं साहचर्यम्। तेन नानार्थकशब्दस्य वाचकत्वनियमनं यथा 'रामलक्ष्मणौ' इति। अत्र पशुविशेष-जामदग्न्य-कृष्णाग्रज-राम-श्वेत-असित-मनोज्ञाद्यर्थानां वाचकस्य रामशब्दस्य लक्ष्मण-पदसाहचर्येण दाशरथौ दशरथपुत्रेऽर्थे तथैव रामानुज-दुर्योधनसुत-सारसादीनां वाचकस्य लक्ष्मणशब्दस्य रामसाहचर्येण रामानुजेऽर्थे वाचकत्वनियमनम्। वध्य-घातकभावरूपं विरोधिता तया वाचकत्वनियमनं यथा 'रामार्जुनगतिस्तयोः' इत्यत्र रामार्जुनयोः भार्गवकार्तवीर्ययोः परशुरामहैहयेशयोः। अत्रापि रामशब्दो दाशरथि-बलराम-जामदग्न्याद्यर्थानां वाचकस्तथैवार्जुनशब्दः पार्थ-कार्तवीर्य-वृक्षविशेषाद्यर्थानां वाचकः किन्तु अर्जुनविरोधित्वाद्रामो भार्गव एवात्र तद्वध्यत्वा-दर्जुनश्च कार्तवीर्य एवेति। एवमेव 'रामरावणौ' छायातपौ' 'कर्णार्जुनौ' इत्यादौ च। अनल्पसाध्यं फलमर्थः। तेन नानार्थकशब्दस्य वाचकत्वनियमनं यथा 'स्थाणुं भज भवच्छिदे' इत्यत्र। अत्र हि शङ्कुरुद्राद्यर्थानां वाचकोऽपि स्थाणुशब्दः शङ्कु-साध्येन जन्मजरामृत्युप्रभृतिसांसारिकदुःखच्छेदनरूपेण फलेन हरे शङ्करे नियमित-वाचकः। वक्तुः प्रतिपाद्यस्य बुद्धिस्थत्वं प्रकरणम्। तस्य नियामकत्वं यथा 'सर्वं जानाति देवः' इत्यत्र। अत्र देवशब्दः मेघे सुरे राज्ञि च प्रसिद्धार्थोऽपि प्रकरणेन प्रकृते राजन्येव नियमितार्थः। तेन युष्मदर्थे इति भवानित्याशये। राजसम्बोध्य-दूतकथारूपं प्रकरणम्। राजैवाऽत्र युष्मदर्थो बुद्धिस्थत्वात्। अर्थप्रकरणयोरयमेव भेदो

यदर्थः शब्दवान् प्रकरणमशब्दमिति बालबोधिनीकाराः। लिङ्गं हि वस्तुचिह्न-मसाधारणो धर्मः। तेन नानार्थकशब्दस्य वाचकत्वनियमनं यथा 'कुपितो मकरध्वजः' इत्यत्र। समुद्रे रतिपतौ च वाचकत्वेन प्रसिद्धस्य मकरध्वजशब्दस्य मकरो नक्र स एव वा तदाकारो ध्वजो यस्येति समवायसम्बन्धवता कोपरूपलिङ्गेन कामे रतिपतौ वाचकत्वनियमनमिति प्रदीपकाराः। तस्य कामे प्रसिद्धयैव नियमनात् 'स्थाणुरपश्यत्' इत्यादि लिङ्गोदाहरणम्, इति नरसिंहाचार्याः। समुद्रे राज्ञि वा विरहिकोपस्य बाधात्कामपरं मकरध्वजपदमिति परमानन्दमहोदयाः। समुद्रस्य कोपाभावाच्छब्दोऽयं कामे नियमितवाच्य इति श्रीवत्सलाञ्छनाः। कुपितपदात्सर्व-कोपवतां प्राप्तौ मकरध्वजेन चिह्नेन कुपितपदं कामपरमिति कमलाकरभट्टाः। एवमेव मधुमतीकाराश्च कोपरूपचिह्नेन मकरध्वजशब्दः मन्मथे नियम्यते इति। वस्तुतस्तु वृत्तिकारस्य मकरध्वजशब्दस्यैवार्थनियमनमभीष्टम्। मकर एव ध्वजश्चिह्नं यस्येति समुद्रेऽपि मकरध्वजशब्दस्य वाचकत्वं न निवार्यते कामं तस्य प्रसिद्धिः कामे एव स्यात्। तेन हि कोपरूपचिह्नेन समुद्रे तदभावान्मकरध्वजस्य कामे वाचकत्व-नियमनमित्यपि पक्षः साधुरेव। मते निहतार्थत्वे कुपितत्वेन यावत्कुपितप्राप्तौ मकरध्वजेन चिह्नेन कुपितशब्दः कामे नियम्यते। अनेकव्यक्त्युपस्थापनसामर्थ्यात् कुपितशब्दस्य नानार्थत्वमिति मधुमतीकाराशयः साधुरप्यत्र नाभीष्टः। अव्यभि-चरितस्यान्यस्य शब्दस्य सन्निधेर्नियामकत्वं यथा 'देवः पुरारातिः इत्यत्र। अत्र हि सुर-मेघ-नृपाद्यर्थानां वाचको देवशब्दस्य 'पुरारातिशब्दसमभिव्याहारेण शम्भु-भिन्नस्य तदसम्भवात् शम्भौ महादेवे। वाचकत्वनियमनमिति। केचित्तु पुरस्य नगरस्य तदाख्यासुरस्य चारातिः शत्रुरिति विग्रहेण पुरारातिशब्दस्य नानार्थकत्वं परिकल्प्य तस्य देवशब्दसान्निध्याच्छम्भौ वाचकत्वनियमनमित्याहुः। तद् द्राविड-प्राणायाम एव। सामानाधिकरण्यं सामर्थ्यं तत्कारणनियमः। तस्य नियामकत्वं यथा 'मधुना मत्तः कोकिलः' इत्यत्र। अत्र हि मधुशब्दः पुष्परस-क्षौद्र-मद्य-द्रुम-विशेष-वसन्त-विष्णु-चैत्र-योषित्प्रभृतिनानार्थवाचकोऽपि वसन्तभिन्नार्थस्य कोकिल-मादनसामर्थ्यस्याप्रसिद्धेः सामर्थ्येन वसन्तार्थे एव नियमितः इति। औचिती योग्यता। तस्या नियामकत्वं यथा 'पातु वो दयितामुखम्' इत्यत्र। अत्र हि निःसरण-वक्त्र-प्रारम्भ-उपाय-नाटकसन्धि-शब्दाद्यर्थानां वाचकोऽपि उत्कण्ठित-मनोरथसाधनौचित्येन मुखशब्दः साम्मुख्येऽर्थे नियमितः। केचित्तु इष्टप्राप्त्यनिष्ट-निवारणाद्यनेकं रूपरक्षार्थबोधकस्य पाधातोः औचित्येन साम्मुख्येऽर्थे नियमन-मित्याहुः। 'बहुप्रकारं हि रक्षणम्। तत्र दयितामुखमपेक्ष्य औचित्यात् प्रसाद-साम्मुख्यमेव पालनं नियम्यते' इति सङ्केते। वृत्तिकृदभिप्रायस्तु मुखशब्दार्थनियमन

एव पर्यवस्यति। रक्षणञ्च कामबाधाहरणेन। तच्चासम्मुखीनया न सम्भवतीति मुखशब्दस्यैव साम्मुख्येऽर्थे वाचकत्वनियमनं सिद्धम्। देशः स्थानं पुरवनगिरिराष्ट्रादि। तेन शब्दस्य वाचकत्वनियमनं यथा 'भात्यत्र परमेश्वरः' इत्यत्र। अत्र हि शिव-विष्णु-नृपप्रभृत्यर्थानां वाचकोऽपि परमेश्वरशब्दः अत्रेति राजधानीरूपदेशने राजनि नियमितार्थ इति शिवविष्ण्वादीनां सार्वदेशिकत्वात्। कालो नक्तन्दिनर्तुरूपः। तेन वाचकत्वनियमनं यथा 'चित्रभानुर्विभाति' इत्यत्र। अत्र हि चित्रा भानवः किरणा यस्येति सूर्ये वैश्वानरे च प्रसिद्धश्चित्रभानुशब्दः दिने दिवसकाले। रवौ सूर्ये। रात्रौ निशाकाले। वह्नौ वैश्वानरे च नियमितार्थ इति। स्त्रीपुंस्त्वादिर्व्यक्तिस्तया वाचकत्वनियमनं यथा 'मित्रं भाति' इत्यत्र क्लीबत्वेन सुहृदि 'मित्रो भाति' इत्यत्र पुंस्त्वेन सूर्ये च नियमितार्थः। मित्रमित्यत्र लिङ्गनिर्णयश्च भातीति पदेन। पुंस्त्वेऽपि द्वितीयैकवचने तथाप्रयोगसम्भवात्। 'मित्रं प्रणमति' इत्यादौ तु प्रकरणवशादेव लिङ्गनिर्णयः। इत्थं संयोगादीन् व्यवस्यन्तान्नानार्थकशब्दवाचकत्वनियामकहेतून् सप्रपञ्चं व्याख्याय स्वरस्य वाचकत्वनियामकत्वं व्याचष्टे इन्द्रेत्यादि। स्वरः उदात्तादिः। इन्द्रशत्रुः इन्द्रस्य शत्रुः इन्द्रः शत्रुर्यस्य स इति च। इत्यादौ। वेदे वेदवाक्ये। एव इत्यवधारणे। न नैव। काव्ये कविकृतौ। विशेषप्रतीतिकृत् विशिष्टार्थबोधक इति। अयम्भावः—इन्द्रशत्रुः ( तैत्ति० ६।३।१ ) इति वाक्ये इन्द्रस्य शत्रुरिति षष्ठीतत्पुरुषे 'समासस्य' ( ६।१।२२३ पा० ) इति सूत्रादन्तोदात्तः स्वरः। तेनेन्द्रस्य शमयितेत्यर्थः। इन्द्रः शत्रुः शातयिता यस्येति विग्रहे बहुव्रीहौ 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( पा० ६।२।१ ) इति आद्युदात्तः स्वरः। तेनानेन इन्द्र एव तथा लभ्यते इति। आद्येऽर्थे इन्द्रस्य शातनकर्मतयाऽवगमः। द्वितीये तु इन्द्रस्य शातनकर्तृत्वमिति। यथोक्तं पाणिनीयशिक्षायाम्—मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति। इन्द्रघातकोत्पादननिमित्तविहितयज्ञे आद्युदात्तत्वेन पाठात् तद्विपरीतमेव फलमिति परम्परा। 'इन्द्रशत्रुर्वर्द्धस्व' इति पूर्णः पाठः। अत्र केचित्काक्वादिना काव्येऽपि विशिष्टार्थप्रतीतिरिति न काव्ये' इत्यत्र वैमत्यं भजन्ते। ते हि वेदे प्रायेण काव्ये तु क्वचिदेवेत्यस्याशयं गृह्णन्ति। परे तु स्वरशब्देनाऽत्रोदात्तादिरेव विवक्षितः। न काकुरिति। वस्तुतस्तु स्वर उदात्तादिः काकुर्वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति न प्रकृतोक्तं नानार्थकशब्दस्यैकार्थनियन्त्रणरूपं विशेषमिति। केचित्तु 'दृष्टे प्रसीदाऽधुना' इत्यत्र दृष्टे इति प्लुतकरणेन तस्योदात्तरूपत्वात्तेन मयेति व्यवच्छेदेन स्वरस्यापि काव्ये उपयोग इत्यामनन्ति। तत्त्वे तु नाभिधानियामकमात्रं काव्योपयोगि। काव्ये तु नियमितायामभिधायां पुनस्त-

दर्थस्य सहकारित्वेन व्यञ्जनायाः प्रत[illegible]त्तदेवोपयोगीति बोध्यम्। 'मथ्नामि कौरवशतं समरे न कोपात्' इत्यत्र काक्वादिसहकृतादर्थाद् व्यञ्जनया विशेषार्थावगतिर्नाभिधया नियमितवाचकत्वयेति। 'स्वरादयः' इत्यत्रत्यमादिपदं व्याचष्टे **आदीत्यादि। आदिग्रहणात्** 'स्वरादयः' इत्यत्र आदिपदपाठात् 'एद्दह' इत्यादौ **अभिनयादयः** हस्तादिक्रियया नायिकावस्थानुकरणमभिनयः आकारादिप्रदर्शको हस्तादिव्यापारो वा। अत्राप्यादिपदमपदेशग्रहणार्थम्। अपदेशश्च हृदयनिहितहस्तादिनाऽभिमतनिर्देशःति। अभिनयमुदाहरति **एद्दहमिति** एद्दहमेत्तत्थणिआ(एतावन्मात्रस्तनिका) एद्दहमत्तेहि ( एतावन्मात्राभ्याम् ) अच्छिवत्तेहिं ( अक्षिपत्राभ्याम् ) एद्दहमेत्तेहिं ( एतावन्मात्रैः ) दिअएहिं ( दिवसैः ) एद्दहमेत्तावत्था ( एतावन्मात्रावस्था ) इत्यन्वयः। प्रवासिनि नायके नायिकावस्थां बोधयन्त्या कस्याश्चिदुक्तिरियम्। यत्तु गुणश्रवणमात्रजनितानुरागविषयमुक्तं तच्चिन्त्यमेव एतावन्मात्रैर्दिवसैरिति सम्भोगानन्तरविप्रलम्भस्यैव बोधात्। **एतावन्मात्रस्तनिका** एतदामलकादिरूपं करतलमुकुलनेन निर्दिष्टं परिमाणं ययोस्तावेतावन्तौ एतच्छब्दात्परिमाणे वतुप्। एतावन्तावेव एतावन्मात्रौ स्वार्थे मात्रच् वा चिदेव चिन्मात्रमितिवत् मात्रशब्दोऽवधारणार्थकोऽपि। मयूरव्यंसकादित्वात्समासः। एतावन्मात्रौ स्तनौ कुचौ यस्याः सा ततः स्वार्थे कन् तथाविधा। **एतावन्मात्राभ्याम्** एतत् विवक्षितकमलादिरूपं परिमाणं ययोस्ते ताभ्याम्। **अक्षिपत्राभ्यां** नयनदलाभ्याम्। उपलक्षितेति। उपलक्षणे तृतीया। **एतावन्मात्रैः** एतत् बुद्धिस्थं परिमाणं येषान्तथाविधैः। **दिवसैः** दिनैर्वा लक्षणया मासैः करणे तृतीया। **एतावन्मात्रावस्था** एतत् विवक्षितं परिमाणमुच्चतादि यस्याः सा तादृशी अवस्था स्वरूपं यस्याः सा। सञ्जातेति शेषः। अत्र एतावन्मात्रशब्दस्य तत्र तत्र स्तनादावभिनयभेदादर्थभेदोऽपि। तेनाऽत्राभिनयस्य वाचकत्वनियामकत्वम्। सर्वनाम्नो बुद्धिस्थतावच्छेदकप्रकारेण शक्तौ नानार्थता। प्रथमे हि एतावन्मात्रशब्दस्य आमलकादिपरिमाणेऽर्थे द्वितीये तस्य विवक्षितकमलदलादिपरिमाणे तृतीये बुद्धिस्थपरिमाणे चतुर्थे च विवक्षितदैर्घ्यादिपरिमाणे वाचकत्वनियमनमभिनयेन। स चाद्ये आमलकमुकुलाद्याकारो द्वितीये पद्मपलाशाद्याकारः तृतीयेऽङ्गुल्यग्रधारणादिः चतुर्थे उच्चतापुष्ट्यादिप्रदर्शनमेव। सर्वनामशब्दप्रवृत्तिनिमित्तानि बुद्धिप्रकारत्वादिनाऽनुगम्य शक्तिग्रहः सर्वसाधारण्येन प्रवर्तते। हर्यादिपदे तु न तथेत्यन्यदेतदिति गोकुलनाथीयविवरणे स्पष्टम्। 'अभिनयादयः' इत्यत्र आदिपदात् द्विरुक्ति-अपदेश-निर्देश-संज्ञा-इङ्गित-आकारादीनां ग्रहणमित्याचार्याः। तत्र द्विरुक्त्या नियामकत्वं यथा 'इयमियं मयदानवनन्दिनी' इत्यत्र इयम्पदस्य मयपुत्र्यर्थे नियमनम्। अपदेशो वक्तृनिष्ठोदात्तता। स चाभिमतनिर्देशः आत्मन इदमादिपदेन न त्वस्मच्छब्देन। यथा कुमारे—

"इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसाम्प्रतम् ॥" इति ।

अत्र बुद्धिस्थपरामर्शकत्वेन नानार्थकस्य इतः इति पदस्य वाचकत्वहृन्निहित-हस्तरूपेणापदेशेन वक्तरि नियम्यते । नायमभिनयाऽनुकरणाभावात् । हर्यादिषु च तथात्वाभावात्तद्भिन्नत्वमस्य । निर्देशेन वाचकत्वं नियमनं यथा काव्यादर्शसङ्केते उद्धृतम् – "भर्तृदारिके ! दिष्ट्या वर्धामहे । यदत्रैव कोऽपि कस्यापि तिष्ठतीति मामङ्गुलीविलासेनाख्यातवत्यः ।" इत्यत्र निर्देशेन किंशब्दस्य नायकेऽर्थे नियमनं सर्वनामत्वेन नानार्थकस्य । संज्ञाया नियामकत्वं यथा—

"अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥"

इत्यत्र । इङ्गितेन यथा —

"कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।
अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥"

इत्यत्र । आकारेण यथा—

निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न विद्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥

इत्यत्र ।

[वृत्तिः] इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा नियमनात् तस्याः । न च लक्षणा मुख्यार्थबाधाद्यभावात् । अपि त्वञ्जनं व्यञ्जनमेव व्यापारः । यथा—

'भद्रात्मनो दुरधिरोहतनोर्विशाल
वंशोन्नतेः कृतशिलीमुखविग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्' ॥१२॥ १९॥

[कमला०] मूलं योजयन्नाह इत्थमिति । निवारिते इति प्रकृतार्थबोधादप्रकृतार्थधी-प्रतिबन्धेऽपीत्यर्थः । न लक्षणेति । अन्यार्थे तात्पर्यग्रहात्तात्पर्यविषयीभूतार्थानु-पपत्त्यभावान्नानार्थेऽपि लक्षणापत्त्या तदुच्छेदापत्तेश्चेत्यर्थः । भद्रेति । भद्रः शोभनो गजजातिविशेषवांश्च । भद्रो मन्द्रो मृगश्चैवेत्युक्त्यैवैतेष्टौ गजयोनय इत्युक्तेः आत्मा

स्वरूपं यस्य। दुरधिरोहाऽनाक्रमणीया आरोढुमशक्या च तनुर्यस्य। विशाला वंशस्य कुलस्योत्पत्तिर्महत्त्वं यस्य। पक्षे विशालवंशवदुन्नतिरुच्चता यस्याः। कृतः शिलीमुखानां बाणानां सङ्ग्रहो येन पक्षे शिलीमुखाः भ्रमराः। 'अलिबाणौ शिलीमुखौ' इत्यमरः। अनुपप्लुताऽनभिभाव्यानुत्थता च गतिर्ज्ञानं गमनञ्च यस्य। परेषां शत्रूणां वारणस्य निवारकस्य गजश्रेष्ठस्य च। करो हस्तः शुण्डा च। दानं वितरणं मदश्च तदम्बुसेकेन सततं सुभगोऽभूदित्यर्थः। अत्र प्रकरणाद्राज्ञि तदन्वये चाभिधानियन्त्रणान्न तत्रा गजधीस्तद्वोधकप्रकरणाद्यभावात् किन्तु व्यञ्जनया। न त्वर्थशेषेऽर्थद्वये शक्तिरत्र व्यञ्जनेति कुतो वैषम्यम्। अत्राहुः। नानार्थेषु यत्र द्वयोस्तात्पर्यं तत्र श्लेषः यत्रैकत्रैव तत्र व्यञ्जनेति। यत्र क्रमेण तत्रावृत्तिरिति केचित्। शब्दस्य विरम्यव्यापाराभावात् तत्रापि व्यञ्जनेति युक्तम्। तत्त्वं तु संयोगाद्यैरभिधानियन्त्रणाभावे श्लेषस्तत्सत्त्वे व्यञ्जनेति।

[सरि०] इत्थं हि भर्तृहरिकारिकां प्रासङ्गिकत्वेन सप्रपञ्चं व्याख्याय तदर्थं ग्रन्थे सङ्गमयति **इत्थमित्यादिना**। इत्थं अनन्तरोक्तप्रकारेण। **संयोगादिभिः** संयोगाद्यैरपदेशान्त्यैः प्रकरणैः। **अर्थान्तराभिधायकत्वे** अनेकार्थस्य शब्दस्य तात्पर्यग्राहकार्थातिरिक्तार्थवाचकत्वे। **निवारिते** नियमिते सति। **अपि** इत्यवधारणे। **अनेकार्थस्य** नानार्थकस्य। **शब्दस्य**। **यत्** यदेव। **क्वचित्** कुत्रचित्प्रयोगे। **अर्थान्तरप्रतिपादनम्** अर्थान्तरस्य वाच्येतरार्थस्य प्रतिपादनं बोधनम्। **तत्र** तादृशस्थले। **न**। **अभिधा** वाचकशक्तिः। तत्र हेतुमाह **तस्या** इति। तस्याः अभिधायाः। **नियमनात्** निरोधात्संयोगादिप्रकरणैः। **न** नैव। **लक्षणा**। **मुख्यार्थबाधाद्यभावात्** मुख्यार्थबाधतत्सम्बन्धरूढिप्रयोजनान्यतरसद्भावादीनां विरहात्। न च तात्पर्यानुपपत्त्यैव लक्षणा द्वितीयार्थस्य तात्पर्यविषयस्याऽपि तात्पर्यग्राहकप्रकरणाद्यभावात्। तर्हि किमित्याह **अपीति**। **अपितु** किन्तु। **अञ्जनं** व्यञ्जनं प्रत्यायनम्। एव इत्यवधारणे। **व्यापारः** वृत्तिः। अयमेवाभिधामूला व्यञ्जनेति व्यपदेश्यः। तदेवोदाहरति **यथेति**। तदेव प्रस्तौति **भद्रात्मन इति**। भद्रात्मनः दुरधिरोहतनोः विशालवंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य अनुपप्लुतगतेः परवारणस्य यस्य करः सततं दानाम्बुसेकसुभगः अभूत् इत्यन्वयः। कप्फिणाभ्युदयमहाकाव्यगतं पद्यमिदम्। (१/३८)। **भद्रात्मनः** भद्रो भव्यः आत्मा अन्तःकरणं स्वभावश्च यस्य। **दुरधिरोहतनोः** दुरधिरोहा व्यूढोरस्कत्वादिना परैर्दुर्धर्षा तनुर्वपुर्यस्य। **विशालवंशोन्नतेः** विशाला सुविस्तृता बह्वपत्या वंशोन्नतिरन्वयमहत्ता यस्य वा विशाले सुविस्तृते वंशे कुले उन्नतिरुत्पत्तिर्यस्य यद्वा विशालस्य सुविपुलस्यापि वंशस्य कुलस्य उन्नतिर्महत्त्वाधिक्यं यस्मात्तस्य। **कृतशिलीमुखसङ्ग्रहस्य** कृतो विहितः शिलीमुखानां

बाणानां 'अलिबाणौ शिलीमुखौ' इति कोशात् सङ्ग्रहः सञ्चयो येन तस्य । **अनुपप्लुतगतेः** अनुपप्लुता असङ्कीर्णा गतिर्मर्यादा वा अबाधिता गतिर्ज्ञानं यस्य वा अनुपप्लुताः सज्जनास्तेषां गतिराश्रयस्तस्य । **परवारणस्य** परान् रिपून् वारयति निरुणद्धि इति तस्य । तादृशस्य **यस्य** राज्ञः कफ्फिणस्य । **करो** हस्तः । **सततम्** अनारतमेव । **दानाम्बुसेकसुभगः** दानस्य विश्राणनस्य यदम्बु जलं दाननिमित्तस्पृष्ट-वारि तस्य सेकेन सेचनेन सुभगः शोभनः । **अभूत्** समपद्यत इति । इत्थमस्य प्राकरणिकोऽर्थोऽभिधया बोध्यः । विरतायां प्राकरणिकार्थबोधानन्तरमभिधायां पुनः सहृदयानां प्रतिभासामर्थ्यात् एभिरेव पदैरबाधितार्थैरेव गजरूपो द्वितीयोऽर्थोऽपि प्रतीयते । तद्यथा **भद्रात्मनः** सुशोभनशरीरस्य नितान्तपुष्टत्वात् । **दुरधिरोहतनोः** दुःखेनैवाधिरोह्यशरीरस्य अत्युच्चत्वात् । **विशालवंशोन्नतेः** विशालाः सुविपुला वंशस्य पृष्ठावयवस्य 'वंशः सङ्घेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च' इति कोशात् उन्नतिरुच्चता यस्य वा विशालः सुदीर्घो यो वंशो वेणुस्तद्वत् उन्नति-रुच्चता यस्य तस्य । **कृतशिलीमुखसङ्ग्रहस्य** विहितभ्रमरसङ्ग्रहस्य मदगन्धाधिक्येन । **अनुपप्लुतगतेः** अनुद्धतधीरगमनस्य अविहतगतेर्वा । **परवारणस्य** परः श्रेष्ठो वारणो हस्तो तस्य । तादृशस्य यस्य गजराजस्य । करः शुण्डा । **सततम्** । **दानाम्बुसेकसुभगः** दानो मदस्तस्याम्बु जलं तस्य सेकेन सुभगः सुशोभनः अभूदिति । अत्र हि शब्दस्य विरम्यव्यापाराभावान्नाभिधा गजरूपमप्राकरणिकमर्थं बोधयितुं प्रभवति । न चात्र लक्षणा कुत्रापि मुख्यार्थबाधाभावात् अप्राकरणिकस्य गजरूपस्यार्थस्य प्राकरणिकार्थेन सह सम्बन्धाभावात् तथाकरणे रूढिप्रयोजनान्यतर-सद्भावाच्च । नैव च तात्पर्या सत्यपि गजरूपार्थे तात्पर्यविषये तद्ग्राहकप्रकरणाद्य-भावात् । तर्हि कथं द्वितीयार्थबोध इत्यपेक्षायामुच्यते अयं व्यञ्जनाविषय इति । व्यञ्जनैव वृत्यन्तरासाध्यं सहृदयवासनाकाङ्क्षितमर्थं बोधयितुं प्रभवतीति । तेन स्थितमेतत् यदभिधालक्षणोभयमूला काचित्प्रसिद्धप्रस्थानातिक्रान्ता शक्तिरस्ति शब्दस्य या हि व्यञ्जनेत्युच्यत इति । अत्र च नरपतिगजपतयोर्मिथः उपमानो-पमेयभावोऽपि व्यङ्ग्य एव, यथा गजरूपोऽप्राकरणिकोऽर्थः । नाऽत्र श्लेषोऽपि । यत्रोभयोरेवार्थयोस्तात्पर्यं स श्लेषो यथा 'असकृत् परगोत्राणाम्' इत्यादौ । यत्र त्वेकस्मिन्नेव तात्पर्यं सामग्रीमहिम्नैव द्वितीयार्थप्रतीतिः तद् व्यञ्जनाविषय एवेति । शब्दान्तरेण कथने नानार्थेषु यत्रानेकत्र तात्पर्यग्राहकं युगपत्प्रकरणादिक-मवतरति वा स श्लेषः । यत्र क्रमेण तत्रावृत्तिर्यत्रैकत्रैव वा तत्र व्यञ्जनेति । न चात्रार्थभेदेन शब्दभेद इति शब्दद्वयमेव कल्प्यम् । तथा सति द्वयोरभिधेयत्वेन पूर्व-पश्चाद्भावनैयत्यासम्भवात् प्रकृतार्थस्य प्रथमप्रतीतिरपि न स्याद्यतो हि गजरूपोऽर्थः प्राकरणिकत्वेनोत्तिष्ठेत यत्कवेर्न कदाप्यभिप्रेतः प्रकरणसाधकश्च । तेन हि भिन्न-

शब्दकल्पनातो वरं भिन्नवृत्तिकल्पनैव यतः प्राकरणिकोऽर्थः प्रथमं बोध्यते ततश्चाप्राकरणिकस्य प्रतीतिर्भवति। या ह्येयं गजरूपद्वितीयार्थप्रतीतिस्तत्राभिधायाः प्रकृतार्थबोधनविरामात् तस्या विरम्यव्यापाराभावात् लक्षणायाश्च मुख्यार्थबाधादिहेतुकत्वात्तेषामत्र नितान्ताभावात् तात्पर्यायाश्च अभिहितलक्षितसंसर्गमात्रबोधननैयत्याच्चात्र व्यञ्जनाख्यया तुरीयया वृत्त्या एवेति काव्यप्रकाशदर्पणकाराः। वृत्तं वसन्ततिलका तभजा जगागा।

प्रकरणस्यास्यायमाशयः—न हि स्खलद्गतिकः शब्दोऽर्थबोधने क्षमः। वृत्तिं विना शब्दादर्थबोधस्वीकारेऽतिप्रसङ्गः स्यादेव। घट इत्यनेन पटस्याऽपि बोधनप्रसङ्गात्। तेन हि शब्दे वृत्तिरपरिहार्यैव। सा च शब्दस्य व्यापार एव नेतरथा। त्रिधैव सा—अभिधालक्षणाव्यञ्जनाभेदात्। तत्र सङ्केतितार्थबोधजनको व्यापारोऽभिधा। मुख्यार्थबाधादिसहकार्यपेक्षया मुख्यार्थसम्बद्धार्थबोधक आरोपितः शब्दव्यापारो लक्षणा सा च शक्यतावच्छेदकारोपरूपा। शक्तिलक्षणाद्यजन्यप्रतीतिजनकः पदादिगतव्यापारो व्यञ्जना। यथोक्तं नागेशभट्टपादैः—'मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जनेति। तेन हि निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यतेति।' सिद्धा व्यञ्जना लक्षणामूला आर्थी अभिधामूला शाब्दी च। क्रमशोऽविवक्षितवाच्यविवक्षितान्यपरवाच्यध्वनेर्योनिरिति।

[वि० वृ०] अथाभिधामूला व्यञ्जना दर्श्यते—

आद्यशब्दाद्वियोगादयः। तदुक्तम्—

**संयोग इत्यादि**। सन्निधिरैक्यार्थम्। औचिती योग्यता। व्यक्तिः पुंनपुंसकादिः। अनवच्छेदे संशये। क्रमेणोदाहरणानि। सकौस्तुभो भाति विधुः शेते विधुरकौस्तुभः। अत्र कौस्तुभसंयोगवियोगाभ्यां विष्णौ विधुशब्दस्याभिधा नियम्यते। 'रामलक्ष्मणयोः कीर्तिः' इति साहचर्येण रामशब्दस्य दाशरथौ। "कर्णार्जुनकृतो रणः" इति विरोधितयाऽर्जुनशब्दस्य गाण्डिविनि। स्थाणुः कृष्णागुणामोदी' इति गुणामोदरूपार्थस्य वृक्षखण्डेऽसम्भवात्तेन स्थाणुशब्दस्य शिवे। 'देवो जानाति मे मनः' इति प्रकरणाद् देवशब्दस्य युष्मदर्थे। 'राधिकां बाधते नाथ कुपितो मकरध्वजः' इति कोपलिङ्गेन मकरध्वजशब्दस्य कामे। 'कृष्णोऽयं मुनिवर्योऽस्ति' इति मुनिवर्यशब्दसान्निध्यात्कृष्णशब्दस्य श्रीव्यासे। 'प्रमत्तो मधुना पिकः' इति मदविधानसामर्थ्यान्मधुशब्दस्य वसन्ते। 'प्रमत्ता मधुना रामा' इति तद्विधानयोग्यत्वान्माध्वीके च। 'चन्द्रो व्योम्नि चकास्त्यसौ' इति देशविशेषाच्चन्द्रशब्दस्य शशिनि।

'चित्रभानुर्विभात्येषः' इति चित्रभानुशब्दस्य दिने रवौ निशि त्वग्नौ। 'मित्रो मित्रश्च दीप्यते' इति पुंनपुंसकरूपया व्यक्त्या मित्रशब्दस्य सूर्ये सुहृदि च। स्वरस्तु वेदे एवार्थविशेषप्रतीतिकृत्। न तु काव्ये। आदिपदात् अभिनयादि यथा—

एतावत्कुचयुग्मेयमेतावन्नेत्रपङ्कजा ।
पङ्कजाक्ष भवत्वद्य तव वक्षस्यलङ्कृतिः ॥

एवं संयोगाद्यैरनेकार्थशब्दस्य वाचकत्वे नियमिते सति वाच्यभिन्नार्थधीहेतु-व्यापारः। साभिधामूला व्यञ्जनैव। उदाहरणम्—

अखिलरसामृतमूर्तिः प्रसृमररुचिरुद्धतारकापालिः।
कलितश्यामाललितो राधाप्रेयान् विधुर्जयति ॥ इति।

अत्र प्रकरणात्कृष्णो वाच्यः चन्द्रस्तु व्यङ्ग्यस्तयोरुपमानोपमेय-भावश्च ।

**[कारिका] तद्युक्तो व्यञ्जकः शब्दः·········।**

**[वृत्तिः]** तद्युक्तो व्यञ्जनयुक्तः।

**[कारिका] ···············यत्सोऽर्थान्तरयुक् तथा।**

**[कारिका] अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥२०॥**

**[वृत्तिः]** तथेति व्यञ्जकः।

इति काव्यप्रकाशे शब्दार्थस्वरूपनिर्णयो नाम
द्वितीयोल्लासः।

[कमला०] व्यञ्जनामुक्त्वा व्यञ्जकमाह तद्युक्त इति। ननूक्तस्थलेऽर्थस्या-व्यञ्जकत्वे कथं शब्दार्थरूपं ध्वनित्वं काव्यत्वञ्च। तस्य व्यञ्जकत्वे कथं शब्दे तत् अर्थेनोपक्षयादत आह यत्स इति। एकार्थप्रत्ययेनार्थान्तरबोधकत्वात् यच्छब्दाद् व्यतिरेकानुविधानाच्चोभयं युक्तमिति भावः।

इति श्रीजगद्गुरुमहामहोपाध्यायश्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टात्मज-
कमलाकरभट्टकृते काव्यप्रकाशव्याख्याने द्वितीयोल्लासः समाप्तः।

[सरि०] इत्थं हि आर्थीं शाब्दीं च व्यञ्जनां निरूप्य तद्द्वारा व्यञ्जकशब्दं विवृण्वन् तत्सम्बद्धकारिकामवतारयति तदित्यादिना तद्युक्तः तया शब्दार्थसम्बद्ध-व्यञ्जनया युक्तः विशिष्टः। शब्दः। व्यञ्जक इति व्यपदिश्यते। व्यञ्जनाश्रयः शब्दो व्यञ्जक इति। कारिकांशं व्याचष्टे। यद्युक्त इति व्यञ्जनयुक्तः व्यञ्जनव्यापारविशिष्ट इति। 'भद्रात्मनः' इत्यादौ प्रथमार्थप्रतीतेर्द्वितीयार्थप्रत्यया-हेतुत्वेन तदनवधानात्कथं शब्दस्य व्यञ्जकत्वमित्यपेक्षायामाह कारिकयैव यदित्यादि। यत् यतः। सः शब्दः। अर्थान्तरयुक् द्वितीयार्थविशिष्टः प्रथमार्थप्रत्यायनमन्तरेणा-प्रत्यायकः। तत् तेन स तथा व्यञ्जक एवेति। कारिकां व्याचष्टे। तथा इति व्यञ्जकः प्रत्यायक एवेति। अर्थान्तराश्रयत्वेन शब्दो व्यञ्जक इति पर्यवसितोऽर्थः। सिद्धं नाम शब्दस्य व्यञ्जकत्वम्। तस्य हि प्रकृतेतरार्थप्रत्यायकत्वेन प्रथमं प्रकृतार्थं निर्दिश्य व्यञ्जकतेति। तर्हि शक्योऽर्थः किं करोति तदा इत्यपेक्षायां कारिकयै-वाह अर्थ इति। तत्र व्यञ्जनक्रमे। सहकारितया शब्दस्य अन्वयव्यतिरेका-नुविधायित्वेन सहचारित्वेन। अर्थः शक्यार्थः। अपिः इति समुच्चये शब्दवदिति। व्यञ्जकः स्वेतरार्थप्रत्यायकः प्रथममात्मानं प्रकटय्य। मतः सम्मत इति। यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथापि तत्रार्थस्य सहकारिताऽपरिहार्याऽ-ज्ञातार्थस्यापि शब्दस्य व्यञ्जकतापत्तेरिति सोमेश्वरभट्टाः। अर्थस्य सहकारित्वमात्रमेव नोद्भटशक्तिकत्वं तेन शब्दमूलक एव व्यवहार इति वामनभट्टाः। तेन हि स्थितमेतत् शब्दार्थयोरेव व्यञ्जकत्वं तेन शब्दार्थयुगलरूपस्य काव्यस्य ध्वनित्वमपि। येन न्यायेन प्रकृतार्थबोधनानन्तरम् अर्थान्तरयोगित्वाच्छब्दो व्यञ्जकस्तथैवार्थोऽपि तदन्वयव्यतिरेकानुविधायित्वाद् व्यञ्जक एव। यतो हि शब्दादर्थाद्वा व्यञ्जना-व्यापारप्रतीतिस्तन्मूलो ध्वनिरिति व्यपदेशः। अन्यश्च तत्सहकारी भवतीत्युभयोरेव व्यङ्ग्ये प्राधान्यम्। शब्दस्य व्यञ्जकत्वेऽर्थस्य सहकारित्वमर्थस्य व्यञ्जकत्वे शब्दस्य तदिति। यथाऽऽह ध्वनिकारः—

'यत्रार्थः शब्दो वा तमुपसर्जनीकृतस्वार्थौ।
व्यक्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥ इति।

इति श्रीमद्वत्सगोत्रोत्पन्नरविलालात्मजपरशुरामसूनुविष्णुमायागर्भज-
कात्यायनपथानुयायिमाध्यन्दिनीयशाखान्तर्गतशुक्लयजुर्वेदाध्यायि-
परमशैवलोकमणिदाहालप्रणीतायां काव्यप्रकाशस्य
सरिताख्यायां विवृत्यां शब्दार्थस्वरूपनिर्णयो
नाम द्वितीय उल्लासः।

[वि० वृ०] एवं व्यञ्जनां निरूप्य तदाश्रयमाह—

तया व्यञ्जनया युक्तः शब्दो व्यञ्जक उच्यते ।

यस्मादर्थान्तराश्रयः सन् शब्दो व्यञ्जकस्तस्मादर्थोऽपि सहकारितया तत्र तथा । शब्दस्य तत्र प्रबला शक्तिरिति व्यञ्जनायास्तन्मूलतया भणितिः ।

इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां शब्दनिर्णयो
नाम द्वितीयः परिच्छेदः ः

—:०:—

# अथ तृतीय उल्लासः

[कारिका] अर्थाः प्रोक्ताः पुरा तेषां........।

[वृत्तिः] अर्थाः वाच्य-लक्ष्य-व्यङ्ग्याः। तेषां वाचकलाक्षणिक-व्यञ्जकानाम्।

[कमला०] शब्दव्यञ्जकत्वमुक्त्वाऽर्थस्य तद्वक्तुं पूर्वोक्तं स्मारयति अर्था इति। पुरा वाच्यादयस्तदर्थाः स्युरित्युक्तम्। तेषामित्यर्थपरत्वे व्यञ्जकतेत्यसम्बद्धम्। तत्राऽऽह वाचकेति।

[सरि०] एवं शब्दस्य व्यञ्जकत्वं तत्रार्थस्य सहकारित्वं निर्णीय सम्प्रति प्राप्तावसरमर्थस्य व्यञ्जकत्वं निर्णेतुं तदुपदेशस्मारककारिकामवतारयति अर्था इति। तेषाम् वाचकादिशब्दानाम्। अर्थाः वाच्यलक्ष्यव्यङ्ग्या इति त्रयोऽर्थाः। पुरा प्रथममेव 'वाच्यादयस्तदर्थाः स्युः' इति। प्रोक्ताः निर्दिष्टाः। कारिकांशं व्याचष्टे अर्था इति वाच्यादयः। तेषामिति वाचकादीनाम्। अयमाशयः—एकोऽपि शब्द उपाधिभेदेन त्रिविधो वाचक-लाक्षणिक-व्यञ्जकभेदात्। तथैव तत्तत्सम्बद्धत्वेनार्था अपि त्रय एव वाच्यो लक्ष्यो व्यङ्ग्यश्चेति।

[कारिका] ..............अर्थव्यञ्जकतोच्यते।

[वृत्तिः] × × ×

[कमला०] × × ×

[सरि०] इत्थमुल्लाससङ्गतिप्रदर्शनपूर्वकं पूर्वोपदेशं संस्मार्य सम्प्रति निरूपणीय-निर्देशाय सम्बद्धकारिकांशमवतारयति अर्थेति। अर्थव्यञ्जकता अर्थानां वाच्यादीनां व्यञ्जकता व्यञ्जकत्वप्रकारः। उच्यते प्रतिपाद्यते इति। अर्थ-व्यञ्जकताऽपि 'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते' इति प्रागुक्तैव। तेनाऽत्र तत्प्रकारो निर्दिश्यत इत्याशयः।

केचित्तु कारिकामिमामित्थं पठन्ति —

'अर्थाः प्रोक्ताः पुरा तेषामथ व्यञ्जकतोच्यते।' इति।

अर्थाः पुरा प्रोक्ताः। तेषामर्थानाम्। अथेति प्रकरणोपक्रमे। व्यञ्जकता उच्यत इत्यन्वयः। 'अथ व्यञ्जकता' इति पाठे तु 'तेषामिति शेषः' इति काव्य-

प्रकाशदर्पणे। श्रीराजचूडामणिरपि तथैव मनुते। यथोक्तम्—'वाच्यलक्ष्यव्यङ्ग्य-भेदादर्था ये प्रतिपादिताः। तेषामिह व्यञ्जकत्वमधुना प्रतिपाद्यते'।। इति। (काव्यदर्पणे ५७)।

[वि० वृ०] एवं शाब्दीं व्यञ्जनां निरूप्यार्थीं तां वक्तुमुपक्रमते—तेषां वाचकादीनां वाच्यादयोऽर्थाः पूर्वमुक्तास्तद्व्यञ्जकता च। इदानीं सा कीदृशीत्युच्यते।

[वृत्तिः] कीदृशीत्याह—

[कारिका] वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।।१।।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।।२।।

[वृत्तिः] बोद्धव्यः प्रतिपाद्यः। काकुर्ध्वनेर्विकारः। प्रस्तावः प्रकरणम्। अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः।

[कमला०] नन्वर्थस्यापि सोक्ता सर्वेषां प्रायशोऽर्थानामित्यत्रेति पृच्छति कीदृशीति यद्वा व्यङ्ग्यस्य व्यञ्जकत्वेऽनवस्थेत्यर्थः इति प्राप्ते आहेत्यर्थः। सहकारिविशेषादपौनरुक्त्यमाह वक्त्रिति। वाच्येन पौनरुक्त्यादाह प्रतिपाद्य इति बोधनीयः पुरुष इत्यर्थः। अन्तर्भूतो ण्यर्थः ध्वनेर्विकारः शोकादिजन्य इत्यर्थ.। वाक्यवाच्यसहितोऽन्यसन्निधिरित्यर्थः। तेनेतरेतरद्वन्द्वे बहुवचन समाहारे च नपुंसकं स्यादिति निरस्तम्। तत्त्वं तु पुंवद्भावे विकल्पात् सन्निधेरित्यपि साधु। अन्यो वक्तृबोद्धव्यभिन्नो लोकः। प्रस्तावः प्रकरणम्। देशो विजनादिः। कालो वसन्तादिः। वैशिष्ट्यात्सम्बन्धाद् वैलक्षण्याद्वेत्यस्य वक्तृबोद्धव्याद्यैः प्रत्येकमन्वयः। प्रतिभा वासनाविशेषस्तेन श्रोत्रियजडादीनां व्युदासः। प्रतिभावतो याऽन्यार्थधीस्त-द्धेतुर्व्यक्तिर्व्यञ्जनैव व्यापारो नान्य इत्यर्थः। अर्थस्य न शब्दस्य।

[सरि०] अर्थव्यञ्जकताप्रकारोपदेशककारिकावतारणाय वृत्तिकृदुपक्रमते कीदृशीति। ननु अर्थव्यञ्जकताऽपि प्रागेव 'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वम-पोष्यते' इति उक्तैव। पुनः सा कीदृशी किम्प्रकारा। उच्यते ? इत्याकाङ्क्षायां कारिकाकृदाहेति। कारिकामवतारयति वक्त्रित्यादि। वक्तृबोद्धव्यकाकूनाम् वाक्यवाच्यान्यसन्निधेः प्रस्तावदेशकालादेः वैशिष्ट्यात् अर्थस्य प्रतिभाजुषाम् अन्यार्थधीहेतुः यः व्यापारः सा व्यक्तिः एव इत्यन्वयः। वक्तृबोद्धव्यकाकूनाम् वक्ता वक्ति परप्रतिपत्तये वाक्यमुच्चारयति यः स वक्ता कविस्तन्निबद्धो नायकादिश्च च बोद्धव्यः प्रतिपाद्यः पुरुषः च काकुः काययत्यर्थान्तरमिति शोकभयक्रोधादि-

जनितो ध्वनेर्विकारः उच्चारयितुर्भावानुनायको जातिविशेषः च तासाम् वैशिष्टचा-दित्यनेनान्वयः। वाक्येत्यादि। वाक्यं साकाङ्क्षपदसमूहस्तच्च वाच्यं शक्योऽर्थ-स्ताभ्यां सहितो यः अन्यसन्निधिः अन्यस्य वक्त्रादिभिन्नस्य सन्निधिः सामीप्यम् तस्य वाक्यवाच्यान्यसन्निधीनां वैशिष्टचाद्वा। प्रस्तावेति प्रस्तावः प्रकरणं देशो विजनादिः कालो वसन्तादिः आदिपदाच्चेष्टादिश्च तस्य च। वैशिष्टचात् सम्बन्धाद् वैलक्षण्याद्वा। अर्थस्य वाच्यादेः। प्रतिभाजुषाम् प्रतिभां प्रज्ञां काव्यवासनाविशिष्टां जुषन्ति य इति तेषाम्। सहृदयानाम्। अन्येति अन्यः स्वव्यतिरिक्तो वाच्यलक्ष्यव्यङ्ग्यभिन्नो योऽर्थो व्यङ्ग्यरूपः व्यङ्ग्यस्यापि व्यञ्जकत्वभावात् तस्य धियः प्रतीतेः हेतुः कारणम्। यः यादृशः। व्यापारः वृत्तिः। सा तादृशवृत्तिः। व्यक्तिः व्यञ्जना व्यज्यते व्यङ्ग्योऽर्थोऽनयेति। एवेत्यवधारणे। नान्येति भावः। वक्तृ-प्रतिपाद्य-काकु-वाक्य-वाच्य-अन्यसन्निधि-प्रस्ताव-देश-काल-चेष्टादीनां वैलक्षण्यादर्थस्य वाच्यादेः स्वव्यतिरिक्तार्थप्रतीतिहेतु-भूतो यो व्यापारोऽस्ति सा व्यञ्जनैव नान्येत्याशयः। कारिकां व्याचष्टे बोद्धव्य इति। प्रतिपाद्यः वाच्येन पौनरुक्त्यं न स्यादिति प्रतिपाद्यपदम्। काकुरिति ध्वनेः कण्ठनिःसृतस्वरस्य विकारोऽसाधारणस्वरूपम्। प्रस्ताव इति प्रकरणं प्रसङ्गः। अर्थस्येति वाच्यलक्ष्यव्यङ्ग्यात्मनस्त्रिविधस्यैवेति।

[वृत्तिः] क्रमेणोदाहरणानि—

अइपिहुल जलकुंभं घेत्तूण समागदह्मि सहि तुरिअं।
समसेअसलिलणीसासणीसहा वीसमामि खणं॥१३॥

( अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि त्वरितम्।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम्॥ )

अत्र चौर्यरतगोपनं गम्यते।

ओण्णिद्दं दोब्बल्लं चिंता अलसत्तणं सणीससिअं।
मह मदभाइणीए केरं सहि तुह वि अहइ परिहवइ॥१४॥

( औन्निद्रयं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम्।
मम मन्दभागिन्याः कृते सखि त्वामपि अहह! परिभवति॥)

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते।

'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥१५॥

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते । न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यं प्रश्नमात्रेणाऽपि काकोर्विश्रान्तेः ।

[कमला] अ इति । अति······क्षणम् । 'विडल' इति पाठे । विपुल-श्रमजन्याभ्यां स्वदेश्वासाभ्यां निःसहासमर्था । सुरतोपभोगं तर्कयन्तीं सखीं प्रतीयमुक्तिः । रतगोपनं जलाहरणश्रमोक्त्या तच्च पुंश्चलीरूपवक्तृवैशिष्ट्यात् । कुलवधूक्तावेवमप्रतीतिः । तच्च सङ्केतव्याप्त्याद्यभावाद् व्यङ्ग्यमेवेत्यर्थः । बोद्धव्यवशादाह औणिद्दमिति । औन्निद्र्यं······परिभवति । निजकान्तोपभुक्तां दूतीं प्रति सक्रोधनायिकोक्तिरियम् । उन्निद्रत्वादिकं कर्तृ मदर्थं त्वां क्लिश्नातीत्यर्थः । तु हेति कर्मणि षष्ठीति परमानन्दः । त्वामित्यर्थे तु हेति निपात इत्यन्ये । सखीति सम्बोध्याया दुःशीलात्वाच्छत्रुत्वम् । तेन कान्तोपभोगो व्यङ्ग्य इत्यर्थः ।

काकुवैशिष्ट्यादाह तथेति सहदेवं प्रति भीमोक्तिः । गुरुर्युधिष्ठिरः तथाभूतां रजस्वलामाकृष्टकेशाञ्च दृष्ट्वाऽपि । वने उषितमस्माभिरिति शेषः । नृपसदो न तु ग्राम्ययूथम् । पाञ्चालस्य राज्ञो न तु नीचकन्याम् । वने न तु गृहे । व्याधैर्न राजभिः सुचिरं न क्षणम् । उषितं नोपविष्टम् । वल्कलं न दुकूलमिति ज्ञेयम् । अनुचितोऽयोग्य आरम्भः सूदादि विषकर्म वा तेन निभृतं गुप्तं यथा तथा । विराटस्य राज्ञः सुहृदो वाऽन्यस्यावासे गृहे न परोक्षं स्थितम् । इत्थं खिन्ने म्लाने मयि खेदं खिद्यतेऽनेनेति खेदं मात्सर्यं भजतीत्यर्थमाह परमानन्दः । तन्न । क्लिष्टत्वा-पत्तेः । वस्तुतस्तु तथाभूतां द्रौपदीं दृष्ट्वाऽपि वने वल्कलधरैः व्याधैः सहोषितं मां दृष्ट्वा विराटगृहे स्थितञ्च खिन्नं मां दृष्ट्वा मय्येव खेदं भजतीत्यर्थं वयं प्रतीमः । यद्वोषितं निवसनं स्थितञ्च दृष्ट्वेत्यन्वयः । भावे क्तः । काक्वाऽप्यत्रेत्यर्थः । ननु कुरुषु क्रोधं न करोतीति यत्तदनुचितमित्यनौचित्यं व्यङ्ग्यमादायैव वाक्यार्थ-पर्यवसानात् गुरुमते वाक्यार्थस्य वाच्यसिद्ध्यङ्गमत्र काकुः । न चेष्टापत्तिः । व्यङ्ग्यं विना वाक्यार्थासिद्धौ तस्य व्यञ्जकत्वेऽन्योन्याश्रयात् व्यङ्ग्यसिद्धौ वाक्यार्थसिद्धिस्तत्सिद्धौ च व्यङ्ग्यस्येति काकोश्च व्यङ्ग्यस्य गुणीभूतत्वान्मध्यम-काव्यत्वं न प्रधानध्वनिरयम् । यद्यपि तत्त्वेऽपि व्यञ्जकत्वमस्त्येव तथापि काकोरेव तत्स्यात् न तद्विशिष्टार्थस्य । अतः कथं काकुविशिष्टस्यार्थस्य व्यञ्जकत्वम् ? अत आह न चेति । उत्तरमाह प्रश्नेति । काकोः प्रश्नमात्रेण काकुव्यङ्ग्येन प्रश्न-मात्रेण । अपिरेवार्थे । तेनैव तेनैव विश्रान्तेर्वाक्यार्थस्येति शेषः । अयम्भावः— नजि काकुना प्रश्नो व्यङ्ग्यः । स च गुरुर्यदेवं करोति यत्कथमित्येवंरूपः प्रश्न-

साचिव्याच्च वाक्यार्थे पर्यवसिते तेनानौचित्यं व्यङ्ग्यम्। अतो नान्योन्याश्रयः। व्यङ्ग्यञ्च ध्वनिरेव अनौचित्यस्य भीमक्रोधप्रहर्षहेतुत्वात्। अतः सिद्धा काकुवैशिष्ट्यादर्थे व्यञ्जनेत्यर्थः।

[सरि०] वक्त्रादिवैशिष्ट्यवशाद् वाच्याद्यात्मनोऽर्थस्य यद् व्यञ्जकत्वमुक्तं तत्क्रमेणोदाहरणायोपक्रमते क्रमेणेति क्रमेण कारिकानिर्दिष्टक्रमानुसारेण। उदाहरणानि। वक्तृवैशिष्ट्यवशादर्थस्य व्यञ्जकत्वं यथा 'अइपिहुलं' इत्यादि।

सहि (हे सखि!) अइपिहुलं (अतिपृथुलम्) जलकुंभं (जलकुम्भम्) घेत्तूण (गृहीत्वा) तुरिअम् (त्वरितम्) समागदह्मि (समागता अस्मि) समसेअसलिलणीसासणसिहा (श्रमस्वेदसलिलनिःश्वासनिःसहा) सती खणं (क्षणम्) वीसमामि (विश्राम्यामि) इत्यन्वयः। हे सखि! हे वयस्ये! अतिपृथुलम् अतिशयेन मदपेक्षया पृथुलं महान्तं दुःखेनैव धारयितुं शक्यम्। जलकुम्भम् जलपूर्णघटम्। गृहीत्वा आदाय। त्वरितम् जवेन मध्ये विश्रामं विनैव। समागता प्राप्ता। अस्मि अहमर्थेऽव्ययम्। श्रमेति श्रमात् महद्भारेण क्षिप्रचलनेन च यः श्रमस्तस्मात् यः स्वेदो धर्मविन्दुः तस्य सलिलं जलं प्रवाहः यश्च निःश्वासः शीघ्रश्वसनक्रिया ताभ्यां निःसहा सहनासमर्था दुर्बला। सती। क्षणम् किञ्चित्कालम्। विश्राम्यामि विश्रामं करोमीति। लक्ष्ये लक्षणं घटयति अत्रेति। अत्र काव्येऽस्मिन्। चौर्यरतगोपनम् चौर्येण अनधिकृततयोपनायकेन सह यद्रतं सम्भोगस्तस्य गोपनं गूहनम्। गम्यते प्रत्येति इति। अयमाशयः—जलानयनव्याजेनोपनायकमुपभुज्य समागतायाः स्वेदनिःश्वासबाहुल्यात्तत्कर्म सम्भावयन्तीं काञ्चित् सखीं प्रति कस्याश्चित्पुंश्चल्या उक्तिरियम्। सखीति तस्या अप्रतायत्वम्। दुर्वहजलपूर्णघटवहनेन त्वरितागमनेन च श्रमाधिक्यात्स्वेदनिःश्वासबाहुल्यं तेनाग्रे गन्तुमक्षमेति विश्रामौचित्यम्। तेन स्वेदाधिक्यनिःश्वासादिना नान्यथा शङ्किष्ठा इति। अत्र हि श्रमव्याजेन सुरतगूहनं व्यङ्ग्यम्। तच्च न शब्दस्य व्यापारः परिवृत्तिसहत्वात्। तस्य। तेनार्थस्यैवेयं वृत्तिः। तदपि वक्तृवैशिष्ट्यादेव। इयं हि व्यभिचारिण्या उक्तिरिति तदवगमः। कुलवधूक्तौ तु न तथेति वक्तृवैशिष्ट्यादेवार्थस्यात्र व्यञ्जकत्वम्। अर्थश्चात्र वाच्य एव। एवमेव लक्ष्यव्यङ्ग्यार्थयोरपि वक्तृवैशिष्ट्याद् व्यञ्जकत्वम्। उदाहरणमूह्यम्।

बोद्धव्यवैशिष्ट्यादर्थस्य व्यञ्जकत्वं यथा 'ओण्णिद्द' इति। सहि (हे सखि!) मन्दभाग्यायाः मन्दमल्पं भाग्यं दिष्टं यस्याः सा तस्यास्तादृश्याः। मम त्वत्सख्याः। कृते कारणात्। त्वाम् भवतीम्। अपि यथा मां तथा त्वाञ्चेति। औन्निद्र्य

सुस्वापाभावः। दौर्बल्यं कार्श्यम्। चिन्ता मनोव्यथा। सनिश्वसितम् मुहुर्मुहुर्दीर्घनिःश्वासवत्त्वं तेन विशिष्टम्। अलसत्त्वम् व्यापारान्तरप्रसवत्यभावश्च। परिभवति खेदयतीति। अह तु विरहोत्कण्ठिततया औन्निद्रयादिभिः परिभूता एव। मत्सम्बन्धेन मत्कृते तत्प्रसादनाय गमनागमनप्रणामचाटुवाक्यादिव्यापारेण त्वमपि औन्निद्रयादिभिः परिभूतेति वाक्यार्थः। अत्र व्यङ्ग्यमाह अत्रेति। अत्र काव्येऽस्मिन्। दूत्याः दूतकर्मनियुक्ताया प्रमदायाः। कामुकोपभोगः कामुकस्य लुब्धस्य उपभोगः सम्भोगः। व्यज्यते प्रतीयत इति। अयमाशयः— औन्निद्रयादिकं तु सुरतार्थिन्या एव प्रायेण भवति। तच्च त्वय्यपि दृश्यते इति त्वं मत्प्रियानयनाय गता तमेवोपभोक्तुमारब्धवतीति बोधनीयवशात्प्रतीयते। न चैतच्छब्दव्यापारस्तस्य परिवृत्तिसहत्वात्। तेन वाच्यघटितवाक्यार्थस्यैवात्र बोद्धव्यवशाद् व्यञ्जकत्वं व्यङ्ग्यं च दूत्याः स्वकामुकोपभोक्तृत्वमेव। औन्निद्रयं वाच्यपक्षे प्रियविरहेण व्यङ्ग्यपक्षे सुरतानन्दस्मरणपुलकितत्वेन पुनःपुनस्तत्प्रार्थनया च। दौर्बल्यं वाच्यपक्षे वियोगाधिक्यजनितभोजनाद्यग्रहणेन व्यङ्ग्यपक्षे सम्भोगबाहुल्येन। चिन्ता वाच्यपक्षे प्रियो मे कदाऽगमिष्यतीति व्यङ्ग्यपक्षे स मत्तः कथञ्चिद्दूरं न व्रजेद्यथा तत इति। निःश्वसितं वाच्यपक्षे मिलनोत्कण्ठया व्यङ्ग्यपक्षे सुरतश्रमवशात्। इति। प्रियस्तु वियुक्त एव तत्रापि सख्यपि प्रतारयतीति मन्दभाग्यत्वम्। बोधनीयाऽत्र दूती। तद्वैशिष्टयाद् व्यङ्ग्यप्रतीतिः।

काकुवैशिष्टयाद् व्यङ्ग्यप्रतीतिमर्थस्योदाहरति तथाभूतामिति। नृपसदसि पाञ्चालतनयाम् तथाभूताम् दृष्ट्वा वने व्याधैः सार्द्धम् वल्कलधरैः सुचिरम् उषितम् विराटस्य आवासे अनुचितारम्भनिभृतम् स्थितम् इत्थम् खिन्ने मयि अद्यापि गुरुः खेदं भजति अद्यापि कुरुषु न इत्यन्वयः। वेणीसंहारगतेऽस्मिन् पद्ये कुरुभिः सन्धित्सोर्युधिष्ठिरस्योपालम्भनाय सहदेवं प्रति भीमस्य वाक्यम्। नृपसदसि राजसभायामेव न तु ग्राम्यसंसदि। पाञ्चालतनयां पाञ्चालराजसुतां न तु सामान्यवनिताम्। तथाभूतां केशेष्वाकृष्याकृष्टां रजोवतीमपि स्पृष्टां वस्त्रापनयनेनानावृतलज्जामिति निरस्कृताम्। दृष्ट्वा विलोक्य। गुरुः खेदं न भजति इत्यन्वयः। वने कानने न तु राजपुत्रार्हे प्रासादादौ। व्याधैः वनेचरैः न तु राजयोग्यैरमात्यसामन्तादिभिः। सह सङ्गत्या। वल्कलधरैः वार्क्षत्वग्वासोभिर्न तु राजार्हदुकूलधारिभिः। सुचिरं सुदीर्घकालं न तु किञ्चित्कालम्। उषितं स्थितं नोपविष्टमेव। विराटस्य तदाख्यस्य राज्ञो न तु स्वस्य। आवासे वसतौ न तु प्रासादमुख्यभागे। अनुचितारम्भनिभृतम्। अनुचितः राजपुत्रनिमित्तमयोग्यः आरम्भः सूदादिकर्मोपक्रमो यथा स्या तथा निभृतं प्रच्छन्नं स्वपरिचयत्यागेन।

स्थितं निर्वहितम्। न केवलं परवशतो स्थितमेवापितु सूदादिनीचकर्मापि तत्र कृतं स्वगोपनेन। इत्थं हि खिन्ने दुःखिते। मयि भीमे एव। अद्यापि तत्सर्वमनुभूयापि। गुरुः ज्येष्ठभ्राता युधिष्ठिरः। खेद अनाज्ञाकार्ययमिति खिन्नताम्। भजति अनुभवति। अद्यापि तथातथापकारसम्पादनानन्तरमपि। कुरुषु तादृशदारुणापकारकर्तृषु धार्तराष्ट्रेषु। न नैव खेदं भजतोति। लक्ष्ये काक्वा कथं व्यङ्ग्यप्रतीतिलक्षणमिति व्याख्याति अत्रेति। अत्र काव्येऽस्मिन्। मयि भीमे। खेदः खिन्नता। न। योग्यः उपयुक्तः। कुरुषु धार्तराष्ट्रेषु। तु इति व्यवच्छेदे तादृशदारुणापकारकर्तृत्वात्तेषाम्। खेदः मात्सर्यम्। योग्यः उपयुक्तः। इति। काक्वा अत्र क्रोधजन्यध्वनिविकारेण। प्रकाश्यते द्योत्यते। इति। अयमाशयः—काक्वा इयि नञ्काक्वा। अत्र नञि काकुः। 'कुरुषु खेदो न भजती'ति ध्वनिविकारेण नञि काकुस्तया कुरुष्वेव खेदो योग्य इति व्यङ्ग्यार्थस्य प्रतीतिरिति। ननु तथाभूतां दृष्ट्वेत्यादिवाच्यस्य सिद्धौ काकुरङ्गकारणमेवेति कथं न वाच्यसिद्ध्यङ्गत्वेन गुणीभूतव्यङ्ग्यत्वमस्येत्याशङ्क्याह नेत्यादि। न नैव। च तथा। अत्र वाक्येऽस्मिन्। काकु नञ्काकुः। वाच्यसिद्ध्यङ्गम् वाच्यस्य तथाभूतां दृष्ट्वेत्यादिवाच्यार्थस्य सिद्धेरङ्गमुपसर्जनम्। इति हेतोः। गुणीभूतव्यङ्ग्यत्वं व्यङ्ग्यस्य कुरुषु खेदो योग्यः इत्येतस्य गुणभावः। शङ्क्यम् अवधार्यम्। तत्र तथानवधारणे हेतुं निर्दिशति प्रश्नेति। काकोः भिन्नकण्ठध्वनेः। प्रश्नमात्रेण पृच्छापूरणेनैवापि। हे सहदेव! कुरुषु किं न खेदो यद्गुरोर्मयि खेदः इत्येवंरूपेण। विश्रान्तेः स्थगनात्। इति। अयमाशयः—अत्र हि अपकृते क्लेशिते च स्वभ्रातरि खेदभजनरूपस्यापकारिषु धार्तराष्ट्रेषु तदभजनरूपस्य वाक्यार्थस्य सिद्धौ काकोरङ्गत्वत्वमस्त्येव किन्तु तन्न व्यङ्ग्यार्थाक्षेपद्वाराऽपितु न भजति इति प्रश्नमात्रोपस्थापनद्वारेण। तेन वाच्यसिद्ध्यनन्तरमेव व्यङ्ग्यप्रतीतिरिति न काकुवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वे काऽपि क्षतिरिति। गुणीभूतव्यङ्ग्यत्वेऽपि काकुवैशिष्ट्योदाहरणताया अपि न क्षतिरिति प्रभायां वैद्यनाथभट्टाः। कुरुषु ते गुरुः खेदं न भजति ? इति काक्वा प्रश्नो बोध्यते तच्च वाच्यसिद्ध्यङ्गमेव। किन्तु 'कुरुष्वेव खेदो योग्यो न मयीति यत्काकुवैशिष्ट्यात् प्रतीयते तद् व्यङ्ग्यार्थ एव। तेन नास्य गुणीभूतत्वमिति पर्यवसितोऽर्थः। वस्तुस्थित्युद्घाटनपरं वचनमिदं न तु प्रासङ्गिकं गुणीभूतव्यङ्ग्यत्वेऽपि काकुवैशिष्ट्योदाहरणाय क्षतेरभावात्।

[वृत्तिः] तइआ मह गंडत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो।
एण्हि सच्चेअ अहं ते अ कवाला ण सा दिट्ठी ॥१६॥

( तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥ )

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाऽभूत् । चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं ते इति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताऽकाण्डकोपो मनोभूः ॥१७॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

णोल्लेई अणोल्लमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जई संझाइ होइ ण होइं वीसामो ॥१८॥
( नुदत्यार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥ )

अत्र सन्ध्या सङ्केतकाल इति तटस्थं प्रति कयाचिद् द्योत्यते ।

[कमला०] वाक्यवैशिष्ट्यादाह तइआ इति । तदा मम गण्डस्थलमिलितां दृष्टिं नानैषीरन्यतः । इदानीं सैवाऽहं तावेव कपोलौ न सा दृष्टिः । 'णिमिअ' इति पाठे निमग्नामित्यर्थः । अत्रेति । तदेदानीं पदाभ्यां तस्मिन् सीदेतिवदेकवाक्यतया एवंविधार्थलाभ इत्यर्थः । अन्या विषण्णेत्यर्थः । अहो इति इयत्कालं न ज्ञातमिति आश्चर्यम् ।

वाक्यवशादाह उद्देशोऽयमिति । नर्मदा नदी सुखदा च सरसेत्युद्दीवनम् । कुञ्जानामुत्कर्षो निविडत्वसौगन्ध्यादिस्तेनाङ्कुरिताः प्रादुर्भूताः रमणीनां विभ्रमाः । यत्र सुरते श्रमापनयनेन सुहृदुपकारकाः । कलितोऽङ्गीकृतः । अकाण्डे प्रस्तावे रोषो येनेत्यादि वाच्यवशाद्रतार्थं प्रविशेति व्यङ्ग्यमित्यर्थः ।

अन्यसन्निधेराह—णोल्लु इति । नुदत्या······विश्रामः । नुदति प्रेरयति । अत्रेति सखीं प्रत्युक्ते वाक्ये प्रच्छन्नपुरुषं प्रति सन्ध्यासङ्केत इति व्यज्यते । तटस्थोऽन्यः पुरुषः । त सन्निधेरेव व्यङ्ग्यमित्यर्थः ।

[सरि०] वाक्यवैशिष्ट्यादर्थस्य व्यञ्जकत्वमुदाहरति तइआ इति । तइआ ( तदा ) मह ( मम ) गंडत्थलणिमिअं ( गण्डस्थलनिमग्नाम् । दिट्ठिं ( दृष्टिम् ) अणत्तो ( अन्यत्र ) ण ( न ) णेसि ( अनैषीः ) एण्हि ( इदानीम् ) सच्चेव ( सा एव ) अहं ( अहम् ) ते ( तौ ) अ ( च ) कवोला ( कपोलौ ) ण ( न ) सा ( सा )

दिट्ठि ( दृष्टिः ) इति अन्वयः। तदा तत्समये यदा मे सखी अत्रासीत्। मम मे। गण्डस्थलनिमग्नां कपोलासक्ताम्। दृष्टिं विलोकनम्। अन्यत्र तद्व्यतिरिक्तस्थले। न। अनैषीः व्यापारयः। इदानीम् सम्प्रत्यपि। अहं तु सा एव नान्या। कपोलौ गण्डस्थल्यौ। च। तौ एव नान्यौ। किन्तु दृष्टिः विलोकनम्। सा तथैव। न अन्यैवेति। तत्र व्यङ्ग्यं निर्दिशति अत्रेति। अत्र काव्येऽस्मिन्। कपोलप्रतिबिम्बितां मद्गण्डस्थलदृष्टप्रतिबिम्बाम्। मत्सखीं मद्वयस्याम्। पश्यतः विलोकयतः। ते तव। दृष्टिः विलोकनम्। अन्या विलक्षणा मत्कपोलसक्ता। एवेत्यवधारणे। अभूत्। तस्यां मत्सख्याम्। चलितायां गतायाम्। तु इति तद्विपरीतमेव। ते दृष्टिः अन्या अन्यत्रसक्ता मत्कपोलविलोकनोदासीना। एव। जाता सम्पन्ना। इति। अहो आश्चर्यमेव। ते भवतः। प्रच्छन्नकामुकत्वं निगूहितलुब्धत्वम्'। इति इत्थम्। व्यज्यते व्यक्तीभवतीति। अयमाशयः—तदा तु ते दृष्टिः सस्नेहा मत्कपोलयोरेव प्रसक्ताऽऽसीत् निर्निमेषम्। सम्प्रत्यपि अहं तु सैव कपोलौ च तावेव किन्तु ते दृष्टिरुदासीना रुक्षाऽन्यत्रव्यापारा चेति वाक्यार्थः। तदा मत्कपोलयोर्मत्सख्या बिम्बं प्रतिबिम्बितमासीत्। साक्षाद्दर्शनाक्षमेण त्वया तद्बिम्बालोकनाय मत्कपोलयोर्दृष्टिर्निर्निमेषव्यापारिताऽऽसीत्। इदानीं सा गता। तेन ते दृष्टिरपि ततोऽन्यत्र संलग्ना ताटस्थ्यशालिनी सनिमेषा विषण्णा च जातेति त्वं प्रच्छन्नकामुक इति वाक्यार्थाक्षिप्तं व्यङ्ग्यम्। तेन ह्यत्र वाक्यस्य व्यञ्जकत्वम्।

वाच्यवैशिष्ट्यादर्थस्य व्यञ्जकत्वमुदाहरति उद्देश इति। हे तन्वि ! अयम् नर्मदायाः सरसकदलीश्रेणिशोभातिशायी कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमः उद्देशः किञ्च एतस्मिन् ते सुखसुहृदः वाताः वान्ति येषाम् अग्रे कलिताऽकाण्डकोपः मनोभूः सरति इत्यन्वयः। हे तन्वि ! हे कृशाङ्गि ! अनुदरे ! अयम् एषः पुरोवर्ती। नर्मदायाः तदाख्यनद्याः। सरसकदलीश्रेणिशोभातिशायी सरसाः स्निग्धा या कदल्यः रम्भास्तासां श्रेणयः पङ्क्तयस्तासां या शोभा छविस्तया अतिशायी उत्कृष्टः कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमः कुञ्जा लतागृहास्तेषामुत्कर्षं गुञ्जदलियुगलौघचुम्बितकुसुमसमृद्ध्यादिरूपस्तेन अङ्कुरितः असन्नप्युत्पादितः रमणीनां विलासिनीतां विभ्रमा हावादयो विलासा यस्मिंस्तथाविधः अस्ति इति यावत्। किञ्च नैतावन्मात्रमपि च। एतस्मिन् मनोहरे उद्देशे। ते प्रसिद्धाः मानिनीमानभञ्जकाः। अत एव सुरतसुहृदः सुरतस्य रतिक्रीडायाः सुहृदस्तज्जन्यश्रमापनोदेन पुनःपुनः प्रवर्तकत्वान्मित्रभूताः। वाताः अनिलाः। वान्ति मन्दं-मन्दं वहन्ति न तु वेगेन। येषां वातानाम्। अग्रे पुरः पुरोगामित्वेन।

कलिताकाण्डकोपः कलित उद्‌बोधितः अकाण्डे अनवसरे एव निमित्ताभावेऽपि कोपः क्रोधो येन स तादृशः सन्। मनोभूः कामः सरेति चलति इति। वृत्तं मन्दाक्रान्ता म्भौ नतौ ताद् गुरु चेदिति ( म-भ-न-त-त-ग-ग ) तल्लक्षणम्। लक्ष्ये लक्षणं घटयति अत्रेति। अत्र काव्येऽस्मिन्। रतार्थम् सुरतनिमित्तम्। प्रविश अभ्यन्तरं याहि। इति व्यङ्ग्यम् वाच्यसामर्थ्याक्षिप्तव्यङ्ग्यार्थ इति। अयमाशयः— अत्र हि तन्वीति मन्मथवेदनावत्त्वं तेन सुरतार्थिनी त्वमिति। नर्मदेति नर्मक्रीडा-समर्पिका न तु नदीमात्रम्। उद्देश इति निर्जनत्वं दूरादेवैतैर्लक्षणैर्व्यज्यते न तु तत्र केनापि गम्यते इति। प्रदेशस्योर्ध्ववर्तित्वादधः सञ्चरतां पादस्खलनभियाऽनवलोक-नीयत्वम्। सरसेति शुष्कपत्राद्यभावेन मर्मरशब्दराहित्यम्। श्रेणीति परितो वेष्टितत्वमतो बहिः प्रदेशादनवलोकनीयत्वम्। शोभेति मनोहारित्वम्। अतिशायीति कामोद्दीपकत्वम्। कुञ्जेत्यादिना कामविमुखानामपि तदुद्भेदकत्वम्। वाता वान्तीति तेषां मन्दत्वमत एवोत्तेजकत्वम्। सुरतेति तेषां सीकरित्वम्। कलि-तेत्यनेन सद्यः कामपीडोदयः। मनोभूरिति सचेतसां दुष्परिहरत्वमिति व्यङ्ग्यानि। तानि च वाच्यवैशिष्ट्यात्प्रतीयन्ते। उक्तमेव प्रकर्षेण विशेषणवत्त्वं वाच्यस्य वैशिष्ट्यमिति। तेन ह्यत्र रतिक्रीडार्थं प्रविशेति व्यङ्ग्यं प्रतीतमिति। अन्य-सन्निधिवैशिष्ट्यादर्थस्य व्यञ्जकत्वमुदाहरति णोल्लेइ इति। अणद्दमणा ( अनार्द्रमनाः ) अत्ता ( श्वश्रूः ) मं ( माम् ) सअलम्मि ( सकले ) घरभरम्मि ( गृहभरे ) णोल्लेई ( नुदति ) जई ( यदि ) खणमेत्तं ( क्षणमात्रम् वीसामो ( विश्रामः ) संझोइ ( सन्ध्यायाम् ) होइ ( भवति ) ण ( न ) व ( वा ) होइ ( भवति ) इत्यन्वयः। अनार्द्रमनाः अनार्द्रमकरुणं मनो मानसं यस्याः सा निर्दया। 'अणण्णमणा' इति पाठे अनन्यमना इति। श्वश्रूः पतिजननी। माम् वराकीम्। सकले समग्रे एव। गृहभरे गृहकार्यसम्पादने। नुदति प्रेरयति। यदि दैवात्। क्षणमात्रं स्वल्पकालमेव। विश्रामः अवकाशः। लभ्यते चेदपि। सन्ध्यायां सन्ध्याकाले। भवति। अथवा नैवापि भवति इति। तत्र व्यङ्ग्यमाह अत्रेति। अत्र काव्येऽस्मिन्। सन्ध्यां निशामुखम्। सङ्केतकालः मिलनावसरः। इति कयाचित् सुरतार्थिन्यैकया। तटस्थम् असम्बद्धमिव स्थितमुपनामकम् प्रति उद्दिश्य। द्योत्यते प्रकाश्यते इति। अन्यसन्निधिरिति सन्निहितोऽन्यः। अत्र तु सखीमुद्दिश्य प्रवर्तिते वाक्ये प्रच्छन्नस्यान्यस्योपनायकस्य सन्निधेर्वैशिष्ट्यात् सन्निहितं प्रति निशामुखं सङ्केतकाल इति व्यज्यते। बहुजनोपस्थितया विशिष्य वक्तुमसमर्थायाः कस्याश्चित्सङ्केतकालसूचनाय सखीमुद्दिश्य वाक्यमिदम्। अनार्द्रमना इति सततकार्य-नोदतत्वं तेन श्रमव्याजेनाऽपि नावकाशावसर इति। श्वश्रूरिति अनतिक्रमणीयाज्ञत्वम्।

सकले इति सार्वकालिकी व्यापृतता। नुदतीति बलादपि नियोगः। तेन सन्ध्याकाल एव सङ्केतकाल इति सर्वेषामेकव्यङ्ग्यम्। तच्चान्यसन्निधेर्वैशिष्ट्यादेव।

[वृत्तिः] सुव्वई समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण।
एमे अ किंत्ति चिठ्ठसि ता सहि सज्जेसु करणिज्जं ॥१९॥
( श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि तत्सखि सज्जस्व करणीयम् ॥ )

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते।

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥२०॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यतामिति आश्वस्तां प्रति कयाचिन्निवेद्यते।

गुरुअणपरवस पिअ किं भणामि तुइ मंदाभाइणी अहअं।
अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जं ॥२१॥

अत्राद्य मधुसमये यदि व्रजसि तदाहं तावन्न भवामि तव तु न जानामि गतिमिति व्यज्यते।

[कमला०] प्रकरणादाह सुव्व इति। श्रूयते करणीयम्। एवमेव निरुद्योगम्। करणीयं कार्यम्। सज्जस्व योजय। सज्जयेति पाठः स्पष्टः। अत्रेति। उपपतिर्जारः। तस्य प्रकरणादुपस्थितौ तन्निषेधो व्यङ्ग्य इत्यर्थः।

देशादाह अन्यत्रेति। अन्यत्रेतोदूरे। अवचायं हस्तप्राप्यं पुष्पग्रहमिति प्रलोभनम्। चेस्तु हस्तादाने इति घञ्। अस्मीत्यहमर्थेऽव्ययम्। अत्रेति। सख्योऽन्यत्र सन्ति। तेन विजनोऽयं देशः। तेन प्रच्छन्नः गुप्तः कामुकोऽत्र प्रेषणीय इति। विश्वास्य सखीं प्रत्युच्यत इत्यर्थो देशसन्निधेः प्रतीयते। कालसन्निधेराह गुर्विति। गुरुजन·········करणीयम्। परवशेति। परशब्दः शत्रुपरोऽपि नैते गुरवः किन्तु शत्रव इत्यर्थः। निःस्नेहे उपालम्भविषयत्वम्। व्रजेति मन्युना मा व्रजेति। अद्येति वसन्ते। यत्र प्रवासिनोऽपि गृहमायान्ति न जानामीति। अहन्त्वदेकशरणत्वान्न जीविष्ये। तव तु अन्या अपि सन्तीति युक्तं जीवनं प्रवासश्चेति भावः। अद्य पदोक्तवसन्तकालसन्निधेरेव व्यङ्ग्यधीरित्यर्थः।

[सरि०] प्रस्तावः प्रकरणम्। तद्वैशिष्ट्यादर्थस्य व्यञ्जकत्वमुदाहरति 'सुव्वइ' इत्यादि। सहि ( हे सखि! ) तुज्झ ( तव ) पिओ ( प्रियः ) पहरमेत्तेण ( प्रहर-

मात्रेण ) अज्ज ( अद्य ) समागमिस्सदि ( समागमिष्यति ) इति सुव्वई ( श्रूयते ) ता ( तत् ) एमेअ ( एवमेव ) किंत्ति ( किमिति ) चिट्ठसि ( तिष्ठसि ) करणिज्जं ( करणीयम् ) सज्जेसु ( सज्जस्व ) ( य ) इत्यन्वयः। हे सखि हे वयस्ये ! तव भवत्याः। प्रियः पतिः। अद्य वर्तमानदिवसे। प्रहरमात्रेण प्रहराभ्यन्तरमेव। समागमिष्यति प्रवासाद् प्रत्यागमिष्यति। इति। श्रूयते आकर्ण्यते। तत् तेन। एवमेव अकिञ्चित्करी एव। किमिति किन्निमित्तम्। तिष्ठसि वर्तसे। करणीयं तन्निमित्तकं यदेव कृत्यं भोजनपानशयनादिप्रबन्धनं शृङ्गारसज्जादिकर्म च। सज्जय साधयेति। काव्ये व्यङ्ग्यमाह अत्रेति। अत्रेति काव्येऽस्मिन्। उपपतिं जारम्, प्रत्यभिसर्तुम् उपभोक्तुम्। प्रस्तुता तत्परा। न नैव। युक्तं शोभनं नायमवसरोऽस्येति। कयाचित् प्रियसख्येति। निवार्यते निषिध्यत इति। अयमाशयः प्रकरणवैशिष्ट्यादपि अर्थस्य व्यञ्जकत्वं सिध्यति यथा 'सुव्वई' इत्यत्र। अत्र हि अभिसारनिषेधो व्यङ्ग्यम्। तच्च नोक्तमपि अवगतप्रसङ्गानामवभासते प्रकरणवैशिष्ट्यात्। तथा हि काव्येऽस्मिन् प्रिय इति नोपेक्षणीयत्वम्। अद्येति न तु कालान्तरितत्वेन। प्रहरमात्रेणेति तत्रापि शीघ्रमेव न तु विलम्बेन। समागमिष्यतीति पूर्णमनोरथत्वमत एव स्वागतयोग्यत्वम्। श्रूयत इति इदानीमेव जनाः कथयन्ति यैरागच्छन् प्रत्यक्षमेव दृष्ट इति। तेन नायमवसरोऽभिसरणस्येति प्रत्यभिसारनिषेधो व्यङ्ग्यमिति प्रकरणवैशिष्ट्यात्प्रतीतम्।

कालवैशिष्ट्यादर्थस्य व्यञ्जकत्वमुदाहरति अन्यत्रेति। सख्यः। यूयम् अन्यत्र कुसुमावचायम् कुरुध्वम् अस्मि अत्र करोमि हि अहम् दूरं भ्रमितुम् न समर्था प्रसीदत अयम्, अञ्जलिः वः रचितः इत्यन्वयः। हे सख्यः ! यूयं चलितुं समर्था भवत्यः। अन्यत्र अन्यस्मिन्नेवोद्याने इतो दूरे। कुसुमावचायं हस्तप्राप्यपुष्पग्रहणम्। चेर्हस्तादानेऽर्थे घञ्। कुसुमानां पुष्पाणामवचायः हस्तप्राप्यपुष्पग्रहणमिति। कुरुध्वं विधत्त। अस्मि इत्यहमर्थेऽव्ययम्। अहम्। अत्र अस्मिन्नेव प्रदेशे। करोमि येन केन प्रकारेण पुष्पावचयं विदधामीति। हि यतः। अहम् कृशाङ्गी। दूरं विप्रकृष्टस्थले। भ्रमितुं पर्यटितुम्। न नैव। समर्था शक्ता। यूयं प्रसीदत एनां दीनां प्रति कृपां कुरुध्वम्। प्रसन्ना भवत। अयम् एषः। अञ्जलिः प्रणामः। वः युष्मान्। रचितः विहित इति। प्रस्तुते व्यङ्ग्यमाह अत्रेति। अत्र काव्येऽस्मिन्। अयम् एषः पुरोवर्ती। देशः स्थानम्। विविक्तः जनशून्यः। इति हेतोः। त्वया भवत्या सख्या। प्रच्छन्नकामुकः गुप्तसुरतार्थी। अभिसार्यताम् प्रेष्यताम्। इति इत्थम्। आश्वस्ताम् विश्वासवतीम्। प्रति उद्दिश्य। कयाचित कामुकया। निवेद्यते प्रार्थ्यते इति। अयमाशयः– अत्र हि सखीरन्यत्र

यावद्धस्तप्राप्यकुसुमलाभेन प्रलोभ्य दूरं प्रेषयित्वा अहमत्र करोमीति देशस्य विविक्तत्वं संसूच्य आत्मनो दूरसञ्चारासामर्थ्यं प्रकटय्य सखीः प्रतार्य च प्रच्छन्न-कामुकप्रेरणाय रहस्यसख्यावेद्यते इति । तदावेदनमेव व्यङ्ग्यं यद्धि देशवैशिष्ट्यात् प्रतीयत इति वृत्तिकाराशयः। काव्यप्रदीपकारास्तु 'अत्र देशस्यातिविविक्तादिरूप-वैशिष्ट्याद् वक्तृवैशिष्ट्यादिसहितात् सख्या प्रच्छन्नकामुको युष्माभिः प्रहेय इति प्रियसखीः प्रति व्यज्यते' इति। "तन्न। वृत्तिविरोधात् रहस्यस्य बहुविषयत्वेना-नौचित्यापाताच्च" इति सुधासागरकाराः। साहित्यचूडामणिकारास्तु 'देशस्य विविक्तत्वं व्यञ्जकभागः प्रच्छन्नकामुकस्य विसर्जनीयत्वं व्यङ्ग्यांशः' इति। गोकुलनाथास्तु 'सखीनामन्यत्र गमनेन वाच्येन देशस्य विविक्तत्वस्वरूपं वैशिष्ट्यमभि-व्यज्यते। तेन चाश्वस्तां प्रति प्रच्छन्नकामुकाभिसारणनियोगः। आश्वस्तां विदितरहस्यामिति' इति। मधुमतीकारास्तु 'सख्योऽन्यत्रैव तिष्ठन्ति। विजनोऽयं देश इति प्रच्छन्नकामुकोऽत्र प्रेषणीय इत्याश्वस्तां रहस्यवयस्यां प्रति कयाचिद् द्योत्यते। यद्वा विविक्तोऽयं देश इत्याश्वस्तां जातविश्वासां प्रति प्रच्छन्नकामुकस्त्वया विसर्जनीयः। अत्र सख्यः सन्निहिता इति.......... । अत्र पक्षद्वयेऽपि वाच्योऽर्थः साधारणसखीविषयः प्रतीयमानस्तु स्वरहस्यवयस्याविषयः.......' इति। बाल-चित्तानुरञ्जनीकारास्तु 'पुष्पावचयं नाटयन्ती मालती सखीः प्रति कथयति' इति। अस्मदुपजीव्या बालबोधिनीकारास्तु 'सखीवेषधारिणा स्वीयनायकेन सहागतां प्रियसखीं दृष्ट्वा सखीः प्रति नायिकाया उक्तिरियम्..........अभिसार्यतां प्रेर्यताम्। आश्वस्तां विश्वासवतीम्।.......' इति। अत्र हि वृत्तौ 'आश्वस्ताम्' इति पदं कारणम्। केचिदाश्वस्ता रहस्यवयस्या इति व्याख्यान्ति। तत्पक्षे कामुकप्रेरणाय सखी प्रार्थ्यते इति व्याख्या सङ्गच्छते। परे तु आश्वस्ता जातविश्वासा इति व्याख्याय सखीनामुपस्थितिः सूच्यतेऽत्रेत्यपि वदन्ति। व्याख्यातृभिस्तु वृत्तिरेवानुपातव्या। वृत्त्यविरोधसम्भवे तु वयमपि वाच्यार्थः सखीविषयो व्यङ्ग्यार्थस्तु कामुकनिभृतमा-गच्छेति सूचनायेति वदेमः। वृत्तिविरोधभीत्या तु आश्वस्तेति काचिदभिसारतत्परा तां प्रति निःशङ्कं कामुकमुपभुङ्क्ष्वेति व्यङ्ग्यं समर्थयामः। मया सख्यो यावद्धस्तप्राप्यकुसुमलोभेन दूरं प्रस्थापिता। अहमपि क्रियद्दूरमेव तिष्ठामि। तेन विविक्तोऽयं देशः। त्वं स्वरमणं निःशङ्कमुपभुङ्क्ष्वेति कस्याश्चित्सख्याः कामपि कामुकीं सखीं प्रति यद्वचनं तदेव व्यङ्ग्यं देशवैशिष्ट्यात्प्रतीतमिति वृत्त्यनुरोधः। वाच्य-वैशिष्ट्योदाहरणे 'उद्देशोऽयमित्यादौ समग्रस्यैव वाच्यस्य वैशिष्ट्यमत्र तु देशमात्र-स्येत्यनयोर्भेद इति सङ्केते स्पष्टम्। तच्च कुसुमावचायमुद्दिश्यान्यदेशाधिकरणकत्वस्य विधेयत्वेन प्राधान्याद् देशवैलक्षण्यादेव व्यञ्जकत्वं तत्र तु देशस्य विशेषणत्वेना-

प्राधान्यात्प्रधानीभूतवाच्यस्यैव वैलक्षण्याद् व्यञ्जकत्वमिति बालबोधिन्यां स्पष्टम्। कालवैशिष्ट्यादर्थस्य व्यञ्जकत्वमुदाहरति **गुरु** इति। गुरुजणपरवस (गुरुजन-परवश!) पिअ (प्रिय) अहकं (अहम्) मंदभाइणी (मन्दभागिनी) तुह (तव) किं (किम्) भणाभि (भणामि) अज्ज (अद्य) पवासं (प्रवासम्) वच्चसि (व्रजसि) वच्च (व्रज) सअं (स्वयम्) जेव्व (एव) करणिज्जं (करणीयम्) सुणसि (श्रोष्यसि) इत्यन्वयः। हे **गुरुजनपरवश!** मान्यजनपराधीन! **प्रिय!** नाथ! **अहम्** निःस्पृहया। **मन्दभागिनी** तुच्छभाग्या। तव त्वाम्। **किं** किमेव। **भणामि** कथयामि। कथमहं मा प्रजेति कथयामि। अद्य वर्तमान-दिने एव विशेषतो वसन्तसमये। **प्रवासं** दूरदेशम्। **व्रजसि** यासि चेत् **व्रज** याहि। त्वयि प्रस्थिते मया यदेव **करणीयं** कर्तुमहम्। तत् **स्वयमेव**। **श्रोष्यसि** आकर्णयिष्यसि इति। **गुरुजनपरवश** इति गुरुर्मान्याहश्चासौ जनः किन्तु जड अतः स एव परः शत्रुरविवेकित्वात् तस्य वश आयत्त इति विग्रहः। लक्ष्ये व्यङ्ग्यमाह **अत्रेति**। अत्रेति काव्येऽस्मिन्। अद्येति **मधुसमये** वसन्तसमये। यदि प्रवासं व्रजसि तदा अहं तु नैव भवामि प्राणान् धारयितुं शक्नोमि त्वदेकशरणत्वात्। **तव भवतः**। **गतिम्** अवस्थाम्। **तु**। न जानामि अन्यासामपि प्रियाणां सम्भवात्। इति **इत्थम्**। **व्यज्यते** द्योत्यते। इति। **अयम्भावः** — त्वं तु गुरुजनाज्ञाधीनतया प्रवासं जिगमिषुश्चेद् गच्छाद्यैव। तत्पश्चान्मया किं कर्तव्यमिति पश्चादाकर्णयिष्यसीति वाच्यार्थः। तत्र अद्यपदोक्तवसन्तकालवैशिष्ट्यात् प्रवासिभिरपि प्रत्यागन्तव्यसमये वसन्तकाले त्वं यास्यसि चेदहं तु प्राणान् नैव धारयितुं शक्नोमि त्वदेकशरणत्वात्तेन त्वत्प्रस्थानानन्तरं मे मरणं भविष्यतीति व्यङ्ग्यं प्रतीयत इति कालवैशिष्ट्यादर्थस्य व्यञ्जकत्वम्।

[वृत्तिः] आदिग्रहणाच्चेष्टादेः। तत्र चेष्टाया यथा—

> "द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
> प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।
> आनीतं पुरतः शिरोंऽशुकमधःक्षिप्ते चले लोचने
> वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते" ॥२२॥

अत्र चेष्टया प्रच्छन्नकान्तविषयः आकूतविशेषो ध्वन्यते।

निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते। वक्त्रा-दीनां मिथःसंयोगे द्विकादिभेदेन। अनेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम्।

[ वक्तृबोद्धव्ययोगे यथा—

अत्ता एत्थ णिमज्जई एत्थ अहं दिअसअं पुलोएहि ।
मा पहिअ रत्तिअंध सेज्जाए मह णिमज्जसिहि ।

अत्र मम शय्यायामेव स्वपिहीति व्यङ्ग्यम् । ]

[कमला०] मूलस्थादिपदग्राह्यमाह चेष्टादेरिति । अत्रादिपदमभिनयतद्-द्विकादिपरम् । द्वारोपेतेति । निरन्तरे सन्निहिते प्रोल्लास्य प्रसार्येत्यालिङ्गन-विशेषो द्योत्यः । आनीतमिति प्रच्छन्न एहीति । तदेतदाह आकूतविशेष इति ।

नन्वेकस्मिन् वाक्यवैशिष्ट्यादुदाहरणे वक्तृबोद्धव्यादीनामपि प्रदर्शयितुं शक्यत्वात् किमर्थं तेषां भेदो नोदाहरणानीत्यत आह निराकाङ्क्षेति । असङ्करार्थम् । भिन्नो-दाहरणेषु क्वचित्साङ्कर्यं न दोषायेत्यर्थः । प्राप्तावसरतयेति । पूर्वपश्चा-द्भावित्वेनोपस्थापितानां बालव्युत्पत्तये विवक्षितक्रमेणोदाहरणभेद इत्यर्थः । आदि-पदग्राह्यमन्यदप्याह वक्त्रादीनामिति । वक्तृबोद्धव्यादीनां द्वयोर्योगे द्वौ परिमाण-मस्येति द्विकं यथा 'अइपिउलम्' इत्यत्र वक्तृबोद्धव्ययोः त्रयाणां योगे त्रिकं यथा गुरुअणेति वक्तृबोद्धव्यकालादीनां चतुर्णां चतुष्कमित्यादि ज्ञेयम् । अनेनेति । यथा वक्तृवैशिष्ट्यादिना वाच्यार्थस्य व्यञ्जकत्वमुक्तमेवं लक्ष्यव्यङ्ग्यार्थयोर्वक्त्रादिवैशिष्ट्येन व्यञ्जकत्वमुक्तमित्यर्थः । साहेंतीति लक्ष्यस्य उवणिचलेति व्यङ्ग्यस्य वक्त्रादि-वैशिष्ट्यव्यञ्जकत्वमुक्तम् । व्यङ्ग्ये द्विकोदाहरणमाह अत्था एतेति । श्वश्रूरत्र शेते अत्राहं दिवस एव विलोकय । मा पथिक रात्र्यन्धक शय्यायां मम निमज्जसि । निस्पन्दं शेते इत्यर्थः । वक्तृबोद्धव्यवशाद् व्यङ्ग्येन शय्यादेशे रतार्थमत्रैव यतेति व्यङ्ग्यम् । रात्र्यन्धेति । केनचिद्धर्षेण रात्र्यन्धो भवेत्यपह्नवो विधेयः ।

[सरि०] कारिकागतमादिपदं व्याचष्टे आदीत्यादि । मूले प्रस्तावदेशकाला-देरित्यत्र आदिपदग्रहणं चेष्टादीनामपि वैशिष्ट्यादर्थव्यञ्जकतानिर्देशाय । तदेव व्याख्याति आदिग्रहणात् मूले आदिपदग्रहणेन । चेष्टादेः चेष्टादीनामपि वैशिष्ट्या-दर्थव्यञ्जकत्वं भवतीति द्योतनाय । अत्रापि आदिपदग्रहणं वक्त्रादीनां द्विकत्रिकचतु-ष्कादीनामपि वैशिष्ट्यादर्थव्यञ्जकताद्योतनायेति कमलाकर्यां स्पष्टम् । चेष्टावैशिष्ट्या-दर्थव्यञ्जकतोदाहरणायोपक्रमते तत्रेत्यादिना । तत्रेति चेष्टादिषु । चेष्टाया भाव-प्रतीकक्रियाया वैशिष्ट्यादर्थस्य व्यञ्जकत्वम् । यथेति निदर्शने । प्रस्तौति द्वारो-पान्तेति । मयि द्वारोपान्तनिरन्तरे सौन्दर्यसारश्रिया उरुयुगं प्रोल्लास्य परस्परसमासक्तम् समासादितम् शिरोंऽशुकम् पुरतः आनीतम् चले लोचने अधःक्षिप्ते तत्र वाचः प्रसरणम् निवारितम् दोर्लते निवारिते इत्यन्वयः । मयि प्रियतमे । द्वारोपान्तनिरन्तरे

द्वारोपान्तस्य द्वाःसमीपवर्तिप्रदेशस्य। निरन्तरे सन्निहिते सति। यद्वा द्वारोपान्तयो द्वारशाखयोर्निरन्तरे मध्यवर्तिनि सति। सौन्दर्यसारश्रिया सौन्दर्यस्य लावण्यस्य यः सारस्तत्त्वस्य श्रीः सम्पत्तिर्यत्र तया वा सौन्दर्येण साराणामिव श्रीर्यत्रेति वैद्यनाथः। सौन्दर्येण सारा श्रेष्ठा श्रीः शोभा यस्यास्तया वा। तादृश्या। कान्तया कमनीयाकृत्या प्रेयस्या। उरुयुगं सक्थियुग्मम्। प्रोल्लास्य प्रोत्सार्य परस्परसमासक्तम् अन्योन्यसंश्लिष्टम्। सम्पादितं विहितम्। शिरोंऽशुकम् शिरो वस्त्रमुत्तरीयकम्। पुरतः अग्रतो ललाटप्रदेशे। आनीतम् आकृष्य न्यस्तम्। चले विलोले। लोचने नयने। अधः भूमिप्रदेशे। क्षिप्ते सञ्चारिते। तत्र तदा। वाचः वचसाम्। प्रसरणं निःसरणम्। निवारितं निरोधितम् मुखमुद्रणेनेति। दोर्लते भुजलते। सङ्कोचिते सङ्कुच्य मिथः संयोजिते इति। तत्र व्यङ्ग्यमाह अत्रेति। अत्रेति काव्येऽस्मिन्। चेष्टया उरुसंयोजन-ललाटावरण-भूविलोकन-मुखमुद्रण-युजसङ्कोचनादिक्रियया। प्रच्छन्नकान्तविषयः प्रच्छन्नमप्रकटमेव कामयते यस्तस्य विषयः। आकूतविशेषः अभिप्रायविशेषः सम्भोगरूपः। ध्वन्यते व्यज्यते इति। तद्यथा उरुयुगं प्रसार्य संयोजनेन सुखपरायणत्वं ललाटावरणेन प्रच्छन्नागमनं, भूविलोकनेन सूर्यास्तसमय एव सङ्केतकाल इति मुखमुद्रणेन वाचो नियम्यैवार्थात् तूष्णीमागन्तव्यमिति भुजलतासङ्कोचेन आलिङ्गनं ध्वनितमिति।

ननु वक्त्रादीनां सङ्करेण वैचित्र्येण द्वित्रोदाहरणेनैव निर्वाहे यथा 'अइपिउलं' इत्यत्र वक्तृबोद्धव्यवाच्यवैशिष्ट्यैः 'गुरुअण' इत्यत्र काकु-वक्तृ-बोद्धव्य-कालवाच्यादिवैशिष्ट्यैश्चार्थव्यञ्जकतेति किमेतावद्भिः पृथक्पृथगुदाहरणैरित्याह निराकाङ्क्षेत्यादि। निराकाङ्क्षप्रतिपत्तये निराकाङ्क्षा एकत्रैव एकाधिकसङ्करे कस्य व्यञ्जकत्वमिति सन्देहे यत्र यस्य प्राधान्यं तत्र तस्य व्यञ्जकत्वमन्येषां तु आनुगुण्यमात्रमित्याकाङ्क्षापरिहारस्तत्पूर्विका या प्रतिपत्तिर्ज्ञानं तदर्थम्। शिष्यजिज्ञासानिवृत्तये। प्राप्तावसरतया अनवसरे तु उदाहरणसङ्कोचोऽपि युज्येत किन्त्वयं तु तत्तद्वैचित्र्यप्रकटनावसर एवेति अवसरप्राप्तत्वेन। च इति समुच्चये। पुनः पुनः वक्त्रादीनां प्रत्येकवैचित्र्यस्य पृथक्पृथक्तया। उदाह्रियते उदाहरणानि प्रस्तूयन्ते इति। अयमाशयः—वक्त्रादीनां सङ्करेण वैचित्र्येण द्वित्रोदाहरणेनैव निर्वाहे तेषां वैचित्र्यस्य पृथक्पृथगुदाहरणभरः कुत्र कस्य प्राधान्यं कस्य वाऽनुगुण्यमिति जिज्ञासाशान्तये अवसरप्राप्तत्वाच्चेति। सङ्करेऽपि 'अइपिउल' इत्यत्र पृथुलरूपवाच्यवक्तृबोद्धव्येषु वक्तृवैचित्र्यस्य प्राधान्यमितरयोरानुगुण्यमेव। तथैव 'गुरुअण' इत्यत्र अद्येत्यत्र काकोः गुर्वित्यनुल्लङ्घनीयाज्ञत्वरूपवाच्यस्य वक्तृबोद्धव्य-

कालानां च वैचित्र्यस्य सङ्करे कालस्यैव प्राधान्यमितरेषामानुगुण्यमिति । चेष्टादेरित्यत्र यदादिपदं तद्ग्राह्यमन्यदप्याह वक्त्रादीनामिति । वक्त्रादीनां वक्तृबोद्धव्यादीनाम् । **मिथः** परस्परम् । **संयोगे** समप्राधान्यत्वेन स्थितावेकत्र । **द्विकादिभेदेन** द्वौ परिमाणमस्येति द्विकम् आदिपदात् त्रयः परिमाणमस्येति त्रिकं, चत्वारः परिमाणमस्येति चतुष्कमित्यादिभेदद्वारा व्यञ्जकत्वं बोध्यमिति । यथा हि द्विकभेदे वक्तृबोद्धव्ययोगो हि 'अत्ता एत्थं इत्यत्र । श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय । मा पथिक रात्र्यन्ध शय्यायामावयोर्निमङ्क्ष्यसि' इति संस्कृतम् । अत्र निषेधे वक्तृबोद्धव्यपर्यालोचनया विधिरूपव्यङ्ग्यार्थप्रतीतिरिति द्विकवैचित्र्योदाहरणमिदम् । अत्र श्वश्रूः निमज्जति अहम् अत्र दिवसके प्रलोकय हे रात्र्यन्धक पथिक आवयोः शय्यायाम् मा निमङ्क्षसि इत्यन्वयः । **स्वश्रूः** पतिजननी । **अत्र** इह अस्मिन् शयने । निमज्जति निष्पन्दा शेते । **अहम् अत्र** शयनेऽस्मिन् । **दिवसके** कुत्सितो दिवसस्तस्मिन्नेव । **प्रलोकय** सम्यङ् निभालय । हे रात्र्यन्ध ! नक्तान्ध ! **पथिक** ! परदेशिन् ! **आवयोः** श्वश्र्वा मम च । **शय्यायां** शयने । **मा** नैव । **निमङ्क्ष्यसि** पतिष्यसि इति । तत्र व्यङ्ग्यमाह अत्रेति । **अत्र** काव्येऽस्मिन् । **मम** । **शय्यायां शयने** । एव इति व्यवच्छेदे नान्यत्र । **स्वपिहि** सुखं निशां व्यत्यापय । **इति** इत्थम् । **व्यङ्ग्यम्** वक्तृबोद्धव्यवैचित्र्यादर्थाक्षिप्तः प्रतीयमानोऽर्थ इति । अत्र हि निमज्जतीति श्वश्र्वा जरत्तरत्वेन निस्पन्दशयनम् अहमत्रेति ततो भिन्नस्थले वक्त्र्याः शयनं स्वापबोधकपदानुक्त्या कामपीडया स्वस्याः निद्राराहित्यं दिवसके इति कुत्सितार्थेन दिवा सम्भोगासम्भवत्वं रात्र्यन्ध इति स्खलनेऽपि रहस्यगोपनम् आवयोरिति गृहे तदितरजनाभावः मा निमङ्क्षसि इति सुखं निमङ्क्ष्येति वैचित्र्याद् निःशङ्कं मम शय्यायामेव स्वपिहीति व्यङ्ग्यं व्यभिचारिवक्तृबोद्धव्यवैशिष्ट्यात्प्रतीयत इत्युभयोरेव समं प्राधान्यम् । वसतिं प्रार्थयमानं व्यक्तकामुकभावं पथिकं प्रति प्रोषितभर्तृकायाः कस्याश्चिद् व्यभिचारिण्याः स्वयंदूत्याः वचनमिदम् हालकविकृत गाथासप्तशत्यां सङ्गृहीतम् । उपसंहरति अनेनेति । **अनेन** अनन्तरोक्तेन । **क्रमेण** रीत्या वक्त्रादिवैशिष्ट्याद्यथा वाच्यस्य तथैव **लक्ष्यव्यङ्ग्ययोः** लक्ष्यार्थस्य व्यङ्ग्यार्थस्य । **च** । **व्यञ्जकत्वं** व्यङ्ग्यार्थप्रत्यायकत्वम् । **उदाहार्यम्** उदाहरणान्तरमन्विष्य ज्ञेयमिति । यथा हि वक्त्रादिवैचित्र्यवशाद् वाच्यार्थस्य व्यञ्जकत्वं तथैव लक्ष्यव्यङ्ग्ययोरपि तद्वैशिष्ट्यादिति । वक्त्रादिवैशिष्ट्यवशाल्लक्ष्यार्थस्य व्यञ्जकत्वं यथा 'साहेन्ती' इत्यादौ व्यङ्ग्यस्य 'उव णिच्चल······' इत्यादौ चेति कमलाकर्यां स्पष्टम् ।

[वि० वृ०] वक्त्रादिवैलक्षण्यात्प्रतिभाजुषां योऽर्थान्तरजनकोऽर्थत्रयस्य व्यापारः सार्थी व्यञ्जना । बोद्धव्यः प्रतिपाद्यः । काकुर्ध्वनेर्विकारः । अन्यो वक्तृबोद्धाभ्याम् ।

प्रस्तावः प्रकरणम् । देशो विजनादि । कालो वसन्तादिः । प्रतिभा वासनाविशेषः । क्रमेणोदाहरणानि 'मुक्तावली निशि मया' इत्यादि । अत्र हारानयनाय न गतास्यपि तु कृष्णाङ्गसङ्गायैवेति वक्तुर्बोद्धव्यस्य च वैशिष्ट्याद् व्यज्यते ।

'हन्त कं दलयन्मन्दं माकन्दं मलयानिलः ।
आयातः सखि कालेऽस्मिन्नपि नैष्यति माधवः ॥'

अत्रेदानीमेष्यत्येवेति सख्युक्तिः काकुवैशिष्ट्यात् ।

'तदा मदीये पतितां कपोले दृष्टिं त्वमन्यत्त न तेतुमीशः ।
सैवाधुनाहं भगवन् कपोलौ तावेव दृष्टिर्न तु कृष्णसेयम् ।'

अत्र कपोलप्रतिबिम्बितां वयस्यां पश्यतस्ते दृष्टिर्यादृक् । चलितायां तु तस्यां न तादृक् । अहो प्रच्छन्नकामुकस्त्वमिति वाक्यवैशिष्ट्यात् ।

'यमुनातीरवानीरनिकुञ्जस्तन्वि रञ्जनः ।
मालतीनर्तनं कुर्वन् सरत्यत्र समीरणः ।'

अत्र 'इह सुरतार्थं प्रविश' इति वाच्यवैशिष्ट्यात् ।

'दूध वुन्दावणमज्जे णिसङ्कणीसुत्तमोरमअणिअरो ।
अलिमेत्तभुत्तकुसुमो रमणिज्जो जामुणो कुञ्जो ।'

अत्र मयूरादीनां निःसुप्तत्वादिना 'विजनोऽयं देशः सुरतार्हं' इति अन्यसन्निधिवैशिष्ट्यात् । 'मुक्तावली निशि मया' इत्यादि । अत्र कृष्णाङ्गसङ्गार्थं तया त्वं प्रेषिताऽसीति प्रकरणवैशिष्ट्यात् । मम समीचीना काऽपि सखी छद्मना त्वदन्तिकं प्रेषणीया त्वया तु सा तोषणीया' इति प्राक् प्रस्तावः ।

जउणासीअरसिसिरा कमलवणी पवणधुअकिसलअग्गा ।
जह वल्लीधरपल्ली धण्णा पेक्खन्ति तं देसम् ॥'

अत्र कृष्णेन सह तत्र मां सङ्गमयेति सखीं प्रति निजेच्छाव्यक्तिर्देशवैशिष्ट्यात् ।

'एण्हि जलहरसमये रअणिज्जा रअणवलहीओ ।
णिवडन्तवारिधारा गहीरतरमुहरगब्भकुहराओ ।'

अत्र कृष्णमानेष्यामीति सङ्केतमीङ्गितेन पृच्छन्तीं दूतीं प्रति नाधुना कुञ्जो रम्यः, किन्तु भवनमेवेति कालवैशिष्ट्यात् ।

आदिना चेष्टाप्रसिद्ध्योः । उदाहरणम्—'एतावत्कुचयुग्मेयम्' इत्यादि । अत्र कुचादीनां कमलकोरकाद्याकारता हस्तादिचेष्टावैशिष्ट्यात् ।

'करकिसलयलीलाम्बुजनिमीलनोन्मीलनातिकुतुकिन्या ।
दक्षिणमक्षिमुरारेः पिधीयते मुच्यते च सिन्धुजया ।'

अत्र हरेर्दक्षिणं नेत्रं सूर्यात्मकमिति प्रसिद्धिवैशिष्ट्यात् ।

[कारिका] शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥२३॥

[वृत्तिः] शब्देति । नहि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ।

इति श्रीकाव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो
नाम तृतीय उल्लासः ।

[कमला०] नन्वर्थस्य व्यञ्जकत्वे कथं शाब्दार्थौ काव्यमत आह शब्देति । यद्वा ननु अर्थस्य व्यङ्ग्यप्रमापकत्वे मानान्तरं स्यादत आह शब्देति । शब्दबोध्यत्वेनार्थस्य व्यञ्जकता न स्वरूपेण मानान्तरोपस्थिते तदभावात् । तेनान्वयव्यतिरेकाभ्यां शब्दस्यैव प्रमाणतेत्यर्थः । प्रमाणान्तरेति । प्रत्यक्षोपस्थिते आस्वादाभावादित्यर्थः ।

इति तृतीय उल्लासः ।

[सरि०] यदि हि अर्थमात्रस्यापि व्यञ्जकत्वं तदा कथं शब्दार्थोभयरूपस्य काव्यस्य व्यञ्जकत्वाभावेन ध्वनित्वमित्याशङ्क्य शब्दार्थयोरुभयोरपि व्यञ्जकत्वं प्रतिपादयितुं तत्सम्बद्धकारिकामवतारयति शब्देत्यादि । यतः शब्दप्रमाणवेद्यः अर्थः अर्थान्तरम् व्यनक्ति तत अर्थस्य व्यञ्जकत्वे शब्दस्य सहकारिता भवति इत्यन्वयः । यतः यस्मात्कारणात् । शब्दप्रमाणवेद्यः शब्दरूपप्रमाणेन वेद्यः प्रतिपाद्यः । अर्थः वाच्यादिः । अर्थान्तरं व्यङ्ग्यलक्षणमर्थम् । व्यनक्ति प्रकाशयति । तत् तस्माद्धेतोः । अर्थस्य वाच्यादेः । व्यञ्जकत्वे व्यङ्ग्यार्थद्योतकत्वे । शब्दस्य अर्थाश्रयस्य । सहकारिता विशेषणीभावः । भवतीति शेषः । कारिकांशं व्याख्याति शब्देति । शब्दप्रमाणवेद्य इति प्रमाणान्तरवेद्यः शब्दादन्यं यत्प्रमाणं प्रमाणान्तरं तेन वेद्यः प्रतिपादितः । अर्थः । न । व्यञ्जकः काव्योपयोगिव्यङ्ग्यार्थप्रत्यायकः । अयमाशयः—अर्थस्य त्रिविधस्यैव व्यञ्जकत्वेन नेदमवधेयं यच्छब्दार्थशरीरस्य काव्यस्य ध्वनित्वं न भवतीति । तत्र तु शब्दप्रमाणस्यैवार्थस्य व्यञ्जकत्वं भवति, न तु तदितरप्रमाणप्रतिपाद्यस्यार्थस्यापि । प्रत्यक्षदृष्टकामिजनमिथुनात्तच्चेष्टानुमित-रत्यादेरर्थस्यानास्वाद्यत्वात् । सर्वोऽप्यर्थो व्यङ्ग्यरूपमर्थान्तरं प्रकाशयितुं शब्दरूपं प्रमाणमपेक्षते एव । अर्थस्य प्राधान्यं त्वेतावदेव यत्पदान्तरप्रतिपाद्यस्यापि प्रकृतार्थस्य व्यञ्जकत्वात्परिवृत्तिसहत्वेन शब्दस्याप्राधान्यमर्थशक्तिमूलध्वनौ । तेनेदं पर्यवस्यति यद्यत्र शब्दो हि परिवर्तनं न सहते तत्र शब्दस्य व्यञ्जकत्वेन प्राधान्यमर्थस्य तत्सहकारित्वं तथैव यत्र शब्दः परिवृत्तिसहस्तत्रार्थस्य व्यञ्जकत्वं शब्दस्य तद्विशेषणीभाव इति नान्यं विवेकस्य गतिः । अतः सिद्धं शब्दार्थशरीरस्य काव्यस्य ध्वनित्वमिति । व्यपदेशस्तु प्राधान्येनैव । तेन हि यत्र यच्छक्तिरुत्कटा तत्र तन्मूलताव्यपदेशो द्वयोरुत्कटत्वे उभयशक्तिमूलमिति सर्वमवदातमिति काव्यप्रकाशदर्पणकाराः ।

तेन हि अर्थस्यापि व्यञ्जकत्वेऽपि तस्यापिशब्दप्रमाणवेद्यत्वाद् ध्वननं हि शब्दस्यैव व्यापार इति स्पष्टम् ।

इति श्रीमद्वत्सगोत्रोत्पन्नरविलालात्मजपरशुरामसूनुविष्णुमायागभंज-
कात्यायनपथानुयायिमाध्यन्दिनीयशाखान्तर्गतशुक्लयजुर्वेदाध्यायि
परमशैवलोकमणिदाहालप्रणीतायां काव्यप्रकाशस्य
सरिताऽऽख्यविवृत्यामर्थव्यञ्जकतानिरूपण
नाम तृतीय उल्लासः ।

यथाऽऽस्ते देवसरिता नित्यं हृत्पटले मम ।
तथैवैषा पाठकानां चित्ते नित्यं विराजताम् ॥

[वि० वृ०] यस्माच्छब्दबोध्य एवार्थोऽर्थान्तरं व्यञ्जयत्यतः शब्दस्यापि तत्रोपकारिता किन्त्वर्थस्य तत्र प्राधान्यादार्थी व्यञ्जनेति भणितिः ।

इति भरतसूत्रौ साहित्यकौमुद्यामर्थनिर्णयो नाम तृतीयः परिच्छेदः ।

—:०:—

# अथ चतुर्थ उल्लासः

[वृत्तिः] यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह—

[कारिका] अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥

[वृत्तिः] लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव अविवक्षितं वाच्यं यत्र स ध्वनावित्यनुवादात् ध्वनिरिति ज्ञेयः। तत्र च वाच्ये क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम्। यथा—

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्" ॥२३॥

अत्र वचनाद्युपदेशादिरूपतया परिणमति। क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतम्। यथा—

"उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम्" ॥२४॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद् वक्ति।

[कमला०] ननूक्तं काव्यलक्षणे शब्दार्थौ निरूप्य तदन्तर्गतदोषगुणा वक्तुमर्हा न तु ध्वनिरत आह यद्यपीति। दोषाणां हेयत्वं गुणालङ्काराणाञ्चोपादेयत्वम्। धर्मिणि काव्ये। यद्यपि दोषो न काव्यधर्मस्तथापि दोषाभावविशिष्टानामुपादेयतया विशेषणीभूताभावप्रतियोगित्वेनावच्छेदकत्वाद्धर्मत्वोपचारः। उत्तममध्यमाधमकाव्यानां सामान्येन स्वरूपेण प्रतिबन्धकत्वादित्यर्थः। प्रथमं दोषादिनिरूपणात्पूर्वं काव्यभेदान् ध्वनिभेदान् दोषादीनां रसादिध्वन्याश्रितत्वेन तद्ग्रहाधीनग्रहत्वादित्याशयः। तत्र ध्वनिरूपं काव्यं द्वेधा—लक्षणामूलमभिधामूलञ्च। आद्यमविवक्षितवाच्यमन्त्यं विवक्षितान्यपरवाच्यमित्युच्यते। तत्राल्पत्वाल्लक्षणामूलस्य द्वैविध्यमाह अविवक्षितमिति। अविवक्षितमनुपयुक्तमन्वयायोग्यं वा वाच्यं यत्र स ध्वनिर्ज्ञेयः। तत्र तस्मिन् ध्वनौ वाच्यमर्थान्तरे लक्ष्ये पुंसा तात्पर्यवशात्सङ्क्रमितं परिणमितमतं

एव णिच् अत्यन्तं तिरस्कृतमन्वयाप्रतियोगी वा भवेदित्यन्वयः। एतेनोपादानलक्षण-लक्षणे उक्ते। लक्षणेत्यादि अविवक्षितवाच्यस्योपविवरणम्। लक्षणामूलं यद्गूढ-व्यङ्ग्यं तस्य प्राधान्ये सतीत्यर्थं। अभिधामूले विवक्षितान्यपरवाच्येति व्याप्ति निराकर्तुं लक्षणामूलेत्युक्तम्। अन्ये तु अभिधामूलेऽविवक्षितवाच्यत्वाभावात् नातिव्याप्तिः। अतो निरूढलक्षणाया निष्प्रयोजनत्वाद् व्यङ्ग्याभावेन तत्राति-व्याप्तिनिरासाय लक्षणामूलेति पदमित्याहुः। अगूढव्यङ्ग्ये मध्यमे तां वारयितुं गूढव्यङ्ग्येत्युक्तम्। गुणीभूतव्यङ्ग्येऽतिव्याप्तिवारणाय प्राधान्ये सतीत्युक्तम्। लक्षणामूलमत एव विवक्षितवाच्यं यत्र स ध्वनिर्ज्ञेय इत्यन्वयः। ननु अर्थान्तर-सङ्क्रमितवाच्यत्वाद्यत्र विधेयं न तु ध्वनित्वमतः कथं ज्ञेय इत्युच्यतेऽत आह ध्वनावित्यनुवादादिति। अयम्भावः मूले तत्र ध्वनाविति ध्वनिमनूद्यार्थान्तर-सङ्क्रमितवाच्यत्वादि विधीयते। न चान्यतो ध्वनित्वं सिद्धमस्ति। न च ध्वनिर्बुधैः कथित इत्युक्तेर्ध्वनित्वं सिद्धमिति वाच्यम्। तस्यैतत्सिद्धध्वनित्वानुवादेन वाच्यातिशयित्वलक्षणपरत्वादनुवादस्य सन्निहितगामित्वाच्च। अतोऽत्रैवानुवादानु-पपत्त्या विधित्वं परिकल्प्य तस्य द्वैविध्यमुच्यते। अतो ज्ञेय इति भिन्नं याजतं न च वाक्यभेदः पौरुषेयत्वादिति।'

आद्यभेदमाह तत्रेति। एतेन तात्पर्यानुपपत्तिरन्वयानुपपत्तिर्वा लक्षणाबीज-मुक्तम्। त्वामिति। अस्मीत्यहमर्थेऽव्ययम्। अहं त्वां वदामि। अत्र विदुषां समूहोऽस्ति। तत्तस्मादात्मीयां मतिं वृद्धीकृत्यात्र तिष्ठेत्यर्थः। अत्रेति वक्तुः श्रोतुश्च साम्मुख्यात्प्रत्यक्षत्वाच्चाहं त्वां वच्मीत्याद्यनुपयुक्तम्। हि तत् त्वम् इत्यत्र चोपदेशत्वादि लक्षयति। अवश्यग्राह्यत्वाप्तत्वादि व्यङ्ग्यम्। एवं सर्वत्रात्मीय-मतावस्थितेः प्रामाणिकमतिर्लक्ष्या सावधानत्वञ्च व्यङ्ग्यमित्यर्थः। कुन्ता इत्यत्र कुन्तस्य धर्मिरूपतापत्तिरेव परिणामस्त्वामस्मिपदद्वये लक्षणायां वचनादिरिति मूले कथमुक्तम्। केचिदाहुः। भूवादिवत्कुटादिवद्य वचनमादिर्यस्य वचनस्यादिश्चेति समासद्वयात् सर्वलाभ इति सर्वनाम्नां बुद्धिस्थशक्तेर्लक्षणेत्यन्ये। तन्न। युष्मदस्मदोः परस्वात्ममात्रशक्तत्वेन सर्वनामत्वाभावो न लक्षणासत्त्वात्। तत्त्वन्तु त्वामहमिति वचनक्रियाकर्मकर्तृत्वाद्वचनविवक्षयैव तयोरनुपयोगो न स्वातन्त्र्येणेति तदाद्युक्तिः। ननु वच्मीति सामान्यवाचकस्योपदेशविशेषे कथं लक्षणा ? नैवम्। सामान्येन बोधे तथैव विशेषप्रकारेण बोधे लक्षणैव तत्राशक्तेः। मुख्यार्थबाधमूललक्षणामाह क्वचिदिति। उपकृतमिति। अपकारिणं प्रतीतिमुख्यार्थबाधः। विपरीतेति सम्बन्ध उक्तः। त्वया यत्र यस्मिन् विषये उपकृत तत्र किमुच्यते किं वक्तव्यम् अवचनमेव शरणमित्यर्थः। तत्रेति पाठे यदपकृतं तत्र किं वाच्यम्। किन्तु सौजन्य-

मेव त्वया ख्यापितम् । अत ईदृशमेव कुर्वन् शरदां वर्षाणां शतं सुखितं यथा तथा आस्व तिष्ठेत्यर्थः । अत्रापकारिणि उपकारित्वबाधाद्विरोधितासम्बन्धेनापकारित्वं लक्ष्यम् । तदुक्तम् 'अभिधेयेन सम्बन्धात्सादृश्यात्समवायतः । वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मतेति । अपकारेऽपि प्रियोक्त्या स्वसाधुत्वं व्यङ्ग्यम् । एवं सुजनतया दुर्जनतासखित्वेन शत्रुत्वं लक्ष्यम् । यद्यपि 'कुन्ता' इत्यत्र व्यङ्ग्यं नार्थान्तरसङ्क्रमितवाच्येऽन्तर्भूतं कुन्तानां परिणामाभावात् नात्यन्ततिरस्कृतवाच्ये स्वार्थात्यागात् । तथापि कुन्तवत्त्वेन पुरुषप्रतीतौ परिणामोऽस्त्येव । यदा तु कुन्तवृत्तितत्संयोगाश्रयत्वेन पुरुषधीस्तदा सुतरां परिणामः ।

[सरि०] इत्थं हि शब्दार्थौ सप्रपञ्चं निरूप्य सम्प्रति काव्यभेदप्रभेदनिरूपकप्रकरणप्रसाराय तस्यौचित्यं प्रतिपादयति यद्यपीत्यादि । यद्यपि क्रमतः । शब्दार्थयोः शब्दस्य तत्प्रतिपाद्यस्यार्थस्य च । निर्णये स्वरूपावधारणे । कृते विहिते यथा ह्यनन्तरोल्लासयोः । दोषगुणालङ्काराणाम् काव्यलक्षणे 'सदोषौ सगुणावलङ्कृती पुनः क्वापि' इति यदुक्तं तदनुसारेण सम्प्रति यतः शब्दार्थौ निरूपितौ तेन दोषाणां गुणानामलङ्काराणाञ्च । स्वरूपं लक्षणादि । अभिधानीयं कथनीयम् । तथापि तथाकर्तव्ये सत्यपि । धर्मिणि धर्माश्रये गुणालङ्कारादयो हि काव्यधर्माः काव्ये । प्रदर्शिते निरूपिते । धर्माणां काव्यधर्मभूतानां दोषगुणालङ्काराणां दोषाणां काव्यधर्मत्वाभावेऽपि तदभावविशिष्टोपादेयतया विशेषणीभूताभावप्रतियोगित्वेनावच्छेदकत्वाद्धर्मत्वोपचारात्तेषामपि ग्रहणम् । हेयोपादेयता हेयता त्याज्यता उपादेयता ग्राह्यता च हेयत्वं दोषाणामुपादेयत्वमलङ्काराणाम् । ज्ञायते समवगम्यते । इति हेतोः । प्रथमं तत्पूर्ववर्तित्वेन काव्यभेदान् उत्तमादिकाव्यलक्षणलक्षितभेदप्रभेदान् । आह निरूपयति कारिकाकृदिति । अयमाशयः शब्दार्थस्वरूपे निरूपिते तु काव्यलक्षणोक्तदिशा दोषगुणालङ्कारा निरूपणीयाः किन्तु तेषां काव्यधर्मत्वेनैव हेयत्वोपादेयत्वभावात्काव्ये निरूपिते तेषां ज्ञानं सुकरं भवतीत्याशयेन प्रथमतः उत्तमादिकाव्यभेदस्वरूपं प्रपञ्चयति कारिकाकृदिति । तर्हि दोषाणां तु काव्यधर्मत्वाभावात्तेषां तु निरूपणीयता सिध्यत्येवेत्याशङ्क्य कथयति हेयोपादानतेति । दोषा हि न काव्यधर्माः किन्तु तदभावविशिष्टस्यैवोपादेयतया विशेषणीभूताभावप्रतियोगित्वेन तदवच्छेदकत्वादेव तेषां धर्मत्वोपचार इति । दोषा हि रसापकर्षकत्वेन त्याज्यधर्माः गुणाश्च तदुत्कर्षहेतुभूताभ्यन्तरधर्मा अलङ्काराश्च तथाभूतबाह्यधर्मा इति तेषां लक्ष्ये लक्षणघटनाय प्रथमं तु काव्यभेदानामेव ज्ञानमावश्यकम् । धर्मिणि काव्यभेदादौ ज्ञाते एव कुत्र कस्य हेयता वोपादेयतेति सुखेन ज्ञातुं शक्यते इति उपक्रमोऽयमिति । काव्यभेदेषु हि उत्तमं ध्वनिकाव्यमिति

यथा प्रतिपादितं तेन तस्य प्राथम्येन विवेचनीयं तु सिध्यत्येव। तत्र ध्वनित्वं हि व्यञ्जनाव्यापारविषय एव। सा हि द्विविधा—शब्दनिष्ठाऽर्थनिष्ठा च। तत्र काव्येऽर्थनिष्ठाया एव काव्ये प्रसिध्याधिक्यादल्पविषयत्वाच्च प्रथमं सैव निरूप्यत इति कारिकया सह सम्बन्धः। कारिकामवतारयति **अविवक्षितेत्यादि**। अविवक्षितवाच्यः यः ( ध्वनिः ) वा तत्र ध्वनौ वाच्यम् अर्थान्तरे सङ्क्रमितम् अत्यन्तम् तिरस्कृतम् भवेत् इत्यन्वयः। **अविवक्षितवाच्यः** न विवक्षितमुपयुक्तमन्वययोग्यं वक्तुस्तात्पर्यविषयत्वेन अभिप्रेतं वाच्यं वाच्यार्थो यत्र स तादृशः वाच्यस्याविवक्षितत्वञ्चानुपयुज्यमानत्वादनुपपद्यमानत्वाद्वा वक्तुरनभिप्रेतत्वमेव न तु पदार्थबोधाशक्यत्वम्। वक्ता हि किमपि प्रयोजनमुद्दिश्यैव सत्यपि वाचकशब्दे ततः प्रयोजनासिद्धेरेव शब्दान्तरमविवक्षितवाच्यत्वेन प्रयुङ्क्ते। तत्र हि प्रयोजनसाधकत्वेन वाच्यार्थः स्वसिद्धये परं किन्तु स्वसम्बद्धमेवार्थमाक्षिपति वा परार्थे स्वमेव समर्पयति। आद्यस्थितौ परोपादानेनोपादानलक्षणाऽन्त्यायां स्वसमर्पणलक्षणेन लक्षणलक्षणा भवतीति प्रागुक्तमेव लक्षणानिरूपणावसरे। तादृशो यः ध्वनिः वाच्यस्याविवक्षितत्वेन सम्पन्नो ध्वनिः। **तत्र** तथाविधे। **ध्वनौ** उत्तमकाव्ये। **वाच्यं** मुख्योऽर्थः। **अर्थान्तरे** अन्यः स्वेतरः किन्तु स्वसम्बद्धः सम्बन्धश्च स्वसामीप्यसादृश्य-समवाय-वैपरीत्य-क्रियायोगादिभिर्भवति योऽर्थस्तस्मिन् वाच्यलक्ष्यसाधारणेऽर्थे। **सङ्क्रमितं** परिणमितं स्वार्थस्याप्यपरित्यागेनार्थान्तरग्राहकम्। **वा** इति पक्षान्तरे। **अत्यन्तं** नितान्तमेव। **तिरस्कृतमुपेक्षितं** स्वार्थस्याऽपि त्यागादिति। **भवेत्** सम्पद्यते इति। **अयमाशयः**—वाच्यस्याविवक्षितत्वेन यो ध्वनिर्भवति तत्र वाच्यार्थः स्वार्थापरित्यागपूर्वकमर्थान्तरग्राहको वा त्यक्तस्वार्थत्वेनार्थान्तरग्राहकश्च भवतीति। यथा कुन्ताः प्रविशन्ति' इत्यत्र कुन्तशब्दवाच्यार्थस्तद्धारिणि पुरुषेऽर्थे सङ्क्रमितो भवति स्वेन सहैव। 'गङ्गायां घोषः' इत्यत्र तु गङ्गाशब्दः स्वं प्रवाहरूपमर्थं तिरस्कृत्य तटार्थं बोधयति। तिरस्कारश्च सर्वथाऽनन्वयित्वादन्यथाप्रतियोगिरूपः। कारिकामाक्षेपनिरसनपूर्वकं व्याख्याति **लक्षणेत्यादिना**। **लक्षणामूलगूढव्यङ्ग्यप्राधान्ये** लक्षणा प्रयोजनहेतुका उपादानलक्षणस्वरूपा शुद्धगौणभेदवती या लक्षणा मूलं योनिर्यस्य तत् तादृशं निरूढलक्षणाया व्यङ्ग्यानुजीव्यत्वात् प्रयोजनवत्या एव ग्रहणमत्र यत्त्वभिधामूलेऽतिव्याप्तिनिरासाय लक्षणाग्रहणमित्युच्यते तन्न, तत्र वाच्यस्याविवक्षितत्वाभावादतिव्याप्त्यप्रसङ्गात् यद्गूढं सहृदयमात्रसंवेद्यत्वेन प्रच्छन्नम् अगूढस्याऽपि ग्रहणे गुणीभूतव्यङ्ग्येऽतिव्याप्तिः स्यादिति गूढमात्रग्रहणम् यद् व्यङ्ग्यं प्रतीयमानोऽर्थः प्रयोजनस्वरूपस्तस्य प्राधान्ये चमत्कारपर्यवसायित्वेन स्थितौ अनेन तस्य अपराङ्गत्ववाच्यसिद्ध्यङ्गत्वयोर्व्युदासः। **सति** स्थितौ। **एव** इत्यवधारणे

व्यङ्ग्यार्थे एव चारुत्वपर्यवसायित्वं अविवक्षितवाच्यध्वनित्वे प्रथमः कल्पः । व्यङ्ग्यस्य गूढत्वं तस्य च प्रयोजनहेतुकलक्षणामूलत्वञ्च द्वितीयतृतीयकल्पाविति । **अविवक्षितम्** अनुपयुज्यमानत्वादनुपपद्यमानत्वाद्वा वक्तुरनभिप्रेतम् । **वाच्यं** वाच्यार्थः । **यत्र** यस्मिन् वाक्ये सः ध्वनिरिति ज्ञेयः । कथं ज्ञेय इत्याकाङ्क्षायामाह **ध्वनौ इति । अनुवादात्** य इति यच्छब्दसाकाङ्क्षस्य तत्रेति तच्छब्दस्य विशेषणतया कथनादिति बालबोधिनीकाराः । अनुवादस्य पुरोवादतात्पर्यग्राहकत्वादविवक्षितवाच्येत्यत्र ध्वनौ तात्पर्यमिति सारबोधिनीकाराः । 'ध्वनौ' इत्यनेन ध्वनित्वमनूद्य तत्र अर्थान्तर-सङ्क्रमितवाच्यत्वादि विधीयते । न चात्र ध्वनित्वविधानं श्रूयते न चाभिहित-स्यार्थवाच्यता सम्भवति इत्यतः स ध्वनिरिति ज्ञेय इत्याक्षिप्य योजितमिति मधु-मतीकाराः । अथ क्रमेण विभागमाह **तत्रेति । तत्र** अविवक्षितवाच्ये । **च** अपि । **वाच्यं** शक्यार्थः । **क्वचित्** कुत्रचित्तु । **अनुपयुज्यमानत्वात्** वक्तुरनभिप्रेतत्वेनो-पयोगाभावात् यद्रूपेण यद्वाच्यं तद्रूपेण प्रकृतान्वयेऽनभिप्रेतत्वादिति । **अर्थान्तरे** अन्यप्रकारेण वाच्यलक्ष्यसाधारणेऽर्थे विशेषरूपे । **परिणमितं** तत्त्वादपरिच्युतस्य धर्मिणोऽवस्थान्तरगमनं परिणामस्तथाभूतम् । भवतीति शेषः । अर्थान्तरलक्षकमिति । वाच्योऽपि प्रकारान्तरेण लक्ष्य इति । यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र वाच्योऽपि काको दध्युपघातकरूपेण लक्ष्यः । स चोपादानलक्षणास्थले एव भवतीति बालबोधिनीकाराः । तदुदाहर्तुमुपक्रमते **यथेति । उदाहरणं** प्रस्तौति **त्वामित्या**दि । त्वाम् अस्मि वच्मि ( यत् ) अत्र विदुषाम् समवायः तिष्ठति तत् अत्र आत्मीयाम् मतिम् आस्थाय स्थितिम् विधेहि इत्यन्वयः । हितोपदेशाय प्रार्थयन्तं कञ्चित्प्रति कस्यचिदाप्तस्योक्तिरियम् । अस्मीत्यहमर्थेऽव्ययं विभक्तिप्रतिरूपकम् । **त्वां** भवन्तम् । **वच्मि** कथयामि । अहं त्वां कथयामि इत्यन्वयः । **यत्** यतः । **अत्र** इह । **विदुषां** विचक्षणानाम् । **समवायः** समुदायः । **तिष्ठति** वर्तते । **तत्** तस्मात् । **त्वम्** । **आत्मीयां** स्वकाम् । **मतिं** बुद्धिम् । **आस्थाय** अवलम्ब्य यथामतीति । **स्थितिम्** स्वावस्थितिम् । **विधेहि** कुरु इति । लक्ष्ये लक्षणं घटयति **अत्रेति । अत्र** काव्येऽस्मिन् । **वचनादि** वच्मीत्यादि । **उपदेशादि-रूपतया** इतिकर्तव्यताज्ञापनादिरूपेण **परिणमति** परिणतो भवति इति । अयमाशयः—अत्र हि सम्बोध्यमुद्दिश्य वक्तव्यकथनेनैव सिद्धे 'त्वामस्मि वच्मि' इत्यस्य वाच्यार्थस्य न कोऽप्युपयोगात् त्वामित्यस्य युष्मदर्थस्य उपदेश्यार्थे अस्मीत्यस्य अस्मदर्थस्य आप्तार्थे वच्मीत्येतस्य कथयामीत्यर्थस्योपदिशामीत्यर्थे परिणतिर्लक्ष्यम् । सम्बन्धश्च धर्मिधर्मभावः । तेन हितसाधनत्वं व्यङ्ग्यम् । नात्यन्ततिरस्कृतत्वं वाच्यस्य उपदेशस्याऽपि वचनरूपत्वात् । 'वचनादि' इत्यत्र

आदिपदात् 'अस्मि' इत्यादेः उपदेशादेरित्यत्र आदिपदादत्याप्तत्वादेश्यग्रहणमिति सङ्केते स्पष्टम्। आदिपदात् मतिमात्रस्यानुपयोगितया प्रामाणिकमतित्वं लक्ष्यं यत्र सामान्यविशेषभावः सम्बन्धः सकलवादिविजयो व्यङ्ग्य इति मधुमत्याम्। तथैव विद्वत्प्रत्यक्षेऽपि 'विदुषाम्' इति आत्ममते सार्वकालिकत्वेऽपि 'आत्मीयाम्' इति च अनुपयुज्यमानत्वात् यथाक्रमं विदुषामिति सर्वशास्त्रविशारदरूपेण आत्मीयामिति प्रमाणपरतन्त्रतया च परिणतम्। सामान्यविशेषभावः सम्बन्धः। अन्यथाचरणे उपहसनीयत्वं व्यङ्ग्यमिति विवरणकाराः। तथा सति 'कुन्ताः प्रविशन्ति' इत्यत्रोपादानलक्षणामूलव्यङ्ग्यं कुत्रान्तर्भवति। स्वार्थापरित्यागेन नात्यन्ततिरस्कृतवाच्ये परिणामरूपसङ्क्रमाभावान्नाप्यर्थान्तरसङ्क्रमितवाच्ये। न च वच्मि इत्यत्र वचनरूपधर्मिण उपदेशत्वलक्षणरूपान्तरापत्तिवत् कुन्तस्य धर्मिणो रूपान्तरापत्तिरपि कुन्तत्वेनैव तत्प्रतीतेः। पुरुषस्य कुन्तवत्त्वेनोपस्थितावपि परिणामित्वाभावात् परिणामिनश्च कुन्तस्य लक्ष्यपुरुषधर्मत्वात्। अत्रोच्यते सतो रूपान्तरापत्तेरेव परिणामत्वात् सत्त्वस्य धर्मिसाधारणत्वेन धर्मिपरिणामो धर्म इव धर्मपरिणामोऽपि धर्म्येव। वच्मीत्यादौ धर्मिपरिणामो धर्मः 'कुन्ताः' इत्यत्र धर्मपरिणामो धर्मीति तत्रापि अर्थान्तरसङ्क्रमितत्वमेवेति मधुमतीकाराः। सारांशतः सम्बोध्यमुद्दिश्य कथनेनैव सिद्धेस्त्वच्छब्दस्योपयोगिताभावेन सामान्यविशेषभावसम्बन्धेन लक्ष्यः शिष्योऽनुकम्प्यत्वं व्यङ्ग्यम्। वच्मीत्यनेनैव सिद्धेरस्मदर्थस्य अस्मि-पदस्योपयोगिताभावात्तेनैव सम्बन्धादाप्तत्वं लक्ष्योऽनुग्राहकत्वं व्यङ्ग्यम्। 'विदुषामि'त्यादिशेषांशेनैव सिद्धेः वच्मीत्यस्यानुपयोगित्वात्तेनैव सम्बन्धेनोपदेशो लक्ष्योऽनुल्लङ्घनीयत्वं व्यङ्ग्यम्। प्रत्यक्षसिद्धेरपि 'विदुषाम्' इत्यस्यानुपयोगित्वात्तेनैव सर्वतन्त्रस्वतन्त्रता लक्ष्योऽविप्रलम्भकत्वं व्यङ्ग्यमिति गोकुलनाथाः। काव्यप्रदीपकारास्त्वत्र—

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥

इत्युदाहृत्य द्वितीयकमलशब्दः सौरभादिगुणयुक्तत्वरूपे लक्ष्ये सङ्क्रमितवाच्यः इति निर्दिशन्ति। अतथाभूतेषु कमलत्वजात्यभावो व्यङ्ग्य इति वैद्यनाथमहोदयाः। रविकिरणाननुग्रहेण न केवलं सौरभादिगुणहानिरपितु कमलत्वसाम्यान्तर्गतिरपि नेति लक्षणामूलध्वनिरिति च प्रभाया स्पष्टम्। 'कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे' इत्यत्र रामशब्द इति ध्वन्यालोके।

द्वितीयं विभागमाह क्वचिदित्यादिना। क्वचित् कुत्रचित्तु। अनुपपद्यमानतया वाक्ये वाच्यस्य तात्पर्याग्राहकत्वेन वाच्यतावच्छेदकेन रूपान्तरेणाऽपि अन्वयाप्रतियोगित्वेन मुख्यार्थस्य नितान्तबाधेन। वाच्यम्। अत्यन्तं नितान्तमेव।

तिरस्कृतम् उपेक्षितम् इति। वाच्यमितरार्थमात्रलक्षकमित्याशयः। एतद्धि लक्षणलक्षणाविषयः। उदाहरति यथेति। प्रस्तौति उपकृतमित्यादि। सखे! भवता बहु उपकृतम् तत्र किम् उच्यते सुजनता परम् प्रथिता सदा ईदृशम् एव विदधत् ततः शरदाम् शतम् सुखितम् आस्स्व इत्यन्वयः। सखे! हे मित्र! भवता त्वया। बहु भूरि। उपकृतं हितं साधितम्। तत्र भवत्कृतोपकारविषये। किम् किमेव। उच्यते कथ्यते तस्य वक्तुमशक्यत्वात्। सुजनता सौजन्यम्। परम् अत्यन्तमेव। प्रथिता ख्यापिता। सदा सन्ततमेव। ईदृशम् एतादृशमुपकारकर्म। एव इत्यवधारणे। विदधत् कुर्वन्। ततः तज्जन्यपुण्येन। शरदां वर्षाणाम्। शतम् शतसङ्ख्याकं व्याप्य। सुखितम् सुखयुक्तं यथा स्यात्तथा। आस्स्व तिष्ठ इति। लक्ष्ये लक्षणं घटयति एतदित्यादि। एतत् वाक्यमिदम्। अपकारिणं कृतापकारं कमपि जनम्। प्रति उद्दिश्य। विपरीतलक्षणया मुख्यार्थस्य वाक्येऽन्वयाभावेन तद्बाधे वैपरीत्यसम्बन्धेन या लक्षणा भवति तया। कश्चित् कश्चन साधितापकारः पुरुषः। वक्ति प्रकटयतीति। अयमाशयः—वाक्ये शक्यार्थस्याऽन्वयाभावेन तद्बाधे तेन सामीप्यसादृश्यसमवायवैपरीत्यक्रियायोगादिष्वन्यतरसत्त्वेऽर्थे लक्षणयाऽन्योऽर्थो बोध्यते प्रयोजनहेतुकया। तत्र प्रस्तुतकाव्ये बहुभिरपकारैस्तप्यमानस्य वाक्यमिति प्रकरणादिना ज्ञातापकारिभावं प्रति बाधितः सन् मुख्योऽर्थ उपकारविषयको विपरीतं लक्षयति। यथा हि उपकृतमित्यनेनापकृतं सुजनतेत्यनेन दुर्जनता सखे इति शत्रो! सुखितमिति दुःखितमित्यादि। व्यङ्ग्यश्चापकारातिशयः त्वयैवमपकारेऽपि क्रियमाणेऽहं तु प्रियमेव वदामि इति स्वसाधुत्वं वा व्यङ्ग्यम् उपकारापकारविवेकहीनस्त्वमिति वा। शुद्धसाध्यवसानाऽस्य मूलम्।

एवं हि क्वचिद्धर्मिणि लक्ष्ये धर्मस्य व्यङ्ग्यता यथा 'कुन्ताः प्रविशन्ति' इत्यत्र। क्वचित्तु धर्मे लक्ष्ये धर्मिणो व्यङ्ग्यता क्वचिच्च विशिष्टे लक्ष्ये विशेषान्तरस्य व्यङ्ग्यता, क्वचित्तु धर्मे लक्ष्ये धर्मान्तरस्य व्यङ्ग्यतेति बहवो ह्यविवक्षितवाच्यभेदाः। यथा हि 'उदयाचलचुम्बि बिम्बम्' इत्यत्र चुम्बनस्य चेतनधर्मस्य बिम्बस्याचेतनस्यासम्भवत्त्वेन मुख्यार्थबाधे गाढाश्लेषे धर्मे लक्ष्ये धर्मिणः प्रभातस्य व्यङ्ग्यता। 'चन्द्रश्चन्द्र इव वराकः' इत्यत्र द्वितीयचन्द्रपदं कलङ्कित्वादिविशिष्टलक्षकं येन तद्वदनान्निकृष्टत्वं धर्मान्तरं व्यङ्ग्यम्। 'मुखं विकसितस्मितम्' इत्यत्र अचेतनस्य स्मितस्य विकासाभावेन मुख्यार्थबाधे सातिशयत्वं लक्ष्यं सौरभातिशयो व्यङ्ग्यमिति।

[वि० वृ०] अथ दोषगुणालङ्कारान् परत्र वक्ष्यन् पूर्वं तदाश्रयभूतान् काव्यभेदान् प्रपञ्चयति—अविवक्षितेति।

उत्तमकाव्यरूपो ध्वनिर्द्विभेदः—लक्षणामूलोऽभिधामूलश्चेति। तयोराद्यं विभजति अविवक्षितेति। लक्षणामूलत्वादविवक्षितं बाधितं वाच्यं यत्र तस्मिन्नविवक्षितवाच्याख्ये ध्वनौ वाच्यं द्वेधा। उपादानलक्षणायां सत्यामनुपयोगादर्थान्तरे परिणतम्। लक्षणलक्षणायां त्वत्यन्तानुपपत्तेरत्यन्ततिरस्कृतञ्च। क्रमेणोदाहरणे—

"ब्रुवे त्वामहमत्रास्ति संहतिर्विदुषामतः।
कोर्तयन् हरिमात्मीयां धियं धृत्वा स्थितिं कुरु॥"

अत्र वचनादेर्मुख्यार्थस्यानुपयोगादुपदेशादिरूपेऽर्थान्तरे परिणतिः। आदरग्राह्यत्वादि फलम्।

'स्मेरां भङ्गीत्रयपरिचितां साचिविस्तीर्ण दृष्टिं
वशीन्यस्ताधरकिसलयामुज्ज्वलां चन्द्रकेण।
गोविन्दाख्यां हरितनुमितः केशितीर्थोपकण्ठे
मा प्रेक्षिष्ठास्तव यदि सखे बन्धुसङ्गेऽस्ति रङ्गः॥'

अत्र बन्धुसङ्गे रङ्गश्चेन्मा प्रेक्षिष्ठा इति वाच्योऽर्थः। तं विहाय तामेव प्रेक्षस्वेति वैपरीत्यभाक्। प्रेक्षणात्यावश्यकत्वं फलम्।

**[कारिका] विवक्षितञ्चान्यपरं वाच्यं यत्रापरस्तु सः।**

**[वृत्तिः] अन्यपरं व्यङ्गचनिष्ठम्। एष च—**

**[कारिका] कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः॥ २५॥**

**[वृत्तिः] अलक्ष्येति। न खलु विभावानुभावव्यभिचारिण एव रसः, अपि तु रसस्तैरित्यस्ति क्रमः! स तु लाघवान्न लक्ष्यते।**

[कमला०] अभिधामूलध्वनिमाह विवक्षितमिति। विवक्षितमबाधितमन्यपरं व्यङ्ग्योपसर्जनम्। केचिदन्यतात्पर्यमित्याहुः। तन्न, शब्दशक्तिमूलध्वनावव्याप्तेः। तत्रान्यतात्पर्याभावात्। अन्यथा शक्त्यैव द्वयोपस्थितौ व्यञ्जनोच्छेदापत्तेः। अपरो ध्वनिरिति शेषः। कोऽपीति। क्वचिद् वाच्यव्यङ्ग्ययोः क्रमः प्रतीयते क्वचिन्नेत्यर्थः। कोऽप्येक इत्यर्थः। अलक्ष्यक्रमव्यङ्ग्य इति अलक्ष्यव्यङ्ग्यक्रम इत्यर्थः। बहुव्रीहिगर्भो बहुव्रीहिः। आहिताग्न्यादित्वात्क्रमशब्दस्य पूर्वं निपातो वा। यद्यपि लक्ष्यक्रमाभावरूपत्वेनालक्ष्यक्रमस्य प्रतियोगिग्रहाधीनत्वात्पश्चान्निर्देशार्हस्तथापि अत्र

न तदभाववत्त्वम् । अविवक्षितवाच्येऽतिव्याप्तेः । किन्त्वन्योन्यविरहव्याप्यत्वं नीलपीतादिवच्छैत्योष्णवच्चेति मधुमतीकारः । अविवक्षितवाच्ये तु वाच्यस्यैव बाधेन क्रमाभावान्नेदं भेदद्वयमित्यर्थः । ननु शब्दाद्विभावादय एव प्रतीयन्ते न स रसः । अतः कुत्र क्रमवर्त्तीत्यत आह न खल्विति । विभावादय एव न रसस्तेषां गुणीभूतव्यङ्ग्येऽपि सत्त्वात् । किन्तु तैर्विभावादिभिः रसोऽभिव्यज्यते 'प्रतीयत इति विशेषः । अतस्तैरिति हेतुत्वात्पौर्वापर्यक्रम इत्यर्थः । ननु क्रमोऽस्ति चेत्कथं न लक्ष्योऽत आह सत्विति । न लक्ष्यते न ज्ञायते सहप्रतीतेरित्याशयः ।

[सरि०] ध्वनेर्द्वितीयं प्रकारं व्याचिख्यासुस्तन्निरूपककारिकामवतारयति विवक्षितमित्यादिना । यत्र वाच्यम् विवक्षितम् अन्यपरम् च स तु अपरः इत्यन्वयः ।

यत्र यस्मिन् काव्ये । वाच्यम् शक्यार्थः । विवक्षितं वाच्यतावच्छेदकरूपेणान्वयबोधकम् । अन्यपरम् अन्ये वाच्यभिन्नेऽर्थे व्यङ्ग्ये इति परं तत्परम् । चेति समुच्चये उभयोः यत्र हि वाच्यतावच्छेदकप्रकारेण वक्तुरभिप्रेतमेव किन्तु तद्व्यङ्ग्यतत्परमित्याशयः । सः तादृशः ध्वनिरिति शेषः । तु इति व्यवच्छेदे अविवक्षितवाच्यव्यतिरिक्तमेव । अपरः अन्य एव । स चाभिधामूलगूढव्यङ्ग्यविषय इति । यत्र तु वाच्यार्थो वाच्यतावच्छेदकरूपेणैवान्वयोपयोगी किन्तु व्यङ्ग्यार्थतत्परः स ध्वनेरन्य एव भेदः अर्थात् यत्र हि वाच्यस्य व्यङ्ग्यपरत्वेन विवक्षया ध्वनिर्भवति स ध्वनेरपरो भेदो विवक्षितान्यपरवाच्य इति । अर्थान्तरसङ्क्रमितवाच्यव्यवच्छेदाय विवक्षितमिति । वाच्यस्य वाच्यतावच्छेदकरूपेणैवाभिप्रेतत्वे कथं ध्वनिरित्यपेक्षायामन्यपरमिति । वाच्यं विवक्षितमेव किन्तु तद्व्यङ्ग्याक्षेपकत्वेन तत्र विश्रान्तमिति । यथाऽऽह ध्वनिकारः— 'तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ । ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः' ॥ इति । अनेन व्यङ्ग्यापेक्षया वाच्यस्योपसर्जनीभाव उक्तः । यथोक्तं ध्वनिकृता—'व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा । न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते' । इति । अनेन अर्थचित्रगुणीभूतव्यङ्ग्यादावपि नातिव्याप्तिः । कारिकांशं व्याख्याति अन्यपरमिति । अन्यपरमिति व्यङ्ग्यनिष्ठम् व्यङ्ग्ये प्रतीयमानार्थे निष्ठा तात्पर्यं यस्य तदिति । तद्भेदाख्यानायोपक्रमते एष इति । एषः विवक्षितान्यपरवाच्यत्वेन यो ध्वनिः सः । च अपि यथा हि अविवक्षितवाच्यस्य द्वौ भेदौ तथैवास्यापीति । सम्बद्धकारिकामवतारयति क इति । कः अपि अलक्ष्यक्रमव्यङ्ग्यः परः लक्ष्यव्यङ्ग्यक्रम लक्ष्यअन्वयः । कः एकः । अपि इति अवधारणे । अलक्ष्यक्रमव्यङ्ग्यः न ...लनीयः क्रमो वाच्यार्थेन द्योतनपौर्वापर्यं यस्य तादृशं व्यङ्ग्यं यत्र

तादृशो ध्वनिः। बहुव्रीहिगर्भबहुव्रीहिः। परः द्वितीयस्तु। लक्ष्यव्यङ्ग्यक्रमः लक्ष्यो निभालनीयः स्पष्टमेव व्यङ्ग्यस्य प्रतीयमानार्थस्य क्रमः पौर्वापर्यं यत्रेति तादृशः। ध्वनिरिति शेषः। विवक्षितान्यपरवाच्यस्य अलक्ष्यक्रमव्यङ्ग्यो लक्ष्यक्रमव्यङ्ग्यश्चेति द्वौ भेदाविति। रसस्य प्राधान्यद्योतनाय भावाभावपौर्वापर्यनियममुल्लङ्घ्य प्रथममलक्ष्यक्रमऽयङ्ग्यध्वनेरुल्लेख इति सुधासागरकाराः। तस्यैकत्वात्पूर्वमुद्देशः सूचीकटाहन्यायेनेति प्रदीपकाराः। अलक्ष्यक्रमव्यङ्ग्यध्वनिस्तु असङ्ख्यभेदवत्वादेक एव। लक्ष्यव्यङ्ग्यक्रमस्य तु प्रथमतः शब्दशक्तिमूलस्य वस्त्वलङ्कारभेदेन द्वौ भेदौ अर्थशक्त्युद्भवस्य द्वादशभेदाः उभयशक्तिमूलक एक इति पञ्चदश भेदाः। कारिकांशं व्याख्याति अलक्ष्येति। अलक्ष्यक्रमव्यङ्ग्य इति। शब्दाद्विभावादयः प्रतीयन्ते इति सत्यम्। किन्तु न नैव। खलु इति वाक्यालङ्कारे। विभावानुभावव्यभिचारिणः विभावो भावोद्बोधकारण नायकादि अनुभावः उद्बुद्धभावव्यञ्जकचेष्टा व्यभिचारिणः सहकारिभावाश्च ते। एव। रसः। तर्हि किमित्याह अपीति। अपितु तद्भिन्न एव। तैः विभावादिभिः। रसः शृङ्गारादिः। आक्षिप्यते। इति हेतोः। क्रमः द्योतनपौर्वापर्यम्। अस्ति विद्यते। एव। न च शब्दाद्विभावादयः प्रतीयन्त इति तत्र क्रम एव नास्तीति वक्तव्यम्। रसस्य विभावादिजन्यत्वात्क्रमस्तत्र भवत्येवेत्याशयः। तर्हि कथमलक्ष्यक्रमत्वं व्यङ्गयस्येत्याह स इति। सः क्रमः तु। लाघवात् सहैव प्रतीतेः। न। लक्ष्यते निभालयितुं शक्यत इति। अत्र शतपत्रशतभेदनं निदर्शनम्। शतपत्रशतभेदने एकमनु एकस्य भेद्यत्वात् क्रमस्तु भवत्येव भेदने किन्तु समकालघटितत्वाद्वा सूक्ष्मकालघटितत्वेन तस्य नावभासनम्। तथैवाऽत्र। शब्दाद्विभावादीनां बोधस्तैश्च हेतुभूतैः रसस्य प्रतीतिरिति क्रमस्तु तत्रापि भवत्येव किन्तु रसोद्बोधस्य घटित्येव चित्तापकर्षकत्वाद् विभावादीनां रसस्य च समकालमेव प्रतीतिर्भवति इति अलक्ष्यक्रमतोक्ता न त्वक्रमता। विभावादीनामेव रसत्वे तु नैव क्रमः स्यात्। तथा सति श्रोत्रियादीनामपि काव्यादिजन्यविभावादिप्रतीतिसत्त्वेन रसिकापत्तिः स्यात्। किन्तु न तथा। वस्त्वलङ्कारयोस्तु वाच्यार्थबोधानन्तरमेव तदाक्षिप्ततया प्रतीतिरिति स्पष्टमेव क्रमोऽतस्तद्ध्वनेर्लक्ष्यक्रमव्यङ्गयत्वं स्पष्टमेव। यथा हि अल्पज्ञस्य पदार्थवाक्यार्थबोधे क्रमस्तथैवासहृदयस्य स्फुटसंवेद्यः क्रमः। सहृदयस्य तु वाच्यार्थज्ञानसमकालमेव रसावभासनान्न क्रम इति।

[वि० वृ०] द्वितीयं विभजति—

अभिधामूलत्वाद्वाच्यं यत्र विवक्षितमबाधितमन्यपरं व्यङ्गयोपसर्जनीभूतञ्च स विवक्षितान्यपरवाच्यो नाम ध्वनिः। इह वाच्योऽर्थः स्वं रूपं प्रत्याययन्नेव व्यङ्गयस्य प्रकाशकः दीप इव घटस्य।

स च द्विभेद इत्याह—

अलक्ष्येति। न खलु विभावादयो रसः। किन्तु रसस्तैरभिव्यज्यत इति अस्ति यद्यपि क्रमस्तथापि स न लक्ष्यते लाघवात्। युगपत्पद्मपत्रशतवेधवत्।

[वृत्तिः] अत्र—

[कारिका] रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥२६॥

[वृत्तिः] आदिग्रहणाद्भावोदयभावसन्धिभावशबलत्वानि। प्रधान-तया यत्र स्थितो रसादिस्तत्रालङ्कार्यः। यथोदाहरिष्यते। अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत् प्रेय-ऊर्जस्वि-समाहितादयोऽलङ्काराः। ते च गुणीभूतव्यङ्ग्याभिधाने उदा-हरिष्यन्ते ॥३॥

[कमला०] अलक्ष्यक्रमभेदानाह रसेति। रसाः शृङ्गारादयो भावा रत्यादयः तदाभासा रसाभासा भावाभासाश्च भावस्य व्यभिचारिणः शान्तिश्चादौ यस्य स अक्रमः अलक्ष्यक्रम इत्यर्थः। अत्र पुनर्भावग्रहणं रसशान्तिनिषेधार्थम्। तथाहि रसस्य नित्यत्वात्तत्रोदयपदं व्यर्थमभिव्यक्तस्यैव रसत्वात्। नापि रससन्धिः रसानां विगलितवेद्यान्तरत्वात्। व्यभिचारिभावानां तु सत्त्वासत्त्वाभ्यां युज्यते शान्त्या-दीत्यर्थः। ननु रसादेरलङ्कारत्वे उपसर्जनत्वान्मध्यमकाव्ये निरूपणं युक्तं नात्र। अत आह भिन्न इति। रसादिरूपादलङ्कारादलङ्कार्यतया भिन्नः स्थित इत्यन्वयः। यत्र रसादिः प्रधानं तत्रालङ्कार्यो यत्र गुणीभूतो वाच्यो वा तत्रालङ्कार इत्युच्यते। तेनोभयत्राभिधानं युक्तमिति भावः। तदुक्तं—प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः।' इति। आदिशब्दार्थमाह भावोदय इति। अलङ्कार्यतयेति व्याचष्टे प्रधानतयेति। यथेति 'अयं स रशने'त्यादा-वित्यर्थः। अन्यत्र मध्यमकाव्ये मूले रसादिपदार्थमाह प्रेय इति। रसस्य गुणत्वे रसवदलङ्कारः। भावस्याङ्गत्वे प्रेयोऽलङ्कारः। रसाभासस्याङ्गत्वे ऊर्जस्वद-लङ्कारः। भावशान्तेरङ्गत्वे समाहितः। अत्रादिपदाद् भावोदयादेरङ्गत्वेऽ-लङ्कारान्तराणि ज्ञेयानि। गुणीभूतेति पञ्चमोल्लासे इत्यर्थः।

[सरि०] तत्र तत्रालक्ष्यक्रमव्यङ्ग्यध्वनेर्भेदान् विवरीतुं तन्निरूपककारिका-वतारणाय वृत्तिकृदुपक्रमेत तत्रेति। तत्र अलक्ष्यलक्ष्यक्रमव्यङ्ग्ययोर्मध्ये। कारिकामवतारयति रसेत्यादि। अक्रमः रसभावतदाभासभावशान्त्यादिः रसाद्य-लङ्कारात् भिन्नः अलङ्कार्यतया स्थितः इत्यन्वयः। अक्रमः अलक्ष्यक्रमः न विद्यते

क्रमः वाच्यव्यङ्ग्ययोः पौर्वापर्यं यत्र सः अलक्ष्यक्रमव्यङ्ग्यध्वनिः। रसेति। रसा शृङ्गारादयः भावाः रत्यादयः तदाभासाः तयोः रसभावयोराभासाः रसाभासाः भावाभासाश्च भावशान्तिः भावस्य निर्वेदादेः सञ्चारिणः शान्तिः प्रशमनमुद्बुद्धस्य तिरोभावः आदिः भावस्य उदय-सन्धि-शबलताश्चेति तथाविधः **रसाद्यलङ्कारात्** रस आदिर्यस्य आदिपदात् प्रेयः ऊर्जस्वि-समाहिताश्च तादृशो योऽलङ्कारस्तस्मात्। **भिन्नः** पार्थक्येन स्थितः। **अलङ्कार्यतया** अलङ्क्रियतेऽसाविति अलङ्कार्यस्तस्य भावस्तया प्राधान्येन। **स्थितः** अस्तीति शेषः। अलक्ष्यक्रमव्यङ्ग्यध्वनिर्हि रस-भाव-रसाभास-भावाभास-भावशान्ति-भावोदय-भावसन्धि-भावशबलतादिभेदात्मा रसवदादयो येऽलङ्कारास्तेभ्योऽपि विलक्षणः काव्यात्मत्वेन अलङ्कार्यरूपेण स्थितः इति। कारिकां विवृण्वन् तदाशयं व्यनक्ति वृत्तिकृदादीत्यादि। **आदिग्रहणात्** कारिकायां यदादिपदं तस्मात्। **भावोदयेति** भावस्य उदयः उद्बोधनं भावस्य निर्वेदादेः सञ्चारिणः सन्धिः समकालमेव तुल्यकक्षयोर्भावयोरास्वादः भावस्य सञ्चारिणः शबलत्वं पूर्वपूर्वोपमर्देन परस्योदयस्तानि। **यत्र** यस्मिन् काव्ये। **रसादिः** रसभावादयः। **प्रधानतया** चारुत्वपर्यवसायित्वेन। **स्थितः** प्रतिष्ठितः। तत्र तादृशे काव्ये। सः रसादिः। **अलङ्कार्यः** अलङ्कारैरलङ्करणीयः काव्यात्मत्वात्। **यथा** इति उदाहरिष्यते लक्ष्ये निर्दिश्यते। **अन्यत्र** तद्भिन्नस्थले। **वाक्यार्थे** वाच्यतावच्छेदकार्थे। **प्रधाने** चारुत्वपर्यवसायित्वेन स्थिते। **यत्र**। **रसादिः** रसभावादिः। **अङ्गभूतः** उपसर्जनत्वेन स्थितो वाच्योपस्कारकत्वात्। तत्र तादृशे। **गुणीभूतव्यङ्ग्ये** तत्स्वरूपे मध्यमे काव्ये। **रसवदिति** रसवत् प्रेयः ऊर्जस्वी-समाहित इत्यादयः। **अलङ्काराः**। भवन्ति। ते रसवदादयः। च पुनः **गुणीभूतेति** गुणीभूतव्यङ्ग्यविवरणप्रसङ्गे। **उदाहरिष्यन्ते** निदर्शनमुखेन स्फुटीकरिष्यन्ते इति। अयमाशयः—कारिकायां भिन्नपदं गुणीभूतव्यङ्ग्यशङ्कानिरासाय। रसः शृङ्गारादिः भावो रत्यादिः सञ्चारी च निर्वेदादिः रसाभासः अनौचित्यप्रवर्तितो रसः यथा 'स्तुमः कं वामाक्षि' (४८) इत्यादौ बहुव्यापारोपादानं भावाभासो भावोऽनौचित्यप्रवर्तितो यथा 'राकासुधाकरमुखी' (४९) इत्यादौ अनौचित्यप्रवर्तिता चिन्ता। भावशान्तिरित्यत्र पुनर्भावग्रहणं रसव्युदासार्थं सञ्चारिभावनिर्देशार्थश्च स्थायिनोऽपि शमनाद्यभावात्। यथा हि रसस्य विभावादिजीवितावधित्वेन तदपगमे एव शमनम्। नैव रसो विभावाद्यनुपकृतो व्यञ्जनया प्रतिपाद्यते नाव्यक्तश्च स चमत्कारी इति रसशान्तिर्नैव। नैव च स्थायिन एव तथा तस्या अचर्वणीयत्वात्। स्थायिनां विभावादिसंवलने एव रस। तत्संवलने रसतापर्यवसानेन विगलितवेद्यान्तरत्वमतो न स्थायिनोऽपि शमनम्। रसोदयो रसाभि-

व्यक्तिपर्यवसना एव तस्य नित्यत्वात् अनुदितस्याचर्वणीयत्वात्। न हि रसयोः सन्धिः शबलता वा रसस्य विगलितवेद्यान्तरत्वात्। तेनैव रसस्य शृङ्गारादेराभासः भावस्य रत्यादेः स्थायिनो निर्वेदादेः सञ्चारिणो वाऽऽभासः निर्वेदादेः सञ्चारिण एव उदयशान्तिसन्धिशबलत्वानि। यत्र उदय उद्गमः शान्तिः शमनं सन्धिस्तुल्य-महत्त्वयोर्भावयोरेककालमेवास्वादः शबलत्वञ्च पूर्वपूर्वोपमर्देन परस्योदयः यत्र हि ते रसभावरसाभासभावाभाससञ्चारिभावोदयशान्तिसन्धिशबलतादयः प्राधान्येन चमत्कारपर्यवसायितया काव्यात्मत्वेन स्थितास्त एवालङ्कार्या आत्मस्थानीयत्वात् यत्र तु चारुत्वं वाच्यार्थे एव पर्यवस्यति तेन व्यङ्ग्यापेक्षया वाच्यस्यैव चारुत्वं सदा व्यङ्ग्यस्य गुणीभावेन स्थितेः रसादेरङ्गस्थानीयत्वाद् रसस्याङ्गत्वे रसवद-लङ्कारः भावस्य रत्यादेरङ्गत्वे प्रेयोऽलङ्कारः रसभावाभासयोरङ्गत्वे ऊर्जस्व्यलङ्कारः भावशान्तेरङ्गत्वे समाहितश्च। एवं भावोदयादेरङ्गत्वेऽलङ्कारान्तराणि भवन्तीति। अयमभिसन्धिः – कोऽलङ्कार्यः कश्चालङ्कार इति विवेकः। किं तनुरलङ्कार्यो वात्मा ? नाद्या। तथा सति शवमण्डनमपि शोभनीयं स्यात्। तस्या हि अलङ्कृतोऽहमिति ज्ञानाभावाच्च। तेनात्मैवालङ्कार्यस्तस्यालङ्कृतोऽहमिति ज्ञानात्। रसादिध्वनिरेव काव्यात्मा तेन यत्र हि रसादिश्चारुत्वपर्यवसायित्वेन प्रधानभावेन स्थितस्तत्र स एवालङ्कार्यो यत्र स अपराङ्गत्ववाच्यसिद्ध्यङ्गत्वेन गुणभावमाश्रित्य तिष्ठति तत्र स एवालङ्कारो भवति। यत्र हि वाच्यार्थश्चारुत्वपर्यवसायी तत्र रसादेरङ्गत्वमेवेति कथं तस्य काव्यत्वं रसादेरात्मस्थानीयत्वाभावादिति न वाच्यम्। रसाद्यलङ्कृतोऽपि वाच्यार्थः पुनस्तात्पर्येण रसादिध्वनावेव पर्यवस्यतीति परमार्थतो रसादिध्वनेस्तत्रापि भावात्। रसवदाद्यलङ्काराः गुणीभूतव्यङ्ग्यस्य विषया अपि रसादीनां यत्रा-पराङ्गता तत्र गुणीभूतव्यङ्ग्यत्वमन्यत्र प्रधानतया ध्वनित्वमिति तेषां गुणभाव-प्राधान्ययोर्भेददर्शनोभयत्राभिधानमविरुद्धमिति। यथाऽऽह ध्वनिकृदपि—

> 'वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
> रसादिपरता यत्र स ध्वनेर्विषयो मतः॥
> प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
> काव्ये तस्मिन्नलङ्कारो रसादिरिति ये मतिः॥' इति।

यच्च भामहेन—

> 'रसवद् दर्शितस्पष्टशृङ्गारादिरसं यथा।'

इति निर्दिष्टं तस्याऽप्ययमेवाशयो यद्वाच्यस्योपसर्जनीयत्वे.रसस्याऽप्यलङ्कारता।

[वि० वृ०] आदिशब्दादुदयसन्धिशबलत्वानि। स चालङ्कार्यतया स्थितो रसादिरलङ्काररूपास्तस्माद् भिन्नोऽसंलक्ष्यक्रमः। अयमर्थः—अलङ्कार्योऽलङ्कारश्चेति

रसादिर्द्वेधा। यत्र चित्तविश्रान्तिधामत्वादङ्गी तत्रालङ्कार्यः। स च रसनिरूपणे दर्शयिष्यते। यत्र वाक्यार्थो मुख्यो रसादिरङ्गत्वादमुख्यस्तत्र त्वलङ्कारो रसवदादिः। स च गुणीभूतव्यङ्ग्यनिरूपणे दर्शयिष्यत इति।

[वृत्तिः] तत्र रसस्वरूपमाह—

[कारिका] कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥२७॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ॥२८॥

[कमला०] तत्रेति रसभावादिमध्ये रसस्य प्रथमोद्देशात्स्वरूपलक्षणमाहेत्यर्थः। **कारणानीति**। लोके स्थायिनोऽन्याबाध्यस्य रत्यादेः प्रीत्यादेः वृत्तिरूपस्यान्तःकरणपरिणामस्य यानि कारणान्यङ्गनादीनि। अथश्चार्थे। कार्याणि कटाक्षादीनि रत्याद्यभावे तदभावात्। सहचारीणि लज्जाहासादीनि। सामग्रीसम्पातेन रत्या सहचरणादुपचायकानि। सहकारीणि इति पाठे रतेरेकरूपत्वेन स्मितरोदनादिविचित्रकार्ययोगात्सामग्रीवैचित्र्यापादकानीत्यर्थ इति परमानन्दः। तानि नाट्येऽन्याभिनयरूपे काव्ये उक्तलक्षणे। चेद्यदि। ज्ञातानि स्युस्तत्तदा कारणानि विभावाः कार्याण्यनुभावाः सहचारीणि व्यभिचार इति कथ्यन्ते। न तु संज्ञामात्रं भिन्नमुतार्थोऽपि ? आद्ये लोकाविशेषात्काव्यनाट्ययोरिति व्यर्थम्। नान्त्यः अनिर्वचनात्। उच्यते। लोके तत्तत्सम्बन्धित्वेन बुद्धाः सीतादय एव कारणादिरूपाः पदार्थाः। विशेषत्यागेन सम्बन्धिविशेषास्पर्शे स्त्रीत्वादिना बुद्धा रसाभिव्यञ्जकत्वं लभन्ते। तदेव विभावादिशब्दार्थः। कथमन्यथाराध्यत्वज्ञाने सति सीतादेरालम्बनता रत्यादौ स्यात्। तैर्विभावाद्यैरभिव्यक्तः स भावो रत्यादिः स्थायी स्थिरः अन्यथाऽबाध्यश्चेत्तदा रसः स्मृतः उक्त इत्यर्थः। अनभिव्यक्तो भावः स एवाभिव्यक्तो रसः इति पद्मनाभः। स्थायीति बाध्यतामङ्गतां वा प्राप्तोऽपि न रस इत्युक्तम्। ननु चित्तवृत्तेः क्षणिकत्वेन स्थैर्याभावात्कथं स्थायित्वम् ? उच्यते। आप्रबन्धं विरुद्धाविरुद्धभावैरविच्छिन्नश्चित्तसन्तान एव स्थायी। तस्य सन्तानरूपतया सूक्ष्मतया वा स्थिरतायुक्तैव। तदाह भरतः (?)

'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥'

तथा—

सजातीयविजातीयैरतिरस्कृतमूर्तिमान्।
यावद्रसं वर्तमानः स्थायी भाव उदाहृतः ॥

भावलक्षणं तु सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनं वर्णनीयमयीभवनमित्यर्थः। विभावादयस्तेनैवोदाहृताः—

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः।
अनेन यस्मात् तेनायं विभावः परिकीर्तितः॥
अनुभावो विकारस्तु भावसंसूचनात्मकः।

रसमनुभावयन्ति पोषयन्ति प्रत्याययन्ति वा ते च स्तम्भादयोऽष्टौ।

'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥' इति।

अन्ये तु तैरिति सहार्थे तृतीया। वृद्धोऽयमिति शब्दानुविद्धप्रत्यक्षवद् विभावादिभिः सहैव रसधीरित्यर्थः। तदुक्तम्—

'स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः।' इति।

तैरित्येव सिद्धे सम्भूय रसव्यञ्जकत्वार्थं विभावाद्यैरित्युक्तम्। स इत्येव सिद्धे स्थायीत्युक्तिः सञ्चारिणो निरासाय। रतिहासक्रोधादीनां हि करुणशृङ्गारवीरादिषु सञ्चारित्वमस्ति कान्तादर्शनश्रवणादिनोत्पन्ना प्रीतिर्व्यासङ्गेऽप्यनुवर्तते। चिन्तादयस्त्वपगच्छन्ति। तेन ते व्यभिचारिणः। प्रीतिस्तु स्थायी। तेन रत्यादिः स्थायी चेत्तदैव रस न तु सञ्चारी अस्थिरत्वात्। तदुक्तम्—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते।' इति।

न तिरोधीयते स्थायी तैः रसः पुष्यते परमिति च। भावश्चित्तं तद्वृत्तेस्तद्धर्मत्वात्तद्रूपो रस आनन्दः 'रसो वै सः' इति श्रुतेः। परमात्मरूप इत्यर्थः। स्मृत उक्तः श्रुत्येति शेषः। अत्रेदं तत्त्वम्। काव्ये शब्दादिभिः कान्तादिविषयोऽन्तःकरणपरिणामो वृत्तिरूपोऽन्तरे चोत्पद्यते सैव रतिरित्युच्यते। सा च वृत्तीद्धो बोधो बोधेद्धा वृत्तिर्वा। तत्र चाभिव्यक्तचैतन्ये काव्यप्रदर्शनश्रवणविभावादिसहकारिमहिम्ना व्यञ्जनावशेन च चैतन्यस्यानन्दांशे आवरणभङ्गः क्रियते। आवरणञ्चाज्ञानमेव। घटादिज्ञाने त्वानन्दांशे आवरणसत्त्वान्न रसोद्बोधः। न च तत्रानन्दांशेऽप्यावरणभङ्गः कुतो न जायत इति वाच्यम्। विभावादिज्ञानाभावात्। यद्वक्ष्यति विभावादिजीवितावधिरिति। यत्र तु नाट्ये विभावादिज्ञानं तत्रानन्दांशे आवरणभङ्गादस्त्येव रसोद्बोधः। यद्वक्ष्यति चर्व्यमाणतैकप्राण इति चर्वणानन्दांशाभिव्यक्तिरेव आनन्दस्य कथं भानमिति चेत्साक्षिणो वेत्यवेहि। वृत्तेस्तत्रैवाध्यस्तत्त्वात्। सर्वस्य हि शुक्तिरजतादेरधिष्ठानसत्तैव सत्ताऽधिष्ठानस्फूर्तिरेव स्फूर्तिः। आत्मभानं विना प्रत्यक्षादेः प्रामाण्यायोगाच्च। अज्ञानज्ञापकं हि प्रमाणम्। अज्ञान-

स्वात्मन्येव न त्वनात्मनि अस्ति । प्रकाशत इति सामग्र्यां सत्यां नास्ति न प्रकाशत इति व्यवहारो हितकल्पकः । स चात्मन्येव । तदुक्तम् –

'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥' इति ।

ततश्चात्मभानाभावे कथं तेषां प्रामाण्यम् ? कथन्तर्हि रसस्यावेद्यत्वमिति चेत् फलव्याप्यत्वाभावादित्यवेहि । वृत्तिविषयावच्छिन्नं हि चैतन्यं प्रत्यक्षादौ फलमनावृत्तसंवित्तादात्म्यस्यैवापरोक्षत्वात् । न चानुमितिसत्त्वरसादिज्ञाने तदस्ति वृत्तिनिर्गमनाभावात् । परमानन्दस्तु विभावाद्यैर्भावनायां प्रवर्तिते सामाजिके बाह्यविषयव्यावृत्ते मनसि ज्ञानसुखात्मको रत्यादिः स्वयं प्रकाशते । मोक्षविज्ञानिवृत्तौ तत्त्वज्ञानस्येव । बाह्यविषयनिवृत्तौ विभावाद्यपेक्षेत्याह । यत्त्वत्र श्रीवत्सेन दूषणमुक्तं रसव्यङ्ग्यत्वं समुद्रे क्षिपन्तो वन्ध्या एवेति तन्न । आवरणभङ्गे आनन्दाभिव्यक्तौ वा स्वमते व्यञ्जनापेक्षावत्तन्मते बाह्यविषयनिवृत्तौ प्रकाशे वा तदपेक्षणात् । मधुमनस्यादयस्तु कान्ताद्यैः पूर्वं चित्ते जनितो रत्यादिर्वासनारूपः स्थितः । काव्योपात्तैर्विभावादिरूपैस्तैः सम्भूय रसत्वं लभत इत्याहुः । स चाभिव्यक्तिः काव्यादौ शब्देनार्थेन वा साक्षात्काररूपैव जायते यत्साक्षादपरोक्षाद् ब्रह्मेति श्रुतेः । शब्दादपरोक्षश्च दशमस्त्वमसीत्यादौ विवरणे स्पष्टम् ।

[ सरि० ] अलक्ष्यक्रमव्यङ्ग्यध्वनिप्रसङ्गे रसस्वरूपनिरूपककारिकावतारणाय वृत्तिकृदुपक्रमते तत्रेत्यादिना । तत्रेति रसभावादिषु मध्ये । रसस्वरूप रसस्य स्वं वास्तवं रूपम् । आहेति । कारिकामवतारयति कारणानीति लोके स्थायिनः रत्यादेः यानि कारणानि अथ कार्याणि सहकारीणि च तानि नाट्यकाव्ययोः चेत् तत् विभावाः अनुभावाः व्यभिचारिणः कथ्यन्ते तैः विभावाद्यैः व्यक्तः सः स्थायी भावः रसः स्मृतः इत्यन्वयः । लोके व्यवहारे । स्थायिनः आस्वादावध्यविच्छिन्नप्रकारस्य । रत्यादेः रमणीविषयकप्रीत्यादेः आदिपदाद्धासादानामपि ग्रहणम् तथाविधचित्तवृत्तिविशेषस्य । यानि यादृशानि । कारणानि जनकपरिपोषकहेतूनि आलम्बनोद्दीपनव्यपदेश्यानि । यमालम्ब्य रत्यादिरुद्बुद्धो भवति तत्तस्य कारणं भवति जनकत्वेन यथा रतेर्नायिकादिर्नायकादिर्वा । येन हि उद्बुद्धः सः परिपोषं लभते तत्तस्य परिपोषकारणं यथा रतेश्चन्द्रचन्द्रिकोपवनादयः । अथ च । कार्याणि परिपुष्टभावजनितवाक्कायमनःसम्बद्धविविधचेष्टा यथा रतेः कटाक्षभुजोत्क्षेपकाकूक्तिप्रभृतयः । सहकारीणि भावप्रतीतौ सहायभूतानि भावाभिमुख्येन चरन्ति भावकदम्बानि यथा रतेः औत्सुक्यलज्जादयः । तानि कारणादीनि । नाट्यकाव्ययोः दृश्यश्रव्यकाव्ययोः नाट्येऽभिनयस्यापि प्राधान्यमिति तस्य काव्यत्वेऽपि पृथगुपादानम् । दृश्यकाव्येऽभिनयात्मके श्रव्यकाव्ये च । चेत् यदि निबध्यन्ते इति ।

तत् तदा क्रमेण विभावाः। अनुभावाः। व्यभिचारिणः। कथ्यन्ते व्यपदिश्यन्ते। यथा कारणस्य विभावः कार्यस्य अनुभावः सहकारिणस्तु व्यभिचारी इति व्यपदेश इति। तैः तादृशैः रत्यादेः कारणकार्यसहकारिभूतैः। विभावाद्यैः विभावानुभावव्यभिचारिभिः। व्यक्तः प्रत्यायितो न तूक्तः। सः प्रक्रम्यमानः। स्थायी आस्वादावध्यविच्छिन्नप्रवाहः। भावः रत्यादिचित्तवृत्तिविशेषः। रसः रस इति। स्मृतः आम्नात इति। अयमाशयः—लोके येन कारणेन रत्यादि स्थायिभाव उद्बुद्धो भवति उद्बुद्धश्च परिपोषमेति काव्ये तद् विभावपदेनोच्यते। उद्बुद्धभावससूचकानि कार्याणि लोके यानि वागङ्गाभिनयानि तानि काव्येऽनुभावा इति कथ्यन्ते। ये च लोके भावप्रतीतौ सहायभूता तदाभिमुख्येन चरन्तोऽस्थायिप्रकृतिका भावा निर्वेदादयस्ते काव्ये व्यभिचारिपदेन व्यपदिश्यन्ते। तैश्च व्यञ्जनावृत्तिमाश्रित्य सर्वैर्मिलित्वा प्रतिपादितो रत्यादिः स्थायी भाव एव रसव्यपदेश्य इति। रसो हि नान्यः सुव्यक्तं प्रत्यायितो भाव एवेति। नाट्यकाव्ययोरेतावानेव भेदो यत्काव्यं हि विभावादीनां वर्णना नाट्यं तस्य गीतादिरञ्जितः प्रयोगः। चित्तवृत्तिविशेष एव भावः। तस्यानन्त्येऽपि प्राधान्येन केचित्परिगणिता रत्यादयोऽष्टौ नव दश वाऽपि। तेषु यो हि स्वानुकू ां परिस्थितिमाप्नोति स इतरानवमत्य वा स्वानुकूलीकृत्यात्मानं प्रकटीकरोति। इत्थं हि निर्विकारे चेतसि येन यादृशो विकार उत्पाद्यते तत्तस्य कारणं भवति यथा रतेर्ललनादयः। एवमग्रेऽपि। उद्दीपनस्य स्थायिनि कारणत्वाभावेऽपि उत्पन्नस्योत्कर्षाधायकत्वादनुद्दीपितस्य विलयसम्भवाच्चोद्दीपकत्वेऽपि कारकत्वोपचारेणोद्दीपकेऽपि विभावव्यवहारः। संज्ञा च तत्तद्व्यापारयोगादेव। यथा हि विभावनाद्विभावः अनुभावनादनुभावः व्यभिचाराद्व्यभिचारिभावः आस्वादावध्यवच्छिन्नप्रवाहत्वात्स्थायिभावः इति। विभावनञ्च निर्विकारके चित्ते वासनारूपतया स्थितानां रत्यादिभावानामुद्बोधनेन पोषणेन चोद्बुद्धस्य। अनुभावनं भावोद्बोधस्य सूचनमर्थादुद्बुद्धस्य भावस्य अनुभवविषयीकरणं यथा रत्युद्बोधनसूचनकटाक्षभुजोत्क्षेपादिभिः। व्यभिचारोऽत्र विशेषेण स्थायिन आभिमुख्येन चरणं कार्ये स्थायिनश्चारणञ्च। तेन हि विभावनमनुभावनं सञ्चारणञ्चेति व्यापारत्रयत्वमेव विभावादित्वं येषां रत्यादेरीषत्स्फुटतरस्फुटतमप्रकाशश्च फलमिति सुधासागरे। रसश्च व्यक्तो व्यक्तीकृत एव न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते। तेन हि प्रतीतिशरीरमेव रस इति दर्पणकाराः। सामाजिकेषु वासनारूपतयाऽतिसूक्ष्मरूपेणावस्थितान् रत्यादीन् भावान् विभावा आस्वादयोग्यतां नयन्ति उद्बोधनेन पोषणेन च अनुभावास्ताननुभवविषयीकुर्वन्ति सञ्चारिणश्च कार्ये तान् सञ्चारयन्ति मुहुर्मुहुरभिव्यञ्जयन्ति च विशेषेण स्वयमनियता अपि स्थायिनो नियतकार्यव्याप्तं कारयन्ति।

इत्थं तैर्विभावाद्यैर्व्यक्त इति विभावेनोद्बोध्योद्दीप्य च आस्वादयोग्यतां नीतोऽनुभावेनानुभवविषयीकृतः सञ्चारिणा काये सर्वव्यापित्वेन सञ्चार्य परिपोषितो रत्यादिः स्थायिभावः एव रसतां प्राप्नोतीति। स च विभावादिभिः सम्भूय व्यज्यते न तु पार्थक्येन। यथाऽऽह धनञ्जयः—

'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥' इति।

यथाऽऽह भोजदेवः—

आलम्बनविभावेभ्यः स्वेभ्यः स्वेभ्यः समुन्मिषन्।
रसो रत्यादिरूपेण भाव इत्यभिधीयते॥
चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः।
रसत्वं प्रतिपद्यन्ते प्रबुद्धाः स्थायिनोऽत्र ते॥' इति।

यथा वा नाट्यदर्पणे—

'स्थायी भावः श्रितोत्कर्षो विभावव्यभिचारिभिः।
स्पष्टानुभावनिश्चेयः सुखदुःखात्मको रसः॥' इति।

शारदातनयो यथा—

'विकारो मानसो यस्तु बाह्यार्थालम्बनात्मकः।
विभावाद्याहितोत्कर्षो रस इत्युच्यते बुधैः॥' इति।

तेन हि स्थितमेतद्यत्—उद्बोधनकारणभूतैर्विभावैरुद्बोध्यास्वादाङ्कुरयोग्यतां नीतस्तैरेव न तिरोदध्यादिति समुद्दीपितश्चानुभावैरनुभवविषयीकृतः सञ्चारिभिः काये सर्वव्यापित्वेन सञ्चार्य कार्येऽभिमुखीकृतो वासनारूपो रत्यादिश्चित्तवृत्तिविशेषो हि रसपदवाच्य इति। असौ विभावाद्यैः सम्भूय व्यज्यत इति व्यक्तिविशिष्ट एव। स च सामाजिकेषु भवति न तु काव्ये। काव्यं तु लोकोत्तरविभावादीनुपस्थापयत्तदुन्मीलनहेतुभावेन रसवद् आयुर्घृतमित्यादिव्यपदेशवदिति धनिकः। उद्बोधितोऽनुभवविषयीकृतः परिपोषितः कार्येऽभिमुखीकृतश्च भावो विरुद्धाविरुद्धभावैरविच्छेद्यत्वेनान्यानपि आत्मभावं नयन्नास्वादावध्यविच्छिन्नप्रवाहत्वेन राजत इति स्थायिनो स्थायित्वम्। विशेषादाभिमुख्येन चरणाच्चारणाच्च व्यभिचारिणां व्यभिचारित्वमनियतत्वाच्च वारिधेः कल्लोला इव। आस्वादाङ्कुरयोग्यतामापितस्य भावस्यानुभवविषयीकरणत्वमेवानुभावानामनुभावत्वम्। वासनारूपतया सूक्ष्मरूपेण सुप्तस्य भावस्य विभावनत्वमेव विभावानां विभावत्वमिति।

[वृत्तिः] उक्तं हि भरतेन—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति।

एतद् विवृण्वते—

विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादौ अनुकार्ये तद्रूपानुसन्धानान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लट-प्रभृतयः।

[कमला०] उक्तेऽर्थे सम्मतिमाह उक्तं हीति। संयोगः साहित्यं निष्पत्तिः प्रकाशः। इदञ्चतुर्भिर्भरतटीकाकृद्भिः रसस्योत्पत्तिरनुमितिर्मुक्तिरभिव्यक्तिर्वेति चतुर्धा व्याख्यातम्। तत्राद्यपक्षमाह—विवृण्वते भट्टलोल्लटप्रभृतय इत्यन्वयः। विभावा कारणानि। तानि द्वेधा। रतेर्विषयः कान्ताद्यालम्बनविभावाः उद्यान-चन्द्रमारुताद्युद्दीपनविभावाः उपचये रसस्वरूपे कारणानि तैः रामादावनुकार्ये जनितो रतेः कार्यैः कटाक्षाद्यैः प्रतीतः उपचयं विना प्रतीत्यभावादंशेन व्यङ्ग्य इत्युक्तम्। निर्वेदाद्यैरुपचितः पुष्टः। अत्रोपचयानन्तरं ज्ञानात् पाठक्रमबाधादर्थक्रमेण पश्चा-त्प्रतीत इति योज्यम्। नन्विदानीं रामस्यासत्त्वात् कथं तन्निष्ठरसधीरत आह मुख्ययेति अभिधयेत्यर्थः। इदञ्च काव्ये शब्दशक्त्या प्रतीयमानः स्थायिभावो रस इत्यन्वयः। नाट्ये आह तद्रूपेति। रामसादृश्येन नर्तके रामत्वारोपात् रामनिष्ठो रसो नटे आरोप्यत इत्यर्थः। केचित्तु नाट्यपर एवायं ग्रन्थः। मुख्यया वृत्त्या साक्षात्सम्बन्धेन रामादौ प्रतीयते। तद्रूपानुसन्धानात्तदारोपेण नटे प्रतीयत इत्यर्थमाहुः। उत्पत्तिदशायां यस्य स्थायिभावत्वं तस्यैव प्रतीतिदशायां रसत्वम्। अयम्भावः। सीतादिविषया रामे एव रतिः। नटे तत्स्मरणात्तद्धीः। सामाजिकानां तु नटे रामसादृश्येन रामत्वारोपेण च तद्धीरिति भरतसूत्रे च संयोगः सम्बन्धः विभावानां रतेः कार्यकारणभावः सम्बन्धः अनुभावानां गम्यगमकभावः सम्बन्धः व्यभिचारिणां पोष्यपोषकभावः सम्बन्धः। निष्पत्तिपदञ्च विभावादिक्रमेण उत्पत्ति-ज्ञप्ति-पुष्टि-परमिति नानार्थमिति।

[सरि०] रसस्वरूपमधिकृत्य कारिकोक्तवचनदाढर्याय शिष्टसम्मतिमुपस्थापयति वृत्तिकृत् उक्तमित्यादि। भरतेन नाट्यशास्त्रस्य प्रवक्त्रा तदाख्येन मुनिना। उक्तं प्रतिपादितम्। हि इत्यवधारणे। किमुक्तमित्याह विभावेति। विभावः भावो-द्बोधनकारणं तदुद्दीपनकारणञ्च उद्दीपकस्य भावोद्बोधने साक्षात्कारणत्वाभावेऽपि अनुद्दीपितस्योद्बुद्धमात्रस्य तिरोधानसम्भवादजातप्रायत्वाच्च तत्रापि कारकत्वो-

पचारेण कारणत्वम् च अनुभावः उद्बुद्धस्योद्दीपितस्य च भावस्य कार्यरूपः कटाक्षादिर्यो हि तमनुभवविषयीकुर्वन्ति च व्यभिचारिणः उद्बुद्धमुद्दीपितमनुभवविषयीकृतञ्च भावं सर्वाङ्गे चारयन्ति परिपोष्य कार्याभिमुखीकुर्वन्ति स्वयमनियता अपि स्थायिनं नियतविषयीकुर्वन्ति ये ते यथा औत्सुक्यलज्जादयस्ते च। इतरेतरद्वन्द्वः। तेषां संयोगात् संयुक्तक्रियातः। रसनिष्पत्तिः रसस्य नितान्तास्वाद्यतां प्राप्तो भाव एव रसस्तस्य निष्पत्तिः प्रकाश इति। इति। शिष्टोक्तिसम्बद्धव्याख्यानानि समुद्दिधीर्षुः प्रकरणमारभते एतदित्यादि। एतत् भरतोक्तसूत्रमिदम्। विवृण्वते इत्थं व्याख्यान्ति भट्टलोल्लटाद्या व्याख्याकारा इति। सूत्रस्थं निष्पत्तिपदं हि उत्पत्ति-अनुमिति-भुक्ति-अभिव्यक्तिपरकत्वेन व्याख्यातमस्ति लोल्लट-शङ्कुक-नायक-अभिनव-गुप्तैः। तदेव क्रमेणोद्दिधीर्षुः प्रथमं लोल्लटसम्मतमुत्पत्तिपक्षमुपस्थापयति विभावैरित्यादि। ललनोद्यानादिभिः ललना रमणी उद्यानमुपवनमादिपदा-च्चन्द्रचन्द्रिकादयश्च तैः तद्रूपैः। आलम्बनोद्दीपनकारणैः आवलम्बनमुद्बोधनाधारो यमालम्ब्य भाव उद्बुद्धो भवति स तस्यालम्बनम् च उद्दीपनम् उत्कर्षाधानं ते एव कारणैः हेतुभिः आवलम्बनकारणैरुद्दीपनकारणैश्च। अत्र यथासङ्ख्यनियमेन ललनाद्यालम्बनकारणमुद्यानाद्युद्दीपनकारणमिति। ननु उद्दीपनस्य भावोद्बोधने साक्षात्कारणताभावात्कथमिदमुच्यते इति चेदित्थम्। अनुद्दीपितस्य भावस्योद्बुद्ध-स्यापि पुनस्तिरोधानसम्भवात्तत्रापि कारकत्वोपचारेण कारणत्वमिति। विभावैः विभाव्यन्ते चित्तवृत्तिविशेषा यैस्ते तैः रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः इत्युक्तैः। ललनादिभिरालम्बनविभावैरुद्यानादिभिरुद्दीपनविभावैश्च। जनितः उत्पादितः। भावविभावयोरनया दिशा कार्यकारणभावसम्बन्धः। कटाक्षभुजाक्षेप-प्रभृतिभिः कटाक्षं वक्रदृष्टिः भुजाक्षेपो हस्तोद्धूननं तत्प्रभृतिभिस्तदादिभिः। कार्यैः इङ्गितैः तत्स्वरूपैः। अनुभावैः अनुभावयन्ति ज्ञापयन्ति भावोद्बोधनं वानुभव-विषयीकुर्वन्ति ये इति तैः। प्रतीतियोग्यः अनुभवविषयानुकूलः। कृतः विहितः। अनया दिशा भावानुभावयोर्गम्यगमकभावसम्बन्धः। सहकारीभिः परिपोषणेन कार्याभिमुखीकरणेन च सहयोगिभिः। निर्वेदादिभिः निर्वेदाद्यैः। व्यभिचारिभिः विशेषेण अभि आभिमुख्येन चरन्ति स्वयं चारयन्ति च सर्वाङ्गेषु स्थायिनमिति तैः। उपचितः पुष्टीकृतः दृढीकृतः। अनया दिशा भावव्यभिचारिणोः पोष्यपोषकभाव-सम्बन्धः। रत्यादिकः रतिप्रभृतिकः। भावश्चित्तवृत्तिविशेषः। मुख्यया वृत्त्या साक्षात्सम्बन्धेन प्रथमतस्तु। केचिन्मुख्ययेत्यभिधयेति व्याख्यान्ति तन्न चारु। अनुभावैः प्रतीतियोग्यः कृतः, इत्यत्र उपचयं विना प्रतीत्यभावादंशेन व्यङ्ग्य इत्युक्तमिति कमलाकर्यां स्पष्टम्। रसस्याभिधेयत्वं न कुत्रापि सम्मतमिति।

अनुकार्ये अनुकरणं नटैः क्रियमाणे। रामादौ रामप्रभृतिपात्रे तस्यैव फलस्वाम्यात्। तद्रूपतानुसन्धानात् तस्य रामादेः रूपं स्वरूपं तस्य भावस्तस्या अनुसन्धानात् आरोपणात्। नर्तके नटे। अपि च। प्रतीयमानः प्रतीत इति मतः। रसः रस-पदवाच्य शृङ्गारादिरिति। इति इत्थं। भट्टलोल्लटप्रभृतयः तदाद्या विपश्चितः। एतद् विवृण्वते इत्यन्वयः। अयमाशयः—भट्टलोल्लटप्रभृतिव्याख्यातारो हि 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति भरतसूत्रमित्थं व्याख्यान्ति। भावो हि रत्यादिश्चित्तवृत्तिविशेषः। स च निर्विकारके चित्ते निष्क्रियत्वेनावतिष्ठते। स्वानुकूलकारणेन स उत्पद्यते। तेन भावोद्बोधे यत्कारणं तद्विभावः। स द्विविधः—आलम्बनोद्दीपनभेदात्। यमालम्ब्य भाव उत्तिष्ठते स आलम्बनविभावो यथा रतेर्ललनादिः। उद्बुद्धमात्रं तं सद्यो न तिरोदध्यादिति ये हि समुद्दीपयन्ति ते उद्दीपनविभावाः यथा रतेश्चन्द्रोद्यानादिः। अनुद्दीपितस्याजातप्रायस्त्वादेवोपचारा-दुद्दीपनस्यापि कारणत्वम्। तेन हि रत्यादिर्भावो विभावैरालम्बनोद्दीपनेति द्विभेदैर्जन्यते। तत्र भावविभावयोर्जन्यजनकत्वेन कार्यकारणभावसम्बन्धः। भावो हि कार्यं यदा विभावस्तदुद्बोधनोद्दीपनयोः कारणमिति। तदनु उद्बुद्ध उद्दीपितश्च भावोऽनुभावै-र्ज्ञाप्यते प्रकटीक्रियतेऽनुभवविषयरूपेण। अनुभावाश्च कटाक्षादिकार्याणि स्तम्भस्वेद-प्रभृतिसात्त्विकभावाश्च। तयोर्गम्यगमकभावः सम्बन्धः। भावो हि अनुभवविषयता गम्यते प्राप्यते गमकाश्चानुभावा इति। स्वैः स्वैः कारणैरुद्बुद्धं भावं बहिः प्रकाशयन्तीति तेषामनुभावत्वम् भावोद्बोधानन्तरकार्यसाधकत्वात्। तच्चानुभावै-रनुभवविषयीकृतं भावं व्यभिचारिणः सर्वाङ्गे सञ्चार्य कार्ये संयोज्य च स्वयमनियता अपि भावं नियतविषयीकुर्वन्तीति भावः पोष्यो व्यभिचारिणश्च पोषकाः इति विभावेन जनितोऽनुभावेन प्रतीतियोग्यीकृतो व्यभिचारिभिरुपचित इति क्रमेण उद्बोधितोऽनुभवविषयीकृतः परिपुष्टश्चेति तेषां संयुक्तक्रियया स्वाद्यत्वमानीयमानो रत्यादिभाव एव रसः। स च प्रत्याय्यते न तु कथ्यते। स हि फलस्वामित्वेन रामादौ साक्षात्सम्बन्धेन प्रतीतो नटेऽपि रामत्वाभिमानात्तद्रूपतारोपेण नटेऽपि प्रतीत इवावभासते। रामादिविभावानामनुपस्थितावपि नटे सादृश्यानुसन्धानवशात् सामाजिकैरारोप्यमाणश्चमत्करोतीति। नटं हि रसान्वितं दृष्ट्वा सामाजिकाश्चमत्कृता भवन्ति इत्यस्य सारम्।

वस्तुतस्तु न तथा। नटं रसान्वितं दृष्ट्वा सामाजिकाश्चमत्कृता भवन्तीति न सङ्गच्छते तेषु तदभावे तत्र चमत्कारानुभवविरोधात्। न च तज्ज्ञानमेव चमत्कार-हेतुः तथा सति लौकिकशृङ्गारादिदर्शनेनाऽपि चमत्कारप्रसङ्गः स्यात्। यथोक्तं कमलाकर्याम् –पक्षेऽस्मिन् रसप्रतीतिर्न मानसप्रत्यक्षाऽसन्निकर्षात् नानुमितिरारोपो

वा नटे रामादिभेदग्रहे तद्गतरत्याद्यनुमितौ बाधान्न स्मृतिरनुभवात्तेन नायं सिद्धान्तः रससिद्धान्तव्याख्याने समर्थ इति ।

[वृत्तिः] 'राम एवायम्' 'अयमेव रामः' इति 'न रामोऽयम्' इति औत्तरकालिके बाधे 'रामोऽयम्' इति 'रामः स्याद्वा न वाऽयम्' इति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन 'रामोऽयम्' इति प्रतिपत्त्या ग्राह्ये नटे—

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलालिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥२५॥
दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥२६॥

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद्, गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन सम्भाव्यमानो रत्यादिर्भावस्तत्राऽसन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ।

[कमला॰] अस्मिस्तु पक्षे न रसप्रतीतिः, सा हि न मानसप्रत्यक्षाऽसन्निकर्षात् नानमितिरारोपो वा नटे रामादिभेदग्रहे तद्गतरत्याद्यनुमितौ बाधात् । न स्मृतिरनुभवात् । इत्यरुचेः राम एवायमिति पक्षमाह राम एवेति । प्रतीतिपदस्य संयोगादिपदैः प्रत्येकमन्वयः । सम्यक्प्रतीत्यादिचतुष्टयस्य क्रमेणोल्लेखमाह । राम एवेत्येवकारस्य विशेषणसङ्गतत्वादयोगव्यवच्छेदेन 'अयमेव रामः' इति विशेष्यसङ्गतत्वादन्ययोगव्यवच्छेदेन च सम्यक्प्रतीतिः । उपलक्षणञ्चेदम् । अयं रामो भवत्येवेति क्रियासङ्गतस्यात्यन्तायोगव्यवच्छेदेन प्रतीतेर्भिन्नत्वेन चेति ज्ञेयम् । न रामोऽयमित्यौत्तरकालिके बाधे सति रामोऽयमिति मिथ्याप्रतीतिर्भ्रान्तेत्यर्थः । यथा नेदं रजतमिति बाधे सति शुक्तौ रजतज्ञानं बाधाभावे तु न मिथ्यात्वम् । स्वतः प्रामाण्यवादे यावद्बाधं प्रामाण्यात् । मधुमतीकारस्तु सावधारणधीत्वं सम्यक्त्वं बाधशिरस्कत्वं मिथ्यात्वमित्याह । अत एव नटे रामोऽयमिति धीर्भ्रान्तैवेति कथं मिथ्यावैलक्षण्यमुक्तमिति दूषणमपास्तम् । रामः स्याद्वा न वेति संशयः । रामसदृशोऽयमिति सादृश्यधीः । एताभ्यः प्रतीतिभ्यो विलक्षणतया रामोऽयमिति प्रतिपत्त्या रामत्वप्रकारकपुरोवर्तिमात्रविशेष्यकप्रतीत्येत्यर्थः । अन्यथासंशये सादृश्ये च राममात्राकाराभावेनाप्रसक्तौ व्यावृत्य योगात् । ग्राह्ये विषयीकृते नटे इति

पक्षोक्तिः। करणादिभिः संयोगादनुमीयमानो रत्यादिर्भावो रस इत्यन्वयः। ननु सम्यङ्मिथ्यादिविलक्षणालोके धीर्न दृष्टाऽत आह चित्रेति। चित्रलिखिते तुरगे यथोक्तभिन्ना धीस्तथेत्यर्थः। इयञ्च बाधसमकालीनत्वादाहार्यभ्रमरूपेति पद्मनाभः। वेदान्तिनस्त्वनिर्वचनीयख्यातिरित्याहुः। हेतुज्ञानोपायमाह सेयमिति। अङ्गेषु अमृतद्रवलहरीरूपाऽऽलिङ्गनात्तापनिवृत्तेः। दृशोर्निबिडकर्पूरशलाका-तुल्या शरीरिणी मूर्तिमती मनोरथश्रीरभिलाषसम्पत्तिः। सेयं प्राणेश्वरी प्रिया मनसः सकाशाल्लोचनविषयं प्राप्तेत्यर्थः। याऽद्य यावन्मनसि स्थिता सा बहिर्दृष्टे-त्यर्थः। मनस एव मनोरथश्रीर्भवतीति समनस इत्यन्ययोगव्यवच्छेदार्थमिति मधुमती सरस्वतीतीर्थकृता योजना तु अयुक्ता तथापि प्रयोजनाप्राप्तेः। अयं सम्भोगाख्यः शृङ्गारः। वियोगमाह दैवादिति। अद्याहं तया प्रियया वियुक्त-श्चाभूवम् —घनचपलामेघा यत्र यद्वा निविडं चपलं च। जलं ददातीति जलदः। कालः समयो यमश्च। आवाभ्यां तुल्यकालता। इत्येवं काव्यस्यानुसन्धानं विमर्शनं तद्बलान्नटेन प्रकाशितैः। तथा शिक्षोपदेशः। अभ्यासः पौनःपुन्येन प्रवृत्तिः ताभ्यां निर्वर्तितानां स्वकार्याणां पुलकादीनां प्रकटनेन हेतुना च नटेन प्रकाशितैः न तु वस्तुसद्भिः कारणाद्यैरिति हेतुः। कथं कृत्रिमैर्हेतुभिरनुमितिर्बाधादत आह कृत्रिमैरपीति। अनाहार्यहेतुधीरेवानुमितिहेतुर्न प्रमा। अन्यथा धूलीपटलेन वह्न्यनु-मितिर्न स्यादिति भावः। तथा कृत्रिमत्त्वेन कारणादिमात्रज्ञानाल्लोके कुतो न रसधीरत आह। विभावादीति भरतसूत्रं योजयति विभावादीति। अलौकिक-चमत्कारहेतुत्वात्। विभावप्रयोगसूत्रस्थसंयोगपदं व्याचष्टे सयोगादिति। गम्यं साध्यं गमको हेतुः। तद्भावो व्याप्तिः। तद्रूपात्सम्बन्धाल्लोके पुलकादिभिः प्रीत्यनुमानेऽत्रापि तथेत्यर्थः। ननु रसस्यानुमेयत्वेऽनुमिनोमीत्यनुव्यवसायः स्यादत आह वस्त्विति। यद्यनुमितात्प्रसात्कथं चमत्कारोऽत आह वस्त्विति। पुत्रोत्पत्त्यनु-मानवद् विषयमहिम्ना तथा चमत्कार इति भावः। ननु रामनिष्ठस्य रत्यादेर्नटेऽ-सत्त्वात्कथं तत्रानुमानमत आह :स्थायित्वेनेति। तत्रासन्नपि नटप्रकाशितविभा-वादिवत्स्थायित्वेन विद्यमानत्वेन सम्भाव्यमानः रामत्वारोपेण तत्र विद्यमान इव प्रतीयत इत्यर्थः। साध्यमाह रत्यादिर्भाव इति। ननु नानुकार्यस्य रसानुमानं रामस्य तदानीमसत्त्वात् न नटस्याभिनयाविष्टचित्रत्वादत आह सामाजिकाना-मिति। ननु सकृदनुमितस्य सिद्धया प्रतिबन्धेन पुनरनुमानायोगात्कथं बहुकालं नृत्यदर्शनादौ प्रवृत्तिरत आह वासनयेति। धारावाहीच्छयेत्यर्थः। चर्व्यमाणः पुनः पुनरनुमीयमानसिसाधयिषयानुमितौ सिद्धेरप्रतिबन्धत्वादिति भावः। प्रयोगश्च रामत्वप्रतीतिविशेषोऽयं सीताऽऽलम्बनकरस्याश्रयः तद्विभावादिसन्धित्वात्। यत्रैवं

तन्नैवम् । यथाऽहमिति विशेष्यावृत्तिप्रकारकज्ञानस्यैव भ्रमत्वेन प्रकृते तद्वैलक्षण्यायोगः ।

[ सरि० ] भरतसूत्रस्यानुमितिपक्षधरशङ्कुकसम्मतव्याख्यां सारत उपस्थापयति राम इत्यादिना । भरतसूत्रस्यापरो व्याख्याता श्रीशङ्कुकः । स हि भट्टलोल्लटसम्मता साक्षात्सम्बन्धेनानुकार्ये तद्रूपतानुसन्धानान्नटे रसः प्रतीयते येन सामाजिकाश्चमत्कृता भवन्तीति उत्पत्तिपक्षगां व्याख्यां निराकृत्य स्वसम्मतमनुमितिसिद्धान्तमवस्थापयति । तदेव संक्षेपेणाह वृत्तिकृदत्र । निराकरणञ्च स्वरूपव्याक्रिययैव । शङ्कुको हि रसं सामाजिककर्तृकरामाद्यनुकार्यगतरत्याद्यनुमिति मन्यते, यदा लोल्लटो रामादिरूपतानुसन्धानान्नटगतरत्याद्युत्पत्तिमेव रसं मन्यते । तेन हि शङ्कुकमते प्रतीतिरनुमितिः । सा च चित्रगततुरगन्यायेन रामाद्यनुकार्यरूपतया गृहीतस्य नटास्याधारेण यत्र तच्चेष्टानां हेतुत्वं साध्यत्वं हि रत्यादीनामिति । साऽनुमिति सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणैव । तत्र 'सम्यक् प्रतीतिं व्याख्याति 'राम एवायम्' 'अयमेव रामः' इति । आद्ये एवकारो विशेषणसम्बद्धो द्वितीये विशेष्यसम्बद्धः । विशेषणशब्द एवकारो विशेष्ये विशेषणस्यासम्बन्धरूपयोगं निषेधति । यथा राम एवायं नटो नान्य इति । विशेष्यसम्बद्ध एवकारस्तु विशेष्येतरस्मिन् विशेषणीभूतधर्मसम्बन्धं वारयति । यथोक्तम्—
'अयोगमन्ययोगञ्चात्यन्तायोगं तथैव च । व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः' ॥
इति । अत्र अयम्पदबोध्यो नटो विशेष्यो रामपदबोध्योऽनुकार्यश्च विशेषणम् । 'राम एवायम्' इत्यत्र एवकारो विशेषणान्विततया विशेष्ये नटे रामत्वायोगं व्यवच्छिनत्ति । तेन हि नायं रामाद्भिन्न इत्यस्यार्थः प्रतीयते । तथैव 'अयमेव रामः' इत्यत्र एवकारो विशेष्यसम्बद्धतया नटभिन्ने रामत्वसम्बन्धं निवार्य नटे एव रामत्वं नियमयति । तेन हि अयं नट एव राम इति प्रतीतिः । एवकारेणात्यन्तायोगव्यवच्छेदस्तु क्रियान्वितत्वेनैव । यथा 'नीलं कमलं भवत्येव' इत्यत्र भवतीति क्रियया सह सम्बद्ध एवकारो न हि सकले कमले नीलत्वं नियमयति' न च कमलभिन्ने अनीलत्वमेव निवारयति अपितु यस्मिन् कस्मिन्नपि कमले नीलत्वसम्बन्धं नियमयति इति । तेन हि आद्येऽयं नटो रामादितरो नेति द्वितीयेऽयं नट एव रामो नान्यो रामपदवाच्य इति चोभयरूपेणैवेयं प्रतीतिरवधारितेति सम्यक्प्रतीतिः । तथैव न रामोऽयम् अयं नैव रामः किन्तु नट इति इत्थम् । औत्तरकालिके सम्यक्प्रतीत्यनन्तरजाते । बाधे सम्यक्प्रतीतौ विघ्ने जाते । रामोऽयम्. 'अयं नटो रामः इति प्रतीतिर्मिथ्याप्रतीतिरनन्तरावतीर्णविपरीतप्रतीतिकया । मिथ्यात्वं बाधाभावे एव स्वतःप्रामाण्यवादे यावद्बाधं प्रामाण्यात् । यथा रजतमेवेदं वा इदमेव रजतमिति

सम्यक्प्रतीत्यनन्तरं नेदं रजतमिति औत्तरकालिके बाधे शुक्तौ रजतप्रतीतिः । एवञ्च अयं नटः रामः स्याद्वा न वा इति नटस्य रामत्वारामत्वोभयकोट्यवलम्बितत्वेन सम्यङ्मिथ्याप्रतीत्योरफलत्वात्संशयप्रतीतिस्तृतीयपथरूपेण । तथा च राम-सदृशोऽयम् अयं नटो रामसदृशः रामतुल्यवेषविशेषवाग्विधायित्वेन तत्तुल्य इति सादृश्यप्रतीतिः । प्रकृतमाह सम्यगिति । प्रतीतिपदस्य सम्यगादिपदैः प्रत्येक-मन्वयः । आभ्यः प्रतीतिभ्यः । विलक्षणया विचित्रतया । न तत्र सम्यक्प्रतीति-र्नैव च मिथ्याप्रतीतिः । न च संशयप्रतीतिरेव न च सादृश्यप्रतीतिरिति प्रतिपत्ते-र्वैलक्षण्यमाभ्यः । प्रतिपत्त्या इत्यनेन सम्बन्धः । चित्रतुरगादिन्यायेन यथा चित्रे तुरगदर्शनात् तुरगोऽयमिति सम्यगादिप्रतीतिचतुष्टयवैलक्षण्येन प्रतीतिरुदेति तथैवात्रापीति । चित्रे तुरगज्ञानं भ्रम एव तथापि बाधशिरस्कस्यैव भ्रमत्वेन विवक्षातो न दोषः । नात्र बाधावतारस्तथा सति तद्रूपेण पक्षत्वैव न स्यात् । तद्रूपेण रामोऽयम् अयं नटो रामः । इति एतादृश्या । प्रतिपत्त्या अवधारणया । रामत्वप्रकारकपुरोवर्तिमात्रविशेष्यकप्रतीत्येति । ग्राह्ये विषयत्वेन गृहीते । नटे नर्तके । अयमाशयः यथा बालानां चित्रगततुरगे तुरगोऽयमिति वस्तुपरिच्छेदशून्या बुद्धिर्भवति नटे रामोऽयमिति ज्ञानेन गृहीते इति । अस्य अनुमीयमानोऽपीत्य-नेनान्वयः । रसस्य ताटस्थ्यं सूचयितुं सप्तमीप्रयोगः । तत्र हेतुज्ञानोपाय-मुदाहरणमुखेन स्पष्टयितुं सम्भोगविप्रलम्भभिन्नशृङ्गारोपस्थापनाय प्रथमं सम्भोग-शृङ्गारमुदाहरति सेयमित्यादि । अङ्गेषु सुधारसच्छटा दृशोः सुपूरकर्पूरशलाकिका मनसः शरीरिणी मनोरथश्रीः सा इयम् प्राणेश्वरी मम लोचनगोचरम् गता इत्यन्वयः । अङ्गेषु अवयवेषु प्रत्यङ्गमिति । सुधारसच्छटा सुधायाः पीयूषस्य यो रसस्तस्य छटा वृष्टिः । दृशोः नयनयोः । सप्तम्यन्तमिदं पदम् । सुपूरकर्पूर-शलाकिका सुपूरा द्रवपूर्णा कर्पूरस्य शलाकिका अञ्जननलिका । मनसः चेतसः । शरीरिणी मूर्तिमती । मनोरथश्रीः मनोरथस्याभिलाषस्य श्रीरैश्वर्यम् । तथा-भूता । सा मद्धृदयगता । यद्भावनयाऽहं जीवितः । इयं सम्प्रति पुरोगता । प्राणेश्वरी प्राणेभ्योऽपि गरीयसी प्रियतमा । मम मे । लोचनगोचरं नयन-विषयत्वम् । गता प्राप्तेति । पूर्वं सा मनस्येवाऽऽसीत्सम्प्रति बहिरपि दृष्टेति । अत्र अङ्गेषु सुधारसच्छटा इत्यनेन स्पर्शमात्रेणाखिलतापशान्तित्वं सुपूरेत्यनेनातिशयानन्द-हेतुत्वं शरीरिणी मनोरथश्रीरित्यनेन जीवनसर्वस्वत्वमनन्यापरत्वञ्च व्यज्यते । वृत्तमुपजातिरेवेन्द्रवज्रावंशस्थयोर्मिश्रणात् । अत्र हि सम्भोगाख्यः शृङ्गारः । विप्रलम्भशृङ्गारमाह दैवादित्यादि । अहम् अद्य दैवात् चपलायतनेत्रया तया वियुक्तः च अयम् अविरलविलोलजलदः कालः समुपागतः च इत्यन्वयः । अहम्

मन्दभाग्यः। अद्य साम्प्रतिकदिने। दैवात् दुर्भाग्यवशात् न तु स्वेच्छया। चपलायतनेत्रया चपले चञ्चले आयते दीर्घे नेत्रे नयने यस्याः सा तया तथाविधया। तया मद्धृदयस्थया प्रियतमया। वियुक्तः विप्रयुक्तः। अभूवमिति शेषः। अयम् एष पुरो वर्तमानः। अविरलविलोलजलदः अविरलमनवरतं विलोलाश्चञ्चला अत एव कामोद्दीपका जलदा मेघा यत्र स तथाविधः वा अविरला स्निग्धा निविडा चञ्चला सर्वदिक्सञ्चारिणो जलदा मेघा यत्र तथाविध। कालः समयः प्रावृट्कालः। च इति समुच्चये। समुपागतः प्राप्त इति। चकारद्वयं कान्तावियोगप्रावृट्काल-गमनस्य तुल्यकालताद्योतनाय। काल इति यमोऽपि श्लेषवशात्। तत्पक्षे अविरलं प्रात्याह्निकं विलोलं निवापाञ्जलितश्च्यवनेन चञ्चलं यज्जलं तत् ददाति दापयतीति अर्थो तादृशः इति। तया वियुक्तोऽहं जीवितुं नोत्सहे इत्यस्याभिप्रायः। अत्र प्रियावियोगाप्रियसङ्गमयोरेककालतारूपः समुच्चयोऽलङ्कारः।

तत्र वक्तव्यं स्पष्टयति इत्यादीति। इत्यादि इतिप्रभृति यत्काव्यं तस्य अनुसन्धानं कविविवक्षितार्थस्य साक्षात्करणं तस्य बलात् सहकारात्। शिक्षेत्यादि शिक्षा उपदेशस्तया अभ्यासः पुनःपुनरनुशीलनं तेन चेत्युभाभ्यामेव निर्वर्तितं सम्पादितं यत्स्वकार्यमभिनयस्तस्य प्रकटनं प्रकाशनं तेन करणभूतेन। नटेन अनुकारिणा। एव इत्यवधारणे न त्वनुकार्येण तस्यानुपस्थितित्वात्। प्रकाशितैः द्योतितैः। कारणेति कारणैः आलम्बनोद्दीपनैः प्रियतमाप्रावृड्रूपैः कार्यैस्तदनु-गुणरोमाञ्चादिसहकारिभिरुत्कण्ठादिभिः। कृत्रिमैः वस्तुतोऽसद्भिः। अपि। तथाऽनभिमन्यमानैः कृत्रिमत्वेनागृहीतैः प्रतीतिवैलक्षण्यात्। विभावादिशब्द-व्यपदेश्यैः विभावानुभावव्यभिचारिभावशब्दबोध्यैः। गम्यगमकभावरूपात् गम्य साध्यं गमको हेतुस्तत्स्वरूपात् रसस्य गम्यत्वं विभावादानाञ्च गमकत्वमिति। भावश्च तदनुकूलविभावादिसत्त्वे रतेरवश्यम्भाव इति। संयोगात् सम्भूय व्यापारात्। अनुमीयमानः सीतादिविभावादिसम्बन्धात् रामोऽयं तद्विषयकरतिमान् इति अनुमान-विषयीक्रियमाणः। अपि। वस्तुसौन्दर्यबलात् वस्तु अनुमीयमानरतिः तस्य सौन्दर्यं चमत्कारिता तस्य बलात् साहाय्येन। रसनीयत्वेन आस्वाद्यत्वेन निरतिशय-सुखरूपतया। अन्यानुमीयमानविलक्षणः अन्यो लौकिको योऽनुमीयमानो वह्न्यादिरूपोऽनुमानविषयस्तस्मात् विलक्षणो विभिन्नः। लौकिकविषयस्य वह्न्यादेरनुभावस्य ज्ञानमात्रप्रयोजनत्वादस्य तु निरतिशयसुखरूपत्वात् तदपेक्षयाऽस्य वैलक्षण्यम्। स्थायित्वेन स्थायिरूपत्वेन। सम्भाव्यमानः ज्ञायमानः। रत्यादिः रतिप्रभृतिकः। भावः चित्तवृत्तिविशेषः। तत्र नटे। असन् अविद्यमानः। अपि। सामाजिकानां सहृदयानाम्। वासनया धारावाहिन्येच्छया संस्कारादिति।

चर्व्यमाणः आस्वाद्यमानः। रसः इति इत्थम्। श्रीशङ्कुकः तदाख्यो व्याख्याता विवृणुते इति। अयमाशयः अनुकार्ये रामादौ रसनिष्पत्त्या तद्रूपतानुसन्धानान्नटेऽपि सामाजिकानां चमत्कारानापत्तिरिति तस्योत्पत्तिवादे वैमत्यम्। तेन हि रसस्य नोत्पत्तिः किन्तु रत्यादेः स्थायिनो विभावादिभिः संयोगादिति अनुमाप्यानुमापकरूप-सम्बन्धात् रसस्य निष्पत्तिरनुमितिरिति। सम्यङ्मिथ्यासंशयसादृश्यप्रतीति-विलक्षणया प्रतिपत्त्या चित्रतुरगन्यायेन रामोऽयमिति गृहीते नटे शिक्षाभ्यासबलात्तेनैव ममैते प्रकाशितविभावादिभिरसद्भिरपि असन्त इति अनभिव्यक्तैः साध्यहेतुरूप-संयोगतोऽनमीयमानो वस्तुसौन्दर्येणेतरविलक्षणः स्थायीति सम्मतो रत्यादिभावो नटेऽसन्नपि सहृदयानां धारावाहिनीच्छयाऽऽस्वाद्यमानो रस इति। न हि प्रत्यक्षस्यैव चमत्कारहेतुत्वान्नानुमितेस्तदिति वाच्यम्। लौकिकविषये तत्सत्यमेवान्यथा सुखादावनुमीयमानेऽपि तथैव स्यात्। किन्तु स्थायिनोऽनुमानस्यान्यानुमानवैलक्षण्या-दनुमितेरपि चमत्कारहेतुत्वसम्भवः। वैलक्षण्यञ्च वस्तुसौन्दर्यबलाद्रसनीयत्वेन रत्यादेः। न च स्थायिनां नटेऽभावात्कथमनुमितिस्तेषां बाधावतारादित्यपि वाच्यम-भावस्य निश्चयाभावाद्रत्यादेः स्थायितया सम्भाव्यमानत्वाच्च। स्थायितया सम्भाव्य-मानत्वञ्च यत्र विभावादीनां सत्त्वे तत्र रत्यादेरवश्यम्भाव इति। नटे रामोऽयमिति प्रतीतिास्त्वत्थम्। नियमविषया प्रतीतिः सम्यक्प्रतीतिः। यथा राम एवायमित्य-योगव्यवच्छेदेन 'अयमेव रामः' इति अन्ययोगव्यवच्छेदेन। सम्यक्प्रतीत्यनन्तरा-वतीर्णविपरीतप्रतीतिर्मिथ्याप्रतीतिः। यथा न रामोऽयमिति औत्तरकालिके बाधे रामोऽयमिति। सम्यङ्मिथ्याप्रतीत्यवलम्बिनी संशयप्रतीतिः। यथा रामः स्याद्वा न वाऽयमिति। तुल्यादिपदघटिता सादृश्यप्रतीतिर्यथा रामसदृशोऽयमिति। एतत्प्रतीतिचतुष्टयभिन्नप्रतिपत्त्यैव रामोऽयमिति नटे ग्रहणम्। तत्र निदर्शनम्। यथा हि चित्रे तुरगोऽयमिति पूर्वोक्तप्रतीतिवैलक्षण्येन प्रतीतिस्तथा रामत्वप्रकारक-पुरोवर्तिमात्रविशेष्यकप्रतीत्या नटे रामोऽयमिति धीः। तदयं पर्यवसितोऽर्थः। तथा रामत्वेन विषयीकृते नटे तेन हि शिक्षाभ्यासबलात्ते ममैवेति प्रकाशितैर्विभावादिभिः सह साध्यहेतुत्वेन संयोगाद्यत्र विभावादिसत्त्वं तत्र रत्यादिरवश्यम्भाव इत्यनु-मीयमानः चमत्कारस्य प्रत्यक्षविषयत्वेऽपि रत्यादीनाञ्चमत्काराश्रयेणेतरानुमीयमान-विलक्षणत्वादनुमितेरपि विषयीभूतो रत्यादिर्वस्तुतो नटेऽविद्यमानोऽपि सहृदयैः संस्कारबलादास्वाद्यमानो भावो रस इति।

तदयमभिसन्धिः—नटे भेदावगाहितादूप्यप्रतीतेः रसप्रतीतिविरोधात् संयोग-निष्पत्तिपदयोः प्रत्येकमर्थत्रयपरताकल्पने यथा यथा संयोगादिति स्थायिनां विभावैः सहोत्पाद्योत्पादकरूपात् अनुभावैः सह गम्यगमकरूपात् व्यभिचारिभिः पोष्यपोषक-

रूपात् सम्बन्धात् रसस्य क्रमशो हि उत्पत्तिरूपाऽभिव्यक्तिरूपा पुष्टिरूपा निष्पत्तिरिति गौरवादयुक्तत्वात्स्थायिभावयदस्याहार्यत्वात् नटे रसोद्बोधानुभवमात्रेण सामाजिकानां चमत्कारहेतुत्वे भानाभावाच्च भट्टलोल्लटमतं निराकृत्य रामोऽयमिति प्रतीत्या विषयीक्रियमाणेन नटेन काव्यानुसन्धानाच्छिक्षाभ्यासबलाच्चात्मीयत्वेनाभिनीतैर्विभावादिभिः कृत्रिमैरपि तथानभिमतैर्वस्तुतस्ताभिन्नविद्यमानोऽपि रत्यादिर्यत्र विभावादयस्तत्र स्थायिभावोपस्थितिरिति तद्गतत्वेनानुमीयमानो भावुकैः वासनावशादास्वाद्यमानो रस इति शङ्कुकमतसारम्। मतेऽस्मिन् संयोग इति व्याप्तिरूपसम्बन्धः निष्पत्तिरिति अनुमितिरूपा भावुकचर्वणेति बोध्यम्। तदित्थं भट्टलोल्लटमते रामाद्यनुकार्ये साक्षाद्रसोत्पत्तिर्नटे ताद्रूप्यानुसन्धानादेव तस्य साश्चर्यानुभवेन सामाजिकानां चमत्कृततेति शङ्कुकमते न रसोत्पत्तिः किन्त्वनुमितिरेव। रामोऽयमिति विशिष्टप्रतिपत्त्या गृहीतेन नटेन काव्यानुसन्धानाच्छिक्षाभ्यासाच्चात्मीयत्वेनेव प्रकाशितैः कृत्रिमैरपि तथानभिमतैर्विभावादिभिर्नटे स्थायित्वेनानुमीयते रत्यादिः। स एव रसः। स च भावुकैर्वासनावशादास्वाद्यत इति शङ्कुकस्यानुमितिपरव्याख्या। तत्र लोल्लटो हि वेदान्ती। वेदान्तिमते जगन्नान्यत्केवलमाध्यात्मिकप्रतीतिरेव। यथा हि रज्जौ सर्पप्रतीत्याऽविद्यमानेऽपि तत्र सर्पे तज्जन्यभूयोत्पत्तिस्तथैव नटे रामादिप्रतीत्या तदविद्यमानेऽपि रत्यादौ विद्यमानप्रतीत्या सहृदये चमत्कारप्रतीतिरिति। शङ्कुकस्तु नैयायिकः। नैयायिका हि प्रत्यक्षेऽप्यनुमानस्य गन्धं जिघ्रन्ति। अनुकार्याभिन्नत्वेन ग्राह्ये नटे रसोद्बोधानुमानाद् भावुकैः स्ववासनावशात्तदास्वाद्यत इति तस्यानुमानपरा व्याख्या। यथा हि नटे रत्याद्युत्पत्तेः साश्चर्यानुभव एव भावुकचमत्कारहेतुरिति लोल्लटकथनं न यथार्थं स्पृशति, वस्तुतो रसोद्बोधपात्रस्य सामाजिकस्योपेक्षणात्तथैव शङ्कुकमतमपि न दोषरहितम्। पररतिविषयानुमितिर्न भोगजनिकेति। अस्मै तावदेव वैशिष्ट्यं यन्मतमिदं यथाकथञ्चिदपि भावुकानां रसास्वादनमधिवक्ति।

[वृत्तिः] न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यतेऽपितु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः।

[कमला०] विशेषदर्शनेन च बाधाद्रसानुमित्यसम्भव इति दोषं मनसिकृत्य युक्तिपक्षमाह न ताटस्थ्येनेति। भट्टनायकः प्रागुक्तौ पक्षौ सिद्धान्तञ्च दूषयति। विकल्प्य रसस्य हि प्रतीतिरनुमितिरुत्पत्तिरभिव्यक्तिर्वा साऽप्येकैका रामादिगतस्य वा नटनिष्ठस्य वा सामाजिकनिष्ठस्य वेति नव भेदाः। तत्र ताटस्थ्येन स्वभिन्न-

रामनटादिगतत्वेन रसो न प्रतीयते नानुमीयते नोत्पद्यते न वाऽभिव्यज्यते। प्रतीतिस्त्वानुमितिः रामस्य तदानीमसत्त्वेनाश्रयासिद्धेः नटस्य च सीताद्यसम्बन्धितत्वात् अन्यथातिप्रसङ्गात् रसस्य परगतत्वेनारसनीयत्वापत्ते सीतादीनामसत्त्वेनोत्पादकताद्ययोगाच्च। नात्मेति। आत्मगतत्वेन सामाजिकगतत्वेन रसो नानुमीयते नोत्पद्यते नाभिव्यज्यते इत्यावृत्त्या योऽयं सीतादीनामतत्सम्बन्धित्वात्। नोत्पत्तिः सीतादीनां तदानीमभावात् नाभिव्यक्तिः रसस्य प्रागसिद्धेः। किञ्च न मयि रस इत्येवं रसधीः विभावादीनां रसमात्रबोधकत्वेनात्मबोधकत्वात्, न च सुखबोधे आत्मनो विशेषणविशेष्यभावाद्रसबोधेऽपि तथेति वाच्यं विभावादिप्रत्याय्यस्य रसतयाऽऽत्मनोऽपि रसत्त्वापत्तेः। ननु विभावादिभिर्न रसवत्साध्यतयाऽऽत्मा प्रतीयते किन्तु पक्षतयेति चेन्न अनुमित्यसिद्धौ साध्यत्वस्यैवासिद्धेः सिद्धौ चानुमितिवैयर्थ्यात् अन्योन्याश्रयापत्तेश्च। अतो न रसस्यानुमित्यादीति सिद्धम्। कथं तर्हि रसधीरत आह अपित्विति। अभिधा शक्तिस्ततो द्वितीयेन भिन्नेन भावकत्वं रूपेण व्यापारेण भाव्यमानो विषयीक्रियमाण इत्यर्थः। अयम्भावः—न सीतादयः शक्त्या सीतात्वेन प्रतीताश्चमत्कारकारिणः आराध्यत्वज्ञानस्य प्रतिबन्धकत्वात् किन्तु स्त्रीत्वादिरूपेण। अतः सीतात्वे शक्त्या मैथिलीत्वोपस्थितावपि तां विहाय भिन्नेन स्त्रीत्वादिना रूपेण भावकत्वम्। तदेतदाह विभावादीति। विभावादेः सीतादेः साधारणीकरणं सम्बन्धिविशेषास्पर्शः आत्मा स्वरूपं यस्य तेन भावकत्वव्यापारेणेत्यर्थः। स्थायी अनुच्छिद्यमानः। भोगेन साक्षात्कारेण भुज्यते विषयीक्रियते कामिनी भावनयेव तत्साक्षात्कारः। केचित्तु अभिधा भावकत्वं भोगश्चेति शब्दस्य त्रयो व्यापाराः। अन्यत्राभिधैव व्यापारः। काव्यादौ तु द्वितीयेन व्यापारेण साधारणीकृतैर्विभावाद्यैस्तृतीयव्यापारेण भोगेन भुज्यत इत्यर्थमाहुः। परमानन्दस्तु अभिधालिङ्निष्ठाप्रवर्तिका द्वितीया तज्जातीया विभावादिनिष्ठेत्यर्थमाह। तद्भ्रान्तिविलसितं भोगस्वरूपमाह सत्त्वेति। सत्त्वं गुणस्तस्योद्रेको रजस्तमसोरसम्बन्धः। तेन प्रकाशा स्फुटा आनन्दमयी या संवित् ज्ञानं तत्र या विश्रान्तिर्योगिनां विगलितवेद्यान्तरत्वेन स्थितिस्तत्सतत्वेन तत्समानत्वेन यद्वा स्थितिस्सतत्वं स्वरूपं यस्य तेन भोगेन समाध्यवस्थातुल्येनेत्यर्थः। तत्त्वं सतत्वमिति पर्यायः। एतच्च पञ्चपादिकायां स्पष्टम्। अत्रेदं तत्त्वम्—यथा सुरभिचन्दनमित्युपनीतं सौरभं चाक्षुषं ज्ञानगोचरस्तथा समाधितुल्यभावेनोपनीतरामादिनिष्ठा रतिः सामाजिकमनसि चिदानन्दसाक्षात्कारविषयतामापन्नो रस इति।

[ सरि० ] रससम्बन्धोऽनुकार्येण रामेण वा रामोऽयमिति विलक्षणप्रतिपत्त्या ग्राह्येन नटेन किं न स्यात्किन्तु पररतिविषयाऽनुमितिर्न भोगजनिकेति तत्रारुचिं कृत्वा साङ्ख्यमतानुयायी भट्टनायकः स्वसिद्धान्तानुकूलो भरतसूत्रस्य विभावेद्यादेर्भुक्ति-

परकां व्याख्यां प्रस्तौति। यद्यपि सुखदुःखादिवस्तुतोऽन्तःकरणस्यैव धर्मो न त्वात्मनः तथापि तस्यान्तःकरणेन सम्बन्धसत्त्वात्तस्मिन् सुखदुःखादीनामौपाधिकी प्रतीतिर्भवति। तथैव भावुकेऽसत्त्वस्यापि रसस्य स भोगमनुभवति। तेन सूत्रगत-संयोगपदं भोज्यभोजकभावसम्बन्धपरं निष्पत्तिपदञ्च भुक्तिपरमिति भट्टनायकपक्ष-हृदयम्। तन्मतेन रसो हि न रामाद्यनुकार्यगतत्वेनोत्पद्यते, न च नटगतत्वेनानुमीयते, न वा सामाजिकगतत्वेन व्यज्यते च। रामगतरत्यादिर्न सामाजिकानां भोगजनिकेति आद्यमतस्याग्राह्यता। अनुमितिर्नास्वादहेतुरिति द्वितीयस्यानुपादेयता। प्रागभाववत एवाभिव्यक्तेः सम्भवाद्रसस्य प्रागभावाभावात्तथा मते सर्वेषामेवाभिव्यक्तिप्रसङ्गाच्च तृतीयस्याप्यग्राह्यता। तेन हि विभावादिभिः संयोगाद् भोज्यभोजकभावसम्बन्धाद्र-सस्य निष्पत्तिर्भुक्तिरिति तन्मते सूत्रार्थः। तदेव वृत्तिकृत्संक्षेपादनुवदति न ताट-स्थ्येनेति। विभावादिभिर्भाव्यमानो रामादिगतरत्यादिः सामाजिकसाक्षात्कार-विषयो रस इत्याशयः। तदेवाऽऽह रसः शृङ्गारादिः। ताटस्थ्येन न प्रतीयते न उत्पद्यते आत्मगतत्वेन न प्रतीयते न उत्पद्यते न अभिव्यज्यते इति पद-व्यवस्था। रसप्रत्ययासन्नास्त्रयः रामादिरनुकार्यः नटोऽनुकर्ता सामाजिको भावुक-श्चेति। तेषु हि किंगतत्वेन रसः प्रतीयतामित्युच्यते। ताटस्थ्येन परगतत्वेन। तटस्थ उदासीनः। अत्रानुकार्यो रामादिरनुकर्ता नटश्च सामाजिकानां कृते तटस्थः। ताटस्थ्येनेति तत्सम्बन्धित्वेन। **न। प्रतीयते** अनुमीयते तथा भाने मात्सर्यस्य सत्त्वात् **न। उत्पद्यते** जायते निमित्तेन विभावादिना तन्नाशेऽपि तत्सत्त्वप्रसङ्गात्। **न अभिव्यज्यते** अभिव्यक्तो भवति प्रागसिद्धेः। पूर्वसिद्धो हि व्यज्यते यथा दीपेन घटः। न च रसः पूर्वसिद्धः। तथा सत्यकार्यत्वप्रसङ्गः स्यात्। **आत्मगतत्वेन** सामाजिकानां स्वगतत्वेन च। **न प्रतीयते** सीतारत्यादेः स्वगतत्वेन भाने व्रीडाऽऽतङ्काद्याविर्भावप्रसङ्गात्। तथा प्रतीतौ भ्रमत्वमेव स्यात्। **न उत्पद्यते** असन्निहितेभ्यः सीतादिभ्यः सामाजिकरत्याद्यनुत्पादात् आराध्यत्वज्ञानस्य प्रति-बन्धकत्वाच्च। रसस्य कार्यत्वप्रसङ्गाच्च। **न अभिव्यज्यते** व्यञ्जनयोपस्थाप्यते आत्मगतत्वेन। सिद्धस्यैव व्यङ्ग्यत्वाद्रसस्यासिद्धत्वाच्च। प्रदीपे तु न तावन्नट-गतत्वेन न रामगतत्वेनानुमीयते न चोत्पद्यते न सामाजिकगतत्वेन च व्यज्यत इति। तत्रापि नटगतत्वेन नानुमीयते रामगतत्वेन नोत्पद्यते इति प्रभायां वैद्यनाथ-महाभागाः। गोकुलनाथास्तु ताटस्थ्यात्मगतपदयोस्त्रिभिरेवान्वयमधिवक्ति। अन्वये यस्मिन् कस्मिंश्चिदपि सत्यपि आशयस्त्वयमेव यद्रत्यादेः न परगतत्वेन ( ताटस्थ्येन ) नैवात्मगतत्वेन च रसत्वम् आद्ये अरस्यत्वाद् द्वितीये व्रीडायोगात्। तेन हि न हि रसोऽनुकार्ये रामे उत्पद्यते न च तद्धीग्राह्ये नट एवानुमीयते न वा सामाजिके एव

व्यञ्जनयोपस्थाप्यते इति पक्षत्रयस्यैव निरासः। अत्रेदमवधेयं यन्न हि रसो रामादिगतस्तेषामसन्निहितत्वात्। न च स नटगतो विभावादीनां पारमित्यात्सव्यवधानत्वाच्च। न च रामादेरात्मगनत्वेनैव न च नटस्यात्मगतत्वेनैव न वा सामाजिकस्यैवात्मगतत्वेन च रसः। सामाजिकगतोऽपि रसो भाव्यत्वेनैवेति।

तर्हि किं विभावादिभ्य इत्याह अपितु इत्यादि। अपितु तद्व्यतिरिक्तमेव। काव्ये श्रव्यप्रबन्धे। नाट्ये दृश्यप्रबन्धे च। अभिधातः अभिधा वाचकशक्तिस्तस्याः। पञ्चम्यास्तसिल्। तद्धितश्चासर्वविभक्तिः। उपलक्षणाल्लक्षणातोऽपि। अभिधा लक्षणा च काव्यार्थमेवोपस्थापयतो मुख्यामुख्यव्यापाराश्रयेण शब्दस्य। द्वितीयेन अपरेण तदनुवर्तिनेत्याशयः। प्रथममभिधैव व्यापारयति तस्यास्तात्पर्यग्राहकत्वासम्भवे लक्षणा तथा करोति। तदनन्तरं हि विभावादिसाधारणीकरणात्मना—अभिधया वा लक्षणयोपस्थापितानां विभावादीनां सीतादीनां व्यक्तिविशेषसम्बद्धानामपि साधारणीकरणम् अनियतसम्बन्धित्वेनोपस्थापनम्, तदेव आत्माऽस्तित्वं यस्य तेन। अन्य सम्बन्धित्वेनासाधारणस्य विभावादेः स्थायिनश्च व्यक्तिविशेषांशपरिहारेणोपस्थापनं साधारणीकरणं तदात्मनेति बालबोधिन्याम्। भावकत्वव्यापारेण भावयति स्मारयति अनियतसम्बद्धत्वेनोपस्थापयतीति भावकस्तस्य भावस्तत्त्वं तद्रूपेण व्यापारेण क्रियया। भाव्यमानः सम्बन्धिविशेषास्पर्शतया सर्वविषयत्वेन पुनः पुनः स्मार्यमाणः। स्थायी स्वभिन्नविरुद्धाविरुद्धभावाद्यनुच्छेद्यो रत्यादिः। सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन सत्त्वस्य सत्त्वगुणस्य निर्विकारकं मनः सत्त्वं तस्य उद्रेको रजस्तमसी अभिभूयाविर्भावस्तेन यः प्रकाशः ज्योतिः स एव आनन्दमयी दुःखादिरहिता या संविज्ज्ञानं तस्या विश्रान्तिर्वेद्यान्तरसम्पर्काभावस्तत्सतत्त्वेन तत्स्वरूपेण यद्वा सत्त्वोद्रेकः रजस्तमोभ्यामसम्बद्धत्वेन सत्त्वगुणस्य य आविर्भाव या प्रकाशा स्फुटा आनन्दमयी चित्स्वरूपा संविज्ज्ञानं तत्र ता विश्रान्तिर्विगलितवेद्यान्तरत्वेन स्थितिस्तत्सतत्त्वेन समानत्वेन वा यथा हि रजस्तमसस्यभिभूय सत्त्वस्योपस्थित्या तत्प्रकाशेन यादृशस्यानन्दमयस्य ज्ञानस्य विगलितवेद्यान्तरत्वेनावस्थानं तथाविधेनेति तत्स्वरूपेण। भोगेन अनुभवेन। साक्षात्कारेण वा उद्योतकारमते भोजकत्वव्यापारेण। येन रजस्तमसोस्तिरस्कार आनन्दांशावरणभङ्गो विषयान्तरतिरस्कारश्च स व्यापारो भोजकत्वमित्युद्योतकाराः। भुज्यते विषयीक्रियत इति। अयमभिसन्धिः रसो हि न रामाद्यनुकार्यगतत्वेनानुमीयते नोत्पद्यते नाभिव्यज्यते न च नटगतत्वेन न वा सामाजिकगतत्वेनैव। वस्तुतस्तु रसस्य नानुमानं नोत्पादनं नाभिव्यञ्जनञ्च। आनन्दस्य प्रत्यक्षविषयत्वाद्विभावादीनां हेतूनामयथार्थत्वाद्रसस्य पूर्वासिद्धत्वाच्च। तर्हि को रस इत्यपेक्षायामुच्यते

असत्या अपि रत्यादेरलौकिकत्वादुपपन्ना आस्वाद एव रसः। तदास्वादनमेव रसनिष्पत्तिः। रसास्वादनं सामाजिकैरेव क्रियते न रामादिना तेषां तत्रासन्निहितत्वात् न नटेन तस्य हि शिक्षाभ्यासादिवलाद्रामादिस्वरूपता न तु यथार्थेन। यदि हि तदोपस्थितया नटेन रसास्वादः क्रियते चेत्तदपि सामाजिकरूपेणैव न तु नटत्वेन। यथोक्तं धनञ्जयेन —

'रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात्।
नानुकार्यस्य वृत्तत्वात्काव्यस्यातत्परत्वतः॥
द्रष्टुः प्रतीतिर्व्रीडेर्ष्या रागद्वेषप्रसङ्गतः।
लौकिकस्य स्वरमणीसंयुक्तस्यैव दर्शनात्॥
धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः।
विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते॥
त एव च परित्यक्तविशेषा रसहेतवः।
क्रीडतां मृण्मयैर्यद्वद् बालानां द्विरदादिभिः॥
स्वोत्साहः स्वदते यद्वच्छ्रोतृणामर्जुनादिभिः।
काव्यार्थभावनास्वादो नर्तकस्य न वार्यते॥" इति।

स इति रत्यादिः। रामादीनां विभावा एव परित्यक्तविशेषसम्बन्धाः रसहेतवः। नर्तकस्य तु सामाजिकत्वेनैवास्वादो न तु नटत्वेन काव्यस्यातत्परत्वात्। तच्चेत्थम्— अभिधया वा तद्बाधे लक्षणया तदनुगमा अर्थस्योपस्थापनं लोके काव्ये च सममेव। लोके तत्रैव विश्रान्तिः। किन्तु काव्ये काव्यार्थोपस्थित्यनन्तरं शब्दस्य भावकत्वव्यापारेण विभावादयः परित्यक्तव्यक्तिविशेषसम्बन्धत्वेन अनियतसम्बन्धरूपेणोपस्थाप्यन्ते। यथा हि सीता अभिधया मैथिलीत्वेनोपस्थिता लोके काव्ये च तावदवधौ रामस्यैव रतिहेतुर्नान्यस्य। लोके तावतैव विश्रान्तिः। काव्ये तु शब्दस्य भावकत्वव्यापारेण तस्या राममात्रसम्बद्धतां विस्मार्य कामिनीमात्ररूपेण साधारणीकृत्योपस्थाप्यते। तथा सति तस्याः स्त्रीत्वसामान्यविचारणया न तत्र व्रीडेर्ष्यारागद्वेषप्रसङ्गः। तादृशैः साधारणीकृतस्वरूपैर्विभावादिभिः रत्यादिः स्थाय्यपि तथैव भाव्यते। तथा भावितो यो रत्यादिः स सामाजिकैः सत्त्वस्योद्रेकेण यः प्रकाशः स एव य आनन्दस्तस्य ज्ञाने या विगलितवेद्यान्तरस्थितिस्तत्तुल्येन साक्षात्कारेण विषयीक्रियते। एवं "तथा समाधितुल्यभावेनोपनीतरामादिनिष्ठरतिः सामाजिकमनसि चिदानन्दसाक्षात्कारविषयतामापन्नो रस" इति कमलाकर्याम्। केचित्त्वित्थं व्याख्यान्ति—रसो हि किन्तु रत्यादिरेव साधारणत्वेन भावितो विगलितवेद्यान्तरसजातीयेन साक्षात्कारेण विषयीकृत इति। रसो हि नोत्पद्यते

अत्यासन्नेषु त्रिषु अनुकार्यस्य तत्रासन्निधानान्नटस्य अतत्परकाव्यार्थत्वेनानुकरणमात्रधर्मत्वाच्छिक्षाभ्यासबलेन सामाजिकस्य विभावादीनामयथार्थत्वाद् व्रीडादियोगाच्च । रसो न प्रतीयतेऽनुमीयतेऽनुकार्यस्य व्यतीतत्वेन रसवत्त्वदर्शनासम्भवान्नटस्य विभावादीनामतद्विषयत्वेन रसवत्त्वासम्भवात्सामाजिकस्य परगतरत्यादेर्मात्सर्ययोगाच्च । रसो नाभिव्यज्यतेऽनुकार्यस्य यथार्थोपस्थित्यभावान्नटस्य विभावादीनामविषयत्वात् सामाजिकस्य प्रागसिद्धत्वात् सर्वेषामेव च । तेन हि रसनिष्पत्तिरिति नोत्पत्तिर्नानुमितिर्न चाभिव्यक्तिरपितु विशिष्टभुक्तिरेव । लोके हि शब्दस्याभिधैव व्यापार उपलक्षणाल्लक्षणाऽपि तदनुवर्तिनी । काव्ये अभिधा ( यत्र लक्षणाऽपि समावेशिता ) भावकत्वं भोजकत्वञ्चेति शब्दस्य त्रयो व्यापाराः । यत्राभिधया तद्बाधे लक्षणया काव्यार्थो विभावादिरुपस्थाप्यतेऽनुकार्यगतत्वेन । स च भावकत्वव्यापारेण विशिष्टसम्बन्धविस्मारणपूर्वकमनियतविषयत्वेन साधारणकृत्योपस्थाप्यते । तथाविधेन साधारणीकृतेन विभावादिना अनुकार्यगतत्वेनाभिधया वा लक्षणयोपस्थापितो रत्यादिरपि साधारणविषयत्वेनोपस्थाप्यते । तथा सर्वविषयत्वेनोपस्थापितो रत्यादिः विगलितवेद्यान्तरसत्त्वप्रधानप्रकाशस्वरूपज्ञानसजातीयेन साक्षात्कारेण भोजकत्वव्यापारेण भुज्यते आस्वाद्यत इति । तेन हि रसो भावकत्वव्यापारेण भावितविभावादिभावितो रत्यादिरेव तस्या निष्पत्तिस्तु सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयवेद्यान्तरस्पर्शशून्यज्ञानसदृशेन भोगेन भुक्तिरेवेति । तेन संयोगाद् भोज्यभोजकभावात्सम्बन्धात् निष्पत्तिर्भुक्तिरेवेति ।

अनुकार्ये रसानुभूतिसमर्थकोत्पत्तिवादापेक्षयाऽनुकारिणि रसानुभूतिसमर्थकानुमितिवादापेक्षया च सामाजिकगतरसानुभूतिसमर्थकोऽय सिद्धान्तो वास्तविकत्वं भजते । भावकत्वव्यापारो हि व्यञ्जनाया नामान्तरमेव । अनुकार्ये उत्पन्नस्य रसस्य साश्चर्यानुभव एव सामाजिकानां चमत्कारहेतुरिति पक्षस्य ग्राह्यता सन्दिग्धैव । परं रसवत्त्वं दृष्ट्वा पर आनन्दमनुभवतीति व्यवहारविरुद्धम् । तत्रानन्दापेक्षया ईर्ष्यायाः प्राधान्यात् । नटं रसवत्त्वमनुमीय तद्गतरसं वासनया सामाजिकैश्चर्व्यत इत्यपि न चारु । आनन्दस्य प्रत्यक्षमात्रविषयत्वात् । तेन हि अनियतविषयीकृतैर्विभावादिभिर्भावितो रत्यादिरेव रसः । स चानुकार्यगतोऽपि साधारणीकरणेन सामाजिकानामपि ग्राह्यः । यच्च भावकत्वभोजकत्वव्यापारयोः परिकल्पनमप्रामाणिकमिति कथ्यते तत्खण्डनधियैव । प्रामाणिकत्वं तु प्रकरणोपभोगेन सिध्यति न प्रसिद्धेः । वस्तुतस्तु नापि स्याद्भावकत्वं वा भोजकत्वमेतावत्तु सिद्धमेव यदात्मत्वरामत्वपरिहारपूर्वकं साधारणतया विभावादीनां स्फुरणं विना न रसास्वादः ।

आस्वादप्रतिकूलवस्तुतिरोभावेन तदनुकूलप्रतिसन्धानमेव भावनम्। तच्च येन केनापि व्यापारेण स्याद्यदि भावकत्वव्यापारो नेष्टः। यावच्चेतसि रत्यादिभावना नात्मगतत्वेन न परगतत्वेन किन्तु साधारणविषयत्वेन न भवति तावन्नास्वादसम्भवः। विगलितवेद्यान्तरत्वे एव तदास्वादसम्भवः। तेन हि अनुकार्यगतत्वेनोपवर्णिता रत्यादिः साधारणविषयत्वेन चेतसि सामाजिकानां भावितो यो विगलित-वेद्यान्तरत्वेन तैरास्वाद्यते स एव रसपदवाच्य इति कथनं साधु। किन्तु विभावादीनामेवोत्कर्षात्तेषामगोचरत्वे कथं रसोत्कर्ष इत्यस्य समाधानभावो ह्यस्य न्यूनता। अनुपस्थिता अपि विभावादयो व्यञ्जनयाऽऽक्षिप्यन्त इति अभि-व्यक्तिवादे स्पष्टम्।

[ वृत्तिः ] लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिक-विभावादिशब्दव्यवहार्यैः 'ममैवैते' 'शत्रोरेवैते' 'तटस्थस्यैवैते' 'न ममै-वैते' 'न शत्रोरेवैते' 'न तटस्थस्यैवैते' इति सम्बन्धविशेषस्वीकारपरिहार-नियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्म-तया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणो-पायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्क-शून्याऽपरिमितभावेन प्रमात्रा सकलहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वा-ङ्गीणमिवालिङ्गन् अन्यत्सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन्न-लौकिकचमत्कारकारी शृङ्गारादिको रसः।

स च न कार्यः। विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात् नापि ज्ञाप्यः सिद्धस्य तस्यासम्भवात्। अपितु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत् न क्वचिद् दृष्टमित्यलौकि-कत्वसिद्धेर्भूषणमेतन्न दूषणम्।

चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिक-प्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वा-त्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्ययोऽप्यभिधीयताम्।

तद्ग्राहकञ्च न निर्विकल्पकं, विभावादिपरामर्शप्रधानत्वात्। नाऽपि सविकल्पकम्, चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्।

उभयाभावस्वरूपस्य चोभयात्मकमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः ।

[ कमला० ] अस्मिन् पक्षे प्रतीतिभिन्नभोगाभावादर्थादभिव्यक्तेरेवाङ्गीकारा-द्रसस्य चोत्पत्त्यभावे नित्यत्वापत्तेरभिव्यक्त्यभावे चासत्त्वापत्तेरुच्याऽभिव्यक्तिपक्षं सिद्धान्तयन्नाह लोके इति । लोके काव्यनाट्यभिन्नस्थले प्रमदाकटाक्षनिर्वेदादिभिः कारणकार्यसहकारिभिः स्थायिनो रत्यादेश्चित्तवृत्तिविशेषस्यानुमानेऽभ्यासः पौनः-पुन्यं तेन पाटवं प्रज्ञातिशयस्तद्वतां सामाजिकानामित्यग्रे सम्बन्धस्तेन रसिका एव रसास्वादे योग्या न तु विरक्ता यत्यादय इत्युक्तम् । अनुमानञ्चायमेतद्विषयरतिमान् तत्कार्यकटाक्षादिभावति यो नैवं स नैवं यथा विरक्त इति । सामाजिकानां वासना रत्यनुभवजन्यः संस्कारस्तदात्मतया स्थितः सूक्ष्मतया स्थित इत्यन्ये । स्थायी अबाध्यो रत्यादिकः । तेन बाध्यस्यान्याङ्गस्य वा रत्यादेर्न रसत्वं किन्तु सञ्चा-रित्वमिति ज्ञेयम् । रत्यादिकः प्रमात्रा बोध्रा साधारण्येन गोचरीकृतः शृङ्गारादिको रस इत्यन्वयः । रसो ज्ञेय इति शेषः । ननु कारणादिज्ञाने क्वचिन्न रसोदयोऽत उक्तं तैरेवेति । कारणादिभिरेव काव्ये नाट्ये च कारणत्वत्यागेन प्रतीतैरभिव्यक्त इत्यन्वयः । विभावादिशब्दव्यपदेशे हेतुर्विभावनादीति । ईषत्स्फुटं स्फुटतराः प्रकाशा एव विभावनादयो व्यापाराः । यथा वर्णक्रमेण स्फोटस्योत्तरोत्तरमभिव्यक्तिप्रकर्षस्तथा रसस्यापि तत्तदंशाभिव्यक्तिरित्यर्थः । तदुक्तम् —

> 'विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः ।
> प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ॥' इति ।

तेनैवं प्रथमोल्लासे स्फोटदृष्टान्तः । ननु सीतादीनां सामाजिकैरसम्बन्धात्कथं रसोदयोऽत आह साधारण्येनेति । काव्यश्रवणादिमहिम्ना स्वस्य रामादिभेदाग्रहे सम्बन्धिविशेषास्पर्शेन प्रतीतैः सीतात्वादिज्ञाने ह्याराध्यत्वज्ञानान्न सामाजिकानां रतिः । मैथिलीत्वादित्यागेन तु कान्तामात्रज्ञानाद्युक्तो रसोदयः । यत्र सीतादिधी-स्तत्रानौचित्यान्नैव रसोदयः । मालतीमाधवादावेव स इत्यर्थः । साधारण्यमेवाह ममैवेति । आद्यत्रये सम्बन्धिविशेषस्वीकारनियमः । अन्त्यत्रये तत्परिहारनियमः । यद्वा ममेति स्वीकारः न ममेति परिहारः ममैवेति तयोर्नियमः । तेषामनध्यव-सायादनिश्चयात् स्वात्माप्रियः मित्रस्य स्वपक्षनिक्षेपान्न पृथगुक्तिः । शत्रुर्द्वेष्यः । तटस्थ उभयेतरः । वर्णनीयवैविध्यात्त्रितयोपादानमन्यसम्बन्धित्वे हि स्वासम्बन्धा-दनौचित्याच्च न रतिः स्यादतस्तदनिश्चयादित्युक्तम् । ममैवेति स्वसम्बन्धितत्वग्रहो यद्यपि रसानुगुण एव तथापि तत्प्रकाशनेन नाट्ये काव्ये चानौचित्यान्न रस्यतेति मदीयः पन्थाः । तादृशी च प्रतीतिर्नाट्ये प्रत्यक्षा काव्ये शब्दात् । वासनात्मतया

सूक्ष्मतया। विभावादिसाधारण्येऽपि कथं स्थायिनः साधारण्यमत आह नियतेति। नियतः प्रमाता सामाजिकः। साधारणोपायो विभावादिसाधारण्यम्। तत्काले रसधीकाले। विगलिता अज्ञाता नष्टा वा या परिमितप्रमातृता पुरुषविशेषनिष्ठता तद्वशेनोन्मिषित उदितो वेद्यान्तरं स्वातिरिक्तं वेद्यते न सम्पर्को विषयताऽऽख्यः सम्बन्धस्तेन शून्यो रहितः अपरिमितः साधारणो भावो रत्यादिर्यस्य तेन प्रमात्रे-त्यन्वयः। परमानन्दस्तु परिमितश्चासौ प्रमाता च तस्य भावस्तत्ता कर्मधार-योत्तरतल्प्रत्ययेन परिमितत्वप्रमातृत्वयोरेकाश्रयत्वं सम्बन्धस्तस्य विगलितं विगलनं भावे क्तः अर्द्धपिप्पल्यादित्वाद्विगलितपदे पूर्वनिपातस्तद्वशात् उन्मिषितमुन्मेषणं ज्ञानम्। अत्रापि भावे क्तः। तस्य वेद्यान्तरेण सम्पर्को विषयताऽऽख्यः सम्बन्धस्तच्छून्यः स्वमात्रविषयो न प्रमात्रादिविषय इति यावत्। अपरिमितभावस्साधारणत्वं प्रमात्रादिप्रतीतौ ह्यसाधारण्यं स्यात्। तेनोन्मिषेण पूर्वनिपातः पूर्ववत्। तेन गोचरीकृतमित्यर्थमाह। यद्वा परिमितत्वेन साधारण्येन गोचरीकृत इति सम्बन्धः। मानमाह संवादेति। संवाद ऐक्यरूप्यम्। अन्यथा तन्न स्यादित्यर्थः। ननु वेद्यान्तराभावे ज्ञेयज्ञानयोरभेदाद् विषयविषयिभावो न स्यात्तत्राह स्वाकार इवेति। स्वप्रकाशज्ञानवादिमते साकारज्ञानवादिमते चैतत्। स्व ज्ञानं तस्याकारो विषयः स यथा ज्ञानरूपादभिन्नोऽपि ज्ञानस्य विषय इत्यभेदेऽपि विषयविषयिभाव-स्तथाऽत्र स्वप्रकाशो रसोऽपि स्वेनैव गोचरीक्रियत इत्यर्थः। प्रमाता वृत्त्यवच्छिन्नश्चा-चित्त्वेन भिन्नोऽपीत्यर्थः इति कश्चित्। तन्न, प्रक्रमविरोधात्। लोके कथमेवं न इत्यत आह चर्व्यमाणेति। आनन्दांशस्य व्यज्यमानतावृत्तिर्वा प्राणो यस्य रसत्व-निर्वाहकत्वात्। अन्यथा रसशृङ्गारादिपदात् सुखोदयः स्यादित्यर्थः। चर्वणैव कुतो न सदाऽत एवाह विभावादीति। विभावादिज्ञानं जीवितस्य रसस्वरूप-स्यावधिर्यस्य तत्सत्त्वे सत्त्वात् तन्नाशे नश्वरत्वाच्च। तेन तदभावान्न चर्वणेत्यर्थः। तर्हि विभावादिज्ञानस्य प्रत्येकं रसत्वं स्यात्तत्राह पानकेति। पानके अम्लखण्ड-मरिचकादीनां चित्ररसवत्संवलितानां रसत्वमित्यर्थः। नाट्ये वृत्तिविषयावच्छिन्न-चैतन्यनिष्ठानन्दांशाभिव्यक्तेः पुर इवेत्युक्तम्। काव्येऽपि शब्दादपरोक्षवादे वृत्ति-द्वारा तदभिव्यक्तानन्दस्य प्रमातृचैतन्येनैकीभावहृदयमिवेत्युक्तम्। यद्वा काव्ये आह हृदयमिति। शब्दानुवृत्त्यादौ ह्यन्तरेव वृत्तिर्घटमहं न जानामि इत्युभयावच्छेदेनानुभूय-मानस्याज्ञानस्यान्तर्वृत्त्याऽऽवरणभङ्गेन मौढ्यनाशेऽपि विषयासम्बन्धेन तदावरण-भङ्गाभावाज्जाड्यानिवृत्तेः। परोक्षत्वं प्रवेशाभावात्प्रविशन्निवेत्यन्वयः। सर्वाङ्गीणं सर्वाङ्गव्यापनं यथा स्यात्तथा पादे सुखमितिवत् वृत्त्या प्रादेशिकत्वेऽपि ब्रह्मानन्दस्य निरतिशयत्वेन सर्वाङ्गीणमिवेत्युक्तम्। पुर इवेत्याद्यनुभावयन्नित्ययं तेनालौकिकत्व-

मुक्तम्। अलौकिकः कारणादिधीमात्रादजन्यः। नन्वस्तु शृङ्गारे सुखास्वादः करुणादौ तु कथं सः प्रवृत्तिश्च प्रत्युत बीभत्सादौ वान्तादिसम्भावनाऽपीति चेन्मैवम्। अन्यदा दुःखजनकस्याऽपि सुरते कान्ताकृतस्य मुष्टिताडनकेशग्रहादेरिव काव्ये नाट्ये च विभावादिमहिम्ना दुःखांशतिरोधाने तत्सम्भवात्। न चैवमेक-रसापत्तिर्विभावादिभेदेन तन्नानात्वात्। ननु भरतसूत्रे पञ्चम्या हेतुत्वमुक्तम्। तच्च कारकत्वं ज्ञापकत्वं वा स्यात्। तत्किं रसः कार्यो ज्ञाप्यो वाऽत आह स चेति। हेतुमाह विभावादीति। तत्पदे तज्ज्ञानं विभावादिज्ञानानां समवाय्यसमवायि-कारणत्वाभावान्निमित्तकारणत्वं वाच्यम्। ततश्च तन्नाशेऽपि रसधीः स्यात्। न हि निमित्तकारणनाशात्कार्यनाशो दृष्टः। द्वित्वादौ तु नित्यत्वादपेक्षाबुद्धिर-भिव्यञ्जिका न तु निमित्तकारणम्। तेन तत्र न व्यभिचारः। प्रकृते तु विभावादि-ज्ञाने सत्येव रसोदयो न तु तन्नाशे। अतो न तज्जन्यः। तत्त्वं तु रसाद्यवच्छिन्न-चैतन्यस्य रसत्वात्स्वप्नेऽपि तस्य कार्यता। यद्यपि घटाकारवृत्त्यवच्छिन्नचैतन्यस्य विशिष्टरूपेण नाशोऽस्त्येव, अन्यथा ततः स्मृत्यनापत्तेः। तथाप्यत्रानन्दांशस्य विशेषस्य न नाश इति हृदयम्। विशिष्टरूपेण तस्य कार्यता त्विष्टैव। यथा वक्ष्यति कार्योऽप्युच्यतामिति। नापि ज्ञाप्य इति स्वभिन्नप्रत्यक्षादिवेद्यः। आगन्तुकज्ञान-विषयो वा नेत्यर्थः। तत्र हेतुः सिद्धस्येति। पूर्वं सिद्धं हि घटादिप्रदीपादिना व्यज्यते। प्रत्यक्षादिना वा विषयीक्रियते। न चैवं रसे विभावाद्यभिव्यक्तस्यैव रसत्वात्। अतः कथं तैर्ज्ञाप्यते ? केचित्तु न ज्ञाप्यो न फलव्याप्यः। विषयाव-च्छिन्नाभिव्यक्तचैतन्यसम्बन्धित्वं हि फलव्याप्यत्वम्। न च चैतन्यं रूपरसस्य चित्सम्बन्धित्वं सम्बन्धस्याभेदाधानत्वात्। मानान्तरसिद्धे हि घटादौ फल-व्याप्यत्वं न तु स्वप्रकाशे चैतन्ये रसे चित्सम्बन्धः इत्यर्थमाहुः। किं तर्हि विभावाद्यैः क्रियते तत्राह अपित्विति। चर्वणीय आनन्दतया प्रकाशित इत्यर्थः। स्वजन्यवृत्ति-विषयः कृत इति वा। नन्वलौकिकीयप्रक्रियेत्याशङ्क्येष्टापत्ति शङ्कोत्तराभ्यामाह कारकेति। कथं तर्हि उत्पन्नो रस इति प्रयोगस्तत्राह चर्वणेति। चर्वणावृत्ति-विषयता न चाभिव्यक्तावपि कार्यत्वज्ञाप्यत्वविकल्पः। आत्मन्यावरणस्य कल्पितत्वेन कल्पितप्रतियोगिकाभावात्तस्याधिष्ठानरूपतया हस्तगतविस्मृतसुवर्ण-वत्कार्यत्वोपचारात्तदेतदुच्यतामिति अनेनोक्तमिति वयम्। वृत्त्यवच्छिन्नचैतन्यस्य विशेषणांशे जन्यत्वम्। कथं तर्हि ज्ञाप्यत्वोक्तिस्तत्राह लौकिकेति। विशेष्यांशे ज्ञाप्यत्वमित्यर्थः। योजना तु विलक्षणपदस्य प्रत्येकमन्वयात्। त्रीण्यपि स्वस्वसंवे-दना विशेषणानि। तेनायमर्थः—लौकिकप्रत्यक्षादिप्रमाणेभ्यो विलक्षणं द्विविध-योगिज्ञानाद्वैलक्षण्ये हेतू आह ताटस्थ्येति। द्विविधयोगिनो योगमारुरुक्षव

आरूढाश्च समूलमिथ्याज्ञानानुच्छेदात् समाधौ गृहीतसर्वविषया युञ्जानपदवाच्या। पूर्वे समूलतदुच्छेदात्सर्वप्रपञ्चभेदविलयेन गृहीतात्मतत्त्वमात्रा: युक्तपदवाच्या परे। आद्यवैषम्यमाह ताटस्थ्यं भेदः अवबोधः। करणव्युत्पत्त्या प्रमाणशालिपदं जन्यपरम्। भेदप्रमाणजन्यं मितं यद्योगिज्ञानं यद्वा शालिपदं स्वरूपपरम् भेदावबोधस्वरूपयोगिज्ञानाद्विलक्षणमित्यर्थः। योगिज्ञानस्य भेदविषयत्वादस्य च स्थायिविभावादिभेदानवगाहित्वात्तद्विलक्षणं युक्तयोगिज्ञानाद्वैषम्यमाह वेद्येति। वेद्यः प्रपञ्चस्तत्स्पर्शराहित्ये भेदराहित्यं तस्यापि वेद्यत्वात्। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति श्रुतेः। अत एव स्वात्ममात्रविषयम्। परिमितेतरमखण्डाकारवृत्तिरूपं यद्योगिनां संवेदनं ज्ञानं तस्यात्ममात्रगोचरत्वादत्र च विभावादीनामपि भानात्तद्विलक्षणम्। अत एव लोकोत्तरं यत्स्वसंवेदनं स्व आत्मा संवेद्यतेऽनेनेति वृत्तिस्तद्विषयः विभावादिजन्य इत्यभिव्यक्तानन्दस्य वृत्त्या ज्ञाप्यत्वोक्तिरित्यर्थः। इतोऽप्यज्ञाप्य इत्याह तद्ग्राहकञ्चेति। तन्मात्रतेत्यर्थः। विभावादीनां विमर्शनं ज्ञानं तत्प्रधानं कारणं यस्य तत्त्वात्तज्जन्यत्वात्। न हि निर्विकल्पकं ज्ञानजन्यम् ईश्वरज्ञानजन्यत्वेऽपि जन्यज्ञानाजन्यत्वादिति भावः। परामर्शः सम्बन्धस्तद्विषयत्वादिति वा विभावादिवैशिष्ट्याविषयत्वादिति वाऽर्थः। न हि तमृते चमत्कार इति भावः। नापीति स्वभिन्नस्वविकल्पकमित्यर्थः। स्वाभिन्नं त्विष्टमेव। विभावादिसमूहालम्बनस्य रसत्वेन तेषां सम्बन्धाग्रहादित्यर्थः। न हि ज्ञानजन्यत्वमात्रेण सविकल्पता। निर्विकल्पकस्याऽपि ईश्वरज्ञानजन्यत्वेन तत्त्वापत्तेः। किन्तु विशेषणज्ञानजन्यतया न चात्र तदस्तीत्यर्थ इत्यन्ये। ननु स्वभिन्नस्वविकल्पकाद्येकैकनिषेधे उभयविषयत्वापत्तेर्विरोधोऽत आह उभयेति। निर्विकल्पकाभावः सविकल्पकं सविकल्पकाभावश्च निर्विकल्पकमभावस्याधिकरणात्मकत्वात्। अत एव रूपस्येत्युक्तम्। तेनोभयाभावे कथमुभयरूपताविरोधादित्यपास्तम्। न विरोधमिति। अनुभवबलेन तथैव स्वीकारादित्यर्थः। अभिनवेति। वलभीभुजङ्गनाम्नोभवदेवस्य संज्ञा बहुवचनं श्रीपादाख्यां सम्मतत्वमुक्तम्। भरतसूत्रे च संयोगाद्विषयतासम्बन्धात् निष्पत्तिरभिव्यक्तिरित्यर्थः। अत्रेदं तत्त्वम्। काव्यादौ दर्शनश्रवणमहिम्ना सीतात्वादिविशेषत्यागेन साधारण्येन स्त्रीत्वादिना प्रतीतैर्विभावाद्यैर्वर्जितवृत्तिरूपं रत्याद्यवच्छिन्नं चैतन्यं स्वप्रकाशमानन्दांशे भग्नावरणं विभावादिसम्भिन्नमभिव्यक्तं रसः। सा चाभिव्यक्तिः काव्यादौ शब्देनाऽप्यपरोक्षसाक्षात्काररूपैव। यत्साक्षादपरोक्षाद् ब्रह्मेति श्रुतेरिति।

[ सरि० ] साधनात्मप्रक्रियापक्षत्वेन निरूपिते लोल्लटसम्मते प्रमेयवादे शङ्कुकस्यानुमितिवादे च दृष्टदोषो भट्टनायकसाध्यात्मानुभूतिपक्षत्वेन यं

भुक्तिवादमध्यवोचत्तत्रापि रसस्य अप्रतीतेर्भोगासम्भवात् साध्यात्मत्वेनानुभूतेरेव प्राधान्ये सति शब्दान्तरेणाभिव्यक्तेरेव स्वीकारात् उत्पत्त्यभावे नित्यत्वापत्तेस्तस्य तथाऽभावाद्विभावादिजीवितावधिस्थायित्वेन विनाभिव्यक्तिं सत्त्वाभावाच्च कृताहचयोऽभिनवगुप्तपादास्तां सर्वानपि यथा लोल्लटस्य रसवदलङ्कारन्यायेन नाट्यप्रयोगमात्रं शङ्कुकस्य चित्रतुरगन्यायेन सामाजिकस्य सम्बन्धमात्रं भट्टनायकस्य त्रैगुण्यन्यायेन सामाजिकस्यानुभूतिञ्च क्रमेण शरणीकृत्य रससम्बन्धे आनन्दवर्धनाभिमतमभिव्यक्तिपक्षमुत्स्थापयन्ति सप्रपञ्चम्। तन्मते चैतन्यमेव रस। तच्च काव्ये परित्यक्तविशेषैरत एव साधारण्येनोपस्थितैर्विभावाद्यैर्वर्जितवृत्तिरूपं रत्याद्यवच्छिन्नं स्वप्रकाशमानन्दांशे विवृतावरणं विभावादिसम्भिन्नत्वेनाभिव्यक्तमेव। तेन सूत्रे संयोगादिति विषयतासम्बन्धादिति निष्पत्तिरिति अभिव्यक्तिरेवेति अभिव्यक्तेरेव सत्त्वसम्भवादसत्त्वस्य भोगासम्भवाच्च। तदेवाह वृत्तिकृद् लोके इति। लोके काव्येतरस्थले। प्रमदादिभिः प्रमदा रमणी आदिपदादुद्यानकटाक्षलज्जाप्रभृतिभिः। कारणकार्यसहकारिभिः। स्थाय्यनुमाने स्थायिनो रत्यादेरनुमानमनुमितिस्तत्र। अभ्यासपाटववताम् अभ्यासेन पुनःपुनरनुशीलनेन यत्पाटवं नैपुण्यं तद्वताम्। अनेन रसस्याधिकारिणस्त एव न तु श्रोत्रियादय इत्युक्तम्। यथोक्तं धनञ्जयेनाऽपि—

वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।
वाक्यार्थः कारकैर्युक्ता स्थायिभावस्तथेतरैः॥' इति।
'धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः।
विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते॥' इति।

काव्ये श्रव्यकाव्ये। नाट्ये दृश्यकाव्ये। चेति समुच्चये। आद्यः शब्दप्रधानोऽपरोऽभिनयप्रधानः। यथोक्तम्—

'अनुभावविभावानां वर्णना काव्यमुच्यते।
तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितम्॥' इति।

तैः प्रमदादिभिः। एव इत्यवधारणे नान्यैरिति। कारणत्वादिपरिहारेण कारणत्वं हेतुत्वं विभावानाम् आदिपदात्—कार्यत्वमनुभावानां सहकारित्वं व्यभिचारिणाञ्च तेषां परिहारेण प्रत्यक्षसम्बन्धपरित्यागेन। तेषां लौकिकत्वात्। विभावनादिव्यापारवत्त्वात् विभावनमुद्बोधनमुद्दीपनञ्च। निर्विकारे मनसि वासनात्मकतया सूक्ष्मरूपेण स्थितानां रत्यादीनां तत्र तदवस्थामुत्पाद्य आस्वादयोग्यतानयनरूपाविर्भावनं तेषामनुभवविषयीकरणमनुभावनं तेषामभितः काये सञ्चारणं व्यभिचारणम्। त एव ये व्यापाराः क्रियास्तद्वताम्। न हि नामतः एव विभावादिसंज्ञाऽपितु तत्तद्व्यापारवत्त्वादपीति। अलौकिकविभावादिशब्दव्यवहार्यैः अलौकिकैः लोकस्वभावविलक्षणैः। लोके हर्ष-शोकहेतुभ्यस्तावेव जायेते किन्तु काव्ये सर्वेभ्य एव सुखमिति तेषां लोकविलक्षणत्वम्। विभावादिशब्दैः विभावानुभाव-

व्यभिचारिभावनामधेयैः व्यवहार्यैः ग्रहणीयैः 'ममैवैते शत्रोरेवैते तटस्थस्यैवैते' इत्यादि सम्बन्धविशेषस्वीकारः। एते ममेति आत्मीयत्वेन गृहीताः शत्रोरेवैते इति परकीयत्वेन गृहीता अहितसाधकरूपेण तटस्थस्यैवैते इति हिताहितयोरौदासीन्येन गृहीता इति। त्रय एव सम्बन्धिनः आत्मा शत्रुरुदासीनश्चेति यत्रात्मोपकार्यः शत्रुरपकार्य उदासीनो यथावसरमुभयरूपेण व्यवहार्य इति। ममैवैते इति तेषां ग्राह्यत्वेन तत्र लज्जा शत्रोरेवैते इति तेषामग्राह्यत्वेन तत्र द्वेष्यता तटस्थस्यैवैते इति तेषां स्वासम्बन्धित्वेन तत्रौदासीन्यमिति सम्बन्धविशेषस्वीकारः। न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्य परिहारः। इति इत्थं मम न मम शत्रोर्न शत्रोः तटस्थस्य न तटस्थस्य इति सम्बन्धेति सम्बन्धविशेषस्य आत्मीयपरकीयादिविशिष्टभावस्य यः स्वीकारो ग्रहणं तस्य परिहारो निराकरणं तस्य नियमस्य व्यवस्थाया अनध्यवसायात्। अनिर्णयात् अनवधानादिति। अत्रेदं बोध्यम्। स्वकीयत्वेन प्रतीतेषु विभावादिषु इतरजनसन्निधौ स्वरतिप्रकाशनमनुचितमिति न प्रवृत्तिर्लज्जादिवशात्। शात्रवत्वेन प्रतीतेषु विद्वेषाविर्भावेन नास्वादसम्भावनाऽपि। औदासीन्यत्वेन प्रतीतेष्वपि स्वस्मिंस्तदभावाभिसन्धानां नास्वादावसरः। एवञ्च 'नैते कस्याऽपि' इत्यवधारणायामपि असम्बन्धिनः सत्त्वासम्भवादलीकत्वशङ्कया खपुष्पगन्धोपलब्धये प्रवृत्तिरिव न तत्र रसास्वादनप्रवृत्तिरिति न स्वीकारो नापि परिहार इत्युभयावधारणवैलक्षण्यमेव तेषामलौकिकत्वं साधारण्यञ्चेति। **साधारण्येन** मैथिलीत्वादिविशिष्टपरिचयराहित्येन कामिनीत्वमात्रावशिष्टत्वेन। प्रतीतैः अवभासितैः। तैः प्रमदादिभिः। एवेति अवधारणे। नान्यैरित्याशयः। अभिव्यक्तः उपस्थापितः। यथानूदितम्—

'परस्य न परस्येति ममेति न ममेति च।
तदास्वादे विभावादेः परिच्छेदो न विद्यते॥' इति।

अभिव्यक्त इति स्वाद्यत्वमानीयमानः साधारण्येनेति। **सामाजिकानां** भावुकानामसहृदयानां तथोद्बोधाभावात्। यथोक्तम्—

'सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु ये तत्र काष्ठकुड्याश्मसन्निभाः॥' इति।

**वासनात्मतया** संस्काररूपेणातिसूक्ष्मतया। **स्थितः** निर्विकारत्वेन स्थितिमान्। सत्त्वस्यैवाभिव्यक्तेः सम्भवान्न त्वसत्त्वस्य। **स्थायी** विभावादिजीवितावधि स्थितिमान्। **रत्यादिकः** रतिप्रभृतिचित्तवृत्तिविशेषः। **नियतप्रमातृगतत्वेन** नियतो रसास्वादयितृतया तत्परो यः प्रमाता भावुकस्तद्गतत्वेन तदवस्थितत्वेन। **स्थितः** स्थितिशाली। अपि इत्यवधारणे। **साधारणोपायबलात्** साधारणा व्यक्तिविशेष-

सम्बन्धित्वेनाप्रतीयमानाः ये उपाया विभावादयस्तेषां बलात् आधारेण। तत्कालेति तत्काले रसास्वादसमये विगलितः स्थितिमत्त्वेनाप्रतीतो यः परिमितः सीमितो विशिष्ट इति ममैतेऽहमेदेषां भोक्तेति प्रमातृभावो व्यक्तिविशेषसम्बन्धः साधारणीकरणमिति तस्य वशाद् बलात् उन्मिषितः प्रादुर्भूतः वेद्यान्तरस्य तद्भिन्नविषयस्य सम्पर्केण ज्ञानात्मसम्बन्धेन सत्यपि नैकट्ये तज्ज्ञानाभाव इति शून्यो रहितः अपरिमितः साधारण्येनोपस्थितः प्रमातृविशेषनिष्ठत्वेनाग्रहे सति तु गृह्यमाण एवेति भावश्चित्तवृत्तिविशेषो वर्णनीयतन्मयी भवनयोग्यो यस्य सः तेन तथाभूतेन। प्रमात्रा कर्तृभावत्वमापन्नेन रसास्वादयित्रा भावुकेन। सकलहृदयसंवादभाजा सकलानां समग्राणामेव भावुकानां निर्विशेषेण हृदयैः स्वान्तैः संवादमैक्यम् 'एकत्र दृष्टस्य तथाविधेऽन्यत्र दर्शनं संवादः तं भजते इति तेन तथाविधेन सर्वत्र सामान्यत्वेनोपस्थितेनेति। साधारण्येन रतित्वादिसामान्येन प्रमातृविशेषानधिकृतेनेति। स्वाकारः स्वस्य निजस्य आकार आकृतिः। इव यथा। अभिन्नः पार्थक्येनानवस्थितः रत्याद्यास्वादरूपेणैव स्थितो न तु तद्भिन्नत्वेनेति। अपि इत्यवधारणे। गोचरीकृतः विषयत्वेन गृहीतः। अत्रेदमुक्तं भवति। रसो हि रत्यादेरास्वाद एव तत्कथं पुनस्तस्यास्वाद इति वैलक्षण्यदर्शनेऽपि ज्ञानस्वरूपस्य विषयस्य यथा ज्ञेयत्वं तथैवास्यास्वादोऽपि इति। चर्व्यमाणैकताप्राणः चर्व्यमाण आस्वाद एव एकोऽद्वितीयः प्राणः स्वरूपहेतुर्यस्य तादृशः। विभावादिजीवितावधिः विभावादयः साधारणीकृता ये विभावादयस्त एव जीवितस्यावस्थितेरवधि पूर्वापरसीमा यस्य तादृशा विभावादिकालमात्रस्थायी। अनेनास्य कार्यत्वमपास्तं निमित्तकारणे नष्टेऽपि कार्यस्यावस्थानसम्भवात्। पानकरसन्यायेन पानकस्य एलामरीचशर्कराकर्पूराम्लिकादिविविधास्वादयुक्तवस्तु साधितताम्बूलपत्रस्य रसः तत्तद्वस्तुरसवैलक्षण्येन तत्समुदायसंवलनसम्पादितद्रवोऽनिर्वचनीय अयमस्यैवेति तन्न्यायेन तत्सदृशेन रूपेण। चर्व्यमाण आस्वादमानः। यथा हि एलादिविविधास्वादयुक्तवस्तुभावितस्य ताम्बूलपत्रस्य तत्तद्रसविलक्षणसमुदायसंवलनसम्पादितानिर्वचनीयास्वादेन रसमास्वाद्यते तथैव विभावादिभावितोऽपि तत्तद्वैशिष्ट्यविस्मरणपूर्वकसमुदायसंवलनसम्पादितानिर्वचनीयास्वादेनास्वाद्यमान इति। पुरः अग्रे। परिस्फुरन् विलसन्। इव इत्युत्प्रेक्षा। हृदयं स्वान्तम्। प्रविशन् अन्तर्गच्छन्। इव। सर्वाङ्गीणं सर्वाङ्गव्याप्यत्वेन सर्वाणि च तान्यङ्गानि व्याप्नोतीति 'तत्सर्वादेः पथ्यङ्गकर्म पत्रपात्रं व्याप्नोति' (५/२/७ पा० सू०) इत्यनेन खप्रत्ययः। आलिङ्गन् समाश्लिषन्। इव। अपरिमितत्वेन प्रत्यङ्गममृतमिव सिञ्चन्निति द्योत्यते। अन्यत स्वभिन्नम्। सर्वं निखिलमेव भावजातम्। स्वविषयीभूतविभावाद्यतिरिक्तमिति। तिरोदधत्

आच्छादयन् निर्विषयीकुर्वन्निति आत्मभावं नयन्नित्यपि। इव। ब्रह्मास्वादं कैवल्यावस्थाम्। अनुभावयन् अनुभवविषयीकारयन्। इव। न तु तदेव ब्रह्मास्वादे ब्रह्ममात्रस्य प्रकाशाद्रसास्वादे विभावादीनामपीति तत्सादृश्यमेव न तु तद्रूपत्वम्। तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वं सादृश्यम्' इति। ब्रह्मास्वादसहोदर इति। यद्वा इवशब्दोऽत्र यथास्थाने इति पक्षात् ब्रह्मास्वादमिवानुभावयन्नित्यपि। इत्थं हि अलौकिकचमत्कारकारी अलौकिको लौकिकवस्तुसम्पाद्यविलक्षणो यश्चमत्कारो वैचित्र्यं तत्करोति तच्छील इति। लौकिकवस्तुजन्यचमत्कारस्तु प्रतिव्यक्ति भिद्यते। एकस्यानन्दहेतुरपरस्य दुःखकारणमपि भवति। एकस्यैवापि एकदा सुखकारी अन्यदा तस्यैव दुःखकार्यपि भवति। तथा एकं वस्तु एकस्यैव सुखाय भवति तस्यापि पर्यन्ते वैरस्यायैव। अलौकिकस्तु तद्व्यतिरिक्त एव चमत्कारः सर्वगः सार्वत्रिकः सुखमयश्चेति। तादृशः शृङ्गारादिकः शृङ्गारवीरादिवक्ष्यमाणः। रसः रसपदवाच्य इति। अयम्भावः—येषां हि व्यवहारे ललनादिभिः रत्याद्यनुमितावभ्यासो दक्षता च तेषामेव काव्यनाटचयोः कारणत्वादिपरिहारपूर्वकं विभावनादिव्यापारग्रहणेन लोकोत्तरमाप्तैः स्वीयत्वशात्रवत्वताटस्थ्यादिग्रस्त्वविशेषग्रहणनिराकरणानिर्णयेन विशेषांशरहितत्वेन कामिनीत्वसामान्यतया ज्ञायमानैस्तैरेव विभावादिभिरभिव्यक्तः सामाजिकचेतसि संस्काररूपेण सूक्ष्मतयावस्थितो नियतसम्बन्धोऽपि साधारणीकरणेन साधारण्येन आनन्दात्मकास्वादरूपोऽपि आस्वाद्यत्वेन गृहीतः आस्वादमात्रजीवनः स्वहेतुकविभावाद्युपस्थितिपर्यन्तस्थायी पानकरसन्यायेनास्वाद्यमानः लोकोत्तरचमत्कारशाली रत्यादिकः स्थायी शृङ्गारादिको रस इति। रसप्रकृतिमाह स चेत्यादिना। सः रसः। च पुनः। न नैव। कार्यः कारणपरिणामः कादाचित्कः। सत एव सदुत्पत्तेरभ्युपगमात्। तथात्वे हेतुमाह विभावेति। तस्य रसस्य। विभावादिविनाशे विभावादीनां रसस्य निमित्तकारणभूतानां विनाशे ध्वंसे। अपि च। सम्भवप्रसङ्गात् स्थितित्वापत्तेः। वस्तुतस्तु रसो हि विभावादिजीविताबधिः। न। नैव। अपि च। ज्ञाप्यः विभावादिभिर्ज्ञापनीयः आगन्तुकज्ञानविषयः। तथात्वे हेतुमाह तस्येति। तस्य रसस्य। सिद्धस्य जातस्य। असम्भवात् अभावात्। अयमभिसन्धिरत्र मुनिसूत्रे संयोगादिति यत्पञ्चम्यन्तं पदं तेन विभावादीनां रसस्य हेतुत्वमुक्तम्। हेतुत्व द्विविधं हि कारकत्वं ज्ञापकत्वञ्च। तत्किं रसो विभावादीनां कार्यो वा तैर्ज्ञाप्य इत्यपेक्षायामुच्यते न हि रसः विभावादीनां कार्यो वा ज्ञाप्योऽपि। सति कार्ये कारणस्यावश्यम्भाविता भवत्येव निष्कारणस्य कार्यत्वासिद्धेः। कार्यस्य त्रीणि कारणानि समवाय्यसमवायिनिमित्तभेदात्। यदि विभावादिपरामर्शस्य रसत्वे

कारणं सम्भवति तदा निमित्तकारकत्वमेवावशिष्टकारणत्वासम्भवात्। निमित्त-कारणस्य नाशेऽपि कार्यावस्थितिर्भवत्येव। न हि दण्डचक्रनाशेन घटस्य सिद्धस्याभावो दृष्टः। रसस्य हि विभावादिनाशेऽवस्थितेरसम्भव इत्येव रसस्य कार्यत्वमपास्तमिति। न च विभावादीनां रसस्य ह्यवयवादिरूपोपादानकारणत्वमपि तस्य तद्व्यतिरिक्त-त्वात्। न वा ज्ञाप्योऽपि रसस्तस्य पूर्वसिद्धत्वासम्भवात्। लोके जातो हि ज्ञाप्यो भवति न तु जायमानोऽपि। यदि हि विभावादिभ्यः पूर्वमेव रसस्य सिद्धत्व भवेत्तदैव तस्य तैर्ज्ञाप्यता सिध्येत्। तेन रसो न कार्यो नाऽपि ज्ञाप्य इति। तर्हि विभावा-दिभिः किमित्यपेक्षायामाह अपीति। अपितु तदुभयवैलक्षण्येन। रसः। विभावा-दिभिः विभावानुभावव्यभिचारिभिः। हेतौ तृतीया साहित्येऽपि। व्यञ्जितः प्रत्यायितः। चर्वणीयः आस्वादनीय इति। विभावादीनां रसस्य न कारणत्वं नापि ज्ञापकत्वमपितु व्यञ्जकत्वमिति सूत्रे पञ्चम्यन्तपदं प्रयोगस्याशय इति। रसो हि व्यङ्ग्यं विभावादयश्च व्यञ्जका इति। तेन हि विभावादौ भासमाने एव रत्यु-द्बोधस्य रसत्वाभ्युपगमान्न विभावादिनाशे रसावस्थितिरिति रसं प्रति विभावादीनां कारणत्वं न सिध्यति। तर्हि चन्दनस्पर्शजन्यसुखेऽतिव्याप्तिः स्यान्निमित्तनाशे तत्रापि कार्यनाशादिति चेन्न। न हि तत्र स्पर्शाभावेन सुखनाशोऽपितु स्पर्शाभावे कारणाभावात्कार्यं नोत्पद्यते। उत्पन्नस्य सुखस्य नाशस्तु विरोधिगुणान्तरादेव। रसस्य विगलितवेद्यान्तरसम्पर्काभावाद्रसास्वादकाले ज्ञानान्तराभावान्न विरोधि-गुणान्तरता। व्यक्तेर्लोकोत्तरतया न तत्र दोषप्रसङ्ग इति। तथैव न ज्ञाप्यश्च रसः। विभावादिज्ञानजनिताभिव्यक्तिविषयीभूतस्य रत्यादेः रसत्वमिति न तस्य विभावादि-व्याप्यत्वमिति। प्रमाणान्तरसिद्धे घटादावेव ज्ञाप्यत्वं सिध्यति न तु चैतन्यस्वरूपस्य रसस्य। तस्य हि स्वप्रकाशत्वेनैव प्रमाणान्तरसिद्धत्वं न सम्भवति। रसस्य व्यङ्ग्यत्वाद् व्यञ्जकत्वमेवात्र पञ्चम्यर्थ इति। कथमिदमुच्यते इत्यपेक्षायामाह कारकेति। कारकज्ञापकाभ्यां कारकः पूर्वासिद्धोत्पादकः ज्ञापकः पूर्वसिद्धप्रकाशक इति ताभ्याम्। अन्यत् अपरम्। हेतुत्वम्। क्व कुत्र। दृष्टम् अनुभूतम्। इति चेत् इत्यमुच्यते चेत्। न क्वचिद् दृष्टं नैव कुत्रापि अनुभूतमिति। इति इत्थम्। एतत् कुत्राप्यदृष्टत्वम्। अलौकिकसिद्धेः अलौकिकी लोकोत्तरा या सिद्धिः सम्पन्नता तस्याः। भूषणमलङ्करणं शोभाधायकमेव। न नैव। दूषणमपकर्ष इति। यतो हि रसस्य सिद्धिरेवालौकिकी अतस्तस्या हेतुरप्यलौकिक इति तस्यो-त्कर्ष एव न त्वपकर्ष इत्याशयः। रसस्य कार्यत्वासिद्धेः कथं तर्हि उत्पन्नो रस इति व्यवहार इत्यपेक्षायामाह चर्वणेति। चर्वणानिष्पत्त्या चर्वणाया आस्वादस्य निष्पत्त्या उत्पत्त्या विभावादिभिरास्वाद्यतामापादितो रत्यादिरेव रस इति। तस्य

रसस्य। निष्पत्तिरुत्पत्तिः। उपचरिता उपलक्षणादेव कथिता। इति हेतोः। कार्यः विभावादिजनितपरिणाम्। इति इत्थम्। अपि च। उच्यतां कथ्यताम्। यदि भवतस्तथैवाभीष्टं तदा चर्वणोत्पत्त्या तन्नोत्पत्तिरुपचारात्। ज्ञाप्यपक्षमप्याह लौकिकेति। लौकिकं लोकसिद्धं यत्प्रत्यक्षादि चक्षुरादिविषयादि यत्प्रमाणं प्रमितिः तच्च प्रमाणताटस्थ्येन प्रत्यक्षादिप्रमाणौदासीन्येन योऽववोधो ज्ञानं तच्छालिनां तद्वतां मितानां परिमितविषयाणामत एवापक्वबुद्धीनां योगिनां युञ्जानपदवाच्य-साधकानां यज्ज्ञानमवबोधः तच्च वेद्यान्तरस्य लौकिकविषयस्य संस्पर्शः सम्पर्कस्तेन रहितः शून्यः स्वात्मभावे स्व-स्वरूपात्ममात्रविषये पर्यवसितं परिणतं निमग्नं यत् परिमितेतराणामसीमाववोधानां पक्वबुद्धीनां युक्तपदवाच्यानां सिद्धानां संवेदन-ज्ञानञ्चेति त्रितयादेव विलक्षणविसदृशमलौकिकविभावादिमत्त्वेन यत् लोकोत्तरम-लौकिकं स्वसंवेदनं स्वस्य प्रमातुरेव संवेदनमनुभूतिस्तस्य गोचरो विषयः। इति हेतोः। प्रत्येयः ज्ञाप्यः। अपि च। अभिधीयतां कथ्यतां नाम। यच्च लौकिकं प्रत्यक्षादिप्रमाणसिद्धं ज्ञानं यच्च युञ्जानयोगिनां प्रमाणताटस्थ्येन योगजधर्मशक्त्याऽ-तीतानागतसर्वविषयकं भेदविषयकं ज्ञान यच्च युक्तयोगिनां छिन्नवासनामिथ्याज्ञान-तया स्वात्ममात्रविषयकमपरिमितं ज्ञानमित्येतत्त्रयविलक्षणं हि यद्भावुकाना-मलौकिकं स्वसंवेदनं तन्मात्रगोचरत्वेन रसो ज्ञाप्य इत्यपि काममुच्यताम्। न हानिः।

रसो हि स्वसंवेदनगोचर इत्युक्तम्। तच्च ज्ञानमेव। ज्ञानं हि द्विविधं भवति निर्विकल्पकं सविकल्पकञ्च। तत्र नामरूपजात्यादिविशेषशून्यं निर्विकल्पकं तद्विपरीतं निर्विकल्पकम्। अनयोः कतरेण रसो गृह्यत इत्यपेक्षायामाह तद्ग्राहकमिति। तद्ग्राहकं तस्य रसस्य ग्राहकं प्रत्यायकं ज्ञानम्। च तथैव। न नैव। निर्वि-कल्पकं नामरूपजात्यादिविशेषशून्यम्। तथात्वे तस्य हेतुमाह विभावेत्यादि। विभावादीनां विभावानुभावव्यभिचारिणां यः परामर्शः सम्बन्धः स प्रधानं प्रत्यायकं यस्य तस्य भावस्तत्वात्। विभावादिसम्बन्धस्य सविकल्पकतया निर्विकल्पकजनना-योग्यत्वात्। पक्षान्तरमाह नापीति। न नैव। अपि तथैव। सविकल्पकं नाम-रूपजातिविशेषसहितम्। एव। तथात्वे हेतुमाह चर्व्यमाणस्येत्यादि। चर्व्य-माणस्य आस्वाद्यस्य। अलौकिकानन्दमयस्य लोकोत्तरस्वरूपानन्दमात्रविग्रहस्य। स्वसंवेदनसिद्धत्वात् स्वात्मकप्रतीतिमात्रसिद्धत्वात्। वेद्यान्तरस्पर्शशून्यत्वेना-स्वाद्यत्वाद्रसस्य नामरूपाद्युल्लेखासम्भवात्। तत्र फलितमाह उभयेति। उभया-भावस्वरूपस्य उभयस्य निर्विकल्पकत्वसविकल्पकत्वयोरभावो राहित्यं तत्स्वरूपस्य विग्रहस्य। उभयभिन्नस्य। च अपि। उभयात्मकत्वम् सविकल्पकत्वनिषेधे

निर्विकल्पकत्वं निर्विकल्पकत्वनिषेधे सविकल्पकत्वमिति 'विरुद्धयोरेकतरनिषेधेऽपरस्मिन् पर्यवसानम्' इति सविकल्पकनिर्विकल्पकोभयात्मकत्वम्। अपि च। पूर्ववत् कारकत्वज्ञापकत्ववत्। लोकोत्तरताम् अलौकिकताम्। एव इत्यवधारणे न तु तदन्यत्रेति। गमयति प्रापयति। न नैव। तु इति व्यवच्छेदे। विरोधम् असामञ्जस्यम् अनुभवबलात्तथैवावभासनात्।

न केवलमसत्त्वादेवाज्ञाप्यो रसः। किन्तु तद्ग्राहकं ज्ञानं न निर्विकल्पकं तस्य ज्ञानान्तरसापेक्षताभावाद्विभावादिपरामर्शस्य सविकल्पकत्वात् नैव च सविकल्पकं रसस्य स्वप्रकाशत्वात्। तत्र वृत्तिव्याप्यत्वं त्वावरणभङ्गार्थमेव यथा 'तत्त्वमसि' 'इत्यत्र सम्बन्धाग्राहिण्यपि वृत्तिरावरणभञ्जिकेति। यथा तत्र व्यञ्जनैव ब्रह्मबोधिका तथैवात्रापि चर्वणादशायां ज्ञानान्तराभावात्। आस्वादानन्तरमपि आस्वादस्यैवोत्पादो न तु मानसज्ञानस्य अयं घट इति व्यवसाये स्वभिन्नानुव्यवसायविषयताविपरीतम्। आस्वादस्य व्यङ्ग्यत्वात्स्वाभिन्नसविकल्पकविषयत्वेन ज्ञाप्यत्वमभीष्टमेवेति सुधासागरकाराः। एवं हि सविकल्पकत्वनिर्विकल्पकत्वभावरूपस्यापि एकविषयत्वाभावेऽपरविषयत्वप्रसक्तेरुभयरूपत्वमापाद्यमानं स्वाभिन्नसविकल्पकविषयत्वरूपतृतीयकोटिशालितया अलौकिकं चमत्कारमेवावगमयति न पुनर्विरोधमिति। आवरणभङ्गश्चात्र विषयान्तरनिवर्तनेनैव। प्रकरणमुपसंहरति इतीति। इति इत्थम्। श्रीमदिति श्रीमन्त आचार्या अभिनवगुप्तपादाः इति। श्रीमदाचार्यपदपदानि स्वसम्मतत्वबोधकानि। बहुवचनं पूजार्थम्। अभिनवगुप्तेति संज्ञा। स एव भरतनाट्यशास्त्रस्य ध्वन्यालोकस्य च व्याख्याता। यथाऽऽहुर्मधुमतीकाराः—'अभिनवपदेन ध्वनिटीकाकर्तृपुराणगुप्तपादलिखनविरोधोऽत्र न देय' इति।

[ वृत्तिः ] व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणामश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोश्चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।

'वियदलिमलिनाम्बुगर्भमेघं
मधुकरकोकिलकूजितैर्दिशां श्रीः।
धरणिरभिनवाङ्कुराङ्कटङ्का
प्रणतिपरे दयिते प्रसीद मुग्धे'॥२७॥

इत्यादौ।

[ कमला० ] ननु विभावादीनां प्रत्येकं रसाभिव्यञ्जकत्वात्सूत्रे द्वन्द्वस्तैरिति च साहित्योक्तिर्व्यर्थाऽत आह व्याघ्रादय इति। ते हि भीरूणां भयमिव वीराणा-

मुत्साहमपूर्वदर्शिनां विस्मयं हतबन्धूनां क्रोधं जनयति। अतो भयानकवद् वीराद्भुतरौद्राणामपि ते विभावा इति व्यभिचारान्नैकस्य व्यञ्जका इत्यर्थः। एवमनुभावमात्रेणाह अश्रुपातेति। शृङ्गारो विप्रयोगः। सञ्चारिष्वाह चिन्तादय इति। अत्रापि शृङ्गारो वियोगः कान्ताध्यानेन विप्रयोगस्येव वीरकरुणयोः पोषणं भयहेतुगतक्रूरत्वादिचिन्तया वीरकरुणभयानकानां बोध इत्यर्थः। पृथगेकैकस्यानैकान्तिकत्वाद् व्यभिचारित्वाद् भरतसूत्रे द्वन्द्वे न मिलिता उक्ता इत्यर्थः। ननु यत्र मिलिता अपि विभावादयः साधारणास्तत्र कथं रसोदयः? नैव तत्र रसोदय इति देवनाथः।

ननु प्रत्येकमपि रसोऽनुभूयते इत्याशङ्क्य निराचष्टे वियदिति। अस्ति स्थितिरित्यन्तः शङ्काग्रन्थः। अलिमलिनाश्च तेऽम्बुगर्भाश्च ते मेघा यत्र एतादृशं वियदस्ति। मधुकराश्च कोकिलाश्च केषाञ्चित्पिकानां वर्षास्वपि मदः। अङ्कोऽङ्कन तदर्थे टङ्कः पाषाणदारकः अभिनवाङ्कुर एवाङ्कटङ्को यस्याः। मानदारकत्वात्टङ्कोक्तिः। हे मुग्धे मूढे! उद्दीपकबहुत्वे मानभङ्गो भवितैव। तत्कुतः प्रणत्युपेक्षा उद्दीपनरहिते देशे पलायनं त्वशक्यमेवाकाशे दिक्षु भूमौ च तत्सत्त्वादित्यर्थः। दयिते दयापात्रे न तु स्वामिनि। प्रसीद प्रसादं कुरु।

[ सरि० ] ननु विभावादिभ्यः प्रत्येकमास्वादसम्भवे मुनिसूत्रे विभावानुभावव्यभिचारिसंयोगादिति द्वन्द्वेन प्रकृतग्रन्थे कारिकायाञ्च 'तैः' इति बहुवचनेन किमिति तेषां साहित्यमभिहितमित्यत आह व्याघ्रादय इति। एकैकस्य व्यञ्जकत्वे व्यभिचार आपद्यत इति तेषां साहित्यमुक्तम्। एकैकस्मादन्यद्वयाक्षेपात्तत्राप्यस्त्येव रसव्यक्तिरित्यव्यभिचार इति चेन्न। व्याघ्रादयः व्याघ्रप्रभृतयो ये हि विभावकाः स्थायिनां ते भयानकस्य भयस्थायिभावात्मकस्य रसस्य। इव यथा। विभावाः आलम्बनानि भयोद्बोधकानि यथा तथैव वीराद्भुतरौद्राणां वीरस्योत्साहस्थायिभावात्मकस्य अद्भुतस्य विस्मयस्थायिभावात्मकस्य रौद्रस्य क्रोधस्थायिभावात्मकस्य रसस्यापि विभावाः स्थायिभावोद्बोधनहेतवः। यथा हि व्याघ्रादेर्भीरूणां भयं तथैव वीराणामुत्साहोऽपूर्वदर्शिनां विस्मयः व्यापादितबन्ध्वादीनां क्रोध इति तन्मात्रोपनिबन्धने परस्परविरोधादास्वादानुदये व्यभिचारेण कारणत्वं न स्यात्तेनैवोक्तमनैकान्तिकत्वादिति। तेन हि नैकैकस्यापितु साहित्यस्यैव व्यञ्जकत्वनिर्देशाय द्वन्द्वबहुवचनप्रयोग इति। यथा हि मालतीमाधवे 'रे रे सङ्करपुखासिणो जाणवआ' इति प्रसङ्गे वर्ण्यमानो व्याघ्रादिविभावो मदयन्त्यादौ भयं माधवे उत्साहं मकरन्दे क्रोधं तटस्थेष्वाश्चर्यं विभावयति। न ह्येकस्य सहकारिवैचित्र्यं विना विचित्रकार्योपधायकत्वं सम्भवति। यथा हि भयोद्बोधे विद्रवणादेरनुभावस्य

सम्भ्रमादेर्व्यभिचारिणश्च सहकारित्वमेषितव्यमेव । तेन हि तेषां साहित्यमेवा-भीष्टम् ।

साहित्यं न केवलं विभावानामेवान्यैः सहापितु अनुभावानामपि तथैवेत्याह अश्रुपातादयः अश्रुपातप्रभृतयः ये अनुभावाः भावसंसूचकचेष्टाः। शृङ्गारस्य रतिस्थायिभावात्मकरसस्य । इव यथा । करुणभयानकयोः करुणस्य शोक-स्थायिभावात्मकस्य भयानकस्य भयस्थायिभावात्मकस्य चानुभावाः भवन्ति । अश्रुपातोऽपि प्रोषितभर्तृकायाः रतिं प्रणष्टप्रियस्य शोकं भीषणत्रस्तुरुद्धस्य भयमनु-भावयति । तेन तन्मात्रोपनिबन्धने व्यभिचार उत्पद्यते ।

एवमेव व्यभिचारिणामपि तन्निर्दिशति चिन्तेत्यादि । चिन्तादयः चिन्ता आध्यानं तदादयः । व्यभिचारिणः व्यभिचारिभावाः । शृङ्गारस्य शृङ्गार-रसस्य । इव यथा । वीरेति वीरस्य करुणस्य भयानकस्य च उत्साहशोकभयाना-मिति व्यभिचारिणो भवन्ति । यथा शृङ्गारे सङ्गमस्य वीरे परपराभवस्य करुणे शोकस्य भयानके भयापनोदस्येति । फलितमाह इतीति । इति इत्थम् । पृथक् एकस्यैव । अनैकान्तिकत्वात अनुपधायकत्वात् एकाधिकेषु व्यभिचारादित्याशयः । सूत्रे मुनिसूत्रे प्रकृतकारिकायाश्च । मिलिताः सहिताः । निर्दिष्टाः प्रोक्ताः द्वन्द्वेन तैरिति च पदेनेति । एवं हि विभावादीनां दण्डचक्रादिन्यायेन सम्भूयैव व्यञ्जकत्वं न तु तृणारणिमणिन्यायेनैकैकस्येति ।

परसम्मतानि विभावादीनां प्रत्येकं रसाभिव्यञ्जकतास्थानान्यनूद्य तत्रापि मिलितव्यञ्जकत्वप्रदर्शनायोपक्रमते वियदादिना नानैकान्तिकत्वमिति इत्यन्तेन ।

विभावमात्रस्य व्यञ्जकत्वेन सम्मतं यथा— वियदिति । हे मुग्धे ! वियत् अलि-मलिनाम्बुगर्भमेघम् दिशाम् मधुकरकोकिलकूजितैः श्रीः धरणिः अभिनवाङ्कुराङ्क-टङ्का प्रणतिपरे दयिते प्रसीद इत्यन्वयः । हे मुग्धे ! समयानभिज्ञे मूढे ! वियत् गगनम् । अलिमलिनाम्बुगर्भमेघम् अलयो भ्रमरा इव मलिनाः कृष्णाः अम्बु जलं गर्भे अन्तर्येषां ते तादृशा मेघा बलाहकाः सन्ति यस्मिन्निति तादृशम् । दिशां हरिताम् । मधुकरेति मधुकराणां भ्रमराणां कोकिलानां परभृतानां च सहितानां कूजितैर्मधुरनिनादैर्वा मधुकरा एव कोकिलास्तेषां कूजितैः । श्रीः शोभा । धरणिः अवनिः । अभिनवेति अभिनवा नूतना अङ्कुराः प्ररोहा एव अङ्कः उत्सङ्गे टङ्कः पाषाणदारणः यस्यां सा तथाविधा यद्वा अङ्कनं चिह्नकरणमङ्कस्तन्निमित्तं टङ्कोऽङ्कटङ्कः अभिनवाङ्कुरा एवाङ्कटङ्को यस्याः सेत्यपि । अस्तीति प्रत्येकं सम्बन्धः । तेन हि प्रणतिपरे प्रणामशालिनि । दयिते वल्लभे । प्रसीद प्रसन्ना

भवेति। हे मानिनि! त्वं वल्लभे सततप्रणामोद्यते स्वयमेव प्रसादं कुरु नो चेद् बहुतरोद्दीपकसत्त्वान्मानभङ्गस्य अवश्यम्भावित्वेन ते गौरवरक्षा न सम्भवतीति काञ्चिन्मानिनीं प्रति सख्या उक्तिरियम्। उद्दीपकाश्च गगने दिशि भूमौ च विलसन्ति। तथा हि गगनं भ्रमरतुल्यनीलजलगर्भमेघावृतं विद्यते। मेघस्य चावृष्टत्वेन चिराय स्थितिः। अतस्त्वमूर्ध्वमुखी नैव स्थातुं शक्नोषि। दिशश्च भ्रमर-रूपकोकिलनिनादैर्व्याप्ताऽस्ति, वा केषाञ्चित्कोकिलानां वर्षास्वपि मदात्तयोः साहित्येन कूजनाद्दिशः अपि आश्रयितुं न शक्या इति। भूमिरपि उत्सङ्गे नूतनप्ररोहटङ्कयुक्ता अतस्त्वमधोऽपि विलोकयितुं न शक्नोषि। पाषाणभेदनसामर्थ्यैरङ्कुरैस्तव मान-भेदनं सुखेनैव। एवं सर्वत एवोर्ध्वमधस्तिर्यक्च उद्दीपकसत्त्वेन त्वं नात्मनो गौरवं रक्षितुं प्रभविष्यसीति समानमेव सम्प्रति प्रिये तद्विषयककृपां कुर्विति। तत्र वक्तव्य-माह इत्यादौ। इत्यादिकाव्ये विभावमात्रस्य व्यञ्जकत्वं यदुच्यते तन्न तत्र प्रणति-रूपस्यानुभावस्य प्रसादः प्रार्थनोन्नेयाऽसूयेति व्यभिचारिणश्च त्रितयसाहित्यमस्त्येव। तेनात्रापि न विभावमात्रस्य व्यञ्जकत्वमिति। काव्ये वृत्तं पुष्पिताग्रा—'अयुजि नयुग-रेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति।

[ वृत्तिः ] परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः,
कथमपि परिवारः प्रार्थनाभिः क्रियासु।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥२८॥

इत्यादौ।

[ कमला० ] परिमृदितेति। मालतीवर्णनम्। अस्या इति। अङ्गं प्रवृत्तिः कपोलोऽस्तीति पूर्वोक्तेन सम्बन्धः। क्रियासु बह्वचेष्टासु मध्ये। परिवारः सखीजनः तस्य बह्वीभिः प्रार्थनाभिः क्वचिदेका वृत्तिरित्यालस्ये। अभिनवो बालस्तदन्तस्य कोमलत्वादस्य पाटलवर्णत्वान्निष्कलङ्कस्य कलाविशिष्टस्य चन्द्रस्य शोभां कपोलः कलयतीति कृशत्वं पाण्डुता च।

[ सरि० ] अनुभावमात्रस्य व्यञ्जकत्वेन निर्दिष्टमुदाहरति परिमृदितेति। पद्यमिदं मालतीमाधवे मालतीवर्णनपरम्। (अस्याः) अङ्गं परिमृदितमृणालीम्लानम् परिवारप्रार्थनाभिः क्रियासु कथमपि प्रवृत्तिः अभिनवकरिदन्तच्छेदकान्तः कपोलः निष्कलङ्कस्य हिमांशोः लक्ष्मीम् च कलयति इत्यन्वयः। अङ्गम् वदनात्यवयवः। परिमृदितेति परिमृदिता मर्दनेन शिथिलीभूता या मृणाली बालमृणालं तद्वन्म्लानं चिन्तातोऽविकसितम्। अस्तीति शेषः। परिवारेति परिवारस्य सखीजनस्य प्रार्थनाभिर्बह्वनुरोधैः। क्रियासु कर्मसु। 'कथञ्चित् बलादेव। एकस्यामिति।

प्रवृत्तिः संलग्नता तत्रापि सकृदुपक्रममात्रं न तु चेष्टादि। अस्तीति शेषः। अभिनवकरिदन्तच्छेदकान्तः अभिनवो नूतनः बालो यः करी हस्ती तस्य दन्तस्तस्य च्छेदश्छिन्नभागो वा अभिनवो यः करिदन्तच्छेदस्तद्वत् कान्तः कमनीयः उभयोरेव कोमलत्वादाशु रक्तसम्बन्धाच्च कमनीयत्वम्। तादृशः। कपोलः गण्डस्थली। निष्कलङ्कस्य लाञ्छनरहितस्य। हिमांशोः चन्द्रमसः। लक्ष्मीम् शोभाम्। च अपि। कलयति धारयति क्षामत्वादिति। एक एव कपोलः करिदन्तच्छेदवत्कान्तोऽपरस्तु पाण्डुरेवेति कपोल इति न तु कपोलाविति। तेन क्षामत्वं पाण्डुत्वञ्च। अत्र हि म्लानता आलस्यमरतिः क्षामता पाण्डुता चेत्यनुभावाः विप्रलम्भशृङ्गारं व्यञ्जयन्ति। तेनानुभावमात्रस्यात्र व्यञ्जकतेति शङ्काग्रन्थः। वृत्तं मालिनी ननमयययवैशिष्टयात्। उत्तरग्रन्थस्तु विभावस्य माधवदर्शनमदनोद्यानादेरुपस्थितावेव रत्युल्लास इति नानुभावमात्रस्यैकान्तिकत्वमिति। तदेवाह इत्यादाविति। इत्यादौ यदाशङ्क्यतेऽनुभावानामेव व्यञ्जकत्वमिति। तन्न। तत्र विभावस्यापि साहचर्यात्।

[ वृत्तिः ] दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं,
संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं,
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥२९॥

इत्यादौ च यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपाऽसूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिः, तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति।

[ कमला० ] दूरादिति प्रेयसि प्रिये। जातागसि जातापराधे सति। मानिन्याश्चक्षुः प्रपञ्चः प्रकारवैचित्र्यं तच्च चतुरं जातम्। चक्षुषोऽपि चातुर्यमित्यहो इत्याश्चर्यम्। दूरादन्यत्र मा गच्छेदित्युत्सुकम्। समीपमागते ममोत्कण्ठामयं मा जानीयादिति विचलितं तिर्यक्कृतम्। स्फारितं हर्षाद्विस्तारितम्। संश्लिष्यत्यालिङ्गनोद्यते कथमप्रसाद्यैव स्पर्श इति रोषादरुणम्। क्रोधेन जिगमिषन्त्या वस्त्राञ्चले गृहीते। किञ्चशब्दः किञ्चिदर्थे। अञ्चिते वक्रिते भ्रूलते यस्य। चरणानत्या व्यतिकरः। सम्पर्को यस्यैवंविधे यद्वा संयोगे सति मानभङ्गात्प्रसादस्तदनुभावो बाष्पाम्बु।

यद्यपीति। आद्ये आलम्बनोद्दीपनविभावाः द्वितीये म्लानतादयोऽनुभावाः अन्त्ये औत्सुक्यादयः सञ्चारिण इत्यर्थः। प्रसादस्य सञ्चारित्वाभावेऽपि हर्षविशेषोऽत्र प्रसादः। उत्तरमाह तथापीति। असाधारणत्वं झटितिबोधकत्वम्। न चाक्षेपे

साहित्यं साहित्याद्याक्षेप इत्यन्योन्याश्रय इति वाच्यम्। प्रत्येकं व्यभिचारेण सहितानां तत्त्वे प्रकरणतात्पर्यादिवशादाक्षेपात् अन्यथा रसत्वाभावाद्यथा परिमृदितेति मालती-माधवयोः प्रकरणादाक्षेपः।

[ सरि० ] व्यभिचारिमात्रव्यञ्जकत्वेन सम्मतं यथा **दूरादिति** मानिन्याः चक्षुः जातागसि प्रेयसि दूरात् उत्सुकम् आगते विवलितम् सम्भाषिणि स्फारितम् संश्लिष्यति अरुणम् गृहीतवसने किञ्चाञ्चितभ्रूलतम् चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणम् इति प्रपञ्चतरम् जातम् अहो इत्यन्वयः। **मानिन्या** मानवत्याः चक्षुर्नेत्रम्। **जातागसि** जातः प्रसङ्गवशात् तु बुद्धया सम्पन्नः आगोऽपराधो यस्मादिति उपेक्षणमपराधः कान्तान्तरसम्पर्को वा। **प्रेयसि** प्रियतमे न तु स्वामिमात्रे तत्र शिष्टाचारमात्र-स्थितेः। **दूरात्** दूरे एव दृष्टे। **उत्सुकं** सोत्कण्ठम्। **आगते** समीपं प्राप्ते सति। **विवलितं** सङ्कुचितमन्यतो व्यावर्तितं वा। ममायमौत्सुक्यं न जानीया-दिति। **सम्भाषिणि** भाषणपरे किञ्चिद् वक्तुमुद्यते। **स्फारितं** विकसितम्। **संश्लिष्यति** आलिङ्गति। **अरुणं** रक्तमप्रसाद्यैव स्पर्श इति रोषात्। **गृहीतवसने** धृतवस्त्रप्रान्ते सति। **किञ्चाञ्चितभूलतं** किञ्च किञ्चिदञ्चिता कुटिलीभूता असूयया प्रसादनं विनैव व्यापारोन्नतेः भ्रूलता येन तथाभूतम्। **चरणेति** चरणयोः पादयो-रानतिः पतनं प्रसादनाय तस्य व्यतिकरे प्रसङ्गे। **बाष्पाम्बुपूर्णेक्षणं** बाष्पाम्बुना अश्रुसमूहेन पूर्णं व्याप्तमीक्षण विलोकन गोलकमिति यस्य तत्। साश्रुविलोकनम्। च इति समुच्चये। **प्रपञ्चचतुरं** प्रपञ्चे विचित्रव्यापारे चतुरं कुशलम्। **जातं** सम्पन्नम्। अहो इत्याश्चर्यमेव चक्षुषोऽपीदृशं वैचित्र्यमिति वक्तुः। मानवत्याश्चक्षु-र्जातापराधं प्रियं दूरे एव दृष्ट्वा सोत्कण्ठं समीपमागते तस्मिन् औत्सुक्यगूहनाय निमीलितमन्यतो व्यावर्तितं वा भाषमाणे तस्मिन् हर्षगूहनाय विस्तारितं कोपा-भिनयाय आलिङ्गति तस्मिन् रक्तं प्रसादनं विनैव स्पर्श इति कोपात् चैलप्रान्ते गृह्यमाणे तेन किञ्चित्कुटिलभ्रु रोषाभिनयाय प्रसीदेति पादग्रहणे परे तस्मिन् हर्षातिरेकात् बाष्पौघपूर्णगोलकं सञ्जातम् इत्थं हि तद्विचित्रव्यापारकुशलमिति महदाश्चर्यमिति। शङ्कापक्षमाह **इत्यादाविति** इत्यत्र औत्सुक्यविवलनस्फारणरक्तत्व-कुटिलत्वाश्रुव्याप्तत्वरूपा व्यभिचारिण एव व्यञ्जका 'प्रेयसि' इति पदस्य प्रीति-विषयमात्रवचन आस्वादानुकूलरतिव्यञ्जनाक्षमत्वान्न विभावत्वमिति यदुच्यते तन्न। तत्रापि 'जातागसि' इत्यनेन विभावस्याक्षेपात् चक्षुर्विविधचेष्टयाऽनुभावस्य चाक्षेपात्त-त्राप्यस्ति तेषां साहित्यमित्युत्तरग्रन्थः। उपसञ्जिहीर्षुः प्रकरणं प्रथमं शङ्काग्रन्थ-मवतार्य पश्चादुत्तरग्रन्थमाह **यद्यपीति**। यद्यपि स्थूलदृष्ट्या विलोकने। अत्र काव्ये पूर्वोक्ते **केवलानाम्** इतरसाहित्यरहितानाम्। **विभावानां** वियदित्यत्रालम्बनो-

दीपनरूपदयितमेघोदयकूजितनवाङ्कुरादीनाम्। अनुभावानां परिमृदितेत्यत्र म्लानताऽऽलस्यक्षामतापाण्डुतादीनाम्। औत्सुक्येति दूरादित्यत्र औत्सुक्य दूरे एव दर्शने इतोऽन्यत्र वा यातीति समुत्कण्ठा व्रीडा निकटमागते लज्जा हर्षः सम्भाषणपरे प्रमोदः कोपः अप्रसाद्यंवा लेङ्घने कृत्रिमक्रोधः असूया चैलाञ्चलग्रहणे व्यापारोन्नते-राचारक्रममुल्लङ्घ्य प्रसादः पादपतने विजयादानन्दातिरेकश्चेति तेषाम् प्रसादस्य व्यभिचारित्वाभावेऽपि मनसो हर्षः प्रसाद इति हर्षरूपत्वेन तस्य ग्रहणान्न दोषः। व्यभिचारिणां व्यभिचारिभावानाम्। स्थितिः व्यञ्जकत्वेनावस्थानम्। दृश्यते इति शेषः। उत्तरग्रन्थमाह तथापीति। तथापि तथा केवलानां तेषां व्यञ्जकत्वे दृष्टेऽपि। एतेषां विभावादीनाम्। असाधारणत्वं झटित्याख्यापकत्वम्। इति यदस्ति तत्। अन्यतमद्वयाक्षेपकत्वे अवशिष्टद्वयप्रत्याययत्वे यथा वियदित्यत्र विभावस्य प्रणत्य-सूयारूपयोरनुभावव्यभिचारिणोः परिमृदितेत्यत्र अनुभावस्य नायकरूपविभाव-म्लानत्वादिगस्यचिन्तादिव्यभिचारिणोः दूरादित्यत्र औत्सुक्यादिव्यभिचारिणः प्रियरूपविभावचरणनतिरूपानुभावयोश्च आक्षेपकत्वमिति अन्यतमद्वयसाहित्येनैव झटित्याख्यापकत्वसम्भवात्तदभावेऽनथासम्भवाच्च। न नैव। अनैकान्तिकत्वं व्यभिचारराहित्यम्। अपितु मिलितानामेव रसहेतुत्वमिति। उक्तमेव —

'सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यतयाक्षेपे तदा दोषो न, विद्यते॥' इति।

अयम्भावोऽस्य वृत्तिपुच्छस्य। विभावादीनामेकेनैव स्थायिना सहानवस्थानेन तेषामेकाधिकभावेषु व्यभिचारादेव सूत्रे विभावादीनां मिलितत्वप्रदर्शनाय द्वन्द्वः कारिकायां च 'तैः' इति। यथा विभावमात्रस्य पृथक्त्वेन स्थाय्युद्बोधने तत्र व्यभिचार उत्पद्येत। यथा व्याघ्रो हि भीतानां भयहेतुः अपूर्वदर्शिनामाश्चर्यहेतु-र्व्यापादितबन्धूनां क्रोधहेतुश्च। तेन केवलः स कमेव भावमुद्बोधयेत्। एवमेव अनुभावव्यभिचारिणोऽपि। यच्च विभावादिषु एकतमस्यैव व्यञ्जकत्वमभ्युच्यते यथा वियदित्यत्र विभावमात्रस्य परिमृदितेत्यत्रानुभावमात्रस्य दूरादित्यत्र सञ्चारिणा-मेव व्यञ्जकत्वमिति तन्न। तेषां प्रत्येकमन्यतमद्वयाक्षेपे एव व्यञ्जकत्वसम्भवो न केवलस्यैकस्येति।

[ वि० वृ० ] तत्र रसस्वरूपमाह – कारणानीति।

लोके रत्यादेः स्थायिनो यानि ललनोद्यानप्रभृतीनि तानि यदि काव्यादौ निबध्यन्ते तदा तत्तच्छब्दवाच्यतां हित्वा विभावनादिव्यापारवत्त्वात् अलौकिकविभावादिशब्द-वाच्यानि भवन्ति। स च स्थायी साधारण्येन प्रतीतैस्तैरभिव्यञ्जितः सभ्यानां वासनात्मतया संस्थितस्तेनैव सर्वहृत्संवादी चर्वणैकप्राणो विभावादिपरामर्शावधि-

जीवितो बहिरन्तश्च परिस्फुरन् सर्वाङ्गमिवालिङ्गन् आनन्दसिन्धुमिवावगाहयन् विगलितवेद्यान्तरोऽलौकिकचमत्कारकारी शृङ्गारादिको रसः स्मर्यते ।

एवमन्यत्राप्युक्तं मुनिना—

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ॥" इति ।

अस्यार्थः—विभावयत्युत्पादयति रत्यादिमिति विभावो निमित्तकारणम् । स चालम्बनोद्दीपनभेदाद् द्विधा । यदुक्तमाग्नेये—

"विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ।
विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः ॥" इति ।

आद्योऽपि द्विधा विषयाश्रयभेदात् । यमुद्दिश्य रत्यादिः प्रवर्तते सोऽस्य विषयः । आश्रयस्तु तदाधारः । यत्तु तमुद्दीपयति तद्घनाभ्रविद्युत्प्रभृत्युद्दीपनम् । अनु पश्चाद्भावो यस्य सोऽनुभावः कार्यम् । स च द्विधा स्तम्भादिः स्मितकटाक्षादिश्चेति । तदुक्तम् —

'ते स्तम्भस्वेदरोमाञ्चाः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥'
'स्मितं गीतं कटाक्षश्च भुजाक्षेपश्च हुङ्कृतिः ।
तनुमोटनजृम्भादिश्चानुभावः प्रकीर्त्यते ॥' इति ।

विशेषेणाभिमुख्येन स्थायिनं प्रति चरतीति व्यभिचारी । सञ्चारयति भावस्य गतिमिति सञ्चारी चैष रत्यादेः सहायभूतो निर्वेदादिः । एषां संयोगात्स्थायिनि सम्बन्धाद्रसस्य निष्पत्तिरभिव्यक्तिर्ज्ञप्तिः पुष्टिश्च क्रमादिति । स च रसो नानुकार्यादौ लौकिकत्वात्परिमितत्वाद्भयादिसद्भावाच्च । न चानुकर्त्रादौ जीविकार्थमनुकृत्यादौ प्रवृत्तेः । किन्तु सभ्येष्वेव सवासनेषु तत्तन्निबन्धनचातुरीभिस्तत्राऽलौकिकत्वप्राप्ते ।

किञ्चालौकिकी हि रसस्थितिः । यत्र विभावादयोऽपरिज्ञातविशेषाः साधारण्येन स्फुरन्ति । यदुक्तम् मुनिना—

'शक्तिरस्ति विभावादेः कापि साधारणीकृतौ ।
प्रमाता तदभेदेन स्वं यथा प्रतिपद्यते ॥' इति ।

साधारण्यञ्च स्वपरसम्बन्धनियमानिर्णयो यस्मान्नृणामपि अब्धिलङ्घनादौ प्रवृत्तिः सभ्यानां त्रपातङ्काद्यनुदयश्च । यदुक्तम्—

'स रत्यादिर्विभावाद्यैरेकीभावमयोऽपि सन् ।
ज्ञप्ततत्तद्विशेषश्च तत्तद्रूपदतो भवेत् ॥' इति ।

ननु रत्यादीनां चित्तावस्थाविशेषत्वाद् विभावादिसम्भिन्नानां तेषां कथमानन्दात्मकरसरूपतेति चेदुच्यते। आत्मैवानन्दांशे विभावादिभिर्भग्नावरणस्तद्व्यञ्जितरत्याद्यवच्छिन्नस्तत्सन्निभश्च रसस्तस्मान्न काव्यनुपपत्तिरिति लोके। यत्र तु भगवद्रतेरेव विभावादिसम्भिन्ना रसस्तत्र रतेर्ह्लादिनीसंविद्वृत्तिभूतत्वात्तदालम्बनादीनाञ्च ज्ञानसुखात्मकत्वात्। हासादीनामपि रत्यनुगृहीतत्वात्तथाभूतरसरूपता सुसिद्धैव लौकिकत्वादिहेतुविरहादिहानुकार्यादिष्वपि रसः। अपि च विभावादेः किञ्चिन्मात्रस्य यत्र स्थितिस्तत्रान्यसमाक्षेपात्पूर्तिः। लक्ष्याण्यूह्यानि।

बहुत्र बहुविधत्वेन चर्चितस्यास्य विषयस्यायं सारसङ्क्षेपः। चित्तं हि व्यापाराणां समष्टिरेव यतो हि सन्ति तत्रानेकविधाः प्रवृत्तयः प्रसुप्तत्वेन स्थिताः। सर्वोऽपि प्राणी चित्तवृत्तिवासनाभिलुप्तो भवति। तत्रापि कस्यचित्काचित्प्रवृत्तिरधिकप्रबला भवति काचिदूनबलाऽपि। या हि चित्तवृत्तयो भावयन्ति सामान्यदशायामनास्वाद्यमपि स्वदशायामास्वाद्यं कुर्वन्ति वा व्याप्नुवन्ति मन इति ता भावशब्देनाप्युच्यन्ते। त एकोनपञ्चाशदिति प्रायोवादः। वस्तुतस्तु भवन्त्यसङ्ख्येया एव भावाश्चित्तपटले। प्रकृत्या तेऽपि द्विविधा भवन्ति स्थायिनो व्यभिचारिणश्च। ये हि प्रायेण प्राबल्यमाश्रित्य किञ्चित्कालमास्वाद्यतामायान्ति ते स्थायिनः। ये तु स्थायिनि नितान्तास्थायिरूपेणोन्मग्ननिमग्ना भवन्ति ते व्यभिचारिण इति। प्राधान्येन हि स्थायित्वेन रति-शोक-हास क्रोध-उत्साह-भय-जुगुप्सा विस्मय-निर्वेद स्नेह-भक्तिप्रभृतयो भावा मताः प्रायेण तेषामेव तथादर्शनात्। एतेषां स्थायित्वमपि विभावभूयिष्ठे एव विभावाल्पत्वे तु तेषामपि व्यभिचारित्वम्, तादृशा हि भावाः स्वानुकूल विभावमासाद्य सामाजिकचेतसि प्रसुप्तिन उद्बुद्धा भवन्ति। त एवोद्दीपिताः प्राबल्यं भजन्ते। त एवानुभावैरनुभवविषयतां प्रापिताः सन्तः स्वप्रकृतिकव्यभिचारिभिः पोषिता आस्वाद्यतामायान्ति। आस्वाद्यतामापन्नो भाव एव रसः। अत एवोक्तम्—

'रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात्।' इति।

एवञ्च—

'लक्षणैक्यं विभावैक्यादभेदाद्रसभावयोः।' इति।

एवञ्च सिध्यति यत्सामाजिकचेतसि प्रसुप्तत्वेन स्थितस्य भावस्य परिपुष्टिरेव रस इति सामाजिको हि रसविषयो न त्वनुकार्यो नानुकारी च। यथोक्तम्—

'धीरोदात्ताद्यवस्थानां रामादिः प्रतिपादकः।
विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते॥' इति।

त एव परित्यक्तविशेषा रसहेतवो भवन्ति । तेन—

"काव्याद्विभावसञ्चार्यनुभावप्रख्यतां गतैः ।
भावितः स्वदते स्थायी रसः स परिकीर्तितः ॥" इति ।

मुनिसूत्रे संयोगादिति संयुक्तक्रियातः रसनिष्पत्तिरिति आस्वाद्यताप्तिरिति । विभावादीनां प्रत्येकभावकत्वे व्यभिचार उदेति एकस्यैव विभावादेरेकाधिकभावेन सम्बन्धसम्भवात् । तेन हि विभावादीनां मिलित्वैव भावभावनमुक्तं तत्र । भावो हि तदैवास्वाद्यतां प्राप्नोति यदा स सुपुष्टः सन् विरुद्धानविरुद्धान् वा स्वेतरानपि आत्मभावं नेतुं प्रभवति । तेनैव वेद्यान्तरशून्यत्वमुक्तं तदास्वादकाले । काव्यं हि अनुकूलविभावाद्युपस्थापनेन स्थायिनं भावयतीति तस्य भावकत्वं रसस्य भाव्यत्वम् । तस्य हि व्यङ्ग्यत्वात्काव्यरसयोर्व्यञ्जकव्यङ्ग्यत्वमपि । न हि स्वशब्दपरिचायितो भावः स्वदते । यथोक्तम्—

"वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।
वाक्यार्थः कारकैर्युक्ता स्थायिभावस्तथेतरैः ॥" इति ।

न हि विभावादयो रसं जनयन्ति वाऽनुमापयन्ति नाभिव्यञ्जयन्ति वस्तुतो भावयन्ति । एवमेव न हि रसो जायते तस्य भावादभिन्नत्वाद्भावस्य च प्रथममेव सत्त्वात् । न सोऽनुमीयते आस्वादस्य प्रत्यक्षज्ञानविषयत्वात् । न च सो व्यज्यते तस्यापूर्वसिद्धत्वात् । पूर्वसिद्धो हि पदार्थ एव व्यक्तिविषयः । न वा स कार्यं कारणनाशे तस्याऽपि नाशात् नैव च ज्ञाप्यं तस्य सविकल्पकत्वनिर्विकल्पकत्वोभयविधलक्षणसत्त्वात् । स ह्यलौकिकः स्वप्रकाशत्वात् । विभावानुभावव्यभिचारिभिः संयुक्तैः खण्डशः स्थितैरपि क्रमशोऽखण्डतां प्राप्तैर्भावितः स्थायी यः स्वदते स एव रसः इति सिद्धं तस्य वैलक्षण्यम् । काव्ये समुपस्थापिता विभावादयः साधारणीकरणे परित्यक्तविशेषाः सन्तः सामाजिकानां चेतसि भावस्य उद्बोधनोद्दीपनानुभवविषयीकरणपोषणहेतवो भवन्ति । यत उक्तम्—

'त एव च परित्यक्तविशेषा रसहेतवः ।' इति ।

रसोऽपि रागिण एव स्वदते न तु विरागिणः । भावुकचेतसि स्वोत्साह एव स्वदते न त्वर्जुनादेः । निरुत्साहस्य वा दुर्बलोत्साहस्य नो स्वाद उत्साहस्य । अत एवोक्तम्—

'स्वदन्ते रसिकस्य ते ।' इति ।

[ वृत्तिः ] तद्विशेषानाह—

[ कारिका ] शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥

[ कमला० ] तद्विशेषान् रसविशेषान्। अलौकिकसामग्रीजन्यतावच्छेदिका रसत्वजातिः सामान्यलक्षणम् तद्व्याप्यहास्यादिति मधुमती। तन्न विशिष्टस्य रसत्वाच्च जात्ययोगात्।

शृङ्गारेति। नाट्येऽभिनयेऽष्टौ। काव्ये तु शान्तोऽपि नवमः। नाट्ये गीत-वाद्यादिमये सर्वविषयोपरमरूपशान्ताभावात्। तदुक्तम्—'शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य' इति। शृङ्गारादिस्वरूपं विभावादिविशेषैर्ज्ञेयम्। ते च विशेषा भरतेनोक्ता.।

[ सरि० ] रससामान्यस्वभावमभिधाय सम्प्रति रसविशेषनिरूपककारिका-वतारणाय वृत्तिकृदुपक्रमते तदित्यादि।

तद्विशेषान् तस्य रसस्य विशेषान् विशिष्टस्वरूपान् भेदान्। आह निर्दिश-तीति। कारिकामवतारयति शृङ्गारेति। नाट्ये—शृङ्गारहास्यकरुणरौद्रवीर-भयानकाः वीभत्साद्भुतसंज्ञौ च इति अष्टौ रसाः स्मृताः इत्यन्वयः। नाट्ये नाट्य-मवस्थानुकृतिः रसाश्रये दृश्यकाव्ये। यथोक्तम्—

'अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते।
रूपकं तत्समारोपाद् दशधैव रसाश्रयम्॥' इति।

शृङ्गारेति। शृङ्गारः शृङ्गं मन्मथोद्भेदस्तदागमनहेतुकः शृङ्गार इति रतेरा-स्वादत्वाद् रतिनिष्पाद्यत्वं शृङ्गारत्वम्। एवमेव हास्यः हासस्यास्वादः। करुणः शोकस्यास्वादः। रौद्रः क्रोधस्यास्वादः अधिरुह्य परां काष्ठां क्रोधो रौद्रत्मतां गत इति। वीरः उत्साहनिष्पाद्यः। भयानकः भयस्यास्वादश्च ते। बीभत्सः जुगुप्सास्वादः। अद्भुतः विस्मयस्यास्वादश्च संज्ञा व्यपदेशो ययोस्तौ। चकारः समुच्चये। इति इति प्रकारे। अष्टौ अष्टविधाः रसाः स्थायिप्रकृतिकभावा-स्वादाः। स्मृताः कथिता इति। कारिकायां गणनयैव सिद्धे पुनः अष्टाविति तन्न्यूनाधिकसंख्या व्यवच्छेदायेति केचित्। अष्टाविति प्रायोवाद इत्यपरे केषाञ्चिन्मते शान्तवत्सलभक्तिप्रभृतीनामपि नाट्ये सत्त्वात्। प्राधान्येन सङ्ख्या-निर्देश इति वयम्। प्रसङ्गात्तु काव्ये 'इति वक्तव्ये नाट्ये' इति कथनं श्रव्यकाव्ये शान्तरसाभावप्रसङ्ग इति द्योतनायेति मधुमतीकाराः। वस्तुतस्तु न तथा। नाट्येऽपि शमस्थायिनः शान्तरसस्य भावो बहुभिः समर्थितमेव। गीतवाद्यादेस्त-द्विरोधित्वान्न नाट्ये शान्तरस इति यदुच्यते तन्न युक्तिसङ्गतम्। विषयचिन्ता-सामान्यस्य तद्विरोधित्वे पुराणश्रवणादेस्तद्विरोध्युद्दीपनस्यापि विरोधित्वप्रसङ्गात्। यच्च शान्तस्य शमसाध्यत्वान्नटे तदसम्भवादिति नाट्ये शान्तो निषिध्यते तन्न नटे

रसाभिव्यक्तेरनङ्गीकारात् सामाजिकानां शमवत्त्वे तदभिव्यक्तौ बाधकाभावात्। नटे भयक्रोधाद्यभावेऽपि तल्लिङ्गानामिव शिक्षाभ्यासपाटवेन शान्तरसलिङ्गानामपि अभिनयोपपत्तेः। तदेव समर्थयन्ति काव्यप्रकाशवृत्तिकारा मम्मटाचार्याः—'निर्वेदस्यामङ्गलप्रायस्य प्रथमनिर्देशो मुख्यत्वेन स्थायित्वलाभार्थं' इति कथनेन। धनञ्जयोऽपि नाट्यस्य प्रवृत्तिपरकत्वाच्छमस्य सर्वविषयपरिहारजनितात्ममात्रविश्रामानन्दरूपत्वादेव नाट्ये पुष्टिं न समर्थयति किन्तु न तस्य नितान्ताभावमेव अधिवक्ति। यथोक्तं तेन—

'निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम्।
वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मताः॥' इति।

रामचन्द्रगुणचन्द्रौ तु स्पष्टमेव नाट्ये शमस्य पुष्टिं समर्थयतः। न च सर्ववृत्तिविराम एव शमः किन्तु निरीहावस्थायामात्मविश्रान्तिरेव शमः। यद्यात्मविश्रान्तिः रसे निषिध्यते तदा रत्याद्यास्वादेऽतिप्रसङ्गः स्यात्। इतरविषयनिवृत्त्यैव रसस्यास्वादसम्भवः। शमेऽपि सुखात्मकत्वं यथा रत्यादौ। उक्तमेव —

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते कलां नार्हन्ति षोडशीम्॥' इति।

एतावदेव सत्यं यच्छमस्य विरलविषयत्वान्नाट्ये न बाहुल्येन प्रयोगस्तेन प्राधान्येन नाट्येऽष्टावेव रसा इति। अनेन शान्तवत्सलभक्तिप्रेयोरसादीनां न नाट्ये निषेधाय राजाज्ञेवेति दिक्। तत्र कामस्य सर्वसुलभतया पूर्वं शृङ्गारः तदनुवर्तित्वात्ततो हास्यः तद्विपरीत्यान्निरपेक्षभावाच्च ततः करुणः तत्कारणत्वात्ततो रौद्रः धर्मप्राधान्येन तन्मूलत्वात्ततो वीरः तस्य भीतत्राणसारत्वात्ततो भयानकः तद्विभावसाधारण्यसम्भवात् ततो बीभत्सः वीरादेः फलभूतत्वात्ततोऽद्भुत इति एषां क्रम इति सङ्केतकाराः। चित्तविकासरूपत्वाच्छृङ्गारहास्ययोरेकत्र कथनं रौद्रकरुणयोश्चित्तविक्षेपरूपत्वादेकत्रावस्थानं किन्तु माधुर्यप्राकर्ष्येण करुणस्य प्रथमनिर्देशः। ततो चित्तविस्तररूपस्य वीरस्योल्लेखः। तत्समानधर्मत्वेनाद्भुतस्य क्रमेऽपि अद्भुतस्य वीरफलत्वाद्वीरस्य भयानकबीभत्सयोराक्षेपकतयाऽद्भुतस्यान्ते निर्देशः। तत्श्चित्तक्षोभरूपयोर्भयानकबीभत्सयोरुल्लेखः। यद्यपि तयोर्बीभत्सस्य भयाक्षेपकतया प्रथमत्वेनोल्लेख आवश्यकः किन्तु बीभत्सापेक्षया भयानके चित्तक्षोभाधिक्यात्प्रथमं तस्योल्लेख इति वयम्। काव्यानन्दप्रभावेण चित्तं हि विकसति विस्तारितं भवति क्षुब्धं भवति अवक्षिप्तञ्च। तदेवाश्रित्य प्रथमतः शृङ्गारः वीरः

बीभत्सः रौद्रश्च रसाः। तेषामेव क्रमेण हास्याद्भुतभयानककरुणा भेदा इति।
यथोक्तं दशरूपके—

'स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः।
विकासविस्तरक्षोभावक्षेपैः स चतुर्विधः॥
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात्।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि।
अतस्तज्जन्यता तेषां तत एवावधारणम्॥' इति।

नाट्येऽष्टावेवेति काव्ये तदधिकसङ्ख्यासम्भवनिर्देशः। स्मृता इति पूर्ववर्त्याचार्यमतस्मरणम्। अनेन शान्तस्य नाट्ये न विरोधः कारिकाकारस्य। रसस्तु सुखात्मकत्वेन प्रतिपादितः। पुनः कथं दुःखमयस्य करुणादेः रसत्वमुक्तमिति चेदुच्यते। लोके तथात्वेऽपि काव्ये नाट्ये च पार्यन्तिकालौकिकसुखोदयात्करुणादेरपि सुखमयत्वमेव। अन्यथा तत्र प्रेक्षावतामप्रवृत्तिः स्यात्। सत्यमेव करुणादिः रसः सुखदुःखसम्भिन्नः तथापि शोकाद्यवच्छिन्नस्य चैतन्यस्यानन्दांशे भग्नावरणस्य करुणादिरसत्वे निरतिशयस्यानन्दांशस्योत्कटत्वेन उत्कटेच्छाविषयत्वाच्छोकाद्यंशे च बलवद्द्वेषाभावात् तत्र प्रवृत्तिर्भावुकानां वर्णनीयतन्मयीभावेन शोकाभिव्यक्तेरश्रुपातादयो भवन्तीति तदुपपन्नमेव। यथा व्याख्यातम्—

'करुणादावपि रसे जायते यत्परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम्॥' इति।

वस्तुतस्तु इष्टनाशादनिष्टाप्तेः शोकः। तस्यापि ये हि आलम्बनोद्दीपनप्रभृतय उद्बोधका उद्दीपका अनुभावका व्यभिचारिणश्च भवन्ति तेषामपि कारणत्वकार्यत्वसहकारित्वत्यागेनालौकिकरूपविभावत्वादिरूपग्रहणेन परस्य न परस्येति ममेति न ममेति चेति साधारणीकरणबलात्तत्प्रत्यायितस्य शोकस्यालौकिकत्वात्तस्य सुखमयत्वं न दुष्यति। रसास्वादे प्रथमं खण्डश उपस्थिता अपि विभावादयः क्रमशोऽखण्डतां प्राप्ताः सन्तः परिच्छेदशून्या भवन्ति। तदा तेषामखण्डत्वेन मिलनात्स्वं लौकिकं रूपं परित्यज्यालौकिकानन्दरूपमयस्य शोकस्य कथं कष्टमयत्वं सम्भवति। एवमेव जुगुप्साभययोरपि। रसस्य हि आस्वाददशायां वेद्यान्तरस्पर्शशून्यत्वेन विभावादयोऽपि न प्रतिभासन्ते इति तेषां सर्वेषामेव सुखमयत्वम्। विभावादीनामात्मीयत्वेनावभासने एव दुःखोदयः शोकाद् वा शात्रवत्वेनावभासने हर्षोदयो वा ताटस्थ्यत्वेनावभासने औदासीन्यं स्यात्किन्तु एतत्त्रयवैलक्षण्येनावभासनान्नास्ति तत्र दुःखलेशोऽपि। अपरञ्च विभावादयोऽपि हि न प्रत्यक्षं भावोद्बोधकाः किन्तु तेषामुपस्थितया भावः स्वयमेवोद्बुद्धो भवति। तेन विभावादीनामपि न तत्र तथा

प्रभावः। अत एवोक्तं—'तमालम्ब्य रसोद्गमात्' इति। प्रसुप्त्यवस्थायामिव निश्चेष्टत्वेनावस्थितो भावः स्वानुकूलं विभावं प्राप्य स्वयमेवोद्बुद्धो भवति न हि तं विभावो लगुडमादायोत्थापयति तथैव स्वानुकूलमुद्दीपनमासाद्य उद्बुद्धः स जागरितो भवति। जागरितः सोऽनुभावमासाद्यानुभवविषयतामाप्नोति। तथाभूतश्च स स्वप्रकृतिकव्यभिचारिणमासाद्य आस्वाद्यतमाप्नोति। स एव रस इति रसस्य स्वप्रकाशत्वम्। तेनैवोक्तम् 'उद्बुद्धं कारणैः स्वैः स्वैरि'ति। भावो हि आलम्बनमासाद्य पराभावमुद्दीपनमासाद्य पश्यन्तीभावमनुभावमवाप्य मध्यमाभावं व्यभिचारिणमासाद्य वैखरीभावमापद्यते। स एवास्वाद्यो वा तस्यैवास्वादो रसः। तेनैवोक्तं 'रसः स एव रसनात्' इति। तेन रतेः परमा उद्दीप्तिरेव शृङ्गारः एवं हास्यस्य हासः इत्यादि। एवं शोकक्रोधोत्साहभयजुगुप्साविस्मयशमानां भावानां प्रकर्षेण क्रमेण करुणरौद्रवीरभयानकबीभत्साद्भुतशान्ताख्य रसाः। एवमेव वात्सल्यस्नेहभक्तिभावानां प्रकर्षेण वत्सलप्रेयोभक्तिरसा भवन्तीति केचित्।

अथाऽत्र रसानां विभावाद्यवबोधकतालिका उपस्थाप्यते –

| रसः | स्थायिभावः | आलम्बनम् | उद्दीपनम | अनुभावाः | व्यभिचारिभावाः |
|---|---|---|---|---|---|
| शृङ्गारः | रतिः | नायकादिः | चन्द्रचकोरादि | कटाक्षादयः | निद्रालज्जाद्याः |
| हास्यः | हासः | विकृतवेषादिवात् | तच्चेष्टाः | अक्षिसङ्कोचस्मेरतादयः | ग्लानिमूर्च्छाबहित्थाद्याः |
| करुणः | शोकः | शोच्यम् | तस्य दाहादिकावस्था | देवनिन्दाभूपातक्रन्दिताद्याः | वैवर्ण्यनिर्वेदमोहाद्याः |
| रौद्रः | क्रोधः | अरिः | तच्चेष्टाः | प्रहारमतनाद्याः | आवेगस्वेदाद्याः |
| वीरः | उत्साहः | विजेतव्यः | तच्चेष्टाः | सहायान्वेषणाद्याः | धृतिमतिगर्वाद्याः |
| भयानकः | भयम् | भीषपातयः | तच्चेष्टाः | वैवर्ण्याद्याः | सम्मोहत्रासाद्याः |
| वीभत्सः | जुगुप्सा | दुर्गन्धादि | कृमिपातादि | निष्ठीवनादिकाः | मोहापस्मारावेगाः |
| अद्भुतः | विस्मयः | अलौकिकवस्तु | तद्गुणाः | स्तम्भस्वेदाद्याः | वितर्कावेगहर्षाद्याः |
| शान्तः | शमः | अनित्यत्वम् | पुण्यक्षेत्रादि | रोमाञ्चाद्याः | निर्वेदहर्षाद्याः |
| वत्सलः | स्नेहः | पुत्रादि | तच्चेष्टागुणाः | चुम्बनालिङ्गनाद्याः | हर्षगर्वाद्याः |

यच्च शृङ्गारं करुणं शान्तं वाद्भुतमेव रसमन्यांस्तु तद्भेदत्वेन गृह्णन्ति यथा 'शृङ्गारमेव रसनाद्रसनायनाम' एको रसः करुण एव निमित्तभेदात्' 'सर्वेषु भावेषु शमः प्रधानः' 'तस्मादद्भुतमेवाह कृतिर्नारायणो रसम्' इत्यादौ तदपि प्राधान्यदृष्टिपरकमेव। ते हि तं तं रसं प्राधान्येन गृह्णन्तीति।

[ वृत्तिः ] तत्र शृङ्गारस्य द्वौ भेदौ—सम्भोगो विप्रलम्भश्चेति। तत्राद्यः परस्परावलोकनालिङ्गनाद्यधरपानपरिचुम्बनाद्यनन्तत्वादपरिच्छेद्य इत्येक एव गण्यते। यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं,
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥३५॥

[ कमला० ] द्वाविति। शृङ्गार इति सामान्यलक्षणम्। एक एवेति। अनुरक्तौ निषेवेतां यत्रान्योन्यं विलासिनौ। दर्शनस्पर्शनादीनि स सम्भोग उदाहृत इति उक्तेः। सोऽपि द्विधा—नायिकारब्धो नायकारब्धश्चेति। तत्राद्यमुदाहरति शून्यमिति। शून्यत्वान्निःशङ्कं प्रवृत्तियोग्यता। वासेति स्वीयत्वात्परानागमनम्। सखी निलीना मा भूदिति विशेषेणालोक्य शयनान्न तु पीठादिति सुरतौचित्यम्। किञ्चिदिति तस्योत्थाने पार्श्वविवर्तनेन समाधानम्। शनैरिति वलयध्वनिहस्ताकर्षादौ तज्जागरापत्तेः। निद्राव्याजं न तु वास्तवत्वम्। पत्युः प्रभोर्न प्रियस्य। अन्यथा विपदं दृष्ट्वा सुरते विप्रलम्भायोगात्। निर्वर्ण्येति तमोभावः। विश्रब्धं निश्शङ्कमिति रागादनुचितकारित्वम्। चुम्बनेन तस्य कामोद्रेकाद्रोमाञ्चोद्गमं दृष्ट्वा जागर्त्ययमिति ज्ञानाल्लज्जया नम्रमुखी न तु चुम्बनाय धाष्ट्र्ये रसभङ्गापत्तेः। आलोक्येति लज्जानमुखनम्रत्वापेक्षया समानकर्तृकत्वं भुक्त्वा खिन्न इतिवत्। तव रहस्यं ज्ञातं यद्वा मत्प्रार्थनयाऽपि न प्रवृत्ताऽऽसीः। इदानीं कथमिति हासः। चिरमिति पौनःपुन्यं लज्जाभावः सुरतञ्च व्यङ्ग्यम्। यत्तु परमानन्दादयो लज्जत इति लज्जेति भिन्नं पदं लज्जनक्रियापेक्षयाऽऽलोक्येति क्त्वाप्रत्ययः। अन्यथा मुखनम्रत्वेन कार्येण तत्प्रतीतौ ध्वनित्वेन शृङ्गाराङ्गता न स्यादित्याहुः। तन्न। चुम्बनप्रवृत्त्याऽपि मुखनम्रत्वसम्भवे लज्जाया व्यभिचारात्।

[ सरि० ] तत्राद्यं शृङ्गाररसं विवृणोति तत्रेत्यादि। तत्र शृङ्गारादिषु रसेषु। शृङ्गारस्य रत्यास्वादरूपस्य रसस्य। यथोक्तं—'रतिनिष्पाद्यत्वं शृङ्गारत्वमिति तच्चिन्त्यम्। वस्तुतस्तु विभावादिभिर्नैव निष्पाद्यो रसः तथा सति कार्यत्वा-

पत्तेः। रसस्तु स्थायिनः पराकाष्ठामधिरूढस्यास्वाद एव। अतो न रसो रति-निष्पाद्योऽपितु तदास्वाद एव। तेन रतेरास्वादत्वं शृङ्गारत्वमिति। यद्वा सत्कार्यवादाभ्युपगमेन सामञ्जस्यान्न च स्वस्मिन् स्वक्रियाविरोध इति रति-निष्पाद्यत्वमेव शृङ्गारत्वम्। रतिस्तु मनोऽनुकूलेऽर्थे सुखसंवेदनमेव। यथोक्तं—'यूनोरन्योन्यविषयस्थायिनीच्छैव रतिरि'ति। द्वौ द्विसङ्ख्याकौ। भेदौ प्रकारौ। स्त इति। तदेवाह सम्भोगः रतिप्रकृतिकत्वे सति भोगात्मकत्वम्। सयुक्ताभ्यां भुज्यत इति सम्भोगः। तेनैवोक्तम्—इष्टालिङ्गनाद्यवाप्तिपुष्टरतित्वं सम्भोगत्वमिति। विप्रलम्भः रतिप्रकृतिकत्वे सति योगानावाप्तिः वियुक्ताभ्यां सम्भोगसुखस्वादलोभेन प्रलम्भ्यते आत्मा यत्रेति। तेनैवोक्तं—'सम्भोगालाभापुष्टप्रकृष्टरतित्वं विप्रलम्भत्व-मिति। सम्भोगविप्रलम्भाख्यौ आत्मन एव द्वौ भेदौ न तु आत्मानौ इति। यतो हि उभावेवान्योन्यपूरकौ। न विप्रलम्भाशङ्काशून्यः सम्भोग. स्वाधीनत्वात्परां मुदमाव-हति वामत्वात्कामस्य। अत एवोक्तम् –

'यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते।
दुर्लभत्वञ्च यन्नार्याः कामिनः सा परा रतिः॥' इति।

तथैव सम्भोगाशाशून्यो विप्रलम्भो नैराश्येन करुण एव स्यात्। तेनैव प्राप्तं गतमिवेत्येव गतं प्राप्तमिवेति चेति। उभयोः शृङ्गारशब्द उपचाराद् ग्रामैकदेशे ग्राम-शब्दवदिति सङ्केते स्पष्टम्। धनञ्जयस्तु शृगारं त्रिधा विभजते—अयोगसंयोग-विप्रलम्भभेदात्। तत्रान्योन्यानुरक्तयोरपि पारतन्त्र्येण दैवाद् विप्रकृष्टाद् वाऽसङ्गमोऽ-योगः। स दशावस्थः अभिलाष-चिन्तन-स्मृतिगुणकथा-उद्वेग-प्रलाप-उन्माद-सञ्ज्वर-जडता-मरणेष्वन्यतमरूपः। अस्य दशावस्थत्वमपि प्रायोवृत्त्यैव। तयोरेवानुकूल-निषेवणं सम्भोगो लीलादिदशविधचेष्टात्मकः। तयो रूढविश्रम्भयोर्विश्लेषो वियोगो मानप्रवासभेदात्मकः। मानोऽपि प्रणयेर्ष्याभेदाद् द्विविधः प्रवासस्तु बहु-विधः। द्वयोरपि विप्रलम्भस्य माधुर्यदृष्ट्या प्रकर्षत्वेऽपि तस्य सम्भोगानन्तरवर्तित्वात् प्रथमं क्रमप्राप्तं सम्भोगशृङ्गारमेवोदाहरणायोपक्रमते तत्रेति। तत्र सम्भोग-विप्रलम्भशृङ्गारयोः। आद्यः प्रथमः सम्भोगशृङ्गारः। परस्परेत्यादि। परस्पर-मन्योन्यं यदवलोकनं प्रेमवीक्षणमालिङ्गनमाश्लेषः अधरपानं निम्नोष्ठास्वादः प्रियेण प्रेयस्याः परिचुम्बनं परितो नेत्रभालगण्डादिषु चुम्बनं निक्षणम् आदिपदादङ्ग-परामर्शप्रभृतीनां ग्रहणं तेषामनन्तत्वादसङ्ख्येयत्वात्। अपरिच्छेद्यः इयत्तया परिच्छेद्युमशक्यः। सन्। एकः एकविधः। एवेत्यवधारणे। गण्यते अवधार्यते इति। विप्रलम्भभिन्नत्वेन संयोगत्वसामान्यरूपत्वे सति रतिप्रकृतिकत्वं सम्भोगत्व-मित्येक एवेत्यवधार्यते सम्भोगशृङ्गारः इत्याशयः। सम्भोगस्यापि नायिकारब्ध-

नायकारब्धभेदेन द्वैविध्यम् । तत्रापि 'पूर्वं रक्ता भवेन्नारी पुमान् पश्चात्तदीङ्गितैः' इति शिष्टसम्मत्या प्रथमं नायिकारब्धसम्भोगशृङ्गारस्योदाहरणं प्रस्तौति शून्यमित्यादि । अमरुशतकगतं पद्यमिदम् । वासगृहम् शून्यम् विलोक्य शयनात् शनैः किञ्चित् उत्थाय निद्राव्याजम् उपागतस्य पत्युः मुखम् सुचिरम् निर्वर्ण्य विश्रब्धम् परिचुम्ब्य गण्डस्थलीम् जातपुलकाम् आलोक्य लज्जानम्रमुखी बाला हसता प्रियेण चिरम् चुम्बिता इति अन्वयः । वासगृहं शयनागारम् । स्वीयत्वात्परागमनसम्भावनारहितत्वम् । शून्यम् इतरजनरहितम् । तृतीयजनाभावेन निःशङ्कप्रवृत्तियोग्यत्वम् । विलोक्य अवधार्य यद्वा सहचरी निभृतं स्थिता मा भूदिति विशेषेण सुनिपुणं निभाल्य । शयनात् शय्यातः । शयनस्य सुरतौचित्यम् । शनैर्मन्द निद्राभङ्गो यथा न स्याद् वलयादिक्वणेन हस्ताकर्षेण च तथा । किञ्चित् स्वल्पमेव पूर्वकायेनेति । उत्थाय उत्थिता भूत्वा । सर्वकायेनोत्थाने पार्श्वपरिवर्तनेन समाधास्यमानत्वात् । निद्राव्याजं निद्रायाः स्वापस्य व्याजं छलम् । न तु वास्तवत्वम् । उपागतस्य प्राप्तस्य । पत्युः स्वामिनः न तु प्रियस्य तथा दृष्ट्वाऽपि निद्राव्याजसहिष्णुत्वात् । मुखं वदनम् । सुचिरं दीर्घकालम् । निर्वर्ण्य अनुरागातिशयान्निद्रानिर्णयार्थञ्च निपुणं निभाल्य । निर्वर्ण्येति प्रकाशभावः । यावद्बुद्धिवैभवं निःशेषं दृष्ट्वा । विश्रब्धं विस्वस्तं तावताऽपि अभङ्गान्निद्राया वास्तवत्वभ्रमात् यथेच्छम् । परिचुम्ब्य परितो गण्डयोर्भाले नयनोरास्ये च चुम्बनं कृत्वा ।

गण्डस्थलीं पत्युः कपोलभित्तिम् । जातपुलकां चुम्बनेन जातः पुलको रोमाञ्चो यस्यां ताम् । आलोक्य दृष्ट्वा । रोमाञ्चस्य सर्वाङ्गीणत्वेऽपि तदा गण्डस्ले एव दर्शनात्तथोक्तिः । अनेन मम रहस्यकृत्यं ज्ञातमिति लज्जा लज्जते त्रपते इति लज्जा पचाद्यच् लज्जमानेति यद्वा लज्जा अस्या अस्तीति अर्शआदित्वान्मत्वर्थीयोऽच् ततो टाप् लज्जावतीति । अत एव नम्रमुखी नम्रमवनतं मुखं वदनं यस्याः सा तादृशी । बाला नवोढा । लज्जाराहित्यहेतुप्रौढत्वव्यावृत्तये पदमिदम् । हसता तां लज्जावनतां दृष्ट्वा स्मेरमुखेन वा तव रहस्य ज्ञातमिति मत्प्रार्थनायामतत्परा सम्प्रति स्वयं कथं प्रवृत्तेति वा । प्रियेण वल्लभेन । तदा पत्युरिदानीं प्रियेणेति पदं साभिप्रायम् । तदा निद्राव्याजेन सुप्तस्य नानुभावादिज्ञानमत एव पत्युः स्वामिनो न तु प्रियस्य अपूर्वसमागमेनोद्भिन्नरहस्यत्वात् । सम्प्रति जातपुलकत्वेन तस्यानुभावत्वदर्शनात् प्रियेणेति वल्लभेन । चिरं पौनःपुन्यमपरिमितम् । चुम्बिता निक्षिता इति । विश्रब्धपरिचुम्बनेन पत्युः कपोलभित्ति

सञ्जातरोमाञ्चां दृष्ट्वा नैव सुप्तोऽयमिति ज्ञात्वा लज्जिताऽत एव नतवदना मुग्धा स्मेरमुखेन प्रियेण लज्जापगमेन सम्भोगस्वीकरणयावत्तावत् चुम्बितेत्याशयः। लज्जनक्रियया समानकर्तृकत्वेन आलोक्येत्यत्र पूर्वकालिकक्त्वोपपत्तिः। अत्र नायिकारब्धा रतिः। तत्र आलम्बनं पतिस्तमालम्ब्य बालायां भावोद्बोधात्। उद्दीपनं वासगृहस्य निर्जनत्वम्। अनुभावाश्च प्रिये रोमाञ्चोद्गमः। कार्यं प्रेमवीक्षणपरिचुम्बनादि। व्यभिचारी लज्जा तत्कार्यं नतवदनत्वादि। चिरचुम्बनस्य सुरतं व्यङ्ग्यमिति पतिरूपविभावेनोद्बुद्धः निर्जनत्वाद्युद्दीपनेनोद्दीप्तः पतिगतपुलकाद्यनुभावेनानुभवविषयत्वमापन्नो लज्जादिव्यभिचारिणा सुपुष्टः बालागतरतिः शृङ्गारो रसः सम्भोगाख्यो दर्शनस्पर्शनोभयरूप इति। तेन प्रियनिर्जनत्वप्रियगतरोमाञ्चस्वगतलज्जाद्या भावका भावितश्च बालागतरतिभाव इति नायिकारब्धसम्भोगशृङ्गारस्योदाहरणमिदम्। वृत्तं शार्दूलविक्रीडितम्—मसजस्ततः सगुरवः' इति तल्लक्षणम्। अत्र हि लज्जाहासयोर्व्यभिचारिणोः स्वपदोपादानं चिन्त्यमिति बालबोधिनीकाराः। लज्जापदानुपादाने तदनुभावमुखनम्रत्वेन तत्प्रतीतावनुभावव्यङ्ग्यत्वपुष्ट्या भावध्वनित्वम्। स्यान्न तु शृङ्गाराङ्गत्वम्। उपादाने तु गोपनकृतपुष्टिराहित्येन शृङ्गाराङ्गत्वप्राप्तिः। अत एव हासस्यापि स्वपदोपादानमिति विस्तारिकाकाराः। कमलाकरभट्टास्तु चुम्बनप्रधृष्टत्यापि मुखनमनसम्भवे लज्जाया व्यभिचारात्तन्नेति। तन्मते लज्जानम्रमुखीत्येकमेव पदम्। तेन चुम्बनेन प्रियस्य कामोद्रेकाद्रोमाञ्चोद्गमं दृष्ट्वा जागर्त्ययमिति ज्ञानाल्लज्जया नम्रमुखी न तु चुम्बनाय धार्ष्ट्ये रसभङ्गापत्तेरिति। आलोक्येति लज्जानमुखनम्रत्वापेक्षया समानकर्तृकत्वेन विलोकनस्य पूर्वकालिकत्वात् क्त्वेति। भुक्त्वा खिन्न इतिवत्। लज्जावत्याश्चुम्बननिमित्तकमुखनमनासम्भवाद्द्वयं तु तत्र लज्जाया व्यभिचारं न पश्यामः। नायिकारब्धाऽपि रतिस्तूभयोरेवात्र। उभयोः परस्परमालम्बनं निर्जनत्वं शयनञ्चोभयोरेव। नायिका उद्दीपनं नायकनिद्रा नायकस्य नायिकाप्रवृत्तिरेव। मुखनिर्वर्णनादिचुम्बनान्ता नायिकाया अनुभावाः। नायकस्य रोमाञ्चोऽनुभावो हासश्च। लज्जा नायिकागतव्यभिचारी हासव्यङ्ग्यो हर्षो नायकगतश्च। ततश्च नायकविषयिण्याः नायकनिष्ठायाश्च रतेरुद्रेकश्चर्वणाविषय इति। तदित्थम्—नायकोपस्थितयोद्बुद्धः तन्निद्रया शून्यत्वशयनादिभिश्चोद्दीप्तः नायकगतं रोमाञ्चादिनाऽनुभावितः लज्जया सुपुष्टो नायिकागतरतिभावश्चर्वणाविषयः। तथैव नायिकोपस्थित्योद्बुद्धः शून्यत्वशयनादिनोद्दीप्तः नायिकाकृतमुखनिर्वर्णनचुम्बनादिनाऽनुभावितः हास्यव्यङ्ग्यहर्षेण सुपुष्टो नायकगतरतिभावो ह्यास्वादविषय इति।

[ वृत्तिः ] तथा—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं,
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो,
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥३१॥

[ कमला० ] द्वितीयं सम्भागमाह त्वमिति । मुग्धं रम्यम् । विनेति । अक्ष्णैव जगन्मोहनात्कञ्चुलिकायाः वीटिका ग्रन्थिः । सस्मिता आलीजनस्य सखी नायिका । सैव नेत्रोत्सवो भर्तुः चोलिकोपसारणे कुचदर्शनौत्कण्ठ्यात् । तेनानन्दितः सख्याः पत्यनुरागदर्शनेन हृष्टः । शय्योपान्तेति सुरतोद्योगो भर्तुः सूच्यते । आलीजनः आलीकवचनं भोक्तुं गच्छामीत्यादि तस्योपन्यासं यथा स्यात्तथा शनैर्निर्गतः । झटिति गमने तस्या लज्जया पलायनापत्तेरित्यर्थः । पूर्वत्र नायकोऽत्र नायिकालम्बनमिति भेदः । वीटिकास्पर्शाद्यनुभावः । उत्कण्ठादयः सञ्चारिणः ।

[ सरि० ] प्रथमं क्रमप्राप्तनायिकारब्धसम्भोगशृङ्गारमुदाहृत्य सम्प्रति नायकारब्धसम्भोगशृङ्गारोदाहरणायोपक्रमते तथेति । तथा तेनैव प्रकारेण यथा नायिकारब्धस्तथैव नायकारब्धोऽपीति । प्रस्तौति त्वमित्यादि । हे मुग्धाक्षि ! त्वम् कञ्चुलिकया विना एव मनोहारिणीम् लक्ष्मीम् धत्से इति अभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितः आलीजनः अलीकवचनोपन्यासम् शनकैः निर्यातः इत्यन्वयः । हे मुग्धाक्षि ! मुग्धे सुरम्येऽत एव कमनीये अक्षिणी नेत्रे यस्यास्तत्सम्बुद्धौ । त्वं भवती । कञ्चुलिकया स्त्रीणामङ्गरक्षिकयाऽवगुण्ठनिकया । विना तदभावे । एव इत्यवधारणे । मनोहारिणीम् चित्ताकर्षणक्षमाम् । लक्ष्मीम् शोभाम् । धत्से धारयसि । त्वं नयनयोरेव जगन्मोहनक्षमासि तेन बाह्यावरणभूतकञ्चुलिकाद्यावसनेन न किमपि कार्यम् । इति इत्थम् । अभिधायिनि कथनपरे । प्रियतमे वल्लभे ! तद्वीटिकासंस्पृशि तस्याः कञ्चुलिकायाः वीटिका ग्रन्थिः संस्पृशि स्पर्शपरायणे सति मोचनायेति भावः । यदा हि कञ्चुलिकापसारणाय तद्ग्रन्थिमोचननिमित्तं नायकेन हस्तं तत्र सन्निधापितं तदेत्याशयः । शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितः शय्यायाः शयनस्य उपान्ते प्रान्तभागे निविष्टा आसीना सस्मिता स्मेरमुखी सखीनां समक्षमेव ग्रन्थीन् मुमोचयिषतीति लज्जया तस्यानुपेक्ष्यत्वाच्च प्रियतमत्वात् स्मितस्य ग्रन्थिमोचनसम्मतिर्व्यङ्ग्यमन्यथा भ्रुकुटिचाञ्चल्यमेव या सखी आलीजनस्य वयस्या नायिका तस्याः नेत्रयोर्नयनयोरुत्सवे उत्फुल्लता प्रियतमो मह्यमित्थं स्पृहयतीति हर्षेण तेनानन्दितः प्रमुदितः । आलीजनः सखीजनः । अलीकवचनोपन्यासम्

अलीकमसत्यं यद्वचनं वाक्यं भोक्तुं गच्छामीत्यादिकं तस्योपन्यासो निवेशनं यथा स्यात्तथा। अलीकवचनञ्च तद्रहस्यज्ञानगूहनार्थैव यथा सा लज्जातिशयं नानुभवेत्। शनकैः मन्दम् झटिति गमने लज्जया पलायितेति यथा न स्यादिति। निर्यातः वासकक्षान्निर्गत इति। नायकारब्धेऽस्मिन् सम्भोगशृङ्गारे नायिका कमनीयाकृतिर्मुग्धाक्षी आलम्बनम्। नयनलावण्याङ्गसौन्दर्याद्युद्दीपनम्। संलापवीटिकापरामर्शावनुभावौ। औत्कण्ठ्यं कञ्चुलिकापसारणाय व्यभिचारी। नायकगतो रतिभावस्तैस्तैर्भाव्यमान आस्वाद्यतां प्राप्तो रसस्तज्ज्ञैरास्वाद्यमानः समागमरूपत्वात्सम्भोगाख्यः। नायिकापक्षे नायक आलम्बनं नायककृताभाषणवीटिकास्पर्शौ उद्दीपने स्मितनेत्रप्रफुल्लताद्यनुभावाः। तद्वयञ्जितहर्षो व्यभिचारी। तैस्तैर्भाव्यमाना नायिकारतिरास्वाद्यतां प्राप्तः सामाजिकानां चर्वणीयः। तथापि तत्र नायकनिष्ठरतेरेवाधिकचमत्कारितया पूर्वस्माद् भेद इति बोध्यम्। वृत्तं शार्दूलविक्रीडितम्।

[ वृत्तिः ] अपरस्तु अभिलाष-विरह-ईर्ष्या-प्रवास-पापहेतुक इति पञ्चविधः। क्रमेणोदाहरणम्—

> प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गूढरागोदया-
> तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
> यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधीक्षणा-
> दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥ ३२॥

[ कमला० ] अपर इति विप्रलम्भ इत्यर्थः। यः—

> 'भावोदयो रतिर्नाम प्रकर्षमधिगच्छति।
> नाधिगच्छति चाभीष्टं विप्रलम्भः स उच्यते॥'

इत्युक्तेः। अभिलाषः सङ्गमेच्छा। एकदेशे गुर्वादिपारतन्त्र्यात्सङ्गमप्रतिबन्धो विरहः। प्रिये सपत्नीरक्ते कोपः ईर्ष्या। प्रवासो दूरदेशः। शापो मुन्यादिकोपः। अभीष्टस्य प्राप्तियोग्यत्वे विरहः। तेनैकस्य मृतौ करुणेन प्रसङ्गः। विरहः करुणाद्भिन्नः प्रियनैराश्यकारित्वादित्युक्तेः। काव्यप्रदीपस्तु पूर्वसङ्गमाभावे अभिलाषहेतुः। तत्पदेनाभिलाषहेतुरनादिसंसर्गाभावो लक्ष्यते। सङ्गमपूर्वश्चतुर्विध इत्याह। अभिलाषमाह प्रेमेति। मालतीमुद्दिश्य माधवोक्तिः। प्रेम स्नेहस्तेनार्द्रास्तिमिता तदेवाविचलं प्रणयः। प्रणयस्पृशो मालत्या इति वा। परिचयः सङ्घर्षश्चाक्षुषं ज्ञानं वा तेनोद्गाढः। स्थिरो निविडो वा रागोदयो यासु। स एवातिशयेन रञ्जनक्षमत्वाद्रागः। तास्ता मनोरथशतारूढाः। निसर्गः स्वभावस्तेन

रम्याश्चेष्टाः भ्रूभङ्गादयो मयि भवेयुः स्युः। यासु आशंसा इच्छा तया कल्पितासु किं पुनरनुभूतासु इति अपिशब्दः। बाह्यकरणानि चक्षुरादीनि तेषां व्यापारो विषयग्राहित्वं तस्य रोधी प्रतिबन्धकोऽन्तःकरणस्य मनसः सान्द्रो लयस्तन्मयत्वं भवतीत्यर्थः।

[ सरि० ] एवमाश्रयभेदेन सम्भोगशृङ्गारस्य द्वैविध्यमुदाहृत्य सम्प्रति विप्रलम्भशृङ्गारभेदानाह **अपर** इति। **अपरः** अन्यः सम्भोगेतरः शृङ्गारो विप्रलम्भाख्यः। तु इति व्यवच्छेदे सम्भोगव्यतिरिक्तमिति। **अभिलाषेत्यादि।** **अभिलाषः** सङ्गमस्पृहा पूर्वमसङ्गे। अभूतसमागमयोरन्योन्यावाप्तीच्छा। यथोक्तम्—'अभिलाषः स्पृहा तत्र कान्ते सर्वाङ्गसुन्दरे' इति। **विरहः** एकत्रस्थितयोरपि सङ्गमाभावः एकतरस्याननुरागात्सत्यप्यनुरागे गुर्वादिपारतन्त्र्याद् दैवादिवशाद् वा। कारणात्सम्भोगानन्तरवियोगो विरह इति। ईर्ष्या कोपः सा च प्रियकृतनायिकेतरसम्मानजन्या। **प्रवासो** विभिन्नदेशस्थितिरनुरक्तयोरपि कार्यान्तरवशात्। स च भूत-भविष्यद्वर्तमानसाधारणः। शापः संयोगाभावनिमित्तकसमर्थवचनम्। स च निश्चितावधिकोऽनिश्चितावधिकश्च। आद्योऽपि द्विविध एकदेशावस्थितिको दूरदेशावस्थितिकश्च। अन्त्योऽपि तथैव। दूरदेशावस्थितिको निश्चितावधिकः शापो यथा यक्षे जीवनाधिक एकदेशस्थितिकः शापो यथा पाण्डौ। स च हेतुः कारणं यस्य स एवेति स्वार्थे कन्। इति इत्थम्। **पञ्चविधः** पञ्चप्रकारक इति।

तत्राप्यभिलाषहेतुकविप्रलम्भोऽसंयोगपूर्वो यथा मालतीमाधवयोः। केचित्संयोगपूर्वकमभिलाषमपि समर्थयन्ति। शेषास्तु सम्भोगपूर्वा एव। एकदेशस्थितयोरनुरक्तयोः पूर्वानुभूतसम्भोगयोरपि संयोगाभावो विरहस्तयोरेव विप्रकृष्टदेशावस्थितिः प्रवासः। प्रवासे विप्रलम्भो ज्ञानलक्षणशापे तु न तथेति तयोर्भेदः। प्रवासे उभयोर्विप्रकृष्टताऽपरिहार्या शापे एकदेशावस्थितिरपीत्यपि तयोर्भेदः। विरहोऽत्र रतिप्रकृतिक एव शोकप्रकृतिकस्य तु करुणविषयत्वात्। अपरे तु— 'पूर्वानुरागमानाख्यप्रवासकरुणात्मना। विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विध इत्यप्याहुः। तानुदाहर्तुमुपक्रमते क्रमेणेति। **क्रमेण** यथासङ्ख्यम्। **उदाहरणम्** एकैकनिदर्शनम् इति। तत्राद्यमभिलाषहेतुकविप्रलम्भशृङ्गारमुदाहरति **प्रेमार्द्रा** इति। मयि मुग्धदृशः प्रेमार्द्राः प्रणयस्पृशः परिचयात् उद्गाढरागोदयाः निसर्गमधुराः ताः ताः चेष्टाः भवेयुः यासु आशंसा परिकल्पितासु अपि क्षणात् अन्तःकरणस्य बाह्यकरणव्यापाररोधी आनन्दसान्द्रः लयः भवति इत्यन्वयः। मालतीमाधवप्रकरणगतमिदं पद्यम्। अत्र मालतीप्राप्त्यै श्मशानसाधनप्रवृत्तस्य माधवस्याभिलाषो

वर्णितः। मयि अत्र माधवे। मुग्धदृशः मुग्धा कमनीयाऽत एव मनोहारिणी दृक् विलोकनं यस्यातस्याः वीक्षणेनैव मनोहारिण्याः वा कान्ताक्ष्याः। प्रेमार्द्राः प्रेम ममैवासावमुष्याहमित्याकारपक्षपातविशेषस्तेनार्द्राः स्निग्धा हृद्याः। प्रणयस्पृशः प्रणय प्रकृष्ट प्रेम वीक्षणादिना तथा प्रकृष्टतां नीतं यदपराधौघेनाप्यविचाल्यं भवति तं स्पृशन्ति स्वविषयीकुर्वन्तीति। परिचयात् परिचर्या दृढासङ्गस्तस्मात्। उद्गाढरागोदया उद्गाढः सुदृढो न केनापि विचाल्यः रागः परिचयातिशयेन रङ्नक्षमः प्रणयो रागस्तस्योदयः प्रादुर्भावो यासु ताः। निसर्गमधुराः निसर्गेण प्रकृत्यैव न तु कृत्रिमतया मधुराः कमनीया अत एव मनोहराः। ताः ताः अनुभूताः दार्ढ्याय द्वित्वम्। चेष्टाः विलोकनहसितादिरूपव्यापाराः। भवेयुः प्रयुक्ताः स्युः। आशंसायां लिङ्। यासु यादृशीषु चेष्टासु। आशंसापरिकल्पितासु आशंसया मनोरथने परिकल्पितासु विचिन्तितासु। अपि इत्यवधारणे किमुतानुभूतासु तु। क्षणात् तत्कालमेव। अन्तःकरणस्य चित्तस्य। बाह्यव्यापाररोधी बाह्यो बहिःस्थश्चक्षुरादिगम्यो यो व्यापारो विषयग्राहित्वं तं रुणद्धि निवारयति तच्छीलेति तादृशः। आनन्दसान्द्रः आनन्देन सुखातिशयेन सान्द्रः निविडः। लयः विलयः। भवति सम्पद्यते तन्मयत्वं भवतीति। अत्र हि नायिकालम्बनमनुपस्थिताऽपि स्मृतिविषया। तच्चेष्टानुस्मरणमुद्दीपनम्। तत्परिकल्पनाऽनुभावः। तद्वयङ्गिता उत्कण्ठा व्यभिचारिभावः तैस्तैर्भावितो नायकसम्बद्धो रतिभावस्तन्मर्मज्ञैः सामाजिकैरास्वाद्यत इति। वृत्तं शार्दूलविक्रीडितम्।

[ वृत्तिः ] अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृत्
यो मां नेच्छति नागतश्च सहसा कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥३३॥

एषा विरहोत्कण्ठिता।

[ कमला० ] विरहस्याह अन्यत्रेति। इति बहुवितर्का कान्तचित्ताऽवृत्तः सञ्जातो विवर्तनस्य पार्श्वलोडनस्य व्यतिकरः सम्बन्धो यस्याः सा बाला निशान्तं गृहं 'निशान्तपस्त्यसदने' इत्यमरः। तदभ्यन्तरे निद्रां नाप्नोति। वितर्कनिवाह गृहान्तरे ग्रामान्तरे स्त्र्यन्तरे वा गत इत्याशङ्क्याह अन्यत्रेति। इति इयम्। कथा वार्ता। का पुनः मां विना जीवनासम्भवान्नैतत्सम्भाव्यते इत्यर्थः। केनचित्सुहृदा तर्हि वारितस्तत्राह यः मां नेच्छति द्वेष्टि तादृगस्य सुहृदपि नास्ति। तर्ह्यायास्यति तत्राह नागतश्चेति। आगतस्तु न चस्त्वर्थे। कालातिक्रमान्नैतदपीत्यर्थः। तर्हि दैववशान्नागतस्तत्राह सहसेति। सहसा निष्कारणः। विधेर्दैवस्य। कोऽयं प्रक्रम

आरम्भः। विधेर्मया किमपराद्धमिति भावः। हहहेति पाठे दैन्यम्। ननु विरहो न भेदान्तरं प्रवासेन सिद्धेः। न च दूरदेशाभावान्न तथा तद्विशेषणवैयर्थ्यात् तथा तत्राह एषेति। ऐक्ये हि प्रोषितभर्तृकातो भेदो न स्यात्। न च मास्त्विति वाच्यं भरतेन नायिकानां स्वाधीनभर्तृकादिषोडशभेदोक्तेः। अन्यथा विरहान्त-पातादैक्यं स्यादित्यर्थः।

[ सरि० ] विरहहेतुकविप्रलम्भमुदाहरति अन्यत्रेति। अन्यत्र व्रजति इति का खलु कथा अस्य तादृक् सुहृद् अपि न यः माम् न इच्छति आगतः च न अयम् विधेः कः सहसा प्रक्रमः इति अल्पेतरकल्पनाकवलितस्वान्ता वृत्तविवर्तनव्यतिकरा बाला निशान्तान्तरे निशि निद्राम् न आप्नोति इत्यन्वयः। कृतसङ्केतमपि कालाति-क्रमेऽप्यनागतं नायकमादाय कस्याश्चिद्विरहोत्कण्ठिताया उक्तिरियम्। स हि मे प्रियतमः अत्रानागत्य अन्यत्र अन्यया सह गृहान्तरे वा ग्रामान्तरे। गच्छति याति। इति इत्थम्। का कतमा। खलु नाम। कथा वार्ता। अपितु वार्तैव न। स हि मां त्यक्त्वाऽन्यत्र गन्तुं रन्तुं शक्नोतीति वार्तैव नेत्याशयः तस्य मदेकप्राणत्वात्। केनचिन्मित्रेणावरुद्धमपि न सम्भवति यतः अस्य नायकस्य। तादृक् तथाविधः। सुहृन्मित्रम् अपि च। न नैव। यः यो हि। मां तदेकशरणाम्। न नैव। इच्छति वाञ्छति। द्वेष्टीत्याशयः। आगतः प्राप्तः। च अपि वा तु। न नैव। यदि हि सोऽन्यत्र गन्तुमपि न शक्नोति केनचिन्मित्रेणावरुद्धोऽपि न सम्भवतीति तेनागतेन भाव्यमासीत्किन्तु कालातिक्रमेऽपि नागत इति अयमेषः। विधेः दैवस्य। सहसा अकस्मादेव। कः कीदृशः किमुद्दिश्येति। प्रक्रमः आरम्भः। हहहा इति पाठे महद्दैन्यमेतत्। इति इत्थम्। अल्पेतरेति। अल्पेतराः अल्पात्स्तोकादितराः भिन्नाः बह्वचः याः कल्पनाः सम्भावनावितर्कणानि ताभि कवलितः ग्रसितः स्वान्तं हृदयं यस्याः सा तथाभूता। वृत्तविवर्तनव्यतिकरा वृत्तः सम्पन्नो विवतनानां पार्श्वपरिवर्तनानां व्यतिकरः समूहो यस्यास्तथावस्था। बाला कामिनी। निशान्तान्तरे निशान्तं गृहमुपचारादत्र शयनागारमुपलक्षणादत्र शय्या तस्यान्तरे मध्ये वा गृहाभ्यन्तरे एव। निशि रात्रौ शयनकालेऽपि।. निद्रां स्वापम्। न नैव। आप्नोति लभत इति। गृहाभ्यन्तरे स्वकीयशयन एव सुप्ताऽपि चित्तास्वास्थ्या-न्मुहुर्मुहुः शय्यायां लुठन्ती सती नैव निद्रातीति। विरहस्य प्रवासाद्भेदंदर्शनायाह एषेति। एषा काव्योपस्थापिता नायिका। विरहोत्कण्ठिता विरहेण वियो-गजपीडया उत्कण्ठिता मिलनसमुत्सुका षोडशभेदासु नायिकास्वन्यतमेति। प्रवासज-विप्रलम्भस्तु प्रोषितभर्तृकाया एव विषयो न तु विरहोत्कण्ठितायाः। विरहोत्कण्ठिता हि नायकागमनं प्रतीक्षते सद्यः तत्सम्भवात्। तद्विपरीतं प्रोषितभर्तृका न तथा

सद्यस्तदसम्भवात् । नायकस्य प्रत्यागमनसमये निश्चिते सत्यपि नागतं यदि प्रतीक्षते प्रोषितभर्तृका तदा सा विरहोत्कण्ठिता भवेदेवेति का हानि अवस्थान्तरत्वात् । 'यो मां नेच्छति न' इत्यन्वाय्य कैश्चित्तत्र काकोः कल्पनाऽपि कृताऽस्ति । विरहोत्कण्ठिताया लक्षणं यथा दशरूपके—'चिरयत्यव्यलीके तु विरहोत्कण्ठितोन्मनाः' इति । प्रोषित-भर्तृकालक्षणं तु 'दूरदेशान्तरस्थे तु कार्यतः प्रोषितप्रिया' इति । अत्रेदमप्यवधेयं यद्विरहप्रवासयोर्न केवलं स्थानकृत एव भेदः किन्त्ववस्थाकृत एव । यद्यागमनं सुनिश्चितं किन्तु नायात इति विरहः तद्विपरीतमागमनसमयेऽनिश्चिते वा निश्चितेऽपि असद्यस्कत्वे प्रवास इति । काव्येऽस्मिन् यो हि कृतसङ्केतोऽपि नागतः स आलम्बनम् । तदनागमनमेकान्तशयनमित्याद्युद्दीपनम् । विवर्तनादिरनुभावाः । सहसा कोऽयं विधेः प्रक्रमः इति सूचितो विस्मयो हहहेति पाठे तत्सूचितं दैन्यमपि व्यभिचारि-भावः । खण्डशः प्रतीतैरपि तैरखण्डत्वेन भाविता नायिकासम्बद्धरतिस्तज्ज्ञैरास्वाद्येति विरहहेतुकविप्रलम्भशृङ्गारस्योदाहरणमिदम् ।

[ वृत्तिः ] सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिससूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥ ३४ ॥

[ कमला० ] ईर्ष्याया आह सा पत्युरिति । सा बाला मुग्धा । पत्युः प्रथमोऽपराधः द्वितीयादौ चातुर्यसम्भवात् । सख्येनोपदेशः सख्येत्यसमस्तं वा तयोपदेशे तेन विना तदभावात् । सविभ्रममङ्गचलना च वक्रोक्तयश्च ताभिः संसूचनं मानसेत्यर्थात् । न जानाति किन्त्वञ्जनपत्रवल्लीक्षालनात् । स्वच्छैरच्छकपोलयोरुत्तान-शयनान्मूले गलितैर्लुण्ठिता लोला अलका येषु । अश्रुभिरुपलक्षितेत्यपव्याख्या । अश्रुभिरलकैश्च पर्यस्ते व्याप्ते म्लाने वा नेत्रोत्पले यस्या इति युक्तोऽर्थः । केवलं रोदित्येव न तु वदतीत्यर्थः । अत्र पत्युरन्यस्त्रीसङ्गादीर्ष्या ।

[ सरि० ] ईर्ष्याहेतुकविप्रलम्भमुदाहरति सेत्यादि । अमरुशतकगतं पद्यमिदम् । नवोढायाः कस्याश्चिद् वयस्याया वृत्तान्तवर्णननिमित्तिका कस्याश्चिदुक्तिरियम् । सा बाला पत्युः प्रथमापराधसमये सख्योपदेशम् विना सविभ्रमाङ्गचलनावक्रोक्तिसंसूचनम् नो जानाति पर्यस्तनेत्रोत्पला सा स्वच्छैः अच्छकपोलमूलगलितैः लुठल्लोलालकैः अश्रुभिः केवलम् रोदिति एव इत्यन्वयः । सा अस्माकं प्रियसखी । बाला मुग्धा । पत्युः स्वामिनो न तु प्रियस्य प्रियत्वे त्वपराधायोगात् । प्रथमापराधसमये प्रथम आद्यत्वेन कृतो योऽपराधः अन्यकामिनीसम्बन्धरूपो गोत्रस्खलनादिकस्तस्य समयेऽवसरे । प्रथमत्वेनात्यन्तासह्यत्वाद् द्वितीयादौ तु चातुर्यसम्भवाच्च । सख्योपदेशं

सख्या भावः सख्यं मैत्री—'सखि वणिग्दूताद्यः' इति यः यद्वा सख्यां साधुः सख्यः—तत्र साधुः इति यः। यद्वा सख्यै हितमिति सख्यं तस्मै हितमिति यत्। सख्येन मैत्र्या य उपदेशः शिक्षा यद्वा स चासौ उपदेशश्च तम्। विना ऋते। **सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्** विभ्रमो हावविशेषस्तेन सहितं यथा स्यात्तथा अङ्गानां भ्रुकुट्यादीनां वलना सञ्चालनं च वक्रोक्तयः कुटिलवचनानि च ताभिः संसूचनं कोपप्रकाशनम्। **नो** नैव। **जानाति** वेत्ति। **पर्यस्तनेत्रोत्पला** परितः न कोऽपि पश्येदिति लज्जया सर्वतः अस्ते क्षिप्ते नेत्रे एव उत्पले कमले यया सा तादृशी। सा। **स्वच्छैः** निर्मलैः चिरकालरोदनेनाञ्जनपत्रावलीप्रक्षालनात् स्वच्छता। **अच्छकपोलमूलगलितैः** अच्छयोर्निर्मलयोः कपोलयोः गण्डस्थलयोः मूले नेत्रयोरधोभागे गलितैः पतितैः उत्तानशयनादिति। अत एव **लुठल्लोलालकैः** लुठन्तो मज्जन्तो लोलाश्चञ्चलाः कुसुमगुम्फनादिसंस्काराभावात् अलकाश्चूर्णकुन्तलकेशा येषु तैः। तादृशैः। **अश्रुभिः** बाष्पैः। उपलक्षणे तृतीया। **केवलम् रोदिति** परिदेवते। **एव** इत्यवधारणे अयोगान्ययोगव्यवच्छेदात्मकः। अश्रुज्ञाप्यं केवलं रोदनमेव करोति न तु विभ्रमशब्दप्रयोगा ज्ञापकान्तरप्रयोगमपीति। अश्रुजनकीभूत अन्तरो व्यापारो रोदनमित्युद्द्योतकाराः। लुठल्लोलोदकैरिति पाठे लुठद् भूमौ पतत् लोलं चञ्चलम् उदकं स्रोतो येषान्तैरिति। प्रभाकारास्तु लुठन्तो विप्रकीर्णा लोलाश्चञ्चला येऽलकाः केशास्तद्रूपैरिति व्याख्यान्ति। रूपकस्योभयोः सूक्ष्मत्वादिति। तत्र रूपकमप्रयोजकमिति काव्यविदां स्पष्टमिति सुधासागरकाराः। कमलाकरभट्टास्तु अश्रुभिरुपलक्षितेति व्याख्यां गर्हयन्ति। तन्मते लुठल्लोलालकैः अश्रुभिश्च पर्यस्तनेत्रोत्पला पर्यस्ते व्याप्ते म्लाने वा नेत्रोत्पले यस्याः इति युक्तोऽर्थः। बालप्रियाकारा लुठल्लोलालकैरश्रुभिश्चोपलक्षितेति व्याख्यान्ति। सुधासागरकारास्तु लुठल्लोलालकैरिति अश्रुभिरित्यस्य विशेषणत्वेन व्याख्यान्ति। अर्जुनवर्मदेवस्तु लुठल्लोलोदकैरिति पाठं व्याख्यान्ति रसिकसञ्जीविन्यां यथा निमेषार्द्धबद्धबिन्दुजालतया लुठत्पतनशीलत्वेन लोलमुदकं येषां तैरिति। तन्मतेऽपि अश्रुभिरुपलक्षितेति व्याख्यैव सम्मता। वयमत्र सुधासागरमेवानुयामस्तत्त्वसान्निध्यात्तत्र। अत्रालम्बनं पतिस्तत्कृतापराध उद्दीपनम्। रोदनाद्यनुभावः तत्सूचिताऽसूया व्यभिचारी। तैः खण्डशः प्रतीतैरपि पश्चादखण्डत्वेन मिलितैर्भाविता नायिकासम्वरतिरास्वाद्यतां प्राप्ता तज्ज्ञैश्चर्व्यमाणा। ईर्ष्याहेतुकविप्रलम्भशृङ्गारस्योदाहरणमिदम्। ईर्ष्या च पत्युरन्यासङ्गाशङ्काहेतुका।

[ वृत्तिः ] प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तं न गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥ ३५ ॥

[ कमला० ] प्रवासस्याह प्रस्थानमिति। जीवितं प्रति नायिकोक्तिः। हे प्रिय ! जीवित कान्तवत्त्वाऽपि मम त्यागौचित्यात् प्रिये गन्तुं निश्चितचित्ते न तु गते वलयैः प्रस्थानं कृतमिति कृशत्वम्। हृदयस्थत्वात्प्रियसखैरस्रैरश्रुभिर्गतम्। धृत्या धैर्येण क्षणमपि नासितं न स्थितं चित्तेन पुरः प्रथमं गन्तुं व्यवसितमुद्युक्तम्। भावे क्तः। ननु गतं तेन सममित्यविरोधः। गन्तव्ये इत्यवश्यार्थे कृत्यः। सुहृदाप्तः। यद्वा प्रियस्य सुहृदां समूहः। किमु कुतः। त्यज्यते त्वमपि गच्छेत्यर्थः।

[ सरि० ] प्रवासो यूनोरेकतरस्य दूरदेशस्थता। स च भूतभविष्यद्वर्तमानसाधारणः। तत्र भविष्यत्प्रवासहेतुकविप्रलम्भशृङ्गारमुदाहरति प्रस्थानमिति। पद्यमिदममरुशतकगतम्। प्रवत्स्यत्पतिकायाः कस्याश्चित्स्वजीवनं सम्बोध्य सोपालम्भं कथनमिदम्। प्रियतमे यातुं निश्चितचेतसि वलयैः प्रस्थानम् कृतम् प्रियसखैः अस्रैः अजस्रम् गतम् धृत्या क्षणम् न आसितम् चित्तेन पुरः गन्तुम् व्यवसितम् इति सर्वे समम् प्रस्थिताः हे जीवित ! गन्तव्ये सति प्रियसुहृत्सार्थः किमु त्यज्यते इत्यन्वयः। प्रियतमे वल्लभे। यातुं दूरदेशं गन्तुम्। निश्चितचेतसि निश्चितं तत्परं चेतश्चित्तं यस्य तस्मिन् तत्परे सति। वलयैः कङ्कणैः। प्रस्थानं यात्रारम्भः। कृतं विहितम्। कार्श्यातिशयेन वलयैः स्वस्थानं त्यक्तमिति। प्रियसखैः प्रियः सदासन्निहितत्वेन दयित अश्रूणां हृदयस्थानीयत्वात् सखा मित्रं तैः। टच्। अस्रैरश्रुभिः। अजस्रं निरन्तरम्। गत यातम्। यदा हि प्रियस्य प्रवासजिगमिषाऽवगता तदाप्रभृत्येव निरन्तरं तानि गच्छन्ति सम्प्रति नैवावशिष्टानीति। तच्छ्रुत्वैव धृत्या धैर्येण। क्षणम् निमेषार्धमपि। न नैव। आसितं स्थितम्। धैर्यमपि तदैव निर्गतमिति। चित्तेन चेतसा तदेकाधारेण। पुर अग्रे अग्रे तस्येति। गन्तुं प्रस्थितम्। व्यवसितमुद्युक्तम्। इति सर्वे त्वत्सहचराः। समम् एककालमेव तदैवेति। प्रस्थिताः निर्गताः। तेन हे जीवित ! हे जीवनम् ! गन्तव्ये प्रियप्रस्थानक्षणमेव त्वमपि नैव स्थातुं शक्नोषीति अवश्यमेव गन्तव्ये कृत्यल्युटो बहुलमिति अवश्यार्थे तव्यः। सति स्थितौ। प्रियसुहृत्सार्थः प्रियोऽद्वितीयत्वेनाभीष्टः यः सुहृन्मित्रं तथाभूतो यः सार्थः सहयात्री। किमु किन्निमित्तम्। त्यज्यते हाप्यत इति। यदा हि प्रियः प्रवत्स्यतीति श्रुतं तदैव वलयबाष्पधैर्यचित्तादयस्त्वत्सहचरास्तु प्रस्थिता एव तत्प्रस्थानात्पूर्वमेव। त्वमपि तत्प्रस्थानसमकालमेव स्थातुमवश्यमेव नैव शक्ष्यस्यसीति हे जीवित ! गन्तव्यमेवेति प्रियतममित्रसहयात्री नैव त्यक्तव्य इति त्वयाऽपि तेन सहैव गन्तव्यमित्याशयः। केचित्तु प्रियेति जीवितविशेषणम् सुहृत्सार्थ इति सुहृदां सार्थः समूह इत्यन्वाययन्ति।

वस्तुतस्तु सार्थो हि वणिजां समूहः किन्तु तदितरेषामपि सङ्घातमात्रेऽपि प्रयुक्तः 'सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके' इति मेदिनीकोशात्। वलयाश्रुधृतिप्रभृतिष्वपि चैतन्यारोपादयमपि सङ्गमनीय इति यदुक्तं तन्न चारु। अचेतनसमूहेऽपि सार्थशब्दस्य प्रयोगदृष्टेः।

काव्येऽस्मिन् प्रवत्स्यत्प्रिय आलम्बनं तत्प्रमाणव्यापारा उद्दीपनं कार्श्यश्रुपाताधैर्यादयोऽनुभावाः। तत्सूचिता चिन्ता व्यभिचारिभावः। तैस्तैरखण्डत्वेनोपस्थितैरपि पश्चात्खण्डशः प्रतीतैर्भावितो नायिकासम्बद्धरतिभावस्तज्ज्ञानां चर्वणाविषय इति प्रवासहेतुकविप्रलम्भशृङ्गारस्योदाहरणमिदम्।

[ वृत्तिः ] त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥ ३६॥

[ कमला० ] शापस्याह। मेघदूते प्रियां प्रति वियुक्तगन्धर्वोक्तिः। प्रणयो मानः प्रीतिर्वा तेन कुपिताम्। धातुरागैः रक्तधातुभिर्गैरिकाद्यैः। कोपेन लौहित्याद्धातुरागैरिति मानिन्याः शय्यां हित्वा शयनाच्छिलायामिति चोक्तम्। तेनानुनयार्थमात्मानं यावत् यदा चरणाऽऽनतं कर्तुमिच्छामीत्यर्थः। न तु करोमीति न दृष्टिप्रनिघाते लिखनमेव कथमिति शङ्का। तत्रापि इच्छामीत्यन्वयाल्लिखनद्वारा तत्प्रतिबन्ध इत्युत्तरस्यापास्तम्। लिखिताया अपि पादपतनावसरे एव दृष्टिप्रतिघातात्तावत्तदैव विरहस्मृत्युद्बुद्धशोकजैरश्रुभिर्मुहुरुपचयेनाश्रुमार्जनेऽप्यशक्यत्वम्। क्रूरः श्रेयोविघातकः। कृतान्तो दैवं कुबेरशापो यमश्च। कृतान्तो यमसिद्धान्तदैवाकुशलकर्मस्विति कोशात्। तस्मिन् लिखनेऽपि नौ आवयोः सङ्गमं न सहते किं पुनर्वास्तवमित्यर्थः। अत्र कुबेरशापो यक्षस्य विरहे हेतुः। अत्र प्रवासहेतुत्वेऽपि तस्याविवक्षया पृथगुक्तिः। तत्त्वं तु पाण्डुमाद्रयोः शापाद्विप्रलम्भस्तत्र प्रवासाभावादिति।

[ सरि० ] शापहेतुकविप्रलम्भशृङ्गारमुदाहरति त्वामित्यादि। मेघदूतगतमिदं पद्यम्। कुबेरस्य वर्षभोग्यशापात् प्रियया वियुक्तस्य रामगिरिमास्थितस्य यक्षस्य प्रियामुद्दिश्य सन्देशत्वेन मेघं प्रत्युक्तिरियम्। धातुरागैः शिलायाम् प्रणयकुपिताम् त्वाम् आलिख्य यावत् आत्मानम् ते चरणपतितम् कर्तुम् इच्छामि तावत् मुहुः उपचितैः अस्रैः मे दृष्टिः आलुप्यते क्रूरः कृतान्तः तस्मिन् अपि नौ सङ्गमम् न सहते इत्यन्वयः। धातुरागैः धातवो गैरिकादय एव रागो रञ्जकद्रव्यं तैः। गिरौ मस्याद्यभावादिति सामान्योऽर्थः। कुपिताया हि लौहित्यौचित्यादिति विशेषोऽर्थः।

**शिलायां** शिलापट्टे। तत्र पत्राद्यभावादिति सामान्योऽर्थः। कुपितायाः शय्यां विहाय भूमौ शयनात्कठिनचित्तत्वाच्चेति विशेषोऽर्थः। **प्रणयकुपिताम्** प्रणयेन प्रेमातिशयेन प्रगाढं प्रेम प्रणय इति कुपितां कृत्रिमकोपावस्थागताम्। त्वां भवतीम् त्वत्प्रतिकृतिमित्याशयः। **आलिख्य** निनाय आचित्र्येति। **यावत्** यदा। **आत्मानम्** स्वम्। **ते** तव। **चरणपतितम्** चरणयोरङ्घ्रयोः पतितं प्रसादनायावनतम्। **कर्तुं** विधातुम्। **इच्छामि** प्रयते। **तावत्** तदैव इच्छासमकालमेव। **मुहुः** अविरलम्। **उपचितैः** प्रवृद्धैः त्वत्स्मृतिदार्ढ्येन अविरलं पतनशीलैः। **अस्रुभिः** वाष्पैः। **मे** मम। **दृष्टिः** विलोकनम्। **आलुप्यते** आव्रियते। दृष्टेरावरणेऽश्रूणां कर्तृत्वम् तेषाञ्च त्वत्स्मृतेरेव कर्तृतेति। **क्रूरः** दारुणोऽकरुणः। **कृतान्तो** दैवम्—'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति कोशः। **तस्मिन्** आलेख्ये। अपि इत्यवधारणे प्रकृतौ तु का कथेति। **नौ** आवयोः। **सङ्गमं** समागमम्। **न** नैव। **सहते** न मर्षतीति। काव्येऽस्मिन् नायिकाऽऽलम्बनम् हृदयगता। तत्प्रणयकोप उद्दीपनं परिकल्पितः। प्रसादनाय पादपतनेच्छाऽनुभावः। कृतान्तेऽसूया व्यभिचारिभावः। तैस्तैः सम्भूय भावितो यक्षसम्बद्धरतिभावस्तज्ज्ञानामास्वादविषय इति विप्रलम्भश्च कुवेरशापहेतुक इति शापहेतुकविप्रलम्भशृङ्गारस्योदाहरणमिदम्।

अत्र कथञ्चिदाचित्रितायामाकृतौ पादपतनावसरे तद्विलासविशेषस्मरणोद्दीपितशोकप्रवर्तितैरश्रुभिर्दर्शनविघात इति वाचस्पतिमिश्राः। लिखनमपीच्छाविषय एवेति गोविन्दठक्कुराः। लेखनं कथञ्चिन्निर्वाह्य पादपतनारम्भे त्वद्विलाससंस्मरणविपुलान्तःकरणस्य मम प्रवाहतामाप इति पक्षे एव काव्यप्रकाशदर्पणकाराः। लेखनस्यापीच्छाविषयत्वे सत्यपि तदा स्वरूपमात्रस्मृतेः पादपतनावसरे तु तद्विलासादिस्मृतेः प्रभावाधिक्यात् दृष्टेरालोपः पादपतनावसरे एव प्रभावीति वयम्। तेन हि समाप्तलेखनक्रियस्य मे पादपतनावसरे इति व्याख्या सुसङ्गता। ननु 'शठेन विधिना निद्रादरिद्रीकृतः' इत्यत्रेवात्र क्रूरपदेनासूयावगमादसूयाख्यभावध्वनिरेव' तत्कथमिदं विप्रलम्भशृङ्गारोदाहरणमिति चेन्न।, विप्रलम्भावगमानन्तरवर्तिसमर्थकवाक्येन भावध्वनेर्नैव किञ्चित्करत्वं जातत्वात्तस्य। यावत्तावत्पदाभ्यामेकवाक्यत्वेनैवान्वयाद्युक्तमेवेदं विप्रलम्भोदाहरणमिति सुधासागरे स्पष्टम्। यद्यप्यत्र प्रबन्धालोचनया उन्माद एव प्राधान्येन प्रतीयते तथापि तदनालोचनेन उन्मादाभास एवेत्यभिप्रेत्य रसध्वनित्वेनोदाहृतमिति प्रभायां स्पष्टम्। अत्र प्रवासहेतुत्वे सत्यपि तस्याविवक्षयैव शापहेतुकत्वम्। वस्तुतस्तु शापहेतुकविप्रलम्भशृङ्गारोदाहरणं पाण्डुमाद्र्योरेव तत्र प्रवासस्य नितान्ताभावात्' इति मधुमत्यां कमलाकर्याञ्च स्पष्टम्।

[ वृत्तिः ] हास्यादीनां क्रमेणोदाहरणम्—

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।
तारस्वनं प्रथितथूत्कमदात्प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥ ३७ ॥

[ कमला० ] एवं शृङ्गारभेदानुक्त्वा हास्यादीनामुदाहरणान्याह आकुञ्च्येति। मन्त्रयुतानामम्भसां पृषतैर्विन्दुभिः प्रतिपदं पवित्रे मम मूर्ध्नि वेश्या उच्छिष्टादिनाऽशुचिं पाणिमाकुञ्च्याङ्गुलिसङ्कोचेन मुष्टीकृत्य। तारो दीर्घः स्वनः शब्दो यत्र। प्रहितस्थूत्को लाला यत्र यद्वा प्रेषितस्थूदितिशब्दो यत्रेति क्रियाविशेषणम्। प्रहारमदात्कृतवती। हा हा हतोऽहमित्युक्त्वा विष्णुशर्मा ब्राह्मणो रोदितीत्यर्थः। अत्र विष्णुशर्मालम्बनं थूत्कमुद्दीपनं रोदनादयोऽनुभावाः ग्लान्यादयो व्यभिचारिणः स्मितहसितादीन्युत्तममध्यमाधमेष्वनुभावाः यस्य हासस्तदनिबन्धेऽपि सामर्थ्यात्तद्धीः। विकृतवाग्वेषाद्यैर्हासोदयात्।

[ सरि० ] इत्थं शृङ्गारस्य सम्भोगविप्रलम्भस्वरूपं सोपभेदं सप्रपञ्चमुदाहृत्य सम्प्रति कारिकोपवर्णितक्रमानुसारेण हास्यादीनुदाहर्तुमुपक्रमते हास्यादीनामित्यादिना। हास्यादीनां हास्यप्रभृतीनां रसानाम्। क्रमेण कारिकोपवर्णितक्रमानुसारेण। उदाहरणं लक्ष्योपस्थापनमिति। क्रमस्तु हास्यकरुणरौद्रवीरभयानकबीभत्साद्भुता इति। तेषामपि शृङ्गारस्येव सत्यपि भेदोपभेदेषु प्रत्येकमेकैकमेवोदाहरणमत्रोपस्थाप्यत इति द्योतनायैकवचनम्। बहुवचनान्तपाठे समुदायसङ्केतनमिति बोध्यम्। हासप्रकृतिकत्वं हास्यत्वम्। विकृताकारवाग्वेषचेष्टादेस्तस्य भावनम्। स्मितहसितविहसितावहसितापहसितातिहसितभेदादयं षड्विधः क्रमशो द्विकत्वेन उत्तममध्यमाधमपात्रविषयः। तत्र यस्य हासस्तस्य विभावादिसामर्थ्यादेवोपस्थितिर्न तु साक्षादेव। सोऽपि विभावादिसाधारण्यबलादभेदेन भावुकैरास्वाद्यते। हास्यसामान्यस्योदाहरणं प्रस्तौति आकुञ्च्येति। विष्णुशर्माणमुपहसतः कस्यचिदुक्तिरियम्। विष्णुशर्मा वेश्या अशुचिम् पाणिम् आकुञ्च्य मम मन्त्राम्भसां पृषतैः प्रतिपदम् पवित्रे मूर्ध्नि तारस्वनम् प्रहितफूत्कम् प्रहारम् अदात् अहम् हत हा हा इति रोदिति इत्यन्वयः। विष्णुशर्मा तदाऽऽख्यः कैश्चिद् विप्र। विप्र इति मन्त्रपूतजलपूतशिरस्कत्वेन व्यज्यते। वेश्या पण्यस्त्री। अशुचिम् उच्छिष्टादिनोपहतं वा वामम्। पाणिं करम्। आकुञ्च्य अङ्गुलिसङ्कोचनेन मुष्टीकृत्य। मम मे मन्त्राम्भसां मन्त्राः वेदवाक्यानि तैरामन्त्रितानि अम्भांसि जलानि तेषाम्। पृषतैः विन्दुभिः। प्रतिपदम् प्रतिक्षणम्। पवित्रे

पाविते। मूर्ध्नि शिरसि। तारस्वनं तार उच्चः स्वनो निनादो यस्मिन् कर्मणि यथा स्यात्तथा। तारस्वरमिति पाठे तारो दीर्घः स्वरो यत्रेति। प्रथितथूत्कम् प्रथितो विस्तारितः थूत्कस्थूदिति शब्दो यत्र। प्रहितथूत्कमिति पाठे प्रहितः प्रयुक्तः थूत्को लाला वा थूदिति शब्दो यत्रेति। तथा प्रहारं ताडनम्। अदात कृतवती। तेन अहम् विष्णुशर्मा। हतः प्रणष्टः। हा हा इति दैन्ये। सम्भ्रमे द्वित्वम्। इति इत्युक्त्वा। रोदिति परिदेवते इति। काव्येऽस्मिन् विष्णुशर्माऽऽलम्बनं तत्परिदेवनमुद्दीपनमुद्वेगजाड्यादयो व्यभिचारिणः। स्मितहसितादीनि उत्तम-मध्यमाधमेष्वनुभावाः। हासः स्थायिभावस्तैर्भावितः स्वदते भावुकानामिति हास्य-रसस्योदाहरणमिदम्। अत्र विकृतवाग्वशाद्धास्यः।

अत्रेदमवधेयम्—

यथा हि भावुकः रमण्या लावण्यविशेषदर्शनाज्जाताह्लादस्तामाह्लादजनकत्वेन तदभेदेन गृह्णाति। तदध्यवसायवासना पुनः पुनः स्मरणेन दृढीकृता रतिरेवाह्लादो नाम। तदद्रावितेन चेतसा वेद्यसुखविशेषः स्तम्भादिसात्त्विकभावजनकः।

तथैव विकृताकारवाग्वेषादर्शनं हि हर्षजनकतया तदभेदेन ग्रहणात्तदुत्था वासना दृढीकृता हासहर्षविकृतेन चेतसा ग्राह्यः सुखविशेषो नाडीक्षोभद्वारा स्मितहसितादि प्रवर्तयति। यथाविधहासप्रकृतिको हि हास्यो रसः। विष्णुशर्मणि हर्षसाधनत्व-तदभेदादिवासनात्मको हासः हर्षसाधनत्वादिप्रतिसन्धानजन्मा राग एव हासो रागस्यापि वासनारूपेण परिणमनादिति गोकुलनाथाः।

यद्यप्यत्र हासास्याश्रयो नैव स्पष्टः। यदि हि सामाजिक एव स स्यात्तदा स्वकान्तावर्णनेऽपि रसोद्बोधः स्यात्। तेन हि निराश्रयत्वे कथं रसोद्बोध इत्यपेक्षायामुच्यते—विभावादिबलादाश्रयाक्षेपेणेति। यथोक्तम्

यस्य हासः स चेत्क्वाऽपि साक्षान्नैव निबध्यते।
तथाप्येष विभावादिसामर्थ्यादिव सीयते॥
अभेदेन विभावादिसाधारण्यात्प्रतीयते।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते॥' इति।

[वृत्तिः] हा मातस्त्वरिताऽसि कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥

[ कमला० ] करुणमाह हा मातरिति । राजपत्न्यां मृतायां परिजनोक्तिरियम् । कुत्र त्वरिताऽसि त्वरया गतासि । त्वमिताऽसीति पाठे कुत्रेतासि गतासि । हा किमिदमित्यतर्कितप्राप्तेः पूजाद्यैरप्यरक्षणाद् देवताक्षेपः । क्वाशिषो द्विजाशिषोऽपि व्यर्था इत्यर्थः । क्वशब्दस्योभयत्रान्वयः । प्राणान् धिक । एवं दुःखेऽपि स्थिरत्वात् । ते तवाङ्गेषु हुतवहोऽग्निरेवाशनिः पतितः । इमे दृशौ दग्धेऽशुभदर्शनादित्यर्थः । बहुक्रन्दनात् घर्घरादिस्वराः । बाष्पेण मध्ये रुद्धाः स्थगिताश्च ताश्च ताः करुणाश्च । इत्थं गिरः अचेतनान्यपि द्रावयन्तीत्यर्थः । अत्र मृताऽऽलम्बनं शरीराग्निसंयोगाद्युद्दीपनं रोदनमनुभावो दैन्यादयः सञ्चारिणः ।

[ सरि० ] शोकप्रकृतिकत्वं करुणत्वम् । शोको हि द्विविधः--इष्टनाशोऽसहिष्णुत्वलक्षणो द्वेषः प्रथमः दुःखसाधनविपदुपनिपातगोचरश्च द्वितीयः । तयोराद्यः करुणरसप्रकृतिः दुःखमयोऽपि द्वेषो रत्यंशाह्लादसम्भेदात सुरतकालीनदन्तक्षतादिरिव स्वदते इति । यथोक्तम्—इष्टनाशादनिष्टाप्तेः करुणः शोकप्रकृतिको यत्र शोच्यमालम्बनं तस्य विपन्नतोद्दीपनं दैवनिन्दाभूपातक्रन्दनादयोऽनुभावाः वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलापाश्च निर्वेदमोहापस्मारग्लानिव्याधिस्मृतिश्रमविषादजडतोन्मादचिन्ताद्या व्यभिचारिणः । करुणमुदाहरति हा मातरिति । हा मातः ! कुत्र त्वरिता असि इदम् किम् देवताः हा आशिषः क्व प्राणान् धिक् अशनिः पतितः ते अङ्गेषु हुतवहः दृशौ दग्धे इत्थम् पौराङ्गनानाम् घर्घरमध्यरुद्धकरुणाः गिरः चित्रस्थान् अपि रोदयन्ति भित्तीः अपि शतधा कुर्वन्ति इत्यन्वयः । हा इति विषादे । हे मातः ! हे अम्ब ! पौराङ्गनापदेन कस्याश्चिद्राज्ञ्याः निधनं सूच्यते । अत एव मातरिति मातृस्थानीये देवि ! इति । कुत्र क्व गन्तव्ये । त्वरिता सञ्जातत्वरा । असि विद्यसे । क्व हि गमनाय द्रुतं चलितासि । इदं भवत्या नितान्तप्रस्थानम् । किम् किन्निमित्तकमप्रत्याशितं वा । देवताः पूजितदैवतानि । हा धिगेव । आशिषः विप्रवचनानि सदामङ्गलपराणि । क्व कुत्र निलीनाः व्यर्था एवेति । प्राणान् अस्माकमसून् । धिक् त्वदभावेऽपि स्थिरत्वात् यद्वा प्राणान् धिगनित्यत्वादस्थिरत्वात् । अस्मासु अशनिः वज्रम् । पतितः प्रहृतः स्वयमेव । ते भवत्याः । अङ्गेषु कोमलावयवेषु । हुतवहः वैश्वानरः । पतित इति शेषः । भवद्देहदाहोऽस्मासु वज्रपात एवेति । दृशौ नयने याभ्यां भवती स्नेहेनास्मान् पश्यति स्म ते । दग्धा वह्निना भस्मसात्कृतौ यद्वाऽस्माकं दृशौ दग्धे स्फुटिते इवामङ्गलदर्शनात् । इत्थम् अनेन प्रकारेण । पौराङ्गनानां पुरे नगरे भवाः पौराश्च ता अङ्गनाः स्त्रियस्तासाम् । घर्घरमध्यरुद्धकरुणाः घर्घरा उच्चैः क्रन्दनाद् घर्घरिताः च मध्येऽन्तराले श्रमादश्रुबाहुल्याच्च रुद्धा विच्छिन्नाश्च करुणाः कातराः कर्मधारयगर्भः कर्मधारयः । तादृशाः

गिरो वचनानि। चित्रस्थान् आलेख्यगतान्। अपि इत्यवधारणे किमुत वास्तविकान्। भित्तीः कुड्यान्। अपि इति अवधारणे किमुत सचेतनानपीति। शतधा खण्डशः। कुर्वन्ति विदधति। इति। वृत्तं शार्दूलविक्रीडितम्। लक्षणं तु 'मसजसततगा' इति। अत्र हि मातृपदोपचरिता काचिदालम्बनं तन्निधन-दाहाद्युद्दीपनं रोदनाद्यनुभावो निर्वेदादिर्व्यभिचारी। मातृविषयकप्रीत्युपबृंहित-तन्निधनासहिष्णुत्वरूपः शोकस्तैस्तैर्भावितः स्वदते इति करुणरसस्योदाहरण-मिदम्। यत्र तु शोच्यविषया प्रीतिर्न स्फुरति किन्तु केवल एवानिष्टगोचरो द्वेषस्तत्र त्वसौ भाव एव न तु रसोऽनास्वाद्यत्वात्।

[ वृत्तिः ] कृतमनुमतं दृष्टं वा यैरिदं गुरुपातक-
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ३९ ॥

[ कमला० ] क्रोधहेतुरौद्रमाह कृतमिति। वेणीसंवरणे द्रोणवधेऽश्वत्थामोक्ति-रियम्। कर्तुरनुमन्तुर्द्रष्टुरुपेक्षकस्य च दण्डमाह। इदं गुरोर्वधरूप पातकं यैर्भवद्भिरविवेकात्पशुभिः कृतमनुमतं दृष्टञ्च तेषां नरकरिपुणा श्रीकृष्णेन सार्द्धं भीमार्जुनसहितामसृङ् रक्तं मेदो वसा मांसञ्च तैर्दिशां बलिं पूजामयमहम-सहाय एव करोमीत्यर्थः। भीमादय आलम्बनमायुधाद्युद्दीपनं प्रतिज्ञाऽनुभावो गर्वः सञ्चारी।

[ सरि० ] क्रोधप्रकृतिकत्वं रौद्रत्वम्। विभावाद्यैस्तैस्तैर्भावितः क्रोधः परां काष्ठामधिरूढो रौद्रत्वमुपयातीति नियमः। द्वेषयोनिरुत्साह एव क्रोधः। उत्साहश्च ममैवेदं कार्यमिति वासनारूपेण परिणता बुद्धिरेव। स हि चिकीर्षाप्रवृत्तिरूपो दीप्त्यात्मकः। कर्तव्यत्वाध्यवसायः स द्वेषयोनिर्निष्फलेच्छायोनिश्चेति द्विविधः। आद्यो द्वेषयोनिः शत्रुगोचरद्वेषसहकारेण तन्नाशाय चिकीर्षाप्रवृत्तिमुद्बोधयति। द्वितीयस्तु फलानुसन्धानसहकारेण यागयुद्धादौ प्रवृत्तिं जनयति। आद्यस्तेन क्रोध-संज्ञो रौद्ररसस्य प्रकृतिरिति गोकुलनाथीयविवरणे स्पष्टम्। अत्रालम्बनमरिस्तच्चेष्टा उद्दीपनम् मुष्टिप्रहारपातनविकृतिच्छेदावदारणसङ्ग्रामसम्भ्रमाद्यैरस्योद्दीप्तिः। भ्रूभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनात्मावदानकथनायुधोत्क्षेपणाक्षेपक्रूरसन्दर्शनादयोऽस्या-नुभावाः। उग्रताऽऽवेगरोमाञ्चस्वेदवेपथुमदमोहामर्षादयो व्यभिचारिणः। तैस्तै-र्भावितः क्रोधः परां काष्ठामारूढ आस्वाद्यमानो रौद्रो रसः। उदाहरणं प्रस्तौति कृतमिति। वेणीसंहारगतं पद्यमिदं पितृवधमसहमानस्याश्वत्थाम्न उक्तिरूपम्। अयम् अहम् निर्मर्यादैः मनुजपशुभिः उदायुधैः यैः भवद्भिः इदम् गुरुपातकम्

कृतम् अनुमतम् वा दृष्टम् नरकरिपुणा सार्द्धम् सभीमकिरीटिनाम् तेषाम् असृङ्मेदोमांसैः दिशाम् बलिम् करोमि इत्यन्वयः। अयमेष एकाक्येव। अहम् अत्र वक्ताऽश्वत्थामा निर्मर्यादैः निर्गता शून्या मर्यादा सदाचारो येभ्यस्तैः। अत एव मनुजपशुभिः मनुजा मनुष्या एव पशवो धर्माधर्मविवेकशून्यजन्तवस्तैः मानुषैरपि विवेकहीनत्वात्पशुतुल्यैः। उदायुधैः उद्यतास्त्रैः। यैः यैः यैरेव। भवद्भिः युष्माभिः। इदम् द्रोणाचार्यवधरूपम्। गुरुपातकम् गुरोर्वधत्वेन गुरु महत्पातकमपराधः। कृतं साक्षाद्विहितम्। अनेन धृष्टद्युम्नः सूच्यते। महापातकित्वान्न नामग्रहणम्। अनुमतम् सम्पादनाय सम्मतिर्दत्ता। अनेन सात्यक्यादयः सूच्यन्ते। बहुत्वान्न नाम्ना कथनम्। वा इति पक्षान्तरे। दृष्टम् ताटस्थ्येन वा सरसं विलोकितं किन्तु शक्तैरपि न निराकृतम्। त्रय एव पापकर्मणो दोषभागिनः कर्ताऽनुमन्ता शक्तोऽप्युपेक्षक इति। नरकरिपुणा नरकासुरशत्रुणा श्रीकृष्णेन। नरकरिपुपदमुपहासव्यञ्जकम्। सार्द्धं समम्। अनुमन्तुरपि श्रीकृष्णस्य प्राक्सङ्केतस्तस्य वधायोजकत्वद्योतनाय। यत्क्रोधात्क्रमविस्मृत्या प्रागुपादानमित्युक्तं तदपि तदेवाभिव्यञ्जकम्। सभीमकिरीटिनाम् भीमो भीमसेनः किरीटचर्जुनस्ताभ्यां सहितानाम्। भीमार्जुनयोर्नाम्ना ग्रहणं तयोरुपरि क्रोधाधिक्यादेव। तेषाम् कर्त्रनुमन्तृदर्शकानां सर्वेषामेव। असृङ्मेदोमांसैः असृग्रक्तं मेदो वसा मांसं पलं तैः। दिशाम् काष्ठानामुपलक्षणात्तत्तद्भूतानाम्। बलिम् भक्षितोपहारम्। करोमि सम्पादयामीति।

अत्र हि पितृवधरूपपापकारिणो धृष्टद्युम्नभीमार्जुनश्रीकृष्णादय आलम्बनमस्त्राद्युद्यमनमुद्दीपनं प्रतिज्ञानुभावोऽन्यनैरपेक्ष्यगम्यो गर्वो व्यभिचारी। तैस्तैरखण्डत्वेन भावितः क्रोधः स्वदत इति क्रोधप्रकृतिकरौद्ररसस्योदाहरणमिदम्। वृत्तं हरिणी।

[वृत्तिः] क्षुद्राः सन्त्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥५०॥

[ कमला० ] उत्साहहेतुर्वीरः। स त्रिधा—युद्धवीरो, दानवीरो दयावीरश्च। तत्राद्यमाह क्षुद्रा इति। इन्द्रजिदुक्तिः। जात्या पलायनाच्च क्षुद्राः। भो हरयस्त्रासं विजहत त्यजत। एते इति सम्बुध्य योगादेते यूयं विजहतेत्यन्वयः। एनमिति युक्तः पाठः। परं केवलं लज्जां दधतीति न तत्र प्रतिष्यन्ती(?)त्यर्थः। क्षुण्णेति। शक्रेभ ऐरावतस्तस्य कुम्भः क्षिण्णो भिन्नो यैः। सौमित्रे इति मातुः प्रियत्वाद्युद्धान-

भिन्नतोच्यते तिष्ठ विरम हि यतः त्वं रुषां पात्रं न योग्यो न। ननु रे बाल! अहं मेघनादः नादेनैव नव मूर्च्छा युद्धे चर्चा कुत्रेत्यर्थः। किञ्चित्संरम्भ ईषत्क्रोधः स एव लीला तया नियमितो बद्धो वशीकृतो वा जलधिर्येन। रामान्वेषणे विकत्थनापत्तेः। एषोऽहं राममनुयामीत्यन्वयः। राम आलम्बनं जलधिनियमनाद्युद्दीपनं शरपातलज्जारामस्पर्द्धाद्यनुभावो हर्षादिर्व्यभिचारी।

दानवीरो भार्गवो यथा—

'उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरु-
र्वीर्यं यस्य तु तद्द्वि[?]ां पथि न न व्यक्तं हि तत्कर्मभिः।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम्॥

दयावीरो यथा—

अनादृतचमूपतिप्रहितहस्तमस्वीकृतं
प्रणीतमणिपादुकं किमिति चाकुलान्तःपुरम्।
अवाहनपरिच्छदं पतगराजमारोहतः
करिप्रवरबृंहिते भगवतस्त्वरायै नमः॥

यथा वा—

यद्गोविन्देति चुक्रोश कृष्णामां(?)दूरवासिनी।
ऋणं तु तत्प्रवृद्धं मे हृदयान्नापसर्पति॥

यद्वा—

चिकीर्षिते कर्मणि चक्रपाणेरपेक्षणीया न सहायसम्पत्।
पञ्चालजायाः पटसंविधाने मध्येसमं नापि तुरी न वेमा॥

परमानन्दस्त्वेषाममानुषत्वाददद्भुतेऽन्तर्भावमाह। रौद्राद् वीरस्येयानेव भेदो यद्वीरे विवेकी रौद्रे तदभाव इति।

[ सरि० ] उत्साहप्रकृतिकत्वं वीरत्वम्। उत्साहस्तु रौद्रेऽपि अपेक्ष्यो निरुत्साहस्य क्रोधासम्भवात्। वस्तुतस्तु द्वेषमूलक उत्साहो रौद्रस्य प्रकृतिर्यदा स एव निष्फलेच्छायोनिस्तदा स वीरस्येति। शब्दान्तरकथने विवेकाभिप्लुत उत्साहो वीररसस्य प्रकृतिस्तच्छून्यो रौद्रस्येति। वीरस्य हि विजेतव्य आलम्बनं तच्चेष्टाऽवस्थितिर्वोद्दीपनं साधनान्वेषणाद्यनुभावा धृतिमतिगर्वस्मृतितर्करोमाञ्चाद्या व्यभिचारिणः। तैस्तैरखण्डत्वेन भावित उत्साहः स्वदते। वीरश्चतुर्द्धा मतो युद्धदानदयाधर्मवीरभेदात्। वस्तुतस्तु युद्धविषयोत्साहप्रकृतिके वीरशब्दो रूढः। अन्यत्र

प्रयोगो रूढः। हास्यादय एकैकप्रकारा इति वृत्तिकृदाशय इति प्रागेवोक्तम्। तथा वीरमपि एकविधमेवोदाहरति इति सुधासागरे स्पष्टम्। उदाहरति क्षुद्रा इति। एते क्षुद्राः हरयः सन्त्रासम् विजहित क्षुण्णशक्रेभकुम्भा अमी सायकाः युष्मद्देहेषु निष्पतन्तः लज्जाम् परम् दधति सौमित्रे तिष्ठ हि त्वम् रुषाम् पात्रम् न असि ननु अहम् मेघनादः किञ्चिद्भ्रूभङ्गलीलानियमितजलधिम् रामम् अन्वेषयामि इत्यन्वयः। एते दृश्यमानदुरवस्था इति सुधासागरकाराः, मयि आगता इत्यपरे, स्वज्ञानोल्लेख इति विस्तारिकाकाराः इयन्त इति भास्करभट्टाचार्याः, यूयमिति कमलाकरभट्टाः, दृश्यमानदुरवस्था यूयमिति बालबोधिनीकाराः, एते मम अमी बाणा इति बालचित्तानुरञ्जनीकाराः, एते यूयमिति सारबोधिनीकाराः, एते क्षुद्रा इत्युद्द्योतकाराः, पूर्वमेव दृश्यमानदुरवस्था इति प्रभाकाराश्च। वस्तुतस्तु बालचित्तानुरञ्जनीकारा अत्रानुगमनीया दृश्यन्ते। 'एते इत्येतस्य सायका' इत्येतस्यैव विशेषणत्वं चारुतरं दृश्यते। गतानुगतिकत्वे एते दृश्यमानदुरवस्था यूयम्। क्षुद्राः तुच्छाः जात्या पराक्रमहीनतया पलायनाच्च तेषां क्षुद्रत्वम्। हरयो वानराः। 'शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इति कोशः। अर्थनियन्त्रणञ्च प्रकरणवशादेव। सन्त्रासं भीतिमस्मानयं हनिष्यतीति। विजहित त्यजत। भयत्यागे हेतुमाह यतः क्षुण्णशक्रेभकुम्भाः क्षुण्णश्चूर्णितो विदारितः शक्रस्येन्द्रस्य इभो हस्ती ऐरावतस्तस्य कुम्भो गण्डस्थलं यैस्ते तादृशाः। एते मम। अमी प्रसिद्धाः। सायकाः स्यन्ति समापयन्ति प्राणानिति बाणाः तालव्यपाठे तु शाययन्ति चिरनिद्रामिति। प्रथमे 'षोऽन्तकर्मणि' इति ण्वुल्। युष्मद्देहेषु भवादृशशरीरेषु। निष्पतन्तः प्रहरन्तः। लज्जां ह्रियम्। परम् अत्यन्तमेव। दधति भावयन्ति। क्षुद्रकार्यप्रयोगाल्लज्जन्त इव भवन्तीति। न तु पाताभिमुख्यं पौरुषमनुभवन्तीत्यपि। स्वलज्जाया एव बाणेषु समारोपान्मदीयां लज्जां पुष्णन्तीति सुधासागरकाराः। निष्पतन्तो मच्चापान्निर्गच्छन्तो युष्मद्देहेषु पतितुं परं लज्जां दधति न तु पाताभिमुख्यं पौरुषमिति वेत्यर्थः। न च निष्पतन्त इत्यस्य पतन्त इत्यर्थः निष्पतनस्य पतनरूपत्वाभावादिति चण्डीदासाः। लक्ष्मणमाह सौमित्रे इति। हे सौमित्रे! हे सुमित्रासुत! बाह्वादित्वादिञ्। त्वं तिष्ठ विरम। मा युद्धाय प्रवर्तस्वेति। तत्र हेतुमाह। ह यतः। त्वं मातुः प्रियत्वेन युद्धानभिज्ञो बाल एव। रूषां मत्क्रोधानामुपलक्षणात्पराक्रमस्य। पात्रं विषयः। न नैव। असि वर्तसे। तर्हि किमर्थमुद्यम इत्याह ननु रे रे। 'आमन्त्रणे चापि ननु' इति विश्वः। अहं मेघनादः मेघस्य धनस्य नाद इव नादो गर्जनं यस्य तथाविधः तत्त्वेन प्रसिद्धः। यूयं तु नादेनैव निश्चेष्टा भविष्यथ इति। भीमविक्रमोऽहं किञ्चिदिति किञ्चिदीषद्

भ्रूभङ्गो भ्रूकौटिल्यं स एव लीला विहारस्तया नियमितः सेतुबन्धेन नियन्त्रितो जलधिरकूपारो येन स तादृशस्तम्। रामम् न मत्तुल्यविक्रममपि भवदपेक्षया किञ्चित्समधिगतसारं रामचन्द्रम्। अन्वेषयाभि अनुलक्ष्यीकृत्य यामीति न तु मार्गयामीति सेनाग्रवर्तिनो रामस्यान्वेषणानुपपत्तेः। 'किञ्चित्संरम्भः इति पाठे ईषत्क्रोधोद्गम इति। केचित्किञ्चिदिति अन्वेषणक्रियाविशेषणत्वेन प्रयुञ्जन्ति तन्न चारु सेनाग्रवर्तिनोऽन्वेषणानुपपत्तेः। मेघनाद इत्यत्र वक्तरि मेघनाद इति अनुपयुज्यमानत्वाद् बाधितार्थत्वेन शक्रजयित्वाद्यर्थान्तरे सङ्क्रमितार्थोऽनन्यसाधारणविक्रमत्वं ध्वनयति। वृत्तं स्रग्धरा 'म्रभ्नैर्यानां त्रयेणेति तल्लक्षणम्। अत्र राम आलम्बनं तत्प्रभावातिशयः समुद्रनियमनादिजनित उद्दीपनं रणान्तरनिवारणरामान्वेषणाद्यनुभावः रामं प्रति स्पर्द्धा वा। हनुमाल्लक्षणप्रभृतियोद्ध्रुपेक्षापूर्वकरामान्वेषणसूचितगर्वोत्सुक्यादयो व्यभिचारिणः रामेणैव सह योद्धव्यं मयेति अध्यवसायः स्थायी निष्फलेच्छायोनिरुत्साहः स्वदत इति वीररसस्योदाहरणमिदम्। ननु वीररौद्रयोः विभावादीनां साम्यात्कथं भेदः। तयोः स्थायिभावभेदेऽपि तस्यापि नियामकमुखप्रेक्षितत्वान्न तद्भेद एव भेदकः इति न वाच्यं तयोर्विवेचकत्वतदभावयोर्वैधर्म्यात्। क्षुद्रा इत्यत्र क्षुद्रान् विहाय राममात्रान्वेषणेन विवेचनस्य कर्तुमित्यत्र श्वनुमन्त्रादीनां क्रोधवशात्व्युत्क्रमोपन्यासेन क्रमविस्मृतेरविवेकस्य स्फुटत्वम्। यच्च रौद्रे रक्तास्यनेत्रतैव युद्धवीराद्भेदिकेत्युच्यते तन्न, क्रोधसञ्चारिणि वीरेऽपि तदभावत्वेन भेदकत्वानुपपत्तेस्तस्याः इति विस्तारिकायाम्। यद्यपि शत्रुविजयस्य सर्वत्र दृष्टचरत्वेन लोकानतिक्रमणात् लोकातिक्रान्तदानादेस्तु विस्मयोद्बोधहेतुकत्वाद् दानधर्मदयावीरेषु अद्भुतस्यैव रसत्वमिति वृत्तिकृता युद्धवीर एवात्रोदाहृतस्तथापि तेषामपि वीररसविषयत्वेन कविजगति प्रसिद्धिरिति तेऽपि नोपेक्षणीया एव। तत्पूरकत्वेन ख्यातयशस्तैर्व्याख्यातृभिर्दयादानधर्मवीरा अपि उदाहृताः दृश्यन्ते। तत्र दानवीरो यथा—

'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः।'

इत्यत्र परशुरामः। दयावीरो यथा—

'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात् त्वं विरतो गरुत्मन्॥'

इत्यत्र जीमूतवाहनः। धर्मवीरो यथा—

'राज्यं वसु च देहश्च भार्या भ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तद्धर्माय समुद्यतम्॥'

इत्यत्र युधिष्ठिरः। सत्त्ववीरोऽपि वीरस्यैव भेदः। यथा—

'अतिक्लेशेन ये ह्यर्था धर्मस्यातिक्रमेण च।
शत्रूणां प्रणिपातेन ते ह्यर्था मा भवन्तु मे॥'

इत्यत्र वक्ता। वस्तुतस्तु दानदयाधर्मसत्त्ववीरत्वं हि परस्परसापेक्षमेव। न हि दानापरो दयितुं प्रभवति न च दयाशून्यो दातुम्। दानदयादेरपि धर्म एव प्रेरकः। नाधर्मो ददाति दयते वा। निःसत्त्वो हि किं जानीयाद्धर्माधर्मविवेकम्। ससत्त्व एव दातुं दयितुं धर्तुञ्च प्रभवति नाऽसत्त्वः। तेन हि यत्र द्वेषयोनिरुत्साहः कर्तव्याध्यवसायः शत्रुगोचरद्वेषादिसहकारेण स्वदते तत्र रौद्रो रसो यत्र तु निष्फलेच्छायोनिः कर्तव्याध्यवसायोऽपि फलानुसन्धानसहकारेण स्वदत उत्साहस्तत्र वीरो रस इति वीरस्यैक एव भेदो युक्तः।

[वृत्तिः] ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥४१॥

[कमला०] भयानकमाह ग्रीवेति। शाकुन्तले मृगमुद्दिश्य दुष्यन्तस्य राज्ञः सारथिं प्रत्युक्तिः। एष पूर्वप्रक्रान्तो मृगः ग्रीवाया भङ्गो वक्रीभावस्तेनाभिरामं यथा देशवैषम्येण रथादर्शनान्मुहुर्दत्तदृष्टिरनुपतति धावति। पश्चादर्द्धं पश्चार्द्धमिति निपातः। त्राणाय भूयसा स्थूलेन जघनभागेन पूर्वदेहं प्रविष्टः। स्थूलस्य कृशे प्रवेशवर्णने भयपोषः। न च भयस्य स्वपदोपादानं दोषो राज्ञो रथाद्वा भयस्य रसप्रकृतिकत्वात्। स्वयं भ्रंशिभिर्न तु तेन त्यक्तैः। उदग्रं तीव्रप्लुतमुड्डाणं यस्य तत्त्वात्। वियति आकाशे भूपस्य साम्याभावाद् बहु उर्व्यां तत्साम्यादल्पत्वं प्रयाति पश्येति सारथिं प्रत्युक्तिः। अत्र राजा रथो वाऽऽलम्बनं शरपाताद्युद्दीपनं पलायनमनुभावः श्रमः सञ्चारी।

[सरि०] भयप्रकृतिकत्वं भयानकत्वम्। विभावादिभिरखण्डत्वेन स्वानुकूल्येन भावितं भयमेव भयानकरसप्रकृतिः। ननु भयस्य हि परिणामेन पलायनप्रवृत्तेः कथं तत्स्वदते किञ्च भयं हि दुःखसाधनत्वेन दुःखाभेदेन वा द्विष्टस्य वस्तुनो दर्शनमेव। तच्चानास्वाद्यमेव। नैव च कुत्रापि प्रबन्धे तस्य प्राधान्येनानुवर्तनं यथा महाभारते स्त्रीपर्वणि वा रामायणे सीताऽत्यन्तपरित्यागावधौ च रौद्रो हि वेणीसंहारे च सर्वसन्धिव्याप्यत्वेन स्थितौ। भयं तु न तथा कुत्रापि इति न वाच्यम्। विभावादीनामलौकिकत्वेन साधारण्यात्तद्भावितस्य भयस्यापि तथैव चर्वणासम्भवात्। यद्यपि मध्यमोत्तमपात्रयोर्न हि वास्तविकं भयं तथापि मान्यान् प्रति विनयबोधाय तयोरपि

भयं दृश्यते एव कामं कृत्रिमत्वेनैव। भयानुभावैरभिव्यञ्जितो बहुमान एव विनयः। स च रामायणादौ सर्वसन्धिव्याप्यत्वेन दृश्यत एव। यथा हि अन्यदा दुःखहेतुकमपि दन्तक्षतादि सुरते सुखदायि यद्वा लोके दुःखहेतुकमपि वस्तु काव्यादावलौकिकत्वेन साधारण्यात्प्रतीतेरास्वाद्यं भवति तथैव उत्तमादिपात्रेऽवास्तवमपि भयं विभावादिबलाद्विनयरूपेण स्वदत एवेति। भयानके हि भीतिहेतुरालम्बनं तद्घोरतराश्चेष्टा उद्दीपनम् वैवर्ण्यगद्गदस्वरभाषणमनुभावः प्रलयस्वेदरोमाञ्चकम्पदिगवेक्षणादयश्च। आवेगजुगुप्सासम्मोहसन्त्रासग्लानिदीनताशङ्काऽपस्मारसम्भ्रान्तिनिधनाद्या व्यभिचारिणः। अयं याथार्थ्येन स्त्रीनीचप्रकृतिः कृत्रिमत्वेनोत्तमादिप्रकृतिरपि। तदेवोदाहरति ग्रीवेति। शाकुन्तलगतं पद्यमिदं पुरतः पलायमानं मृगमुद्दिश्य नायकस्य सारथिं प्रत्युक्तिरूपम्। (असौ हि मृग इदानीमपि) अनुपतति स्यन्दने मुहुः ग्रीवाभङ्गाभिरामम् बद्धदृष्टिः शरपतनभयाद् भूयसा पश्चार्द्धेन पूर्वकायम् प्रविष्टः श्रमविवृतमुखभ्रंशिभिः अर्धावलीढैः शष्पैः कीर्णवर्त्मा उदग्रप्लुतत्वात् वियति बहुतरम् उर्व्याम् स्तोकम् प्रयाति पश्य इत्यन्वयः। असौ हि मृग इदानीमपीति पूर्वेणाऽन्वयः। **अनुपतति** पश्चाद्धावति शत्रन्तस्य सप्तम्यैकवचनम्। **स्यन्दने** रथे। **मुहुः** भूयोभूयः। **ग्रीवाभङ्गाभिरामम्** ग्रीवायाः कन्धरायाः भङ्गो व्यावर्तनं तेन अभिरामं सुन्दरं यथा स्यात्तथा। **बद्धदृष्टिः** बद्धा समर्पिता दृष्टिविलोकनं येन सः—'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इति कोशः। **शरपतनभयात्** शरस्य बाणस्य पतनं पातस्तस्य भयस्त्रासस्तस्माद्धेतोः। **भूयसा** अधिकेन। **पश्चार्धेन** अर्द्धपश्चाद्भागेन। **पूर्वकायं** शरीरपूर्वार्द्धभागम् पूर्वं कायस्येति विग्रहः। **प्रविष्टः** समाविष्टः इवेति गम्योत्प्रेक्षा गोलकीभूत इत्याशयः। **श्रमेति** श्रमेण धावनजन्यक्लान्त्या विवृतं व्यातं यन्मुखमास्यं तस्माद् भ्रंशिभिः स्वयमेव पतद्भिः न तु पातितैः। **अर्धावलीढैः** अर्धजग्धैः। **शष्पैः** दर्भैरुपलक्षणात्तृणैः। **कीर्णवर्त्मा** कीर्णं व्याप्तं वर्त्म मार्गो येन स तादृशः। चिह्नितमार्ग इत्यर्थः। **उदग्रप्लुतत्वात्** उदग्रमुत्कटं प्लुतं प्लवनं यस्य तस्य भावस्तत्त्वं तस्मात्। **वियति** गगने भूमेरुपरिभागे। **बहुतरम्** अधिकम्। **उर्व्यां** भूमौ। **स्तोकम्** अल्पमेव। वियति भीतिहेतोरसाम्याद् बाहुल्येन भूमौ तत्साम्यादल्पत्वेनेति। **प्रयाति** हिण्डति। **पश्य** निभालयेति। वाक्यार्थस्य हि कर्मत्वमस्य। वृत्तं स्रग्धरा 'म्रभ्नैर्यानां त्रयेण' इति तल्लक्षणम्। अत्र रथो वा राजा भयहेतुत्वेनालम्बनं तदनुधावनमुद्दीपनं ग्रीवाभङ्गविलोकनशरीरसङ्कोचनार्धचर्वितशष्पस्खलनादयोऽनुभावाः वेपथुवैवर्ण्यादयः सात्त्विकाः त्रासश्रमशङ्कावेगादयो व्यभिचारिणः। तैस्तैः खण्डशः प्रतीतैरपि अखण्डत्वेन संयुक्तैर्भावितो भयः स्वदते इति भयानकरसस्योदाहरणमिदम्। अत्र हि शरपतन-

भयादित्यत्र भयशब्दोपादाने न दोषः स्यन्दनजन्यभयस्यैव रसप्रकृतिकत्वान्न तु शरपतनभयस्येति ।

[वृत्तिः] उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डचाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥४२॥

[कमला०] बीभत्समाह उत्कृत्येति । मालतीमाधवे श्मशानवर्णनम् । प्रेतेषु रङ्को दरिद्रः प्रेतान्तरनयनशङ्कयाऽङ्कसंस्थात्करङ्कात्कङ्कालाच्छवात् प्रथमं पूर्वं कृत्तिं त्वचमुत्कृत्योत्कृत्य पृथुरुत्सेधः शोफ उच्छोफ इति पाठे स एवार्थः । तेन भूयांसि बहुलानि । अंसौ च स्फिक् कटिश्च पृष्ठभागः पिण्डी जघनपश्चात्पिण्डी पिण्ड इति पाठे स एवार्थः । तत्र सुलभानि उग्रस्तीव्रः पूतिदुर्गन्धो येषां तानि मांसानि जग्ध्वा भक्षयित्वा स्थस्य पुटं निम्नो विषमश्च भागोऽत एवास्थिसन्धिगतं क्रव्यमांसम-व्यग्रमेकाग्रचित्तं त्वरया वा आर्तः पिशाचान्तरनयनभीत्या अत एव पर्यस्ते दिक्षु प्रसारिते नयने येन सः । दैन्याद्दन्तप्रकटनम् । अत्र एव आलम्बनमुग्रगन्धाद्युद्दीपनं नासाकुञ्चनवान्तादिरनुभाव उद्वेगादिः सञ्चारी ।

[सरि०] जुगुप्साप्रकृतिकत्वं बीभत्सत्वम् । जुगुप्सा गर्हणा । सा च वासना-रूपेण परिणतोपेक्षाबुद्धिरेव या हि प्रवृत्त्यजनकं ज्ञानमेव । बीभत्सोऽपि त्रिविधः—शुद्ध उद्वेगी क्षोभणः । यथोक्तं धनञ्जयेन दशरूपके—

'बीभत्सः कृमिपूतिगन्धिकलितप्रायैर्जुगुप्सैकभू-
रुद्वेगी रुधिरान्त्रकीकसवसास्नाय्वादिभिः क्षोभणः ।
वैराग्याज्जघनस्तनादिषु घृणाशुद्धोऽनुभावैर्युतो
लालावक्त्रविकूणनादिभिरिहावेगार्तिशङ्कादयः ॥' इति ।

अत्यन्ताहृद्यकृमिपूतिगन्धप्रायविभावैरुद्भूत उद्वेगी बीभत्सः रुधिरान्त्रवसाकीक-समांसादिविभावितः क्षोभणो बीभत्सः रम्येष्वपि रमणीजघनस्तनादिषु वैराग्याद् घृणाशुद्धो बीभत्सः । उद्वेगिबीभत्समुदाहरति उत्कृत्येति । प्रस्तुतं पद्यं मालती-माधवे प्रकरणे श्मशानवर्णनपरम् ।

आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः अङ्कस्थात् करङ्कात् प्रथमम् कृत्तिम् उत्कृत्य उत्कृत्य अथ पृथूत्सेधभूयांसि अंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभानि उग्रगन्धीनि मांसानि जग्ध्वा अस्थिसंस्थम् स्थपुटगतम् क्रव्यम् अपि अव्यग्रम् अत्ति इत्यन्वयः । आर्तः क्षुधातुरः पर्यस्तनेत्रः विस्फारितलोचनः प्रेतान्तराक्रमणाशङ्कया । प्रकटित-

दशनः दर्शितदन्तः । प्रेतरङ्कः दरिद्रप्रेतः । अङ्कस्थात् उत्सङ्गगतात् । करङ्कात् शवात् । प्रथमम् आदौ । कृत्ति त्वचम् । उत्कृत्य उत्पाट्य । उत्कृत्य खण्डशः कृत्वा । संरम्भे द्वित्वमपीति । अथ अनन्तरम् । पृथूत्सेधभूयांसि पृथुना महता उत्सेधेन उच्छूनतया भूयांसि बहुलानि अत्यधिकस्फीतत्वेनोपर्यागतानि । अंसेति अंसौ स्कन्धौ स्फिक् ऊरुमूलं पृष्टपिण्डी जङ्घोर्ध्वभागः एवमाद्यवयवेषु सुलभानि स्वल्पप्रयासप्राप्यानि । उग्रपूतीनि उत्कटदुर्गन्धानि । मांसानि पललानि । जग्ध्वा भक्षयित्वा । अस्थिसंस्थम् अस्थिसंलग्नम् । स्थपुटगतं गर्तस्थितम् स्थपुटो निम्नोन्नतभागः । अपि । क्रव्यमाममांसम् । अव्यग्रम् एकाग्रचित्त त्वरया वा । अत्ति भक्षयति इति । वृत्तं स्रग्धरा । अत्र प्रेतरङ्कः आलम्बन-मुत्कर्तनाद्युद्दीपनं नासाकुञ्चनादयोऽनुभावास्तद्द्रष्टृणाम् उद्वेगादयो व्यभिचारिणः तैस्तैर्भाविता जुगुप्सा स्वदते इति उद्वेगिबीभत्सरसस्येदमुदाहरणम ।

क्षोभणबीभत्सो यथा —

'अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतोच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥' इति ।

घृणाशुद्धो यथा—

''लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ ।
मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥' इति ।

वैराग्यहेतुकोऽप्ययं बीभत्सः शान्ताङ्गिन्न एव यतो ह्यत्र वैराग्यं घृणानिमित्तं न तु शान्तिनिमित्तमिति ।

ननु रतिशोकक्रोधोत्साहभयविस्मयेषु तु आलम्बनाश्रययोः सम्प्रत्ययो यथा रतेर्नायिकाविषयो नायकश्चाश्रयः नाटकद्रष्टारः पद्यश्रोतारो वा सामाजिकाः सहृदयाः शृङ्गाररसास्वादिनः । जनो हि स्वानुकूलेन सह रमते तेन यो हि रिरंसुः स आश्रयो भवति स्थायिभावस्य । यो हि रिरंसायामनुकूलः स एवालम्बनः । रतेर्हि नायिकाऽऽलम्बनं नायकश्चाश्रयस्तद्विपरीतं वा । एवं शोकादिष्वपि । शोके शोच्यमालम्बनं शोकमग्न आश्रयः । क्रोधे वैरिराश्रयस्तत्प्रतिचिकीर्षुराश्रयः । उत्साहे वैरिराश्रयो हि तन्निराचिकीर्षुराश्रयः भये भीतिहेतुरालम्बनं भीत आश्रयः किन्तु हासजुगुप्सयोस्तु न तथा । आकुञ्च्येत्यत्र विष्णुशर्माऽऽलम्बनमेव न त्वाश्रयः । एवमेव उत्कृत्योत्कृत्य इत्यत्रापि । अत्रापि प्रेतो न जुगुप्साश्रयः । तयोस्त्वालम्बन-स्यैव प्रतीतिर्भवति न त्वाश्रयस्य । यदि हि द्रष्टुः श्रोतुर्वा भावाश्रयो मन्यते तदा

स्वीयकान्तावर्णनप्रसङ्गादिव रसोद्बोधे बाधैव स्यात् । तदनाश्रययोर्हासजुगुप्सयोः कथमास्वाद इति चेदुच्यते तयोराश्रय आक्षिप्यते सामाजिकैः । तथा विभावादिसामर्थ्यादाक्षिप्तमाश्रयमेव भावाश्रयत्वेन गृह्यते यथा आकुञ्च्येत्यत्र विष्णुशर्मरोदनं श्रुत्वा हसन् कश्चित्पुरुषः । आक्षेपश्च सामाजिकस्य स्वयोग्यतानुसारेणैव । तत्रापि हासजुगुप्सयोरपि भिन्नैव स्थितिः । जुगुप्सायां तादृशवाक्यप्रयोक्तैवाश्रय आक्षिप्यते आलम्बनानुरोधात् केचिद्धास्येऽपि तथा स्वीकुर्वन्ति । कामं वक्ता वाऽन्योऽपि स्यात्तत्राश्रयस्त्वाक्षेप्य एव । न हि सामाजिक एवाश्रयत्वेन सम्भवति तथा सति लौकिकहासजुगुप्साश्रयत्वानुपपत्तिः स्यादिति रसगङ्गाधरकाराः ।

[ वृत्तिः [ चित्रं महानेष बतावतारः
क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः
काप्याकृतिर्नूतन एष सर्गः ॥ ७३ ॥

[ कमला० ] अद्भुतमाह चित्रमिति । बलेर्वामनमुद्दिश्योक्तिः । बत हर्षे भङ्गिः रचना । एष महानवतारः । इदं चित्रम् । अविकार इति पाठे विकाराभावः । अत्र चित्रं महान् बत लोकोत्तरमहोववापिनूतनशब्दाः वर्णनीयस्यालौकिकत्वव्यञ्जकाः । अत्र वामन आलम्बन कान्तिरुद्दीपनं विकासोऽनुभावो हर्षसञ्चारी । यद्वा —

'कल्याणश्च क्रियासुर्मिलिदटनियुगस्थारनुगीर्वाणभोगि-
स्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनो नागहारावलीति ।
नालीकाश्लिष्टलक्ष्मीकरचलनलिनोद्वातमाध्वीकधारा-
तिम्यद्बालेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि ॥'

भ्रश्यद्विश्वम्भराणि इत्यादि ।

[ सरि० ] विस्मयप्रकृतिकत्वमद्भुतत्वम् । विस्मयस्तु लोकोत्तरोत्कर्षवत्तया ज्ञानमेव । लोकातिगवस्त्वस्यालम्बनम् तस्य गुणमाहात्म्यमुद्दीपनम् स्तम्भस्वेदरोमाञ्चस्वरभङ्गसम्भ्रमनेत्रविकासाद्या अनुभावाः वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः । तैस्तैरखण्डत्वेन प्रतीतैर्भावितो विस्मयः स्वदते । उदाहरति चित्रमिति । एष महान् अवतार बत क्व एषा कान्तिः अभिनवा एव भङ्गिः लोकोत्तरम् धैर्यम् प्रभावः अहो का अपि आकृतिः नूतन एव सर्गः ( इति ) चित्रम् इत्यन्वयः । एषः वामनरूपः । महान् सर्वोत्कृष्टः । अवतारः भगवदंशत्वेन भगवत एव प्रादुर्भावः । चित्रमित्याश्चर्यमेतत् । बत इति विस्मये—'बताऽऽमन्त्रणसन्तोषखेदानुक्रोषविस्मये'

इति विश्वः। एषा एतद्गता विचित्रा। कान्तिः दीप्तिः। क्व कुत्रान्यत्र। अभिनवा अदृष्टपूर्वा। एवेत्यवधारणे लोकविलक्षणेति। भङ्गिः प्रकारः गमनोपवेशनादिगतः। एषा क्वेति। एतत् लोकोत्तरमलौकिकम्। धैर्यं गाम्भीर्यम्। क्वेति। प्रभावः भावनशक्तिः। अहो! आश्चर्यकारी अलौकिक एवेति। अस्य आकृतिरवयवसंस्थानम्। काऽपि अनिर्वचनीया एव। एषः एतत्सम्बद्धः। सर्गः सृष्टिः। नूतनः अभिनवः प्रसिद्धब्रह्मनिर्मितिविलक्षणः। एव इत्यवधारणे। एतत् सर्वम्। चित्रम् विलक्षणमेवेति। अत्र चित्रप्रभृतिशब्दाः भङ्गिभेदेन स्वसमभिव्याहृतपदार्थस्य लोकोत्तरताप्रतिपादकाः न तु विस्मयार्थकाः। तथा सति स्थायिनः स्वशब्दवाच्यत्वेन दोष एव स्यात्। काव्येऽस्मिन् स महापुरुषो वामन आलम्बनं तद्गुणातिशय उद्दीपनम्। तत्प्रशंसाद्या अनुभावाः धृतिहर्षादयो व्यभिचारिणः। तैस्तैः सम्भूय भावितो विस्मयः स्वदत इति विस्मयप्रकृतिकस्याद्भुतरसस्योदाहरणमिदम्।

[ वि० वृ० ] अथ तद्विशेषानाह—

शृङ्गारेति। तत्र सम्भोगो विप्रलम्भश्चेति शृङ्गारस्य द्वौ भेदौ। तत्रानुरक्तयोर्यूनोरन्योन्यालिङ्गनादिहेतुभूता रतिर्विभावादिसंयोगात्सम्भोगः। स च मिथो वीक्षाश्लेषाधरचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य इत्येक एव गण्यते।

यथा—

'धृते पाणिद्वन्द्वे झटिति झणितं रत्नवलयै-
हृते नीविग्रन्थौ मुखरितममन्दं रसनाया।
प्रियायाः स्वानन्दप्रतिहतधियः किं त्वयघनो
घनोत्तूर्णं कृष्णं प्रतिसमतनोत्तर्जनमिव॥'

अत्र मिथो रतिः स्थायी। कृष्णः प्रिया च मिथस्तदालम्बनः। उद्दीपनं मिथोलावण्यादि विजनस्थानादि च। अनुभावो हतग्रहादिः। व्यभिचारी श्रमजाड्यादिः।

यथा वा—

दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः।
हस्तेनानमितः कचेऽधरसुधापानेन सम्मोहितः
कान्तः कामपि तृप्तिमापतदहो कामस्य वामा गतिः॥

यूनोरयुक्तयोर्युक्तयोर्वा रतिरभीष्टालिङ्गनाद्यलाभात्प्रवृष्टा विभावादियोगाद्विप्रलम्भः । स च पूर्वरागमानप्रवासवैचित्र्यभेदाच्चतुर्विधः । सङ्गमात्पूर्वं दर्शनादिना रतिः पूर्वरागः ।

यथा –

'इन्दीवरोदरसहोदरमेदुरश्री-
वासो द्रवत्कनकवृन्दनिभं दधानः ।
आमुक्तमौक्तिकमनोहरहारवक्षाः
कोऽयं युवा जगदनङ्गमयं करोति ॥'

यथा वा

'कनकाद्रिनिकेतकेतकी कलिता कल्पकलेवरद्युतिः ।
हृदि सा मुदिरालिमेदुरे चपला मां किमलं करिष्यति ॥'

एकत्र सनोरनुक्तयोरपि यूनोरभीष्टालिङ्गनादि विरोधीभावो विभावादियोगान्मानः ।

स चेर्ष्याप्रणयहेतुको द्वेधा । तत्र प्रेयसा विपक्षादेर्वैशिष्ट्ये पूर्वः ।

यथा—

'राधामोहनमन्दिरादुपगतश्चन्द्रावलीमूचिवान्
राधे क्षेममिहेति तस्य वचनं श्रुत्वाह चन्द्रावली ।
कंस, क्षेममये विमुग्धहृदये कंसः क्व दृष्टस्त्वया
राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु वः ॥'

परस्तु प्रेमस्वाभाव्यात् । यदुक्तम्—

'नदीनां च वधूनां च भुजङ्गानां च सर्वदा ।
प्रेम्णामपि गतिर्वक्रा कारणं तत्र नेष्यते ॥' इति ।

यथा—

'अहमिह विचिनोमि त्वद्गिरैव प्रसूनं
कथय कथमकाण्डे चण्डि वाचंयमासि ।
विदितमुपधिनालं राधिके, शाधि केन
प्रियसखि, कुसुमेन श्रोत्रमुत्तंसयानि ॥'

सङ्गविच्युतिः प्रवासः ।

लज्जत्वाद्विप्रलम्भोऽपि तथोच्यते । स च किञ्चिद्दूरसुदूरगमनाद् द्वेधा ।

आद्यो यथा—

'धन्याः स्म मूढमतयोऽपि हरिण्य एता
या नन्दनन्दनमुपात्तविचित्रवेषम् ।
आकर्ण्य वेणुरहितं सहकृष्णसाराः
पूजां दधुर्विरचितां प्रणयावलोकैः ॥'

यथा वा—

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यतीरधरशीधुनाप्याययस्व नः ॥'

द्वितीयस्तु भावी भवन्भूतश्चेति त्रिधा । क्रमेणोदाहरणानि—

'एष क्षत्ता व्रजनरपतेराज्ञया गोकुलेऽस्मिन्
बाले प्रातर्नगरगतये घोषणामातनोति ।
दृष्टं भूयः स्फुरति च बलादीक्षणं दक्षिणं मे
तेन स्वान्तं स्फुटति चटुलं हन्त भाव्य न जाने ॥'

'अहो विधातस्तव न क्वचिद्दया सयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान्वियुनङ्क्ष्यपार्थकं विचेष्टितं तेऽर्भकचेष्टितं यथा ॥'

'ताः किं निशाः स्मरति यासु तदा प्रियाभि-
र्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ।
रेमे क्वणच्चरणनूपुररासगोष्ठ्या-
मस्माभिरीडित मनोज्ञकथः कदाचित् ॥'

प्रियसान्निध्येऽपि रागस्वाभाव्याद्विश्लेषधियार्तिः प्रेमवैचित्यम् ।

यथा—

'कुररि विलपसि त्वं वीतनिद्रा न शेषे
स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ।
वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता
नलिननयनहासोदारलीलेक्षितेन ॥'

विप्रलम्भोऽयमानन्दात्मैव ह्लादिनीसंवित् वृत्तिभूतरतिमयत्वात् । तथापि दुःखादिशब्देनोल्लेखस्तस्य लवणार्द्रकभक्षणादिव दुःसहत्वात्, न तु प्रतिकूलवेद्यत्वादिति ।

एष शृङ्गारो वारणादियोगे प्रकृष्यति ।

यदुक्तं मुनिना—

'बहु वार्यते यतः खलु यत्र प्रच्छन्नकामुकत्वं च।
या च मिथो दुर्लभता सा परमा मन्मथस्य रतिः॥' इति।

रुद्रेण च—

वामता दुर्लभत्वं च स्त्रीणां या च निवारणा।
तदेव पञ्चबाणस्य मन्ये परमत्युद्यम॥' इति।

अथ हास्यः—

'यास्याम्यस्य न भीषणस्य सविधं जीर्णस्य शीर्णाकृते-
र्मातर्नेष्यति मां पिधाय कपटादाधारि कायामसौ।
इत्युक्त्वा चकिताक्षमद्भुतशिशावुद्वीक्षमाणे हरौ
हास्यं तस्य निरुन्धतोऽप्यतितरां व्यक्तं तदासीन्मुने॥'

करुणः—

'तं नागभोगपरिवीतमदृष्टचेष्ट-
मालोक्य तत्प्रियसखाः पशुपा भृशार्ताः।
कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा
दुःखाभिशोकभयमूढधियो निपेतुः॥'

रौद्रः—

'हरौ श्रुतिशिरःशिखामणिमरीचिनीराजित-
स्फुरच्चरणपङ्कजेऽप्यवमतिं व्यनक्त्यत्र यः।
अयं क्षिपति पाण्डवः शमनदण्डघोरं हठात्
त्रिरस्य मुकुटोपरि स्फुटमुदीर्य सव्यं पदम्॥'

वीरः—

'गुणं कर्णाकृष्टं करकिसलयं लूणशिखरे
धनुश्चक्रीभूतं निपतदिषुवृन्दं तत इतः।
रिपून्भूमौ सुप्तान्कलयति समं देवनिकरे
जरासन्धस्याजौ जयति भुजवीर्यं मुरभिदः॥'

यशदानदयाधर्मपूर्वकत्वाद्वीरश्चतुर्विधः। सर्वत्रोत्साहः स्थायी। लक्ष्याण्यूह्यानि।

भयानकः—

'दंष्ट्राकोटिकठोरकूटकटुना ब्रह्माण्डभाण्डस्थितं
सर्वं चर्वयसीव हन्त वदनेनोद्गीर्यपूर्णत्विषा।
जिह्वाग्रेण समग्रमुग्रमहसा लेलिह्यसे रोदसी
त्रस्तं मामिह पाहि पाहि भगवन्पार्थोऽप्यपार्थोऽभवम्॥'

बीभत्सः—

प्राणोद्घूर्णकपूतिगन्धविकटे कीटाकुले देहली-
स्रस्तव्याधितयूथयूथघटनानिर्धूतनेत्रायुधि।
कारानामनिहन्त भागधयमेनामी वयं नारके
क्षिप्तास्ते स्मृतिमाकलय्य नरकध्वंसिन्निह प्राणिनः॥'

अद्भुतः—

चित्रं बतैतदेकेन वपुषा युगपत्पृथक्।
गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत्॥

[ वृत्तिः ] एषां स्थायिभावानाह

[ कारिका ] रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥३०॥

[ वृत्तिः ] स्पष्टम्।

[ कमला० ] एषामिति। आस्वादे स्वतो भेदाभावे न तद्भेदाधीन-भेदत्वादित्यर्थः। सामान्यलक्षणं तु—

'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम्॥' इति।

रत्याद्यव्याख्यायां हेतुमाह स्पष्टमिति। भरतशास्त्रे इत्यर्थः। यथा—

रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायिता।
रागादिवैकृताच्चेतोविकासो हास उच्यते॥
इष्टनाशादिभिश्चेतो वैक्लव्यं शोक उच्यते।
कार्यारम्भे त्वरोत्साहस्तैक्ष्ण्यं वै क्रोधसंज्ञितम्॥
रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम्।
दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते॥
विस्फारश्चेतसो यस्तु विस्मयः स उदाहृतः।

केचिज्जृम्भामपि प्राहुः। ये तु—

'लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विव्वोको ललितं तथा।
विहृतञ्चेति विज्ञेया दश हावास्तु योषिताम्॥

तत्र—

भूषाद्यनुकृतिर्लीला विलासो नेत्रवाक्कृतः।
अपूर्णभूषा विच्छित्तिर्विभ्रमः स्थानपर्ययः॥
क्रोधाश्रुहर्षभीत्यादिसङ्करः किलकिञ्चितम्।
परेभ्यस्त्रासलज्जादेर्मृष्टिर्मोट्टायित रहः॥

यथा

निभृतं निभृत निभालयन्त्या वरुणाशाभरणायितं पतङ्गाः।
गुरुयन्त्रितयाऽपि गोपनार्या नयनान्तेन निमन्त्रितो मुकुन्दः॥
सुखे दुःखचेष्टा कुट्टमितं गर्वाद्यैरनादरो विव्वोकः।

यथा—

रिपुरिति पुरतो भयार्तरक्षः कलकलितैर्नयनाञ्चलीमुदस्य।
नर इति दशकन्धरानुजन्मा पुनरलसायितलोचनस्य शेते॥ (?)

(सुकुमाराङ्गविन्यासो मसृणो ललित भवेत्।
प्राप्तकालं न यद् ब्रूयाल्लज्जया विहृतं हि तत्। इति।
ते तत्र तत्र विज्ञेयाः।)

करुणबीभत्सभयानकानां शोकाद्यालम्बनतया दुःखरूपत्वेऽपि शोकाद्यवच्छिन्न-चैतन्यस्यानन्दांशे आवरणभङ्गे उत्कटेच्छाविषयत्वाद्रसत्वम्। कथमन्यथा रामायणादौ प्रवृत्तिरिति दिक्। तत्त्वं तु कवेर्जातिवर्णने कौशलमात्रात्तत्र चमत्कारः।

[ सरि० ] रसस्यास्वादरूपत्वादास्वादस्य च सजातीयत्वात्कथं रसस्याष्टौ भेदा इत्यपेक्षायामुच्यते तत्स्थायिभावभेदादिति। के च ते स्थायिभावा इति तन्निर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते एषामिति। एषां रसानां शृङ्गारादीनाम्। स्थायिभावान् स्थायिन रसास्वादनपर्यन्तस्थितिशीलाश्च ते भावाः रत्यादयस्तान्। ओहति। कारिकामवतारयति रतिरित्यादि। रतिः हासः च शोकः च क्रोधोत्साहौ भयम् तथा जुगुप्सा विस्मयः च इति स्थायिभावाः प्रकीर्तिताः इत्यन्वयः। चकारोऽत्र क्रमनिर्वाहाय पादपूरणनिमित्तको वाऽर्थे वा। रत्यादयोऽष्टौ

स्थायिभावाः यथासङ्ख्यं योजिता यथा शृङ्गारस्य रतिः हास्यस्य हासः करुणस्य शोकः रौद्रस्य क्रोधः वीरस्योत्साहः भयानकस्य भयं बीभत्सस्य जुगुप्सा अद्भुतस्य विस्मयः इति। एते हि स्थायिभावाः चिरं तिष्ठति तच्छील इति स्थायी ताच्छील्ये णिनिः आतो युक् चिण्कृतोः। भावयति वासयति चित्तमिति भावः। णिजन्ताद् भाविधातोः पचादित्वादच् णेरनिटि लोप। यथोक्तम्—

"सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्।" इति।

यद्वा—

'निर्विकारात्मके भावः प्रथमविक्रिया।' इति।

अथवा—

'निर्विकारात्मकात्सत्त्वाद्भावस्तत्राद्यविक्रिया।' इति।

तथैव—

उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते। इति।

स्थायित्वञ्च तस्य इतरापेक्षयोत्कृष्टत्वेन तदा। यथोक्तम्—

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्तान् स स्थायी लवणाकरः॥ इति।

अथवा—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम्॥ इति।

एवमेव—

'चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते॥ इति।

तत्त्वेन तु—

सजातीयविजातीयैरतिरस्कृतमूर्तिमान् ।
यावद्रसं वर्तमानः स्थायी भाव उदाहृतः॥ इति।

रसावस्थो हि भावः स्थायित्वं भजते नाऽन्यः। यदि हि स एवानियते रसे तु व्यभिचार्येव भवति न तु स्थायी। यथा—शृङ्गारवीरयोर्हासः वीरे क्रोधः शान्ते जुगुप्सा। स्थायिभावानां गणनाऽत्र प्रायोवृत्त्यैव तेषामसङ्ख्येयत्वात्। तेषां रसेऽवस्थितिश्च स्वसूत्रन्यायेनैव। यदा व्यभिचारिणां फेनबुद्बुदन्यायेन। रत्यादयो हि व्याख्याता यथा—

रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।

यथा मालतीमाधवे—

वागादिवैकृताच्चेतो विकासो हास उच्यते।
यथा लटकमेलकादौ गौरीदिगम्बरादौ च॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
यथा रामायणे सीताऽत्यन्तत्यागावधिके॥
प्रतिकूलेषु तैक्ष्णस्यावबोधः क्रोध इष्यते॥

यथा वेणीसंहारे

कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।

यथा मुद्राराक्षसे तत्र तत्र—

रौद्रशक्त्या तु जनितं चित्तवैक्लव्यजं भयम्।

यथा युद्धकाण्डे रामायणे कुम्भकर्णप्रसङ्गे—

दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्‌भवा।

यथा भर्तृहरिशतके शृङ्गारशतके—

विविधेषु पदार्थेषु लोकसीमातिवर्तिषु।
विस्तारश्चेतसो यस्तु स विस्मय उदाहृतः॥

यथा वीरचरितादौ तत्र तत्र।

एते हि एतेष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा भवन्तीति स्थायित्वमेतेषाम्। एते हि न सामाजिकनिष्ठाऽपि स्वाश्रयनिष्ठास्तेषां वासनाविशेषत्वात्। न च स्थायिभाव एव रसः विभावादिसाहाय्येन व्यक्त एव स रसतामेतीति स्थायिभावभेदेनैव रसभेदः। यथोक्तम्—

'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
आनीयमानः स्वाद्यत्वं स्थायी भावो रसः स्मृतः॥" इति।

अनेन व्यभिचारित्वेनोपस्थितभावस्य व्यक्तस्यापि न रसत्वमिति बोध्यम्। ननु कथं शोकादिसम्भिन्नत्वेन करुणादीनां रसत्वम्। न च तस्य रसत्वमेवापहतुं शक्यते तथा सति रामायणादावप्रवृत्तिप्रसङ्गः स्यादिति चेदित्थम्। सुखदुःखसम्भिन्ने हि करुणरसस्तथापि शोकावच्छिन्नस्य चैतन्यस्यानन्दांशे भग्नावरणस्य करुणरसत्वे निरतिशयस्यानन्दांशस्योत्कटेच्छाविषयत्वाच्छोकांशे बलवद्दोषाभावात्तत्र सामाजिकानां प्रवृत्तिः। वर्णनीयतन्मयीभावेन शोकाभिव्यक्तेरश्रुपातादयो भवन्ति इति सर्वमुपपन्नमेवेति सारबोधिनीकारादयः।

कारिकाया अव्याख्याने हेतुमाह स्पष्टमिति। रसस्वरूपाभिधाने निरूपिता इति। रसभावयोरनैक्यं तु सिद्धमेव। यथोक्तम्—

'न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिस्त्वनयो रसभावयोः॥' इति।

यथाऽऽह धनञ्जयोऽपि—

'लक्षणैक्यं विभावैक्यादभेदाद्रसभावयोः।' इति।

[ वि० वृ० ] एषां स्थायिभावानाह—रतिरित्यादि।

क्रमादिति बोध्यम्। सामान्यलक्षणं तूक्तम्—

अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन्।
सुराजेव विराजेत सः स्थायी भाव उच्यते॥

अनुभावेषु सात्त्विका यथा—

स्विन्ना गद्गदभाषिणी पुलकितास्तन्वास्फुरद्वेपथुः
साश्रुम्लानरुचिर्यदद्य जलदालोकेऽभवद् भामिनी।
तन्मन्ये स्फुरदिन्द्रनीलमहसः कस्यापि लीलानिधेः
वृन्दारण्यविलासिनो द्युतिभरैरेषा पराभूयत॥'

[ वृत्तिः ] व्यभिचारिणो ब्रूते—

[ कारिका ] निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः।
आलस्यञ्चैव दैन्यञ्च चिन्तामोहः स्मृतिर्धृतिः॥३१॥
व्रीडा चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च॥३२॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च॥३३॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥३४॥

[ कमला० ] भावानां व्यभिचारिगर्भत्वात्तामाह निर्वेदेति। स्वनामतोऽर्थसंज्ञया लब्धार्था इत्यर्थः। सामान्यलक्षणन्तु—

'विशेषाभिमताः काये स्थायिनं चारयन्ति ये।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥'

विशेषो यथा—

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।

यथा—

आधायाधायराधाधव तव चरणाम्भोजमन्तः समाधा-
वन्येऽरण्येतिपुण्ये पुलकितमनसो वासरान्वाहयन्ति ।
देशे देशे दुराशाकवलितहृदयो निःकृपाणां नृपाणां
धावं धावं पुरस्तादतिकुमतिरहं जन्म संवाहयामि ॥

यथा वा—

मृषात्मगुणकल्पने गुणिनि दोषसञ्जल्पने
परस्य परपीडने भृशमनीयतायुर्व्यर्थम् ।
अतः परमपि क्षणं न यदि यादवाधीशितुः
कदापि न कथाश्रयस्त्वहह जन्म सर्वं वृथा ॥

बलस्यापचयो ग्लानिः । यथा—

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥

शङ्कानिष्टसमुन्नयः । यथा—

चित्रं कनकलतायां पल्लव एवामृतं सूते ।
कुसुमसमुद्गमसमये नो जाने किं परं भावि ॥

यथा वा कौशल्योक्तिः—

लोचनस्य सरयूरविदूरे गेहमेव तमसातटिनीयम् ।
शृङ्गवेरमपि सख्युरधीनं कुत्र वत्स्यति परेऽहनि रामः ॥

असूयाऽन्यगुणर्धीनामौद्धत्यादसहिष्णुता । यद्वा परोत्कर्षाक्षमासूया ।
यथा—

रे रे राजकुलाधम प्रकटितं ब्रह्माणमस्त्रैस्त्वया-
ऽप्येकामेव निशाचरीं त्वमवधीर्माता न मे ताटका ।
शीर्णं भग्नमिह त्वया हरधनुः क्षुण्णं किलैतत्त्वया-
ऽपीत्थं भार्गवरोषपोषणकरः पायात्स वो राघवः ॥ ४ ॥

सम्मोहानन्दसम्भेदो मदो मद्योपभोगतः । यथा माघे प्रातिमन्त्रिसशक्रेण गतानामिति ।

("प्रातिमं त्रिकसरेण गतानां वक्रवाक्यरचनारमणीयः।
गूढसूचितरहस्यसहास-सुभ्रुवां प्रववृते परिहासः ॥")

यथा वा—

चूर्णत्पाटलनेत्रपालि विगलन्मुक्तावलिप्रस्खल-
न्मैरेयप्णुतसृक्कतिक्कणदलि व्यादष्टदन्तच्छदम्।
क्षौमोद्वोजनखिन्नरेवति हलव्यालम्बिदोर्वल्लरि
भ्रश्यत्कुन्तलि लोलकुण्डलि नुमस्तालाङ्कमाद्यं महः॥

श्रमः खेदोऽध्वगत्यादेः। यथा—

सद्यः पुरीपरिसरेषु शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा।
गन्तव्यमद्य कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्॥

यथा च माघे सुरतश्रमोक्तिः।

("विश्रमार्थमुपगूढमजस्रं यत्प्रियैः प्रथमरत्यवसाने।
योषितामुदितमन्मथमादो तद्द्वितीयसुरतस्य बभूव॥
प्राप्यमन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः।)

क्रियाविद्वेष आलस्यम्। यथा—

चलति कथञ्चित्पृष्टा यच्छति वाचं कथञ्चिदालीनाम्।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः॥

सत्वत्यागादनौजस्यं वाक्यादेर्दैन्यमुच्यते। यथा—

जीर्णा तरिः सरिदतीव गभीरतीरा
बाला वयं सकलमित्थमनर्थहेतुः।
विश्वासबीजमिदमेव कृशोदरीणां
यन्माधव त्वमसि सम्प्रति कर्णधारः॥

ध्यानं चिन्ता हिताप्राप्त्या सन्तापादिकरी मता। यथा—

अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानगतिं तदीयाम्।
श्वासात्स वर्षत्यधिकं पुनर्यद् ध्यानात्तव त्वन्मयतां तदाप्यः॥

मोहो विचित्रता भीतिदुःखवेगानुचिन्तनैः। यथा—

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥

स्मृतिः पूर्वानुभूतार्थधीः। यथोत्तरचरित्रे सुमित्रोक्तिः —

अवगणितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम्।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥

धृतिस्तोष उच्यते। यथा —

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इति परिणामे निर्विशेषो विशेषः।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥

सङ्कोचश्चेतसो व्रीडा। यथा—

हृतवति दयिते हृदो दुकूलं हरिणकिशोरदृशो ह्रिया नमन्त्यः।
कुचशिखरशिखाचरी स्मितश्रीरमृतझरीमधरीचरीकरोति ॥

वाक्यारुण्यकरी चेतोऽनवस्था चापलं मतम्। यथा—कश्चित्कराभ्यामुपगूढनाल-मिति रघुवंशे।

( कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेशबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥ )

मनःप्रसादो हर्षः स्यात्। यथा —

'आगते दयिते बाला हर्षोत्कर्षवशंवदा।
उत्तरीयं न जानाति विभ्रष्टं स्तनमण्डलात् ॥'

आवेगः सम्भ्रमो राजगजवृष्ट्यादिसम्भवः। यथा —

अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥

इति परमानन्द.। युक्तं त्वमूयोदाहरणमिदम्। अस्य तु —

एको वाससि विश्लथे सहचरीस्कन्धे द्वितीयः करः
पश्चाद् गच्छति चक्षुरेकमितरद् भर्तुर्मुखे भ्राम्यति।
एकं कण्टकविद्धमस्ति चरणं निर्गन्तुमुत्कण्ठते
चान्यद्राक्षससुभ्रुवां रघुपतेरालोक्य सेनाचरान् ॥

क्रियास्वपाटवं जाड्यम्। आलस्ये तु क्रियाद्वेषो नात्रेति भेदः। यथा —

आगताः प्रथममीहितगर्वं कूलसीम्नि मुषिता इव तस्थुः ।
वानरा वलितकन्धरबन्धं नीरधौ विदधिरे नयनानि ॥

निन्दादितः परावज्ञा गर्वोऽसूयादिजो भवेत् । यथा—

"पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां
सुत्रामत्रासभाजां विबुधविटपिनां जन्मभूमिस्त्वमेव ।
गाम्भीर्यं वच्च तादृक्तव सलिलनिधे किन्तु विज्ञाप्यमेतत्-
त्सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टयः काङ्क्षणीयाः ॥"

यथा वा—

अव्राक्षं धृत्ववृक्षपान् परशुना धाक्षं प्रतापानलै-
रत्नाक्ष भटरक्तपङ्किलमरिक्षेत्रं यशस्त्रीहलैः ।
आवाप्सं बहुकीर्तिबीजमथ यत्तप्तैधितान् वस्तृण-
प्रव्यानुच्छिविदानि कीर्तिरथ मे गन्ता दिगन्तानपि ॥

सत्त्वभ्रंशो विषादः स्यात् । यथा—

"व्यर्थं यत्र हरीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञाज्ञे चलिते न यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं न लोपिक्षमः
सौमित्रेरपि पत्त्रिणामविषमस्तत्र प्रिया क्वास्ति मे ॥"

यथा वा—

न मे तादृग्वल्लीनियमितजटामण्डलमिदं
न वारण्यानीषु भ्रमणमनुजस्यार्द्रवपुषः ।
इयं तादृक्कान्ता तरणिकरतप्तोषरभुवि
प्रयान्ती पादाब्जे व्यथयति मनो हा विधुनती ॥

औत्सुक्यं वाञ्छितप्राप्तौ कालक्षेपासहिष्णुता । यथा—

गतया पुरः प्रतिगवाक्षमुखं दधती रतेषु भृशमुत्सुकताम् ।
मुहुरन्तरालभुवमस्तगिरेः सवितुश्च योषिदामीतदृशा ॥

निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः । मनसोऽपि तेन स्वप्नाद् भेदः ॥

यथा—

अथावलम्ब्य क्षणमेकपादिकां
तदा निदद्रावुपपल्वलं खगः ।
स तीर्यगावर्जितकन्धरः शिरः
पिधाय पक्षेण रतिक्लमालसः ॥

मनःक्षेपस्त्वपस्मारः । यथा—

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारचलत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥

व्याधित्वेऽप्यस्योक्तिर्बीभत्से भयानके च सत्त्वार्थम् । अन्यबाधेऽस्तु रसान्तरेऽपि सत्त्वम् ।

विषयानुभवे निद्रास्वप्नः सुप्तश्च तत्स्मृतम् । यथा—

एते लक्ष्मण जानकीविरहिणं मां खेदयन्त्यम्बुदाः
मर्माणीव विघट्टयन्त्यलममी क्रूराः कदम्बानिलाः ।
इत्थं व्याहृतपूर्वजन्मचरितो यो वीक्षितो राधया
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः ॥

निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः । यथा माघे एकादशे—

प्रहरकमयनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति ।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
दददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥

यथा वा—

प्रातः स्मरामि दधिघोषविधूतनिद्रं
निद्रावसानरमणीयमुखारविन्दम् ।
हृद्यानवद्यवपुषं नवनीतचोर-
मुन्निद्रमञ्जनयनं नयनाभिरामम् ॥

कोप एव स्थिरोऽमर्षः । यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥'

यथा वा—

कस्त्वं बालितनूद्भवो रघुपतेर्दूतः स बालीति कः
को वा वानरराघवः समुचिता ते बालिनो विस्मृतिः ।
त्वां बद्ध्वा चतुरम्बुराशिषु परिभ्राम्यन्मुहूर्तेन यः
सन्ध्यामर्पयति स्म निस्त्रप कथं तातस्त्वया विस्मृतः ॥

अवहित्थाऽऽकारगुप्तिः । यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

अधिक्षेपापमानादेश्चेतश्चण्डत्वमुग्रता । यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥

मतिः शास्त्रार्थनिर्धारः । यथा—

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥

व्याधिर्विरहजा व्यथा । यथा—

विरहतप्ततदङ्गनिवेशिता
कमलिनी निमिषद्दलमुष्टिभिः ।
किमथ नेतुमचेष्टत किं परा-
भवितुमैहत तद्द्वथु पृथुम् ॥

उन्मादश्चित्तविक्षेपः । यथा—

इत्थं वदन्त्या यदलोपि लज्जा
सा नौचिती चेतसि नश्चकास्तु ।
स्मरस्तु साक्षी तददोषताया-
मुन्माद्य यत्तत्तदवीवदत्ताम् ॥

अन्त्यावस्थाऽथवा मूर्च्छा मृतिः । यथा—

मुहुर्व्यञ्जनबीजनैर्बहलचन्दनासेचनैः
सरोजदलसङ्गमैरपि न चेष्टते सुन्दरी।
परन्तु तव नामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥

त्रासोऽथ कम्पभूः। यथा—

परिस्फुरन्मीनविघट्टितो रवः
सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम् ॥

तर्को विचारः सन्देहात्। स चतुर्धा विचारः संशयोऽनध्यवसायो विप्रतिपत्तिरिति। यथा—

किं मां विलोकयसि वक्रितकण्ठनाले
नाहं घटाङ्कितकटीं प्रमदां भजामि।
दासस्तवास्यसदृशो मम सम्प्रणष्टः
सोऽयं भवेन्न हि भवेदिति मे वितर्कः ॥
पर्याप्तिरेकत्र कलत्रलोभे परत्र च क्षत्रकुले कलङ्कः।
इति क्षणं धूर्जटिचापभङ्गे दोलायितो दाशरथिः पुनातु ॥
द्विधा कृतात्मा किमयं दिवाकरः इति।

यथा वा मम -

केचिद् दिक्करिकुम्भचालनभवं वाताभिघातोद्भवं
केचिन्नीरधिवीचिदोलनभवं तन्मीनजातं परे।
भूकम्पं ब्रुवते वयं हरिगुणश्रेणीसमाकर्णन-
प्रोद्यद्धर्षफणीन्द्रकम्पितशिरः श्रेणीभरं ब्रूमहे ॥

यास्तु अभिलाषचिन्तागुणस्मृतिकथोद्वेगप्रलापोन्मादव्याधिजाड्यनिधनानि वियोगे दशावस्थास्तासामौत्सुक्यादावन्तर्भावान्न पृथक्त्वम्। क्वचित्स्थायिनोऽपि [illegible]रिणः। यथोक्तम्—

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः।
[illegible]न्ते जुगुप्सा कथिता व्यभिचारितया बुधैः ॥

अन्ये तु छलविनयानुनयोपदेशोपालम्भानप्यधिकानाहुः। एषां भरतेनानुक्तत्वान्न सङ्ग्रह इति भावः।

[ सरि० ] अप्रतिपाद्यैव विभावानुभावौ व्यभिचारिनिरूपणं व्यञ्जकत्वपुरस्कारेण न युक्तं तथापि वक्ष्यमाणव्यङ्ग्यभावविवेचनाय निर्वेदस्य व्यभिचारिणोऽपि स्थायित्वप्रतिपादनाय च व्यभिचारिणो निरूपणमिति तदेवाह व्यभिचारिण इति। व्यभिचारिणः व्यभिचारिभावाः। तेषां व्यभिचारित्वञ्च यथा—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥ इति।

विभावानुभावापेक्षया विशेषेण रसपुष्टिजनकभावत्वं व्यभिचारित्वम्।

"विशेषेणाभितः काये स्थायिनं चारयन्ति ये।
अनुभावादिहेतूंस्तान् वदन्ति व्यभिचारिणः॥"

'आविर्भूय तिरोभूय चरद्भिश्चान्तरान्तरा।
यैः रसो भिद्यतेऽनेकस्ते स्मृता व्यभिचारिणः॥'

"ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम्।
उपकृत्य च गच्छन्ति ते मता व्यभिचारिणः॥"

तान् ब्रूते आहेति। भावानां व्यभिचारिघटितत्वेन तानाहेति सारबोधिनीकाराः। कारिका अवतारयति निर्वेदेत्यादि। चतस्रः कारिका संमवेतत्वेन व्याख्यायन्त इति बहुवचनम् निर्वेदग्लानिशङ्काख्याः निर्वेदः तत्त्वज्ञानापदीर्ष्यादिः स्वावमाननं ग्लानिः चित्तोत्सवाभावः शङ्काः अनिष्टसमुन्नयः च आख्या संज्ञा येषान्ते तादृशास्त्रयः। तथा एवमेव। असूयेति। असूया परोत्कर्षद्वेषः मदः सानन्दसम्मोहः श्रमः खेदश्च ते। आलस्यं क्रियाऽनादरः। चकारः सर्वत्र समुच्चयार्थकः। चैवेत्यपि। दैन्यं मनोजस्यम्। चिन्ताऽभीष्टहानौ ध्यानम्। मोहः विचित्तता। स्मृतिः पूर्वानुभूतविषयज्ञानम्। धृतिः सन्तोषः। व्रीडा सङ्कोचखेदने चित्तस्य। चपलता चेतोऽनवस्थानम्। हर्षः मनसः प्रसादः। आवेगः सम्भ्रमः। जडता अप्रतिपत्तिः। तथा एवमेव। गर्वश्चित्तोत्सेकः। विषादः सत्त्वभ्रंशः। औत्सुक्यं कालक्षेपाक्षमत्वम्। निद्रा मनः सम्मीलनम्। अपस्मारः मनसः क्षेपः। सुप्तम् विषयस्याननुभूतिः। प्रबोधः चेतनागमः। अमर्षः अवज्ञादेरभिनिविष्टत्वम्। अवहित्थम् व्रीडादेर्विक्रियागुप्तिः। अयेति चार्थे। उग्रता अनभीष्टे चण्डत्वम्। मतिः तत्त्वज्ञानम्। व्याधिः अन्तस्करणोपरोधः। तथा च। उन्मादः चित्त-

सम्मोहः। तथा च। मरणम् सर्वविषचेष्टाशून्यत्वम्। त्रासः मनसः क्षोभः। वितर्कः सन्देहाद्विचारः। एते हि व्यभिचारिणः विशेषादाभिमुख्येन चरन्तः फेनबुद्बुदन्यायेनानियतावस्थाना भावाः। विज्ञेयाः अवगन्तव्याः। अमी एते। त्रयस्त्रिंशत त्र्यधिकत्रिंशतिसङ्ख्याकाः भावाः व्यभिचारिभावाः। तु। नामतः नाममात्रोद्देशेन। समाख्याताः निरूपिता इति। एते नाट्ये नित्यमेव व्यभिचारिण इति तेषां व्यभिचारित्वम्। एतेषां स्थायित्तो भेदस्तु नियतानियतावस्थानकर्तृक एव। यथा स्रक्सूत्रन्यायेन नियतावस्थानाः स्थायिनो यदा फेनबुद्बुदन्यायेनानियतावस्थाना व्यभिचारिण इति। तेन ह्यनियतावस्थानवत्त्वे सति स्थायिनोऽपि व्यभिचारित्वमेव यथा हासः शृङ्गारवीरयोः क्रोधो वीरे जुगुप्सा शान्ते च। अष्टौ हि सात्त्विकाः स्तम्भादयः स्थायिनोऽष्टौ व्यभिचारिणस्त्रयस्त्रिंशदिति भावा एकोनपञ्चाशत्सङ्ख्यका मताः।

यथाऽऽह धनञ्जयः—

"निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्योग्रचिन्ता-
स्त्रासेर्ष्यामर्षगर्वाः स्मृतिमरणमदाः सुप्तनिद्राविबोधाः।
व्रीडापस्मारमोहाः सुमतिरलसतावेगतर्कावहित्थाः
व्याध्युन्मादो विषादौत्सुकचपलयुतास्त्रिंशदेते त्रयश्च॥"

'ये सत्त्वजाः स्थायिन एव चाष्टौ त्रिंशत्त्रयो ये व्यभिचारिणश्च।
एकोनपञ्चाशदमी हि भावा युक्त्या निबद्धाः परिपोषयन्ति॥" इति।

चित्तस्य भावनं वासनमेव भावस्य भावत्वम्। तेषामेवैकत्र चरमक्षणपर्यन्तस्थितौ स्थायित्वमन्यत्रोपकर्तृत्वदशायां व्यभिचारित्वम्। उक्तं यथा—

'रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः।' इति।

किन्तु नाट्ये निर्वेदादयो हि व्यभिचारिण एव कामं रत्यादयो व्यभिचारित्वमाप्नुयुरनियतरसे। त्रयस्त्रिंशद् व्यभिचारिण इत्ययोगव्यवच्छेदार्थम्। एते हि न क्वचित्स्थायिनः। व्यभिचारिणोऽपि भावाश्चित्तवृत्तिविशेषा एवेति तेषां सात्त्विकेभ्यः पार्थक्यं तेषां नान्तःकरणपरिणतित्वम्। तेषां हि रसं प्रति आनुकूल्यं प्रातिकूल्यमपि। आद्यमुपादेयं यत्नतोऽपरं वर्ज्यम्। तच्च यथा—

| रसाः | अनुकूलभावाः |
|---|---|
| सम्भोगश्रृङ्गारः | निर्वेदादयस्त्रिंशत् आलस्योग्रताजुगुप्सावर्जम् |
| विप्रलम्भश्रृङ्गारः | आलस्यग्लानिनिर्वेदश्रमशङ्कानिद्रौत्सुक्यापस्मारसुप्तविबोधोन्मादजडतासूयाः । |
| हास्यः | अवहित्थालस्य निद्रा प्रबोधासूयाः । |
| करुणः | मोहनिर्वेददैन्यजाड्यविषादश्रमापस्मारोन्मादव्याध्यालस्यस्मृतयो वेपथुस्तम्भस्वरभेदाश्रूणि च । |
| रौद्रः | स्मृतिस्वेदावेगामर्षरोमाञ्चचपलतोग्रयाणि स्वरभङ्गकम्पौ च । |
| वीरः | धृतिमतिगर्वावेगामर्षहर्षोग्रताः रोमाञ्चश्च । |
| भयानकः | शङ्कामोहावेगदैन्यचापलत्रासापस्मारमूर्च्छाः स्तम्भस्वेदस्वरभङ्गरोमाञ्चवैवर्ण्यानि । |
| बीभत्सः | अपस्मारमतिव्याधिमोहावेगगर्वा वैवर्ण्यञ्च । |
| अद्भुतः | हर्षावेगधृतयः स्तम्भस्वेदरोमाञ्चस्वरभङ्गाश्रूणि । |

एवमेव स्थायिनामपि व्यभिचरणं यथा—

| भावाः | स्थायित्वम् | व्यभिचरणम् |
|---|---|---|
| रतिः | श्रृङ्गारे | हास्यकरुणशान्तेषु |
| हासः | हास्ये | श्रृङ्गारवीरयोः |
| क्रोधः | रौद्रे | वीरे |
| उत्साहः | वीरे | रौद्रहास्ययोः |
| भयम् | भयानके | करुणश्रृङ्गारयोः |
| जुगुप्सा | वीभत्से | भयानकशान्तयोः |
| विस्मयः | अद्भुते | शेषेषु सर्वेषु |
| शोकः | करुणे | न शोकस्य व्यभिचारित्वम् |

अथैतेषां व्यभिचारिणां विशेषलक्षणान्युच्यन्तेऽनुक्तान्यपि ग्रन्थे प्रासङ्गिकत्वेनापेक्षितत्वात् । तत्र—

१. 'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनता ॥'

तत्त्वज्ञानाद्यथा—

'प्राप्ताः श्रियः सकलकामदुघास्ततः किम् ।'

आपदो यथा—

राज्ञो विपद्बन्धुवियोगदुःखं देशच्युतिर्दुर्गममार्गखेदः ।
आस्वाद्यतेऽस्याः कटुनिष्फलायाः फलं मयैतच्चिरजीवितायाः ॥

ईर्ष्यया यथा—

धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ।

वार्धक्याद्यथा—

१. भार्याऽरतिः सन्ततिदौर्मनस्य
स्थानच्युतिर्वा परगेहवासः ।
दारिद्र्यदैन्ये शठतर्जनश्च
फलं मयाप्तं चिरजीवितस्य ॥

२. रत्यायासकलाभ्यासाद् ग्लानिर्निष्प्राणते ह या ।
तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादयो मताः ॥

सम्भोगरत्या ग्लानिर्यथा —

लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बाः
रजनय इव निद्राक्लान्तनीलोत्पलाक्ष्यः ।
तिमिरमिव दधानाः स्रंसिनः केशपाशा-
नवनिपतिगृहेभ्यो यान्त्यमूर्वारबध्वः ॥

विप्रलम्भरत्या यथा—

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥

एवमेव श्रमक्लमाभ्यासादिभ्योऽपि ।

३. अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् ।
वैवर्ण्यकम्पवैमुख्यपार्श्वालोकास्यशोषकृत् ॥

परक्रौर्याच्छङ्का यथा—

ह्रिया सर्वस्यासौ हरति विदिताऽस्मीति वदनं
द्वयोर्दृष्ट्वाऽऽलापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रथयति च वैलक्ष्यमसमं
प्रिया प्रायेणाऽऽस्ते हृदयनिहितातङ्कविधुरा ॥

स्वदुर्नयाच्छङ्का यथा—

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका समभवद् गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥

४. परोत्कर्षाक्षमाऽसूया गर्वदौर्जन्यमन्युजा ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादयः ॥

गर्वादसूया यथा—

यदि नो सन्ति ? सन्त्येव केयमद्य विभीषिका ?
किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥

दौर्जन्याद्यथा—

तद्भीरुत्वं तव मम पुरः साहसानीदृशानि
श्लाघा सास्मद्वपुषि त्रिनयव्युत्क्रमेऽप्येष रागः ।
तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः
ख्याते तस्मिन् वितमसि कुले जन्म कौलीनमेतत् ॥

यस्मिंश्चिरप्रणयनिर्भरबद्धभाव-
मावेदितो रहसि मत्सुरतोपभोगः ।
तत्रैव दुश्चरितमद्य निवेदयन्ती
ह्रीणासि पापहृदये न सखीजनेऽस्मिन् ॥

मन्युतो यथा—

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एव न्यस्यते वारयैनम् ॥

५. सम्मोहानन्दसम्भेदः स्खलदङ्गवचोगतिः ।
मधुपानादिजो ज्ञेयो मदो विविधभावकृत् ॥

मधुपानजो मदो यथा—

मधुरसान्मधुरं हि तवाधरं तरुणि मद्वदने विनिवेशय ।
मम गृहाण करेण कराम्बुजं पपपतामि हहा भभभूतले ॥

मदश्चोत्तमे स्वापानुभावको मध्यमे हसितगानरूपोऽधमे रोदनपरुषोक्तिरूपः । यथा मध्यमपात्रगत एव—

प्रातिमं त्रिकसरेणु गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥

६. श्रमः खेदोऽध्वरत्यादेः श्वासनिद्राभरादिकृत् ।

श्रमग्लान्योः कारणकार्यत्वाद्भेदः । अतिशयतां प्राप्तः श्रम एव ग्लानिरित्यपि ।

अध्वजश्रमो यथा—

'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमद्य कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥'

'अलसलुलितमुग्धान्यध्वसम्पातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप ॥'

रतिजन्यश्रमो यथा—

प्राप्यमन्मथमदादतिभूमिं दुर्वहस्तनभराः सुरतस्य ।
शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥

७. आलस्यं श्रमगर्भादेर्जाड्यं जृम्भाक्रियादिकृत् ।

गर्भादालस्यं यथा—

चलति कथञ्चित् पृष्टा यच्छति वचनं कथञ्चिदालीनाम् ।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥

८. दौर्गत्यादेरनौजस्यं दैन्यं कार्श्यामृजादिकृत् ।

दारिद्र्याद् दैन्यं यथा—

वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्ताऽपि नो।
यत्नात्सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥

यद्वा—

सत्यं न मे विभवनाशकृताऽस्ति चिन्ता
कालक्रमेण हि धनानि भवन्ति यान्ति।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥

यथा वा—

मद्गेहे मशकीव मूषकवधूर्मूषीव मार्जारिका
मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः।
मूर्च्छापन्नशिशूनसून् विजहतः सम्प्रेक्ष्य झिल्लीरवैः
लूतातन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥

९. ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।

अथवा—

प्रयत्नपूर्विकाऽन्वेष्यस्मृतिश्चिन्तेति कथ्यते। इति।

यथा—

अस्तमितविषयसङ्गा मुकुलितनयनोत्पला बहुश्वसिता।
ध्यायति किमप्यलक्ष्य बाला योगाभियुक्तेव ॥

१०. मोहो विचित्रता भीतिदुःखवेगानुचिन्तनैः।
घूर्णनाज्ञानपतनं भ्रमणादर्शनादिकृत् ॥
विचित्रता चित्तस्य चैतन्यस्यापाटवम्।

यथा—

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥

११. सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः।
भ्रूसमुल्लासकरजवदनादिस्तदुद्भवः ॥

यथा—

अवगणितसुरासुरप्रभावं शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥

यथा वा –

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
( सभ्रूभङ्गम् )
आं ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥

१२. अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्याप्तता धृतिः ।
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥

यथा—

'राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वञ्चेति गन्ता धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥'

यथा वा—

वयमिह परितुष्टा वल्कलैस्त्वञ्च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥

१३. दुराचारादिभिर्व्रीडा धार्ष्ट्याभावोऽभिधीयते ।
वस्त्राङ्गुलीयकस्पर्शभूरेखाधोमुखादिकृत् ॥

यथा—

"अलङ्कुरु निजं वपुर्दयितमण्डने किं पुन-
स्त्वमेव मम मण्डनं दयित किं परैर्मण्डनैः ।
वरं कुरु पयोधराधरनितम्बबिम्बेषु मा-
मिति प्रतिवचः श्रुतौ जयति नम्रवक्त्रा वधूः ॥"

यथा वा—

पथि पथिकवधूभिः सादरं पृच्छयमाना
कुवलयदलनीलः कोऽयमार्ये तवेति ।
स्मितविकसितगण्डप्रान्तविभ्रान्तनेत्र-
वदनमपहरन्ती स्पष्टमाचष्ट सीता ॥

१४. मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ।
आत्मप्रकाशनपरा चेष्टा चपलतैव सा ।

मात्सर्याद्भर्त्सनं यथा—

अभ्यासु तावदुपमर्दसहासु भृङ्ग-
लोलं विलोलय मनः सुमनोलतासु ।
बालामजातरजस कलिकामकाले
व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥

द्वेषात्पारुष्यं यथा—

सकलरिपुजयाशा यत्र बद्धाः सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥

रागात्स्वच्छन्दाचरणं यथा—

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसन्निवेशैर्विपाटयामास युवा नखाग्रैः ॥

१५. मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ।

यथा—

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥

स्वेदो यथा—

आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।
तस्मिन् द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन ॥

१६. आवेगो राजविद्रावरत्यादेः सम्भ्रमो मतः ।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ॥

यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतो व्याददानोंऽशुकान्तं
गृह्णन् केशेष्ववपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥

१७. अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः।
अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र।
क्रियास्वपाटवं जाड्यं चिन्तौत्कण्ठोभयादिभिः॥

इष्टदर्शनाज्जडता यथा—

एवमालि निगृहीतसाध्वसं शङ्करो रहसि सेव्यतामिति।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये॥

यथा—

'तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥'

अनिष्टदर्शनाद्यथा—

आगताः प्रथममाहितगर्वं कूलसीम्नि मुषिता इव तस्थुः।
वानरा वलितकन्धरबन्धं नीरधौ निदधिरे नयनानि॥

१८. गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः।
सविलासाङ्गवीक्षाविनयावज्ञादिकृत्तु सः॥

यथा—

'धृतायुधो यावदहं तावदन्यैः किमायुधैः।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति'॥

यथा वा—

कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः।
नृत्यति भूतपतौ नृत्यन्त्यन्येऽपि भूतवेतालाः॥

यथा वा—

धन्यास्ते कवयो यदीयरसनारङ्गस्थलीताण्डवे
नृत्यन्तीव सरस्वती लघुपदन्यासेन निष्क्रामति।
अस्माकं रसपिच्छिले पथि गिरां देवी नवीनोदय-
त्पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते॥

१९. "प्रारब्धकार्यासिद्धयादेर्विषादः सत्वसंक्षयः।
निच्छ्वासोच्छ्वाससन्तापसहायान्वेषणादिकृत् ॥"

यथा—

व्यर्थं यत्र हरीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वासि मे ॥

यथा वा—

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सखी।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥

२०. कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसम्भ्रमैः।
तत्रोच्छ्वासत्वराश्वासहृतापस्वेदविभ्रमाः ॥

रम्येच्छाजन्यमौत्सुक्यं यथा—

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवीतमाल्यः।
बद्धुं न सम्भावित एव तावत् करेण रुद्धोऽपि हि केशपाशः ॥

रतिजन्यमौत्सुक्यं यथा—

गतया पुरः प्रतिगवाक्षमुखं दधती रतेषु भृशमुत्सुकताम्।
मुहुरन्तरालभुवमस्तगिरेः सवितुश्च योषिदमिमीत दृशा ॥

यथा वा—

आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी।
हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥

२१. निद्राव्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः।
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वासनादयः ॥

यथा—

प्रहरकमपनीय स्वं निदिद्रासतोच्चैः
प्रतिपदमुपहूतः केनचिज्जागृहीति।
मुहुरविशदवर्णां निद्रया शून्यशून्यां
दददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥

अथवा—

निद्रार्धमीलितदृशो मदमन्थराणि
नात्यर्थवन्ति न च यानि निरर्थकानि।
अद्यापि मे मृगदृशो मधुराणि तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति॥

२२. आधिश्चात्यन्तदुःखादेरपस्मारस्तथाविधः ।
मनःक्षेपस्त्वपस्मारो ग्रहावशादिसम्भव इत्यपि॥

यथा—

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारचलत्तरङ्गम्।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥

केचित्तु अपस्मारस्थाने विस्मृतिं पठन्ति। तल्लक्षणं तु—

'विरोधिभावात्पूर्वस्य प्रसृतिर्विस्मृतिर्मता।
ध्यानजाड्यप्रमोहाधिपरितापादिकृत्तु सा॥' इति।

यथा—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्सम्प्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम्॥

२३. स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः।
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥

यथा—

एते लक्ष्मण जानकीविरहिणं मां खेदयन्त्यम्बुदाः
मर्माणीव विघट्टयन्त्यलममी क्रूराः कदम्बानिलाः।
इत्थं व्याहृतपूर्वजन्मचरितो यो वीक्षितो राधया
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः॥

२४. निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥

यथा—

प्रातः स्मरामि दधिघोषविनीतनिद्रं
निद्रावसानरमणीयमुखारविन्दम् ।
हृद्यानवद्यवपुषं नवनीतचोर-
मुन्मीलिताब्जनयनं नयनाभिरामम् ॥

यथा वा—

चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥

२५. अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
तत्र स्वेदः शिरः कम्पनेत्ररागाङ्गविक्रियाः ॥
अभिनिविष्टता स्थिरः क्रोधः ।

अधिक्षेपाद्यथा—

'प्रायश्चित्तं' चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥

अपमानाद्यथा—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥

२६. लज्जाद्यैर्विक्रियागोपोऽवहित्थाऽऽत्मन्यविक्रिया ।
व्यापारान्तरसङ्गित्ववदनानमनादयः ॥

यथा—

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

२७. द्विष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥

अपराधाद्यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः॥

यथा वा—

उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसन्तानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वराजन्यवंश्यान्।
पित्र्यं तद्रक्तपूर्णह्रदवसनमहानन्दमन्दायमानं
क्रोधाग्निं कुर्वतो नो न खलु स विदितः सर्वभूतैः प्रभावः॥

२८. भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः।
स्मेरता धृतिसन्तोषौ बहुमानस्तथाऽऽत्मनि॥

यथा—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥

२९. व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः।
प्रस्वेदकम्पतापाद्या अनुभावतयोदिताः।
विरहादेर्मनस्तापो व्याधिर्दुःस्थाङ्गतादिकृत्।

यथा—

पाण्डु क्षामं वदनं हृदयं सरसं तवालसञ्च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः॥

३०. उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः।
तस्मिन्नस्थानरुदितगीतहासासितादयः॥

यथा—

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्हाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु॥

३१. जीवनोद्गमनारम्भो मरणं परिकीर्तितम्।
सम्मोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत्।
रोगाद्यैः प्रागवस्था तु मरणस्य स्मृतिर्मता।

यथा—

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिताजीवितेशवसतिं जगाम सा ॥

केचिन्मरणस्थाने करुणामपि पठन्ति । मरणमत्र मरणासन्नतैव न तु तदेव । तथा सति आलम्बनोच्छेदेन भावत्वानुपपत्तेः । तेनैवोक्तं वर्णितेऽपि मरणेऽदूरत एव प्रत्युज्जीवनं वाच्यमिति । यथा रघौ—

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूयतद्व्यथां सहोत्थितः सैनिकहर्षनिस्वनैः ॥

मरणासन्नावस्थां यथा—

कुशलं तस्याः जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥

३२. गर्जितादेर्मनःक्षोभश्चासोऽत्रोत्कम्पितादयः ।

यथा—

परिस्फुरन्मीनविघट्टितो रवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥

यथा वा—

त्रस्यन्ती चलशफरी विघट्टितोरूर्वामोरूरतिशयमाप
विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतो-
र्लीलाभिः किमु सति कारणे रमण्यः ॥

३३. ऊहो वितर्कः सन्देहाद् भ्रूशिरोऽङ्गुलिनर्तकः ।

यथा—

'अनङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः ॥' इति ।

एषां ह्युपनिबन्धस्तु प्रयोजनवशादेव न तु रसविशेषनियमेनेति पृथगुपादानमेतेषाम् । विभावानुभावौ तु लोकादेव ज्ञातुं शक्यौ इति न तयोरभिधानमत्र ।

उक्तमेव—

हेतुकार्यात्मनोः सिद्धिस्तयोः संव्यवहारतः ॥ इति ।

[ वि० वृ० ] अथ व्यभिचारिणः —निर्वेदेति ।

एषामात्मन्ययोग्यतामननं निर्वेदः चित्तसम्भ्रम आवेगः कालयापनाक्षमत्वमौत्सुक्यं दुःखोत्थधातुवैषम्याद्दुत्था चित्तविलुप्तिरपस्मारः सुप्तं स्वप्नः आकारगुप्तिरवहित्थं चण्डत्वमुग्रता अर्थनिर्वारो मतिः हृद्भ्रान्तिरुन्मादः । स्पष्टमन्यत् । लक्ष्याण्यूह्यानि । इह निर्वेदस्याभद्रप्रायस्याऽपि प्रागुपादानात्तस्य शान्तस्थायित्वं विहितम् ।

[ वृत्तिः ] निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थम् । तेन—

[ कारिका ] निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

[ वृत्तिः ] यथा—

'अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे (स्वर्णे) वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥'४४॥

[ कमला० ] नाट्ये इत्युक्तेः काव्ये नवमो रस उक्तः । स कोऽत आह निर्वेदस्येति । विषयनिवृत्तिरूपत्वादमङ्गलत्वम् । स्थायिसञ्चारिमध्यपाठादुभयरूपत्वम् । तेन वस्तुतत्त्वज्ञाने निर्वेदस्य स्थायित्वाच्छान्तरसत्वम् । इष्टयोगादिजस्य सञ्चारित्वम् । तदुक्तम् —

स्थायी स्याद्विषयेष्वेव तत्त्वज्ञानाद् भवेद्यदि ।

केचित्तु न निर्वेदः शान्तस्य स्थायी तस्य विषयेषु तुच्छधीरूपत्वात् शान्तरसस्य त्वानन्दरूपत्वात् । तदुक्तम् —

"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥"

अतः शमोऽस्य स्थायी निर्वेदस्तु व्यभिचारी । तदुक्तम् —

शमो निरीहावस्थायामात्मविश्रामजं सुखम् ।

अन्ये तु करुणवद् गतिमाहुः । अहौ वेति । द्वयोः साम्यार्थं वाशब्दद्वयम् । स्त्रैणं स्त्रीसमूहः । प्रलापोऽनर्थकं वचः । तन्नाम्नाप्यसहिष्णुता । तेन न शिवविषयाऽत्र रतिः यद्वा प्रवदते इत्यर्थः । अत्र बिरक्त आलम्बनमनुतापविषयदोषादय

उद्दीपकाः साम्यधीरनुभावो धृत्यादयः सञ्चारिणः। एवं रसभावेत्यत्र रसस्तस्य स्थायिनो रत्यादयः सञ्चारिणश्चोक्ताः।

[ सरि० ] 'अष्टौ नाट्ये रसाः स्मृताः' इति नाट्यस्य वैशिष्ट्योपादानेन श्रव्ये रसान्तरसत्त्वस्वीकारात्तच्च कीदृगित्यपेक्षायामाह वृत्तिकृत् निर्वेदस्येति। अमङ्गलप्रायस्य रसस्यालौकिकसुखमयत्वान्निर्वेदस्य विषयवैराग्यस्वरूपत्वाच्चाशुभ-स्वरूपस्य रसस्य सर्वत्र ग्राह्यत्वज्ञानरूपतयाऽस्यव सर्वत्र हेयत्वबुद्धिरूपतया चास्य-मङ्गलत्वम्। ईर्ष्याजन्यस्य त्वमङ्गलत्वाभावात्प्रायेति। निर्वेदस्य स्वावमानन-रूपभावस्य। प्रथमम् आद्यत्वेन स्थायिभावानां सद्योऽनन्तरवर्तित्वेन यथा कारिकायाम्। अनुपादेयत्वे अनुल्लेखनीयत्वे पश्चान्निर्देश्यत्वे। अपि इत्यवधारणे। उपादानं प्रथमत्वे निर्देशः स्थायि व्यभिचारीतरमध्यपाठः। तस्य व्यभिचारित्वे विशेषात्सञ्चरणशीलत्वे फेनबुद्बुदन्यायेनानियतावस्थानवत्त्वे। अपि इत्यवधारणे। स्थायिताभिधानार्थम स्थायित्वस्यापि निर्देशनिमित्तम्। स्थायितया स्थायि-भावत्वेनाभिधानं निर्देशस्तदर्थं तन्निमित्तमिति। तत्त्वज्ञानजन्यत्वेन निर्वेदस्य सर्वत्र हेयत्वबुद्धिरूपतया वैराग्यप्रवर्तितत्तया चामङ्गलत्वेन पश्चान्निर्देश्यत्वेऽपि प्राङ् निर्देशा् मुख्यत्वप्रकाशनेन स्थायित्वप्रतिपादनायेति। व्यभिचारिषु पाठात्तस्य व्यभिचारित्वं त्वस्त्येव। तेन हि तत्त्वज्ञानजन्यस्य निर्वेदस्य स्थायित्वमपि व्यभिचारित्वमपीत्युभय-रूपत्वं यथा रत्यादीनाम्। ईर्ष्यादिकारणान्तरजन्यस्य तु व्यभिचारित्व-मेवेत्याशयः।

यथोक्तम्—

'स्थायी स्याद्विषये द्वेषस्तत्त्वज्ञानाद् भवेद्यदि।
इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ॥' इति।

तेनेति। तेन तस्माद्धेतोरेव। तन्निरूपककारिकामवतारयति निर्वेदेति। निर्वेद-स्थायिभावः शान्तः अपि नवमः रसः अस्ति इत्यन्वयः। निर्वेदेति। निर्वेदः तत्त्व-ज्ञानजन्यस्वावमाननरूपचित्तवृत्तिविशेषः स्थायी नियतावस्थानो हि स्रक्सूत्रन्यायेन भावश्चित्तवृत्तिर्यस्य तादृशः तत्त्वज्ञानजन्यनिर्वेदास्वादो यथा रतेरास्वादः शृङ्गार-स्तथैव। शान्तः शान्ताख्यः। अपि इति पूर्वोक्तसमुच्चये। नवमः शृङ्गाराद्यष्ट-विधेभ्यो भिन्नः। रसः श्रव्यकाव्यसम्बद्धरसः। अस्ति विद्यते इति। यद्यपि शान्तस्य निवृत्तिप्रायतया रसान्तरस्य प्रवृत्तिबहुलतयाऽभिनयस्य प्रवृत्तिनिमित्तत्वेन शान्तोऽनभिनेय इति अभिनयप्राणे नाट्येऽष्टावेव रसा उक्तास्तथापि श्रव्ये त्वभिनय-स्यातथाप्रयोजनाच्छान्तस्य नवमरसत्वं सिध्यत्येवेत्याशयः। ननु नागानन्दादौ तत्त्वज्ञानजन्यनिर्वेदस्य स्थायित्वेन प्रबन्धव्याप्यत्वात्कथं नाट्येऽष्टावेव रसा इत्युप-

पद्यते ? शान्तरसानुभावरूपं वनगमनाद्यभिनेयमेवेति चेत्सत्यम्। नागानन्दादौ सकामशान्तो हि रसस्तस्याभिनेयत्वञ्च किन्तु निष्कामशान्तस्य नाभिनेयत्वमिति नाट्ये निष्कामशान्तस्यैव निषेधस्तथाऽसति तु बुद्धादेरप्यनुकरणीयत्वमापतेत। नाट्येऽष्टौ रसा इति शान्तस्य क्वाचित्कत्वेनैवेति मधुमतीकाराः।

शान्तस्य रसत्वमादाय सन्त्यनेके विप्रतिपत्तयः। केचिच्छान्तरसस्य नितान्ताभावं मन्यन्ते। अपरे त्वस्य भावेऽपि दयावीरशुद्धबीभत्सादावन्तर्भावमामनन्ति। अन्ये तु नाट्येऽप्यस्यास्तित्वं मन्यन्ते। केचिन्निर्वेदस्थाने शमं गृह्णन्ति, तस्याभिनेयत्वञ्च समर्थयन्ति। प्रथमपक्षधरा. कथयन्ति यन्नास्त्येव शान्तो रसो मुनिना तस्य विभावाद्यप्रतिपादनाल्लक्षणाकरणाच्च। नैव तस्य स्थितिः सम्भवति अनादिकालप्रवाहायातरागद्वेषयो कश्छेत्तुमशक्यत्वात् तदनुच्छेदे निर्वेदस्य शमस्य वा स्थायित्वाभावात्। ये हि शान्तस्य स्थितिं मत्वाऽपि तस्य वीरबीभत्सादावन्तर्भावमामनन्ति तेषां मते वीरस्य दयादानधर्मजन्यभेदे बीभत्सस्य वैराग्यजन्यशुद्धभेदे शान्तोऽन्तर्भूयते सलक्षणत्वात्। नागानन्दे हि दयावीरोत्साहस्यैव स्थायित्वं न तु निर्वेदस्य वा शमस्यैव। मलयवत्यनुरागेणाऽऽप्रबन्धप्रवृत्तेन विद्याधरचक्रवर्तित्वप्राप्त्या च सकाम शान्त एव तत्र प्रबन्धव्यापी। सकामस्य न निर्विण्णता न वा शान्ततेति। ये हि नाट्ये एव शान्तं निषेधयन्ति तेषां मते —

'न यत्र दुःखं न सुखं न चिन्ता
न द्वेषरागौ न च काचिदिच्छा।
रसस्तु शान्तः कथितो मुनीन्द्रैः
सर्वेषु भावेषु शमप्रधानः॥' इति।

स्थित्या समस्तभावविलयलक्षणस्य तस्यालङ्काराद्यभिनयौचित्यादिति। धनञ्जयधनिकावपि तदेव समर्थयतः।

यथोक्तं दशरूपके धनञ्जयेन—

"निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम्।
वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मताः॥"
"शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य।"
"शमप्रकर्षोऽनिर्वाच्यो मुदितादेस्तदात्मता॥"

यथा व्याख्यातं धनिकेन निर्वेदादीनामताद्रूप्यात् विरुद्धाविरुद्धाविच्छेदित्वस्याभावात् अस्थायित्वमेव सदा। अत एव ते चिन्तादिस्वस्वव्यभिचार्यन्तरिता अपि परिपोषं नीयमाना वैरस्यमावहन्ति। न च निष्फलावसानत्वमेतेषामस्थायित्व-

निबन्धनम् हास्यादीनामप्यस्थायित्वप्रसङ्गात् । पारम्पर्येण तु निर्वेदादीनामपि फलवत्त्वात् । अतो निष्फलत्वम् स्थायित्वे प्रयोजकं न भवति किन्तु विरुद्धैर्भावैर-तिरस्कृतत्वम् । न च निर्वेदादीनामिति न ते स्थायिनः । ततो रसत्वमपि न तेषामुच्यते । अतोऽस्थायित्वादेवैतेषामरसता । यदि शमप्रकर्षेण शान्तस्य रसत्व-मुच्यते तदापि स अनिर्वाच्य एव । न हि 'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा' इति लक्षणः शान्तरसः सहृदयास्वादविषयः तस्य मोक्षावस्थायामेव आत्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् । तस्य स्वरूपेणैवा-निर्वचनीयत्वाच्छ्रुत्याऽपि 'नेति' 'नेति' इत्यन्यापोहरूपेणोक्तेः अथापि तदुपायभूतो मुदितामैत्रीकरुणापेक्षादिलक्षणस्तस्य च विकासविस्तारक्षोभविक्षेपरूपतैवेति । तदुक्त्यैव शान्तरसस्वादो निरूपितः । इति । नाटचदर्पणकृतौ रामचन्द्रगुणचन्द्रौ तु नाट्येऽपि शान्तस्य पुष्टिं मन्येते । काव्यप्रदीपे यथोक्तम्--अत्र वदन्ति शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः । न चैतस्य स्थायी निर्वेदो युज्यते । तस्य विषयेष्वलम्प्रत्ययरूपत्वादात्मावमाननरूपत्वाच्च । शान्तेश्च निखिलविषयपरिहार-जनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् । तदुक्तम् --

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ इति ।

अत एव सर्वचित्तवृत्तिविरामोऽस्य स्थायी इति निरस्तम् । अभावस्य स्थायित्वा-योगात् । तस्याच्छमोऽस्य स्थायी । निर्वेदादयस्तु व्यभिचारिणः । स च—

'शमो निरीहावस्थायामानन्दः स्वात्मविश्रमात् ।' इति ।

उद्द्योतकारास्तु न तत्साधु मन्यन्ते । तद्विवेके वस्तुतो रत्यादिमुपजीव्य हर्षा-दिरिव तत्त्वज्ञानजनिर्वेदमुपजीव्य शमादिप्रवृत्तेः स एव स्थायी न शमः । न च क्वचिच्छम इति मुन्युक्तिविरोधः । शम्यत इति व्युत्पत्त्या तस्य निर्वेदपरत्वात् । तृष्णायाः क्षय इति व्युत्पत्त्या तृष्णाक्षयोऽपि निर्वेद एव । मुनिना अष्टौ स्थायिनोऽष्टौ सात्त्विकास्त्रयस्त्रिंशद् व्यभिचारिण इति एवं गणनया एकोनपञ्चाशद्भावा इति मुन्युक्तिः सङ्गच्छते । शमस्याऽपि भावत्वे त्वाधिक्यापत्तिः स्यात् ।" इति । तेन हि स्थितमेतद्यदस्त्येव शान्ताख्यो रसः तत्त्वज्ञानजन्यनिर्वेदः शमापराभिधस्तस्य स्थायि-भावः । अनित्यत्वादिना अशेषवस्तुनिःसारता तस्यालम्बनं पुण्याश्रमाद्युद्दीपनं रोमाञ्चाद्यनुभावाः हर्षस्मरणमतिभूतदयाऽऽपज्जन्यनिर्वेदादयो व्यभिचारिण इति । फलेच्छाशून्यस्य तस्य श्रव्ये एवोपयोगो नाट्ये तु सकामस्यैवेति । अस्यापि रसत्वं करुणादिवदेव । यथा हि वीतरागाणां शृङ्गारः स्वदते तथैव सरागाणां शान्तोऽपि स्वदते । नाऽस्य वीरेऽन्तःपातः । वीरादेरभिमानमयत्वेनाध्यवसायाच्छान्तस्य तु

सर्वाहङ्कारप्रशमैकरूपतया प्रादुर्भावात्। सत्यपि विशेषे यदितयोरेकत्वमभ्युच्यते तदा तत्करुणादीनामपि स्यात्। दयावीरस्य सर्वविधाहङ्काररहित्ये यथा जीमूतवाहनस्य सान्तेऽन्तःपातः। न च तस्य सर्वचित्तवृत्तिप्रशम एव स्थायीति वाच्यमभावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तिरूपत्वाभावेन भावत्वायोगात्। यच्च—

'स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः।
पुनर्निमित्तापाये तु तत्रैव प्रविलीयते॥'

इत्युच्यते तत् 'शृङ्गारमेव रसनाद्रसनामनाम' 'एको रसः करुण एव निमित्तभेदात्' 'तस्माददद्भुतमेवाहकृती नारायणो रसम्' इत्यादिवदतिवाद एव। निमित्तापाये चर्वणस्यासम्भवात्। रसस्यास्वादेभयत्वेन सर्वसाम्येऽपि स्थायिभावभेदेन तेषां भेद इति प्रागेवोक्तम्। तत्त्वज्ञानजन्यनिर्वेदस्य स्थायिभावत्वं व्यभिचारित्वञ्च रत्यादीनामिव आपदीर्ष्यादिजन्यनिर्वेदस्य व्यभिचारित्वमेव ग्लान्यादीनामिवेति स्थितं तेन। निर्वेदस्थायिभावप्रकृतिकशान्तरसमुदाहरति अहौ वेति अहौ वा हारे वा कुसुमशयने वा दृषदि वा मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा तृणे वा स्त्रैणे स्वर्णे) वा समदृशः मम दिवसाः क्वचित् पुण्यारण्ये शिव शिव शिव इति प्रलपतः सत यान्ति इत्यन्वयः। अहौ सर्पे। वा विकल्पे हारे मुक्तामालायाम्। वा इति विकल्पे। सर्वत्र द्वयोर्द्वयोः वा शब्दस्तुल्यतासूचनार्थः। यथा अहिहारयोर्न भेद इति। कुसुमशयने पुष्पाकीर्णशय्यायाम्। वा। दृषदि पाषाणे। वा। मणौ रत्ने महार्घे। वा। लोष्टे मृत्पिण्डे। वा। बलवति अपकारक्षमे। रिपौ शत्रौ। वा। बलवति उपकारक्षमे सुहृदि मित्रे। वा। तृणे घासे। वा स्त्रैणे युवतीनां समूहे। स्वर्णे इति पाठे हेम्नि। वा। क्वचिदित्यन्वये क्वचित् सामान्यस्थले। वा। पुण्यारण्ये तीर्थादिपवित्रभूमौ। वा। समदृशः समा तुल्या उदासीना दृक्दृष्टिर्यस्य तादृशस्य उपादेयत्वानुपादेयत्वाभानाभवाद् वैषम्यरहिता सर्वेषां मिथ्यात्वेन रागद्वेषयोरभावात्सर्वत्र समदृष्टित्वम्। दिवसाः वासराः। क्वचित् कस्मिंश्चिदपि। पुण्यारण्ये पवित्रदेशे। शिव शिव शिव इति इत्थम्। प्रलपतः वस्तुतस्तु तथाकथनमपि निरर्थकं तेन परिजल्पतः। सतः। यान्ति व्यतियन्ति इति। वृत्तं शिखरिणी, तल्लक्षणं तु 'यमनसभलागा' इति। अत्र हि मिथ्या जगदालम्बनं तत्रापि तस्य क्षणभङ्गुरतोद्दीपनं साम्यदृष्टिरनुभावो मतिधृतिहर्षव्यभिचारिणः। समदृशि आश्रयत्वेन तैस्तैर्भावितस्तत्त्वज्ञानजन्यनिर्वेदः स्थायी तज्ज्ञानां सवासनानां स्वदते इति शान्तरसस्योदाहरणमिदम्।

यथा वा—

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥

अत्रेदमवधेयं यत्तत्त्वज्ञानजन्यनिर्वेदप्रकृतिकस्य शान्तस्य वैराग्यजघृणाशुद्धबीभत्से नाऽन्तर्भावः सम्भवति तत्र विषयजुगुप्सायाः प्राधान्यात् शान्ते तु विषयानित्यतामात्रबोधात् । न च दयावीरे एव तथा तत्राभिमानप्राधान्यात् । यच्च निरभिमानदयावीरत्व तत्त शान्तस्यैव विषयो न तु वीरस्य । नैव च सर्वजनावेद्यतयैव शान्तस्य न रसत्वम् शृङ्गारादीनामपि शुकस्याप्यवशत्वात् । तेन तत्तद्विलक्षण एवायं नवमो रसः सिद्धः ।

[ कारिका ] रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥३५॥
भावः प्रोक्तः······

[ वृत्तिः ] आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता शृङ्गारः ।

[ कमला० ] क्रमप्राप्तं भावमाह रतिरिति । देवादिविषया रतिः रत्यादिः पूर्वोक्तस्थायिभावः सर्वोऽपि भावः प्रोक्तस्तथाऽञ्जितः प्राधान्येन व्यञ्जितः पूर्वोक्तव्यभिचारी च भाव इत्यर्थः । देवादिविषया प्रधानभूताश्च रतिहासादयो भावः कान्तादिविषयास्तु रस एव । तथा प्राधान्येन व्यञ्जिताः पूर्वोक्ता निर्वेदादयो व्यभिचारिणश्च भावा इत्युच्यन्ते । तेषामङ्गत्वे स्वशब्दोक्तौ च व्यभिचारित्वमेवेति तात्पर्यार्थ । देवादिपदव्यावर्त्यमाह कान्तादीति । व्यक्ता विभावाद्यैः स्फुटा प्रधानभूता चेत्यर्थः । तेनापुष्टत्वेऽन्याङ्गत्वे च रतिमात्रं न रसः । तदाहुः—

रत्यादिश्चेन्निरङ्गः स्याद् देवादिविषयोऽथवा ।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक् ॥

[ सरि०. ] 'रसभावतदाभासभावशान्त्यादिरक्रमः' इति कारिकायां स्मृतेषु विषयेषु रसो निरूपितस्तत्प्रकृतित्वेन तद्भेदकाः स्थायिभावाश्च निरूपितास्तेषां सहचारिणो व्यभिचारिभावाश्च । सम्प्रति क्रमप्राप्तभावनिरूपणाय तदर्थकारिकामवतारयति रतिरित्यादि । देवादिविषया रतिः तथा अञ्जितः व्यभिचारी भावः प्रोक्तः इत्यन्वयः । देवादिविषया देवादीनां देवताप्रभृतीनामादिपदान्मुनिगुरुभूपतितनयादीनां विषया विषयभूता । रतिः रत्यादिस्थायिभावो हासादिरपि । यथा हि तुल्ययोर्या मिथो रतिः सः स्नेहः । तयोरेव निष्कामतया मिथो रतिर्मैत्री । अवरस्य वरे रतिर्भक्तिः । वरस्यावरे रतिर्वात्सल्यम् । सचेतनानामचेतने रतिरनुबन्धः इत्यादि । तथा एवमेव । अञ्जितः विभावादिभिर्व्यक्तः । व्यभिचारी निर्वेदा-

दिव्यभिचारिभावश्च। भावः भाव इति। प्रोक्तः कथित इति। देवता मुनिगुरु-नृपतनयादि स्ववरस्वावरसम्बद्धाऽत एवाप्राप्तरसावस्था कान्ताविषयाऽपि अपुष्टा रतिरेवमेव प्राप्तरसावस्था हासादयो विभावानुभावैः प्राधान्येन व्यञ्जितो व्यभिचारी निर्वेदादि च भावपदाभिधेय इति। परं रसावस्थो हि भावः स्थायितां प्रतिपद्यते। यस्त्वप्राप्तरसावस्थो रत्यादिरनियतावस्थानश्च यश्च विभावादिव्यञ्जितव्यभिचारी सोऽपि भाव इत्युच्यते इत्याशयः। उक्तमेव—

'रत्यादिश्चेन्निरङ्गः स्याद् देवादिविषयोऽथवा।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक्॥' इति।

निरङ्गो नियतावस्थानोऽप्यपुष्टः। अन्याङ्गभावभावत्त्वं यथा रत्युत्साहयोर्हासः शोकस्य रतिरित्यादि। तदवस्थाको रत्यादिर्भाव एव न तु स्थायीति। नियता-वस्थानत्वेन सुपुष्ट एव भावो रसतां प्रतिपद्यते। स एव सुपुष्टोऽपि अनियतावस्थानो नियतावस्थानगतोऽप्यपुष्टो भाव एव भवतीत्यर्थः। तेन हि भावशब्देन त्रय एवाव-गन्तव्याः अनियतावस्थानगतो रत्यादिर्यथा देवादिविषयः नियतावस्थानगतोऽप्य-सम्पुष्टः सः विभावादिभिः प्राधान्येन व्यञ्जितो निर्वेदादिव्यभिचारी चेति। भावो हि चित्तवृत्तिविशेषः। स चासङ्ख्येयोऽपि प्रायोवृत्त्या स्थायिव्यभिचारिभेदेन द्विधा विभक्तो यत्र स्थायित्वेनाष्टौ व्यभिचारित्वेन त्रयस्त्रिंशत्परिगणिताः। एते हि चित्तस्याभ्यन्तरधर्माः। अनुभावास्तु आन्तरालिकभावशंसनात्मकविकाररूपा शरीरस्य धर्मा बाह्या एव। अनुभावत्वेऽपि सत्त्वे भवाः सात्त्विका इति स्तम्भस्वेदरोमाञ्चस्वर-भङ्गवेपथुवैवर्ण्याश्रुप्रलयाः पृथगेव मताः। अनुपहतं मनः सत्त्वम्। तांश्च सम्भाव्य भावा एकोनपञ्चाशन्मताः प्रायोवृत्त्या। तेऽपि नियतविषया भवन्ति। यथा मनोऽनुकूलेऽर्थे मनस उत्कट आवेशो रतिर्नाम विकृतिदर्शनाच्चेतोविकासो हास इत्यादि। कान्तां दृष्ट्वा मनसि यादृशी रतिरुत्पद्यते न तादृशी देवादिदर्शने समानेऽपि मनो-नुकूलत्वे। उक्तमेव—'अन्यथाऽऽलिङ्ग्यते कान्ता ह्यन्यथाऽऽलिङ्ग्यते सुता' इति। तथैव मुनिगुरुनृपादिदर्शनेऽपि। पुत्रादौ या रतिः साऽपि कान्ताविषयकरतेर्भिन्नैव। वस्तुतस्तु रतिर्हि कान्ताविषय एव नियतावस्थानेति शृङ्गारे एव सा स्थायित्वं लभते नान्यत्रेति देवादिविषया रतिर्भाव एव न तु स्थायिभाव इति। कान्ताविषयाऽपि सा यदि नैव तथा सुपुष्टा यथा तस्या आस्वादश्चर्वणीयो भवेत्तदापि सा भाव एवेति बोद्धव्यम्।

कारिकांशं व्याख्याति वृत्तिकृत् आदीति। आदिशब्दात् कारिकायां 'देवादिविषया' इत्यत्र य आदिशब्दः पठितस्तस्मात्। मुनीति मुनिः ऋषिः कश्चनास्तिको जनोऽपि गुरुः तातप्रभृतिमान्यजनाध्यापकादिश्च नृपो राजा तत्प्रति-

निधिः स्वाश्रयदाता संरक्षकश्च पुत्रः सुतः आदिपदात्पौत्रप्रभृतीनां पुत्रीस्नुषादीनाञ्च ग्रहणं तेषां विषया विषयभूता। रतिरिति शेषः। कान्ताविषया प्रेयसीविषयभूता रतिः। तु इति व्यवच्छेदे तद्व्यतिरिक्तम्। व्यक्ता सुपुष्टा अनुकूलविभावानुभाव-व्यभिचारिभिरङ्गैः। शृङ्गारः शृङ्गाररसात्मिका भवति सैवाव्यक्ता तु भाव एवेति।

[ वृत्तिः ] उदाहरणम्—

'कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते॥ ४५॥

[ कमला० ] देवविषयां रतिमाह कण्ठेति। हे ईश कालकूटं विषममपि ते कण्ठे एव कोण एकदेशस्तत्र सम्बद्धम्। मेऽमृतमेव त्वदनुग्रहेण विषस्याऽपि जीवन-हेतुत्वात्। उपात्तमप्यमृतं चन्द्ररूपं भवद्वपुषो भेदेन वृत्तिः स्थितिर्यस्य तादृशञ्चेदिति परमानन्दः। उपात्तं पीतमप्यमृतं सुधा भवद्वपुषो भेदोऽसम्बन्धः तद्वृत्तिश्चेत्तदा मे मह्यं न रोचते। यद्वा भवद्वपुर्यदि मयि भेदवृत्ति भेदवीवत् यद्वा मे मम वपुर्भवत् भवत्त इति छेदः यदि भेदवृत्तिभिन्नस्थिति चेत्तदोपात्तममृतमपि न रोचते त्वां विना तस्यापि विषत्वात्। अत एवेशेति सम्बुद्धिः। तदुक्तम्—

'विषमप्यमृतं क्वचिद् भवेदमृतं वा विषयीश्वरेच्छयेति' मदीयः पन्थाः। अत्र शिव आलम्बनं स्तवोऽनुभावः धृतिः सञ्चारी। अत्रानन्दात्मकत्वेऽपि स्वतन्त्रेच्छमुन्युक्त्यैव न रसत्वमिति परमानन्दः। न चायं शान्तो भेदावभासात्। वयं तु देवादिविषयभावस्यारसत्वोक्तिर्हृदयशून्योक्तिरेव। अश्रुवैचित्र्याद्यैरानन्दस्यानु-भवसिद्धत्वादिति ब्रूमः।

[ सरि० ] अथ देवादिविषयरतेर्भावत्वं क्रमेणोदाहरणायोपक्रमते **उदा-हरणमिति**। देवविषयकरतेर्भावत्वमुदाहरति कण्ठेति। ईश ! ते कण्ठकोण-विनिविष्टम् कालकूटम् अपि मे महामृतम् यदि भवद्वपुर्भेदवृत्ति तदा उपात्तम् अमृतम् अपि मे न रोचते इत्यन्वयः। उत्पलदेवस्य स्तोत्रावलीगतमिदं पद्यम्। अत्र भगवान् शङ्करः स्तूयते। हे ईश ! हे सर्व ! ते भवतः। **कण्ठकोणविनिविष्टम्** कण्ठस्य ग्रीवाया कोण एकदेशस्तत्र विनिविष्टं सुतरां संलग्नम् कण्ठरूपतयैव परिणतं यतो हि त्वं नीलकण्ठः यद्वा भवत्कण्ठेन सह गलितभेदप्रतीति यथा स्यात्तथा सम्बद्धम्। **कालकूटं** हालाहलम्। **मे** मम। **महामृतं** महदुत्तमममृतं पीयूषमेवाति-प्रियत्वादिति। तद्विपरीतं **यदि**। **भवद्वपुर्भिन्नवृत्ति** भवतस्तव यद्वपुः शरीरं तस्माद् भेदेन भिन्नत्वेन पृथगेव वृत्तिर्वर्तनं यस्य तत् पृथक्त्वेन स्थितमपि। **उपात्तं**

स्वीकृत्योपधारितम्। अमृतम् पीयूषम्। भेदेनावभासमानं चन्द्रकलारूपममृतम्। अपि इत्यवधारणे। मे मह्यम्। न। रोचते स्वादते इति। भवच्छरीरेऽभिन्न-वृत्तित्वेन स्थितं विषमपि मेऽमृतमेव तद्विपरीतं तत्रैव पार्थक्येनावभासमानं भवता प्रेम्णाऽवधारितमपि न मे प्रियमिति भावः। वृत्तं रथोद्धता लक्षणं तु 'रान्नराविह रथोद्धता लगौ' इति। अत्र ईश आलम्बनं तन्महिमोद्दीपनम्। स्तवोऽनुभावः। धृतिस्मृतिप्रभृतयो व्यभिचारिणः। तैस्तैरखण्डत्वेन प्रतीतैर्भाविता रतिर्भाव देव-विषयत्वात्। अरसत्वं चात्र रतेराश्रयसामाजिकवरत्वावरत्वभेदेन। कान्ता-विषयाया रतेः रसत्वं व्यापारान्तरायोगादेव। स्वतन्त्रेच्छया मुनिना तथैव परिभाषाकरणाच्चेति सारबोधिन्यां परस्परानुरूपपरिपोषबीजाभावान्न रसत्वमत्रेति दीपिकायां स्पष्टम्। अव्यासङ्गेनात्यन्तपोषे तु देवविषयरतेः शान्तेऽन्तर्भावः, तेन नाऽत्र शान्तो रसो भेदावभासान्महादेवविषयकभावोद्रेकेणात्ममात्रावलम्बनादिति विस्तारिकाकाराः। सत्यपि सामग्रीसमत्वेनाविशेषाद्देवविषयकरतेरपि कान्ताविषय-करतेरिव सुखात्मकत्वे परस्परस्यानुरूपपरिपोषबीजाभावादत्र तस्या न रसत्वमिति वयम्। यत्र हि परस्परजीवितसर्वस्वताविरहस्तत्र कान्ताविषयाया अपि रतेर्न रसताऽपितु भावत्वमेव। यथा—

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे यः प्राणान् रणमखमुखे यं मृगयसे।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम्॥'

इत्यत्र। अत्र ह्यन्योन्यजीवितसर्वस्वताभावान्न रतेः रसत्वं न च रसाभास एव विषयानौचित्याविरहादिति दीपिकायां स्पष्टम्। यत्त्विदं वृत्तिकृत्ता रसाभासस्योदा-हरणत्वेन प्रस्तुतं तद्बहुविधव्यापारयोगादेव।

[वृत्तिः] हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥४६॥

एवमन्यदप्युदाहार्यम्।

[कमला०] मुनिविषयामाह हरतीति। माघे नारदं प्रति कृष्णोक्तिः। भवदीयस्य सेवकादेरपि कस्यचित्किं पुनस्तव दर्शनं कालत्रयेऽतीते नागते भविष्यति च योग्यतामिष्टलाभार्हतां नयति। अलब्धताभाववियोगशब्दाद् दण्डादित्वाद्यत्। एष्यत आगमिष्यतः शुभस्य हेतुरित्यन्वयः।

एह्येहीति पुत्रोदाहरणं क्वचित्पाठः। यथा—

एह्येहि वत्स रघुनन्दनपूर्णचन्द्र
चुम्बामि मूर्धनि चिरञ्च परिष्वजेऽहम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते ॥

[ सरि० ] मुनिविषयकरतिभावमुदाहरति हरतीति । शिशुपालवधकाव्यगतमिदं पद्यम् । नारदं प्रति कृष्णोक्तिः । भवदीयदर्शनम् सम्प्रति अघम् हरति एष्यतः शुभस्य हेतुः पूर्वाचरितैः शुभैः कृतम् इति कालत्रितये अपि शरीरभाजाम् योग्यताम् व्यनक्ति इत्यन्वयः ।

**भवदीयदर्शनं** भवदीयस्य भावत्कस्य भवादृशस्य पुण्यात्मनो दर्शनं विलोकनम् । **सम्प्रति** वर्तमानकाले सद्य एवेति । **अघ** दुरितम् । **हरति** नाशयति । **एष्यतः** आगमिष्यतः । **शुभस्य** उदयस्य । **हेतुः** कारणं भवतीति शेषः । **पूर्वाचरितैः** प्रागुपात्तैः । **शुभैः** पुण्यैः । **कृतं** फलितमिति **कालत्रितये** त्रैकाल्ये । **अपि** इत्यवधारणे न तु तदानीमेवेति । **शरीरभाजां** देहधारिणामस्मादृशानां द्रष्टृणामिति । भजो ण्विः सर्वापहारिलोपः अत उपधायाः । **योग्यतां** सत्पात्रताम् । **व्यनक्ति** प्रकटयति इति । भवादृशपुण्यात्मदर्शनं हि प्रागर्जितपुण्यस्य फलमेव । न हि दुष्कृती तल्लभते इति भूतकालिकी पात्रता । दर्शनकाले एव दुरितं निरासयतीति वर्तमानकालिकी पात्रता । भावि भव्यतायाः कारणं भवतीति भविष्यत्कालिकी पात्रता । इत्थं हि येन पुण्यमर्जितं यश्च सम्प्रति सुकृती यस्य च भविष्यति शुभसंयोगः स एवं त्वादृशां दर्शनं लभतेऽन्यथा देहधारिणां भवादृशदर्शनं तु दुर्लभमेवेति । वृत्तं वंशस्थम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणम् । अत्र हि मुनिर्नारद आलम्बनं यद्वा यद्दर्शनं त्रैकाल्येऽपि पात्रतां द्रष्टृणां नयति सः । तद्दर्शनयोग्यताव्यञ्जनमुद्दीपनम् । तथाविधं स्तवनमनुभावः । तद्व्यञ्जितो हर्षो व्यभिचारी । तैस्तैरखण्डत्वेन प्रतीतैर्भावितापि श्रीकृष्णाश्रिता वा वक्त्राश्रिता रतिः परस्परावस्थाऽनुरूपपरिपोषबीजाभावाद्भाव एव न तु रसः । प्रसङ्गमुपसंहरति **एवमिति** । एवमित्थं हि **अन्यत्** एतद्भिन्नम् । गुरुनृपपुत्रादिसम्बद्धम् । **अपि** इति चार्थे । **उदाहार्यम्** निदर्शनीयम् । इति । गुरुविषयकरतिभावो यथा –

'उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणाञ्च प्रतिहर्ता त्वमापदाम् ॥'

इत्यत्र । अत्र गुरुरालम्बनं तस्य विघ्नप्रतिहर्तृत्वमुद्दीपनं स्तवोऽनुभावः । तद्व्यञ्जितो हर्षो व्यभिचारी । तैस्तैर्भावितापि रतिः परस्परावस्थानुरूपपरिपोषबीजाभावाद्भाव एव न तु रसः । मित्रविषया रतिर्यथा –

'रे रे कापुरुषापवादपटवः पथ्यं कटु श्रूयतां
नित्यं हन्त पलायितुं किमु वयं पत्या प्रतिष्ठापिताः।
अप्यन्यत्कथ्यः ! प्रियापरिभवप्रक्षालनादुध्दुरो
रामः क्रूरधनुर्धरो यदि वृथा वैक्लव्यमारभ्यते ॥'

अत्र सुग्रीवस्य रामं प्रति मैत्रीरूपा रतिर्भावः। नृपविषयकरतिभावो यथा—

'सोऽयं नीलस्तुरङ्गो मम यवनपतिः प्राभृतं प्राहिणोद्यं
भद्रः सोऽयं गजो मे समिति विलुलिता येन सौवीरसेना।
सेयं मे वामनेत्रा समजनि समरो यत्कृते राजपुत्रै-
रेवं कारागवाक्षे कुलतिलक ! भवद्वैरिणो व्याहरन्ति ॥'

यथा वा—

'राजानः सन्त्यनेके प्रतिदिशमधुना ख्यातिभाजो जगत्यां
राष्ट्राध्यक्षाः प्रभूता दिशि दिशि नयना तिथ्यमायान्ति नित्यम्।
किन्तु श्रुत्युक्तवर्त्मप्रणिहितमनसा धर्मराज्यं वितन्वन्
अद्यत्वे केवलोऽयं नृपसदसि लसन्नस्ति वीरेन्द्रभूपः ॥'

पुत्रविषयकरतिभावो यथा—

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णकमनीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

पुत्रीविषयकरतिभावो यथा –

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥

तातविषयकरतिभावो यथा—

"कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयपर्वतोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि।"

[ वृत्तिः ] अञ्जितव्यभिचारी यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥४७॥

अत्र विधिं प्रत्यसूया।

[ कमला० ] व्यभिचारिणः प्राधान्ये आह जाने इति। जाने स्मरामि न त्वाहार्यमित्यर्थः। शठेन विधिनेति जाने इत्यन्वयो वा। विधेरेव तत्कार्यमिति ज्ञाने इति वा। मा मां मा संस्पृश यद्वा कोपाद्वीप्सा। पाणिनैव निषेधो न वाचेत्यन्ये। मां पाणिना मा स्पृशेति तु तत्त्वम्। दृष्टान्ततो गन्तुं प्रवृत्तेत्यन्वयः। भ्रातरिति सखायं प्रत्युक्तिः। दरिद्रपदात्स्वस्य शोच्यता। असूयेति शठपदादित्यर्थः। स्वप्नाद्विप्रलम्भरसत्वेऽपि विध्यसूयैव शठपदात्प्रधानमिति भावत्वमित्यर्थः। अननुरक्तविषयत्वाद्रसानुद्बोधः। तेन भावत्वमिति देवनाथः। विप्रलम्भरसत्वेऽपि भावत्वाविरोधः। उपधेयसङ्करेऽप्युपाधेरसङ्करात्। तेन त्वामालिख्येति विप्रलम्भादभेदापत्तिशङ्का परास्ता।

[ सरि० ] अञ्जितव्यभिचारिणो भावत्वोदाहरणायोपक्रमते अञ्जितेति। अञ्जितः विभावानुभावाभ्यां तत्रापि विशेषेणानुभावेनाक्षिप्तो न तु वाच्यवाचकभावखलीकृत इति। **व्यभिचारी** अनियतावस्थानभावः। यथेति निदर्शने। उदाहरणं प्रस्तौति **जाने** इति। प्रियावियुक्तस्य कस्यचित्कामुकस्य सखायं प्रत्युक्तिरियम्।
हे भ्रातः! जाने अद्य मया स्वप्ने कोपपराङ्मुखी प्रियतमा दृष्टा माम् पाणिना मा संस्पृश (माम् मा संस्पृश इति पाणिना वा) उक्त्वा रुदती पुरः गन्तुम् प्रवृत्ता यावत् प्रियाम् परिरभ्य चाटुशतकैः नो आश्वासयामि तावत् अहम् शठेन विधिना निद्रादरिद्रीकृत इत्यन्वयः। हे भ्रातः! हे सुहृद्वर! जाने सम्यक् स्मरामि। अद्य अद्यतनरात्रौ। मया विरहकातरेण। स्वप्ने स्वप्नकाले। कोपपराङ्मुखी कोपेन क्रोधेन पराङ्मुखी पराग्वलितवदना। प्रियतमा प्रेयसी। दृष्टा अवलोकिता। सा च माम् त्वदयोग्याम्। पाणिना करेण मा संस्पृश नैव आमृश। इति इत्थमुक्त्वा यद्वा माम् मा संस्पृश इति पाणिना करेणैव न तु वचसा। पुरः अग्रे। गन्तुं यातुम्। प्रवृत्ता उपक्रान्तवती यावत् यथा हि। अहम्। प्रियां वल्लभाम्। **परिरभ्य** समाश्लिष्य। **चाटुशतकैः** अनेकविधश्लाघापरकवचनैः। नो आश्वासयाभि आह्लादयाभि अनुनयामि च। अनुनेतुं प्रारभत एव। तावद् तदैव। शठेन परसुखमसहिष्णुना। परहिताहितानभिज्ञत्वमेव शठत्वम्। विधिना दैवेन। निद्रादरिद्रीकृतः प्रबोधित इति। केचिदत्र जाने इति पदमन्वाययन्ति। विधिना प्रबोधित इति जाने इति तन्मतेऽर्थः। "नो यावदिति लोकोक्तिः। अव्ययानामनेकार्थत्वाद्वितर्के चेत्युद्द्योतकाराः। यावन्नानुनयामि तावत्प्रबुद्ध इति सरल एवार्थः। वृत्तं शार्दूलविक्रीडितम्। लक्ष्ये लक्षणमाह अत्रेति। अत्रेति काव्येऽस्मिन्। **विधिं** निद्राभङ्गकारकदैवम्। प्रति लक्ष्यीकृत्य **असूया** द्वेषः प्राधान्येनेति भावः। सत्यपि विप्रलम्भे असूयाया एव प्राधान्यान्नात्र रसः किन्त्वसूयाभाव एवेत्याशयः।

यद्यत्र शठेनेति पदेन प्रमाणके उद्भट मरीचवत्सर्वानविशायय्य स्थीयत इति असूयाभावः प्राधान्येन सम्मन्यते तदा 'त्वामालिख्य' इति काव्येऽपि क्रूरपदेन तथैव स्थीयते। तेन कथं तद्रसध्वनिविषयो वेदं भावविषय इति चेदित्थम्। 'त्वामालिख्य' इत्यत्र दृष्टिरालुप्यते मे। इत्यन्तेनैव विप्रलम्भावगमः, तदनन्तरमेव तत्समर्थकत्वेन प्रतीयमानाया असूयायास्तानैव प्राधान्यं किन्तु ध्वन्यङ्गत्वमेव। तेन तत्र विप्रलम्भशृङ्गारध्वनिरेव प्राधान्यात्। अत्र तु यावत्तावत्पदाभ्यामेकवाक्यताभ्युपगमेन विशेषादसूयाया एव प्राधान्यं तत्पूर्वमेव विप्रलम्भस्यापोषणात्। अननुरक्तविषयत्वान्न रसोद्बोधस्तेन भावस्य प्राधान्यमिति।

] वि० वृ० ] अथ भावमाह—रतिरिति।

अञ्जितः प्रधानीभूतः।

तत्र देवविषया यथा—

दिवि वा भुवि वा ममास्तु वासो नरकेऽपि नरकान्तकप्रकामम्।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि॥

यथा वा—

बीजं मुक्तितरोरनर्थपटलीनिस्तारकं तारकं
धाम प्रेमरसस्य वाञ्छितधुरासम्पारकं पारकम्।
एतद्यत्र निवासिनामुदयते विच्छक्तिवृत्तिद्वयं
मथ्नातु व्यवसनानि माथुरपुरी सा वः श्रियश्च क्रियात्॥

ननु भगवतः परदेवतात्वात्तद्रतिः सर्वत्र भावः स्यात्। नैवम्, तस्मादेव तस्य भावकचित्तानुसारित्वात्।

यदाह स्वयमेव—

'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।' इति।

अत एव रसात्मकत्वं तस्य श्रूयते 'रसो वै सः' इति। आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया। यथा—

जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः।
यस्यास्यकमलगलितं वाङ्मयममृतं जगत्पिबति॥

श्रीव्यासो हि मुनिर्गुरुश्च वैशम्पायनस्य। एवमन्यदूह्यम्। व्यभिचारी यथा—

'खिद्यन्मुखं चलद्वेणीस्तनमण्डलकुण्डलम् ।
स्मरामि चरितं तस्या मन्मथस्यापि मोहनम् ॥

अत्र स्मृतेरुद्रेकः ।

[ कारिका ] ......तदाभासा अनौचित्यप्रवर्तिताः ।

[ वृत्तिः ] तदाभासा रसाभासा भावाभासाश्च । तत्र रसाभासो यथा—

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥'४८॥

अत्रानेककामुकविषयमभिलाषं तस्याः 'स्तुमः' इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

[ कमला० ] तदाभासा इति । अनौचित्यं प्रकर्षाभावः । लोकशास्त्रविरोधित्वमित्यर्थः । स्तुम इति । रण एव मखो यज्ञस्तस्य मुखेऽग्रे कः प्राणान् विलेभे दत्तवान् मृगयसेऽन्वेषयसि । अत्रेति । स्तुतेः कान्ताव्यापारत्वाभावादतद्गुणसंविज्ञानबहुव्रीहिणा यमन्वेषणालिङ्गनादिग्रहणं 'स्तुम' इत्यादिभिरनुगतं कृतम् । बहूनां व्यापाराणां बहुषु पुरुषेषु वा व्यापाराणामालिङ्गनादीनामुपादानं कर्तृ तास्याः पतिव्रताया अनेके कामुका जारास्तद्विषयमभिलाषकर्मीभूतं व्यनक्तीत्यन्वयः । तेन द्रौपद्या अनेकपतिषु व्यापारो नाभासः । निःशेषच्युतेत्यादौ स्वैरिण्या जारविषयोऽभिलाषो नाभासः तस्यानौचित्याभावात् । तदुक्तम्—

उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च ।
बहुनायकविषयायां रतौ तथानुभयनिष्ठायामाभासत्वं कथितम् ॥

इत्यादि । यद्यप्येकस्मिन् अपि पुंसि नानाव्यापाराः सम्भवन्तीति नानेकविषयत्वं तथापि यं यमिति भिन्नकर्मोपादानादनेकगतत्वमिति केचित् । काव्यप्रदीपस्तु शब्देनेतरव्यवच्छेदार्थेन व्यापारस्यानेकपरत्वमित्याह । मदननगरीत्यनेकसंवरणलाभ इति नव्याः । देवनाथस्तु प्रार्थनालिङ्गनचिन्तनानां नैकदैकविषयत्वं युक्तम् । न ह्यालिङ्गित एव प्रार्थ्यतेऽनुचिन्त्यते वा सिद्धे इच्छाभावात् । न च कालभेदात्तथा सर्वत्र वर्तमानत्वोक्तेः । अतोऽनेकविषयत्वमित्याह । न च प्रागनौचित्ये ज्ञाते न रसोद्बोधः । उद्बुद्धे तु रसे तद्गतेऽपि नाभासः तस्य प्रागेवोदयादिति वाच्यम् । पूर्वं ज्ञाते स्थायिन आभासत्वं रसस्यानुत्पत्तेरिति सुबुद्धिमिश्राः ।

[ सरि० ] इत्थं हि भावं निरूप्य सम्प्रति क्रमप्राप्तं रसाभासभावाभासं निरूपयन् तन्निर्देशककारिकांशमवतारयति तदाभासा इति। अनौचित्यप्रवर्तिताः तदाभासाः इत्यन्वयः। अनौचित्यप्रवर्तिताः अनौचित्यम् अन्ततः शास्त्रविरोधाच्चमत्कारभङ्गस्तेन अनौचित्येन प्रकर्षप्रतिकूलेन रूपेण प्रवर्तिताः उपवर्णिताः रसा भावाश्च। तदाभासाः। तयोः रसभावयोराभासाः आमुखे भासमानमाभासः शुक्तिरजतवत् ते। तल्लक्षणराहित्येऽपि तद्वद्विभासन्ते इति रसभावाभासाः। कारिकांशगतं तदिति पदं व्याख्याति तदाभासाः इति। रसाभासाः रसस्य शृङ्गारादेराभासः तल्लक्षणराहित्येऽपि तद्वद्विभासभानत्वमाभासः वै। भावाभासाः भावस्य कान्तेतरविषयकरत्यादे निर्वेदादिव्यभिचारिणश्चाभासस्ते। अनौचित्यप्रवर्तनं यथा—

हीनापात्रेषु निर्यक्षु नायकप्रतियोगिषु।
गौणेषु च पदार्थेषु तदाभासं विजानते॥ इति।

एवञ्च—

उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च।
बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम्॥

आभासत्वं कथितं तथैव तिर्यगादिविषयतायाम्। इति। वस्तुतस्तु अनौचित्यं हि सहृदयव्यवहारत एव ज्ञेयं भवति। यत्तु अनौचित्यं हि एकाश्रयत्वे तिर्यगादिविषयतायां बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां वा द्रष्टव्यमिति प्रदीपकारैरुक्तं तत्सम्प्रदायानुसरणमात्रम्। यथार्थतस्तु अनौचित्यं मनसाऽऽभासताप्रयोजकमेव। तिर्यगादौ ह्यनौचित्याभावाद्रस एव न रसाभासो यथा 'ग्रीवाभङ्गाभिरामम्' इत्यादौ भयानकरस एव न :तदाभासः। अनेककामुकविषयरतेराभासत्वे पाण्डवेषु द्रौपद्या अपि तथा स्यात्। 'प्रत्यागतं त्वाऽस्मि कृतार्थमेव स्तनोपपीडं परिरब्धुकामा' इत्यादौ आभासत्वमेव स्यात्। तेन ह्यनौचित्यं हि व्यञ्जकीभूतकाव्यानुचितत्वमात्रम्, न तु पात्रानुसारि। यत्र हि मनसाऽनौचित्यप्रतिसन्धानं तत्र व्यङ्ग्ये रसेऽप्याभासव्यवहार इति। तच्च लोकशास्त्रातिक्रमेणेति। यथा ह्यनौचित्यं सहृदयव्यवहारतो ज्ञेयं यत्र तेषामनुचितमिति धीः। तच्च यथा शृङ्गारे प्राधान्येन बहुविषयत्वेन उपनायकादिगतत्वेन नायकनायिकान्यतरमात्रविषयत्वेन गुरुजनगतत्वेन तिर्यगादिगतत्वेन च। एवमेव गुरुजनाद्यालम्बनत्वेन हास्यस्य वीतरागाद्याश्रयतया करुणस्य पित्राद्यालम्बनतया रौद्रस्य वीरस्य वीरालम्बनत्वेन भयानकस्य यज्ञीयपशुवसाद्यालम्बनतया बीभत्सस्य ऐन्द्रजालिकादिगततयाऽद्भुतस्य चाण्डालादिगततया शान्तस्य चाभासत्वमिति। यच्च प्रतापरुद्रे—

'एकश्चैवानुरागश्च तिर्यङ्म्लेच्छगतोऽपि वा ।
योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥'

इत्युक्तं तदपि परम्परानुसरणमेव । तथैव—

हास्यो जुगुप्सा श्रृङ्गारहास्यौ वीरभयानकौ ।
भयानकौ रौद्रवीरौ तथा श्रृङ्गारविस्मयौ ॥
बीभत्सकरुणौ रौद्रश्रृङ्गारौ च यथाक्रमम् ।
श्रृङ्गारादीन् सम्प्रविश्य रसाभासान् वितन्वते ॥

यथा च व्याख्याति शारदातनयः—

हास्याभिभूतः श्रृङ्गारः श्रृङ्गाराभास उच्यते ।
बीभत्समिलितो हास्यो हास्याभासः प्रकीर्तितः ॥
वीरो भयानकाविष्टो वीराभास इतीरितः ।
बीभत्सकरुणाश्लेषादद्भुताभास उच्यते ॥
रौद्रः शोकभयाविष्टो रौद्राभास इतीष्यते ।
हास्यश्रृङ्गारखचितः करुणाभास उच्यते ॥
बीभत्सोऽद्भुतश्रृङ्गारी बीभत्साभास उच्यते ।
रौद्रवीरानुषक्तश्चेदाभासः स्याद्भयानके ॥

एवमेव—रक्तापरक्तयोश्चेष्टा यतो हासकरो नृणाम् ।
दृष्टा श्रुता सूचिताऽपि श्रृङ्गाराभासकारिका ॥
पूयशोणितमांसादिविष्टालेपादयोऽपि च ।
हास्य भिन्दन्ति यत्रैते स हास्याभास उच्यते ॥
सभासु योषितां मध्ये सूयमानस्य कस्यचित् ।
भयात्पलायनं युद्धाद् वीराभास उदीरितः ॥
दिव्यादिदर्शनेऽस्त्रादिलेपोरस्ताडनादयः ।
अद्भुतं घ्नन्ति यत्तस्माददद्भुताभास इष्यते ॥
अवज्ञाक्षेपवाक्यादिरौद्रकर्मकृतोद्यमः ।
बिभेति शोचति यदि स रौद्राभास उच्यते ॥
शोचतो हास्यश्रृङ्गारभूयिष्ठं चेष्टितं यदि ।
स एव करुणाभासस्तद्भावश्चेत्स्वभावजः ॥
यत्तु बीभत्सरूपस्य सम्भोगो वनिताजनैः ।

रूपयौवनसम्पन्नैर्बीभत्साभास उच्यते ॥
विस्मयतो यत्र दृश्येत वीररौद्रादिभाषितम् ।
भयानकाभास इति कविभिः प्रविविच्यते ॥
भागद्वयं प्रविष्टस्य प्रधानस्यैकभागता ।
रसानां दृश्यते यत्र तत्स्यादाभासलक्षणम् ॥
प्रथमं दृश्यते यत्तु श्रूयते सूच्यतेऽपि वा ।

तत्प्रधानमिति ज्ञेयं......

सममन्तरितो भावैरपि वाद्यन्तगैर्यदि ।
एकरूपप्रवृत्तो यः स प्रधानत्तो भविष्यति ॥
आद्यन्तयोर्द्विगुणितः स्वेतरैः स्वयमादिमः ।
मध्यगो वा भवेत्सम्यक्स रसाभासतामियात् ॥

इत्याद्यपि प्रायोवृत्त्यैव । वस्तुतस्तु यत्तु सामाजिका लोकशास्त्रविरुद्धत्वेनानुचितत्वेन गृह्णन्ति तदेवाभासो रसस्य भावस्य वा ।

रसस्य प्राथमिकत्वेन रसाभासोदाहरणायोपक्रमते प्रथमं तत्रेति । तत्र रसभावाभासयोर्मध्ये । रसाभासः रसस्यात्र शृङ्गारस्याभासोऽनौचित्येन प्रवर्तनम् । यथेति निदर्शने ।

उदाहरणं प्रस्तौति स्तुम इति । परकीयां प्रति कस्यचित्कामुकस्योक्तिरियम् । हे वामाक्षि ! यं विना क्षणम् अपि न रमसे तं कं स्तुमः यम् मृगयसे सः कः रणमखमुखे प्राणान् विलेभे हे शशिमुखि ! यम् बलात् आलिङ्गसि सः सुलग्ने जातः कः हे मदननगरि यम् तु ध्यायसि तस्य कस्य एषा तपःश्रीः इत्यन्वयः परम्परागतः । यद्वा स्तुमः कम्, इति नायिकाप्रश्नः, वामाक्षि क्षणमपि विना यं न रमसे इत्युत्तरम् । एवमन्यत्रापीति । 'अथवा स्तुमः कं वामाक्षि' इति कामुकप्रश्नः, क्षणमपि विना यं न रमसे इति नायिकोत्तरमित्याद्यपि । हे वामाक्षि ! वामे सुन्दरे अक्षिणी लोचने यस्यास्तत्सम्बुद्धौ जितेन्द्रियाणामपि वशीकरणात् यं जनम् । विना । क्षणम् निमेषमात्रम् । अपि किमुत चिरम् । न । रमसे हृष्यसि । तं कम् कतमं भाग्यवन्तं जनम् । स्तुमः अभिनन्दयायः । रणेति रणः सङ्ग्रामः एव मखो यशःकाममयः तस्य मुखे प्रारम्भे । यं यमेव जनम् । मृगयसेऽन्विष्यसि । सः कः प्राणानसून् विलेभे तत्याज । प्राणपणेनापि त्वामाराधितवान् । यद्वा जन्मान्तरे रणमखमुखे कः प्राणान् तत्याज यत्पुण्येन सम्प्रति तं त्वं मृगयसे इत्यपि । हे शशिमुखि ! हे चन्द्रवदने ! यम् यमेव भाग्यवन्तम् । बलात् दृढम् स्तनोपपीडम् ।

आलिङ्गसि आश्लिष्यसि सः सुलग्ने शुभमुहूर्ते। जातः उत्पन्नः। कः को हि जनः। हे मदननगरि! मदनस्य कामस्य नगरी राजधानी तत्र स्थितस्यैव मदनस्य प्रभुत्वात् तत्सम्बुद्धौ। यम् यमेव जनम्। तु इतीतरव्यवच्छेदे। ध्यायसि चिन्तयसि तस्य कस्य कस्य हि जनस्य। एषा त्वद्रूपा। तपःश्रीः तपसः फलरूपा सम्पद् इति। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। तस्याः रमण्याः। स्तुमः इत्याद्यनुगतम् स्तुम इत्यादिपदव्यञ्जितम्। अनेककामुकविषयम् एकाधिककामुकसम्बद्धम् रमणमार्गणालिङ्गनचिन्तनरूपम् एकेन सह रमणमन्यस्य मार्गणमपरस्यालिङ्गनं तदन्यस्य ध्यानमिति रूपम्। अभिलाषं स्पृहाम्. बहुव्यापारोपादानं बहुषु एकाधिकेषु व्यापारः रमणमार्गणालिङ्गनध्यानरूपस्तस्योपादानं ग्रहणं (कर्तृ) व्यनक्ति प्रकटयति। बहुषु रमणमार्गणादिविविधव्यापारोपादानेनात्र तस्या एकाधिककामुकविषयाभिलाषो व्यज्यत इत्याशयः। बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यत इति पर्यवसितोऽर्थः। नन्वत्र कथं व्यापारस्य बहुविषयत्वमेकस्मिन्नपि तथाविधरमणमार्गणालिङ्गनध्यानसम्भवात्। यदि क्रियाणामनेककर्मोपादानमनेकविषयत्वं प्रकटयति, एकविषयत्वाभिप्राये तु एकमेव कर्मपदमुपाददीतेति कथ्यते तदसङ्गतमेव भिन्नवाक्यस्थानां भिन्नकर्मपदैरेवोपस्थापनं युक्तम् इति चेदित्थम्। अत्र ध्यायसि तु यम् इत्यत्र व्यवच्छेदार्थेन तु शब्देनानेकव्यापारविषयत्वं सूच्यते। येन रमसे यं मृगयसे यमालिङ्गसि यं तु ध्यायसि इति स्पष्टमेव सूच्यते यद्रमणमार्गणालिङ्गनध्यानविषयाः पृथक्पृथक्जनगता इति। तथैव वामाक्षिपदं सर्ववशीकरणक्षमत्वं शशिमुखीपदं सर्वजनाह्लादनक्षमत्वं मदननगरीति नगरीत्वेन सर्वप्रवेशयोग्यतां व्यञ्जन्ति। तेन सिद्धमत्र रतेरनेककामुकविषयत्वम्। तच्च सामाजिकेषु अनौचित्येन प्रतिभासत इति इदं शृङ्गाररसाभासोदाहरणम्। हास्याभासो यथा—

शवापकर्षणे सक्तो मम मांसेत्यसौ ब्रुवन्।
शृगालं तज्जिघृक्षन्तं प्रेतरङ्कोऽनुधावति॥

अत्र विकृतवाग्भिर्हास्यः किन्तु बीभत्सिमिलितत्वेन तदाभास एव तत्र हासानौचित्यात्। करुणाभासो यथा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
परैश्छिन्नः प्रियकरो मन्दभाग्यां दहत्यसौ॥

अत्र प्रियहस्त आलम्बनं तस्य परैश्छिन्नत्वमुद्दीपनमिति शोकपुष्टिः किन्तु शृङ्गारमिश्रितत्वेन करुणाभास एव। तत्र शृङ्गारस्मरणानौचित्यात्। रौद्राभासो यथा—

न मर्षयेऽहं दुष्टं तं वैरिणं पितृघातकम् ।
इति रक्तेक्षणोऽप्यासीद्युद्धे भीतेन चेतसा ॥

अत्रापि रौद्रे भयमिश्रणेन रौद्राभास एव क्रोधे भयस्यानौचित्यात् । वीराभासो यथा—

गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिषु ॥

अत्रोत्साहस्यानौचित्येन प्रवृत्तिः । यथा वा—

सर्वानहं विजेष्यामि तांस्तान् वीरब्रुवान् रणे ।
न भवेद्यदि गाण्डीवी लब्धमाधवसारथिः ॥

अत्रोत्साहे भयमिश्रणेन वीराभास एव । एवमन्यदप्यूह्यम् ।

वृत्तिः ] भावाभासो यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी ।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥४९॥

अत्र चिन्ताऽनौचित्यप्रवर्तिता । एवमन्येऽप्युदाहार्याः ।

[ कमला० ] भावाभासमाह । राकेति । रावणोक्तिः । राका पौर्णिमा चपलदीर्घनेत्रा स्मेरं प्रौढयौवनं तेन तरङ्गिता विभ्रमा यत्रेदृशमाननं यस्या ईदृशी सा सीता अस्तीति शेषः । स्यादिति पाठे क उपायः स्यादित्यन्वयः । तत्तस्मादत्र सीताविषये मैत्री सख्यम् । कथं विदधे । तस्याः स्वीकृतिर्ममाधीनीकारो वा तेन व्यतिकरः सम्बन्धः तत्र क उपाय इत्यर्थः ।

अत्रेति । तस्या अननुरागाच्चिन्ताया अनौचित्येन प्रवृत्तिः । अन्येऽपीति । रसान्तराभासभावान्तराभासाश्चोन्नेयाः ।

नीचविषयरसाभासो यथा—

"यवनी नवनीतकोमलाङ्गी शयनीये यदि नीयते कदाचित् ।
अवनीतलमेव साधु मन्ये नवनी माघवनी विनोदहेतुः ॥"

[ सरि० ] रसाभासमुदाहृत्य भावाभासोदाहरणायोपक्रमते भावाभास इति । भावस्य निर्वेदादेराभास अनौचित्येन प्रवर्तनम् । यथेति निदर्शने । उदाहरणं प्रस्तौति राकेति । सा राका सुधाकरमुखी तरलायताक्षी स्मेरयौवनतरङ्गितविभ्रमाङ्गी अस्ति तत्

किम् करोमि कथम् अत्र मैत्रीम् विदधे इह तत्स्वीकृतिव्यतिकरे क अभ्युपायः इत्यन्वयः। इवेति पाठे अभ्युपायः क इवेति। सा मद्धृदयगता न त्वनुमेया। **राकासुधाकरमुखी** राका पूर्णिमा 'पूर्णे राका निशाकरे' इति कोशः, तस्यां यः सुधाकरश्चन्द्रमास्स इव मुखं वदनं यस्याः सा पूर्णचन्द्रबिम्बाननना। **तरलेति** तरले चञ्चले आयते सुदीर्घे च अक्षिणी लोचने यस्याः सा तादृशी। तरलत्वेनोद्दीपकत्व-मायतत्वेनाकर्षकत्वम्। **स्मेरेति** स्मेरं विकसनपरं यद्यौवनं तारुण्यं तेन तरङ्गिता उच्चालिता विभ्रमाः विलासा येषां तादृशानि अङ्गानि अवयवाः सन्ति यस्या इति तथाविधा। अस्तीति शेषः। तत् तस्मात् तत्प्राप्त्यै। किं किमेव। **करोमि** विदधामि। **यत्र** इह अनया सहेति। मैत्रीं सख्यमानुरक्त्यम्। कथं केनोपायेन। **विदधे** स्थापयामि। **तदिति** तस्याः स्वीकृतिः सुरताय सम्मतिस्तस्याः व्यतिकरे सम्बन्धे। अनुभयगतत्वे रतेरास्वादहीनत्वात्। **इह**। कः कतमो हि। अभ्युपायः विधिः। इवेति पाठे क अभ्युपायः सम्भवतीति। सा प्रथमतस्तु सर्वाङ्गसुन्दरी तत्रापि नवयौवना अत एव त्यक्तुमशक्याऽस्ति। किन्तु तस्याः सम्मत्यै न कोऽप्युपायो दृश्यते। तां विना मच्चित्तं नैव स्वास्थ्यं लभत इति चिन्ता। लक्ष्ये लक्षणं घटयति **अत्रेति**। अत्र काव्येऽस्मिन्। **चिन्ता** सर्वाङ्गसुन्दरी प्राप्तिविषयकोपायान्वेषणम्। **अनौचित्यप्रवर्तिता** अनौचित्येन औचित्यरहितत्वेन प्रवर्तिता वर्णितेति। अनौचित्यत्वञ्च इयं सीतामुद्दिश्य रावणोक्तिरिति मते रावणः सीतामभिलषितुं नार्हतीति अन्योक्तौ तु 'पूर्वं रक्ता भवेन्नारी पुमान् पश्चात्तदिङ्गितैः' इति शास्त्र-विरुद्धत्वेन अननुरक्तायामनुरागोऽनुचित इति। मैत्रीं कथं करोमीति उक्त्या मैत्र्य-भावलाभादनौचित्यप्रवर्तिता चिन्तेत्युद्द्योतकाराः। वस्तुतस्तु नायिकाया अननु-रक्ततया रतेरनुत्कृष्टत्वेन तद्व्यभिचारिणश्चिन्ताया अपि तथेति अनौचित्यप्रवर्तनमत्र। **एवमिति**। एवम् अनेन प्रकारेण। **अन्ये** इतरे व्यभिचारिणः। **अपि च**। **उदाहार्या** निदर्शनीया इति। यथा असूयाया अनौचित्यप्रवर्तनम्—

> 'किं वा वक्ष्यति वैदेहः पिता मे मिथिलाधिपः।
> रामं जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥'

इति साहित्यचूडामणौ।

[ वि० वृ० ] तदेति—

तयोः रसभावयोः। अनौचित्यञ्च स्थायिविभावानुभावादिवैरूप्यमेव। तत्रा-नेकपुरुषनिष्ठाऽनुभयनिष्ठा मुनिगुरुपत्नीगता चेद्रतिस्तदा स्थायिवैरूप्यम्। उदाहरणम् —

गन्धर्वि कुर्वाणमवेक्ष्य लीलामग्रे धरण्यां सखि कामपालम् ।
आकर्णयन्ती च मुकुन्दवेणुं भिन्नाऽद्य साध्वि स्मरतो द्विधाऽसि ॥

अत्र बले कृष्णे चैकस्या रतिर्वर्णिता ।

मन्दस्मितं प्रकृतिसिद्धमपि व्युदन्तं
सङ्गोपितश्च सहजोऽपि दृशोस्तरङ्गः ।
धूमायिते द्विजवधूमदनार्तिवह्नौ
अह्नाय कापि गतिरङ्कुरिता मयाऽऽसीत् ॥

अत्र द्विजस्त्रीणामेव रतिर्न तु कृष्णस्य ।

वैदग्ध्योज्ज्वल्यतौल्याभावो विभाववैरूप्यम् ।
तच्च लतापशुविप्रवयः कुलादिषु बोध्यम् ॥
समयातिक्रमग्राम्यधाष्टर्चाद्यनुभाववैरूप्यम् ।

भावाभासस्तु शत्रुकृता शत्रुस्तुतिर्वाराङ्गनादिलज्जायुक्ता स्त्री रतिश्चेति ।

लक्ष्याण्यूह्यानि ।

[ कारिका ] भावस्य शान्तिरुदयः सन्धिः शबलतापि च ॥३६॥

[ कमला० ] भावशान्त्यादिरिति व्याचष्टे भावस्येति । शान्तिर्विनश्यता उदय उत्पत्तिः सन्धिरेकदाऽनेकास्वादः । शबलता भिन्नकाले पूर्वोपमर्देन परास्वादः ।

[ सरि० ] इत्थं हि रसभावाभासौ निरूप्य 'भावशान्ति'प्रभृतिनिरूपककारिकामवतारयति भावस्येति । भावस्य शान्तिः उदयः सन्धिः शबलता अपि च इत्यन्वयः । भावस्य व्यभिचारिणो निर्वेदादेः अनियतावस्थानत्वेन वर्णितस्य रत्यादेः स्थायिनो वा शान्तिः प्रशमनमुद्बुद्धस्य विनश्यता । भावस्य उदयः प्रसुप्तावस्थातो जागरणम् । भावस्य सन्धिः एकत्रैकाधिकास्वादः । भावस्य शबलता पूर्वपूर्वोपमर्देन भिन्नकाले परपरास्वादः । अपि इति समुच्चये । च अक्रम इति पूर्वकारिकयाऽन्वयः । असंलक्ष्यक्रमव्यङ्ग्यध्वनिविषय इति । योऽसौ रसाद्यलङ्कारादि्भन्नोऽलङ्कार्यतया स्थितः स रसभाव-रसाभास-भावाभास-भावशान्ति-भावोदय-भावसन्धि-भावशबलतात्मकः । रसभाव-रसाभास-भावाभासा उदाहृतम् । सम्प्रति भावशान्त्यादिरुदाह्रियते ।

[ वृत्तिः ] क्रमेणोदाहरणम्—

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्सम्प्रमार्ष्टुं मया
साऽऽश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥१०॥

अत्र कोपस्य।

[ कमला० ] भावशान्तिमाह। तस्या इति। कस्यचिन्मित्रं प्रत्युक्तिः। तस्याः सपत्न्याः अमर्षान्नामाग्रहणम्। घनं विलेपनं यत्रेदृशस्य स्तनयुगस्य प्रश्लेषेण गाढालिङ्गनेन या मुद्रा तदाकारचिह्नं तेनाङ्कितं स्वीयं वक्षः पादपतनमेव व्यतिकरः सम्बन्धो न तु फलोपधानमालिङ्गनादि वा अतश्छलकपटं यद्वा पादपाते भूम्यादिसम्बन्धव्याजेन किमित्याच्छाद्यत इति कान्तयोक्तं क्व तदित्युक्त्वा तन्मुद्राङ्कं प्रमार्ष्टुं प्रमार्जितुं वेगेन सा हर्षेणालिङ्गिता। तेनाश्लेषविस्मृत्योस्तुल्यकालता। कोपस्येति। भावस्य शान्तिरिति मूलश्लोकस्य पदानुषङ्गेणान्वयः। एवमग्रेऽपि प्रसादोदयात् सत्यपि न चमत्कारस्तदनुभावाद्यभावात्।

[ सरि० ] अथ वृत्तिकृत् भावशान्त्यादीन् क्रमेणोदाहरणायोपक्रमते क्रमेणेति। क्रमेण कारिकोक्तक्रमानुसारेण। उदाहरणं निदर्शनम्। यथेति निदर्शने। तत्र प्रथमं भावशान्तिमुदाहरति। विरुद्धसामग्रीप्राधान्येन भावस्य प्रशमावस्था भावशान्तिः। उदाहरणं प्रस्तौति। तस्या इति। तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितम् वक्षः चरणानतिव्याजेन गोपाय्यते किम् इति उक्ते मया तत् क्व इति उदीर्य तत् सहसा सम्प्रमार्ष्टुम् सा रभसेन आश्लिष्टा तत्सुखवशात् तन्व्या तत् विस्मृतं च इत्यन्वयः। तस्याः सपत्न्याः अमर्षान्न नामग्रहणम्। सान्द्रेति सान्द्रं निविडं यद् विलेपनं चन्दनादि यत्र तादृशस्य स्तनतटस्य कुचप्रान्तभागस्य प्रश्लेषो गाढालिङ्गनं तेन या मुद्रा चिह्नं स्तनाकारं तेन अङ्कितं चिह्नितम्। वक्षः उरस्थलम्। चरणेति चरणयोः पादयोः आनतिः प्रसादनाय शिरोऽवनमनं तस्य व्यतिकरः सम्बन्धस्तस्य व्याजेन मिषेण। गोपाय्यते आच्छाद्यते किम् इति प्रश्ने। यद्वा किमिति किमर्थम्। गोपाय्यते आच्छाद्यते। तया इति इत्थम्। उक्ते कथिते। मया। तत् चिह्नम्। क्व कुत्र स्थले। इति इत्थम्। उदीर्य कथयित्वा। तत् चिह्नम्। सहसा प्रसभम्। सम्प्रमार्ष्टुम् विलोपयितुम्। सा बाला। रभसेन त्वरया। आश्लिष्टा आलिङ्गिता। तत्सुखवशात् तस्याश्लेषस्य यत्सुखमानन्दस्तस्य वशात्कारणात्। तन्व्या तया कृशाङ्ग्या। तत्। चिह्नम्। विस्मृतम् अस्मृतम्। चेति। आलिङ्गनविस्मरणयोः समकालतारूपसमुच्चये। अपीति

पाठेऽपि तथैव । तत्र भावशान्तिमाह अत्रेति । अत्र काव्येऽस्मिन् । कोपस्य कोपाख्य-व्यभिचारिभावस्य सपत्न्यालिङ्गनचिह्नदर्शनजस्य शान्तिरिति । सत्यपि न चमत्कारस्तदनुभावाद्यभावादिति । रसान्तरं षड्विधेषु कोपभङ्गोपायेष्वेकः । यथोक्तम् —

'रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ।' इति ।

अत्र हर्षेणामर्षलक्षणस्य कोपस्य शान्तिरिति भावशान्तेरुदाहरणमिदम् ।

[ वृत्तिः ] एकस्मिञ्छयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥५१॥

अत्रौत्सुक्यस्य ।

[ कमला० ] भावोदयमाह एकस्मिन्निति । आवेगः कोपः । तूष्णीमिव स्थितः । आहार्यमौनं वक्तुमिवेत्युक्तम् । तत्समये सुप्तो मा भूदिति हेतोः किञ्चिद् वक्रितग्रीवं यथातथा प्रियो वीक्षित इत्यन्वयः । औत्सुक्यस्योदयो न कोपस्य तदनुभावोक्तेः ।

[ सरि० ] भावस्य अङ्गितव्यभिचारिणो निर्वेदादेरनियतावस्थानत्वे रत्यादेरपि उदयः प्रसुप्तावस्थानो जागरणं स्वसामग्रीमाहात्म्येनोदयावस्था भावोदयः । तदुदाहरति एकस्मिन्निति । एकस्मिन् शयने विपक्षरमणीनामग्रहे सद्यः मानपरिग्रहग्लपितया मुग्धयो चाटूनि कुर्वन् अपि आवेगात् अवधीरितः तत्क्षणम् तूष्णीम् स्थितः प्रियतमः सुप्तः इव मा भूत् इति अमन्दवलितग्रीवम् पुनः वीक्षितः इत्यन्वयः । एकस्मिन् समाने । शयने शय्यायाम् । विपक्षरमणीनामग्रहे विपक्षभूता या रमणी नारी सपत्नीत्यर्थः, तस्याः नामग्रहे नाममात्रग्रहणे । प्रमादादिति । सद्यः तत्कालमेव । मानपरिग्रहग्लपितया मानस्य कोपस्य परिग्रहोऽनुभवस्तेन ग्लपितया खिन्नया । मुग्धया मूढया स्वावस्थितिमजानन्त्या । चाटूनि श्लाघावचनानि । कुर्वन् साधयन् । अपि इत्यवधारणे । आवेगाद् कोपावेशात् । अवधीरितः अवज्ञातः अत एव तत्क्षणं तत्कालम् । तूष्णीं मौनम् । स्थितः आस्थितः । प्रियतमः वल्लभः । सुप्तः निद्रितः । इवेति एवार्थे । मा भूत् । इति हेतोः । अमन्दवलितग्रीवम् अमन्दं त्वरितं यथा स्यात्तथा वलिता वक्रिता ग्रीवा गलप्रदेशो यत्र यथा स्यात्तथा । पुनः वारंवारम् । वीक्षितः अवलोकितः इति । अत्र हि निद्रितो मा भूदति औत्सुक्योदय एव चारुत्वपर्यवसायी न तु सन्त्यपि कोपशान्ति-

स्तदनुभावानुपादानादिति । तदेवाह अत्रेति । अत्र काव्येऽस्मिन् । औत्सुक्यस्य कालाक्षमत्वलक्षणस्य व्यभिचारिणः कोपशान्त्यपेक्षया उद्रेक इति भावोदयस्योदाहरणमिदम् ।

[ वृत्तिः ] उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्धयन्यतः ॥५२॥

अत्रावेगहर्षयोः ।

[ कमला० ] भावसन्धिमाह उत्सिक्तस्येति । भार्गवागमे रामोक्तिः । उत्सिक्तस्य दृप्तस्य ख्यातस्य वा । तपश्च पराक्रमश्च तपोनिधेर्भार्गवस्यागमनात्सत्सङ्गे प्रियता प्रेम वीररसस्य रभसो हर्षस्तस्योत्फाल उद्रेकश्च मामेकतः कर्षत इत्यावेगस्त्वरा । अन्यत्रैष अनुभूतहरिचन्दने चेन्दुश्च तद्वच्छीतलः स्पर्शो यस्येदृशश्चैतन्यं विषयान्तरज्ञानं तिरोदधत् आनन्दी सुखहेतुर्वैदेहीपरीरम्भः मुहुः रुणद्धयावृणोतीति हर्षः । ताभ्यां तुल्यकालतेति सन्धिरित्यर्थः ।

[ सरि० ] तुल्यकालमेव द्वयोर्भावयोरुभयसामग्रीयोगेन परस्परविमर्दो भावसन्धिः । भावसन्धिमुदाहरति उत्सिक्तस्येति । महावीरचरितगतं पद्यमिदम् परशुरामं दृष्ट्वा रामोक्तिः । एकतः उत्सिक्तस्य तपःपराक्रमनिधेः अभ्यागमात् सत्सङ्गप्रियता च वीररभसोत्फालः च माम् कर्षतः अन्यतः एषः आनन्दी हरिचन्दनेन्दुशिशिरं स्निग्धः वैदेहीपरिरम्भः च चैतन्यम् आमीलयन् मुहुः रुणद्धि इत्यन्वयः । एकत्रः एकपक्षे । उत्सिक्तस्य अहङ्कृतस्य । तपःपराक्रमनिधेः तपसः पराक्रमस्य शौर्यस्य च निधेः आस्पदस्य । अभ्यागमात् आगमनेन । सत्सङ्गप्रियता साधुसम्पर्कलोलुपता । च तथैव । वीररभसोत्फालः वीरस्य शूरस्य रभसो वेग उत्साहस्तस्योत्फाल उद्रेकः । चकारः समुच्चये । तस्य तपोनिधित्वेन सत्सङ्गप्रियता पराक्रमनिधित्वेन उत्साहोद्रेकश्चोभावेव । माम् । कर्षतः आकृष्टं कुरुतः तत्समीपगमनाय । अन्यतः अपरस्मिन् दिशि । एषः अनुभूयमानः । आनन्दी आनन्दहेतुः । हरिचन्दनेन्दुशिशिरस्निग्धः हरिचन्दनञ्चेन्दुश्च चन्द्रश्च तद्वच्छिशिरः शीतलश्चासौ स्निग्धश्च प्रेमसंवलितश्च । तादृशः । वैदेही-परिरम्भः वैदेह्याः सीतायाः परिरम्भः आलिङ्गनम् । चेति द्वयोस्तुल्यप्रभावकारित्वद्योतनाय । चैतन्यम् ज्ञानम् । आमीलयन् विषयान्तराद् व्यावर्तयन् । मुहुः पुनःपुनः । रुणद्धि निवारयति तत्र गमनायेति । परशुरामो हि तपसः पराक्रमस्य चास्पदम् ।

तेन एकतः सत्सङ्गलोलुपता उत्साहोद्रेकश्च मां तद्दर्शनाय प्रेरयतः अन्यत परमानन्द-प्रदायी जानक्याश्लेषस्तु मां पुनःपुनस्ततो व्यावर्त्य तत्र गमनाय निषेधयतीति। लक्ष्ये लक्षणमाह **अत्रेति। अत्र** काव्येऽस्मिन्। **आवेगहर्षयोः** आवेगस्य सत्सङ्गोत्साहजन्यसम्भ्रमस्य हर्षस्य प्रियालिङ्गनजन्यमोदस्य च तयोस्तुल्यकाल-मेवास्वाद इति आवेगहर्षयोस्तुल्यप्राधान्यत्वेन मिलनरूपसन्धेरुदाहरण-मिदम्।

[ वृत्तिः ] क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ।५३।।

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता भावस्थितिस्तूक्तोदाहृता च ॥३६॥

[ कमला० ] शबलतामाह क्वाकार्यमिति। देवयानी दर्शनोत्तरं ययाते-रुक्तिः ( ? ) अकार्यं परस्त्रीलोभरूपं क्व चन्द्रस्य वंशः क्वेति वितर्कः भूयोऽपीत्यौ-त्सुक्यम्। नोऽस्माकं श्रुतमध्ययनं दोषाणां कामादीनां प्रशमायेति मतिः। कोपेऽ-पीति स्मृतिः। किं वक्ष्यन्तीति शङ्का। स्वप्नेऽपीति दैन्यम्। चेतः स्वास्थ्यमिति धृतिः। कः खल्विति चिन्ता। चिन्तानामित्थं शबलतेति शेषः। पूर्वपूर्वबाधेन स्थिति-रित्यर्थः। ननु भावस्य शान्त्युदयवत् स्थितिः किं नोक्ता ? तत्राह उक्ता व्यभिचारी तथाञ्जित इति उदाहृता जाने कोपेति।

[ सरि० ] भावशबलता हि पूर्वपूर्वविमर्दनोत्तरोत्तरोदयपरस्पराभावानाम्। तदुदाहरति **क्वाकार्यमिति**। देवयानीं दृष्टवतो राज्ञो ययातेरुक्तिरियमिति सार-बोधिनी-प्रभा-सुधासागर-कमलाकरीकरादयः उर्वशीविरहितस्य पुरूरवस उक्ति-रियमिति जयन्तमहेश्वरनागोजीभट्टादयः। मुद्रितेषु वा हस्तलिखितपुस्तकेषु पाठोऽय-मुपलभ्येत वा नापि किन्तु प्रकरणं तु द्वितीयपक्षमेव प्रमाणयति। 'कोपेऽपि कान्तं मुखम्' इति भुक्तपूर्वायामेव कथनमुपयुज्यते न तु दृष्टमात्रायाम्। तत्र प्रणयकोपा-सम्भवात्। भोगानन्तरवियोगस्थितिरुर्वशीपुरूरवसोरेव सम्भवति। न हि परिणीताया अनन्तरं पितृगृहं गतायाः देवयान्याः युवान्तरेणाधरपानं सम्भवति। न च पत्युः कृते तस्याः स्वप्नेऽपि दुर्लभत्वमेव। तेन ह्येतत् उर्वशीविप्रयुक्तस्यातः प्रमत्तस्य राज्ञः पुरूरवस एवं वचनमिदं स्पष्टमेव। अकार्यम् क्व शशलक्ष्मणः कुलम् च क्व सा भूयः अपि दृश्येत नः श्रुतम् दोषाणाम् प्रशमाय अहो मुखम् कोपे अपि कान्तम्

अपकल्मषाः कृतधियः किम् वक्ष्यन्ति सा स्वप्ने अपि दुर्लभा हे चेतः ! स्वास्थ्यम् उपेहि धन्यः कः युवा अधरम् धास्यति खलु इत्यन्वयः। अकार्यं सर्वं विहाय स्त्र्यनुगमन-रूपं ययातिवाक्यपक्षे मुनिकन्यायामासक्तिरूपं कुकृत्यम्। क्व एकत्र। शशलक्ष्मणः शशः लक्ष्म चिह्नं यस्य तस्य चन्द्रमसः। कुलमन्ववायः। चेति पुनरर्थे। क्व अपरत्र। इति शान्तसञ्चारिवितर्कः। सोमवंशस्य तथाचरितस्यात्यन्तानौचित्यात्। सा उर्वशी देवयानी वा। भूयः पुनः। अपि इति चार्थे। दृश्यते दृष्टिपथमागच्छेत्। सम्भावनायां लिङ्। इति शृङ्गारसञ्चार्यौत्सुक्यम्। नः अस्माकम्। श्रुतं शास्त्राध्ययनम्। दोषाणां प्रमादादिदुर्गुणानाम्। प्रशमाय निराकरणाय। इति शान्तसञ्चारिमतिः। अहो ! इत्याश्चर्ये। मुख तद्वदनम्। कोपे क्रोधे। अपि च। कान्तं कमनीयम्। किमुत प्रसादे इति शृङ्गारसञ्चारिस्मृतिः। अपकल्मषाः धूतपापाः। कृतधियः विचक्षणाः। किं किम्मात्रम्। वक्ष्यन्ति कथयिष्यन्ति सोम-वंश्येनापि राज्ञेत्थं स्त्र्यनुगमनं कृतमिति न केवलं मामपितु कुलमेव दूषयिष्यन्ति इति शान्तसञ्चारिशङ्का। सा अपूर्वसुन्दरी। स्वप्ने स्वापेऽदृष्टश्रुतपूर्वघटके। अपि इत्यवधारणे किमुत जागरणे तु। दुर्लभा सुदुष्प्रापेति शृङ्गारसञ्चारिदैन्यम्। हे चेतः चित्तम्। स्वास्थ्यमवधानताम्। उपेहि उपगच्छ। इति शान्तसञ्चारिधृतिः। धन्यः भाग्यवान्। कः कतमो हि। युवा तरुणः। अधरं तन्निम्नोष्ठम्। धास्यति पास्यति इति शृङ्गारसञ्चारिचिन्ता। तत्र भावशवलतामाह अत्रेति। अत्र काव्येऽस्मिन्। वितर्केति वितर्कः क्वाकार्यं शशलक्ष्मणः क्व च कुलम् इत्यत्र तद्बाधे-नौत्सुक्यं भूयोऽपि दृश्येत सा इत्यत्र मतिः औत्सुक्यबाधेन दोषाणां प्रशमाय नः श्रुतमिति स्मरण मतिबाधेन कोपेऽपि कान्तं मुखमित्यत्र शङ्का स्मृतिबाधकत्वेन किं वक्ष्यन्त्यपकल्मषाः कृतधियः इत्यत्र दैन्यं शङ्काबाधकत्वेन स्वप्नेऽपि सा दुर्लभा इति धृतिः दैन्यबाधकत्वेन चेतः स्वास्थ्यमपैहि इति चिन्ता धृतिबाधकत्वेन कः खलु युवा धन्योऽधरं पास्यतीति तेषाम्। शवलता पूर्वपूर्वबाधकत्वेनोत्तरोत्तरोदयपरम्परेति भावशवलताया उदाहरणमिदम्। अत्र वितर्कमतिशङ्काधृतीनां शान्तसञ्चारिता औत्सुक्यस्मरणदैन्यचिन्तानां शृङ्गारसञ्चारिता। तत्रापि पार्यन्तिकचिन्तया शान्तोपमर्देन शृङ्गारस्य विश्रान्तिः। सा च शत्रुविजयपूर्वराज्यलाभ इव प्रकर्ष-निदानम्। इत्युद्द्योतकाराः। भावस्य यथा हि शान्ति-उदय-सन्धि-शवलतास्तथैव स्थितिरप्येकाऽवस्था। सा कथं न प्रपञ्चितेत्यत आह भावेति। भावस्थितिः भावावस्थानम्। तु। उक्ता व्यभिचारी तथाञ्जितः इति प्रतिपादिता। उदाहृता जाने कोपपराङ्मुखी इत्यनेन निदर्शिता। चेति समुच्चये। तेनात्र न पुनरुक्तोदाहृता चेति। शान्त्याद्यवस्थाचतुष्करहितो भाव एव भावस्थितिः सा च पूर्वोपपादितेनैव गतार्थेत्याशयः।

[ वि० वृ० ] भावस्येति—

क्रमेणोदाहरणानि—

म्लातासि किं प्रेयसि मामकीनं हृत्पृच्छ पृच्छामि तदित्युरोऽस्याः स्पृशन्निदं स्वस्थमिति स्म कृष्णो ब्रवीति सा नम्रमुखी बभूव ।

अत्र विषादशान्तिः ।

आलीजनैर्मण्डनकेलिकाले विभूष्यमाणा वृषभानुपुत्री ।
उरोगते नीलमणीन्द्रहारे स्विन्ना सकम्पा पुलकाकुलाऽऽसीत् ॥

अत्र हर्षोदयः ।

सुचिरमनुचरीभिः पाठितां कृष्णगाथां
सदसि शुकवधूभिः शृण्वती गीयमानाम् ।
प्रणयसदयमेकं तासु विन्यस्यतीयं
चकितचकितमन्यन्नेत्रमास्ये गुरूणाम् ॥

अत्रौत्सुक्यत्रासयोः सन्धिः ।

पतिरतिकुपितो मनः प्रमत्तं खलनिकरः किल दूषणाभिधायी ।
मुररिपुरपि वेशपेशलोऽसौ भण विमले कमुपायमाश्रयिष्ये ॥

अत्र भयचपलताशङ्कौत्सुक्यानां मिथः सम्मर्दरूपं शावल्यम् ।

**[कारिका] मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।**

**[ वृत्तिः ]** ते भावशान्त्यादयः। अङ्गित्वं राजानुगतविवाहप्रवृत्त-भृत्यवत् ।

[ कमला० ] ननु रसाङ्गस्य सञ्चारिणो भवतु प्राधान्यं भावशान्त्यादीनां तु रसानन्तर्गतेः कथं प्राधान्यम् ? तत्राह मुख्येति । कदाचन । भावशान्त्यादिप्राधान्य-निर्देशे इत्यर्थः । भृत्योत्कर्षाद्राजोत्कर्ष इव भावशान्त्याद्युत्कर्षो रसोत्कर्ष एव विश्राम्यतीति भावः । तेनैषामापाततः प्राधान्यं मुख्यं तु रस एवेति भावः ।

[ सरि० ] विभावादिसमूहावलम्बने रसेऽङ्गत्वेन व्यभिचारिणां प्राधान्ये सम्भवत्यपि तत्रोदासीनानां भावशान्त्यादीनां कथं प्राधान्यं ? यतो हि तेऽसंल्लक्ष्यक्रम-व्यङ्ग्यध्वनेर्भेदत्वेन गृहीता रसवदित्यपेक्षायां तन्निर्देशककारिकाभागमवतारयति मुख्य इति । रसे मुख्ये अपि ते अपि कदाचन अङ्गित्वम् प्राप्नुवन्ति इत्यन्वयः । रसे शृङ्गारादिके उपलक्षणात्तदाभासेऽपि । मुख्ये प्राधान्यत्वेन काव्यचारुत्व-पर्यवसायित्वात् स्थिते । अपि । ते भावशान्त्यादयः । अपि इति समुच्चये ।

कदाचन क्वचन यदा ते तथात्वेन विवक्ष्यन्ते, तदैव यद्वा रसापेक्षया तेषां सातिशय-चमत्कारे सति। अङ्गित्वं प्राधान्यम्। प्राप्नुवन्ति भजन्ते। अङ्गित्वञ्च तेषामापातत एव पार्यन्तिकस्तु रस एवेति। कारिकांशं व्याख्याति ते इति। ते इति भावशान्त्यादयः भावशान्ति-भावोदय-भावसन्धि-भावशवलताः। अङ्गित्वम् इति प्राधान्यम्। तदुदाहरति राजेति। राज्ञा नृपेणोपलक्षणात् स्वामिना अनुगतः पश्चाद्वर्तित्वेन सनाथीकृतश्चासौ विवाहे परिणयने प्रवृत्त उद्युक्तो यो भृत्यः सेवकस्तद्वत्। यथा हि विवाहपरो भृत्योऽपि राज्ञाऽप्यनुगम्यते वरयात्रायां राजापेक्षया वरभूतस्य भृत्यस्यैव प्राधान्यं भवति, न तेन राज्ञः महत्वमपि हीयतेऽपितु वर्द्धत्येव, तथैवात्रापि भावशान्त्यादेः! यत्र विभावादिभावितस्थाप्युद्रेकेणास्वादस्तत्र रसध्वनित्वं, यत्र तु स्वानुभावभावितव्यभिचार्युद्रेकस्तत्र भावादिध्वनित्वम्। तद्विपरीतं यत्र तु व्यङ्ग्यीभूतमपि व्यभिचारिणमनपेक्ष्य विभावानुभावोद्रेककृत आस्वादस्तत्र वस्त्वलङ्कारध्वनित्वम्। किन्त्वपरयोर्द्वयोः प्राधान्यं रससम्पर्केणैव तेन तच्चमत्कारित्वमापातत एव पर्यन्ते तु रसस्यैवार्थादन्ते रस एव पर्यवसायित्वेनैव तेषां चमत्कारो न तु तत्पर्यवसायित्वेनेति। यथा परिजनवैभवालङ्कृतो भृत्य आपाततः प्रथमदृष्टौ प्रेक्षकाणां विस्मयोत्पादकोऽपि दृष्टे राजनि एवमनुग्राहकोऽयं राजा यदुपकरणीभूय भृत्यं विवाहयतीति राजोत्कर्षे एव पर्यवसानमित्युद्द्योते स्पष्टम्। यथा हि राकासुधाकरमुखीम् इत्यत्र चिन्तायाः तस्याः सान्द्रविलेपः इत्यत्र कोपशान्तेः एकस्मिञ्छयने इत्यत्र औत्सुक्योदयस्य उत्सिक्तस्य इत्यत्रावगहर्षसन्धेः क्वाकार्यमित्यत्र पर्यवसायित्वेन चिन्तायाश्च य आस्वादः स शृङ्गारसम्पर्केणैव न तु स्वमहिम्नैव। अत एवोक्तं रससम्पर्केणोद्भूटस्य भावशान्त्यादेरङ्गित्वमापातत एव पर्यन्ते तु रसस्यैवेति। अलक्ष्यक्रमव्यङ्ग्यध्वनिर्व्याख्यातः।

[ वि॰ वृ॰ ] मुख्ये इति।

ते भावशान्त्यादयः। अङ्गित्वं प्राधान्यम्। तच्च तेष्वापातादेव करग्रहप्रवृत्त-राजभृत्यवत्। तदेवमलङ्कार्यस्य रसादेरसंलक्ष्यक्रमस्य व्यङ्ग्यस्य निरूपणेनालक्ष्यक्रम-व्यङ्ग्यो ध्वनिर्दर्शित इति।

[ कारिका ] अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥३७॥
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥

[ वृत्तिः ] शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः, अर्थशक्तिमूलानुरणन-रूपव्यङ्ग्यः उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः ॥३७॥

[ कमला० ] अलक्ष्यक्रमव्यङ्ग्यध्वनिमुक्त्वा लक्ष्यक्रममाह अनुस्वानेति। अनुस्वानः प्रतिशब्दस्तदाभाग्रत्तुल्या संलक्ष्यक्रमा व्यञ्जकेन सह ज्ञेयक्रमा व्यङ्ग्यस्थितिर्यत्र ध्वनौ काव्यभेदे स ध्वनिः। यथा ध्वनिप्रतिध्वन्योः क्रमस्तथा व्यङ्ग्यव्यञ्जकयोर्यत्रेत्यर्थः शब्दश्चार्थश्चोभयञ्च तेषां शक्तयः। यदुद्भवास्त्रिधेत्यर्थः। शब्दशक्तीति अनुरणनं घण्टानादवत्तत्स्थाप्यधीविषयत्वं तच्च तेनैव शब्देन यत्रार्थधीर्न तु पर्यायेण। तद्विपरीत्येऽर्थशक्तिः। तेनाविवक्षितवाच्येन प्रसङ्गस्तत्र वाधेन शक्तेर्विच्छेदात्।

[ सरि० ] इत्थं हि रसभावतदाभासभावाशान्त्यादिरूपमसंलक्ष्यक्रमव्यङ्ग्यध्वनिं सप्रपञ्चं निरूप्य सम्प्रति क्रमप्राप्तं विवक्षितान्यपरवाच्यध्वनेर्द्वितीयं प्रकारं संलक्ष्यक्रमव्यङ्ग्यध्वनिं निरूपयंस्तदववारककारिकामवतारयति अनुस्वानेत्यादि। अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिः तु यः ध्वनिः सः शब्दार्थोभयशक्त्युत्थः त्रिधा कथितः इत्यन्वयः। अनुस्वानेति अनु पश्चान्मूलशब्दानन्तरभावी स्वानः प्रतिशब्दः कथनमिति यस्य सोऽनुस्वानस्तदाभस्तत्सदृश अत एव सम्यक्तया लक्ष्यो ज्ञेयः क्रमः प्रतीतिपौर्वापर्यं यत्र तादृशं यद्व्यङ्ग्यं प्रतीयमानार्थस्तत्र स्थितिरवस्थानं यस्मिंस्तादृशः यद्वा अनुस्वानाभा घण्टानादानन्तरप्रतिशब्दरूपा लक्ष्यक्रमा ज्ञेयप्रतीतिपौर्वापर्या व्यङ्ग्यस्थितिः प्रतीयमानार्थावस्थानं यत्र तादृशः। अनुस्वानसादृश्यादस्याविवक्षितवाच्याद्भेदः। तत्र बाधेन विच्छेदादनुरणनसादृश्याभावात्। यथा घण्टानादे ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तद्वद्वस्त्वलङ्कारतद्व्यञ्जकयोरपीत्याशयः। इत्यमुक्तं भवति—यथा हि घण्टायां वाद्यमानायां प्रधानशब्दप्रतीत्यनन्तरं यथा क्षोदीयानपरोऽनुरणनशब्दः श्रूयते तथैव व्यञ्जकव्यङ्ग्ययोरप्यत्र स्थितिः। अत्र वाच्यार्थो घण्टास्थानायते व्यङ्ग्यार्थस्त्वनुरणनायत इति। तु इति व्यवच्छेदे असंलक्ष्यक्रमव्यङ्ग्यव्यतिरिक्तमिति। यः यो हि। ध्वनिः। सः तादृशो ध्वनिः। शब्देति। शब्दश्च अर्थश्च उभयञ्चेति तेषां शक्तयस्ताभिरुत्तिष्ठत्युद्भवतीति तथा शक्तिपदं प्रत्येकमभिसम्बध्यते शब्दादौ द्वन्द्वपरश्रुतत्वात्। शब्दशक्त्युत्थः अर्थशक्त्युत्थ उभयशक्त्युत्थ इति। शब्दाच्छक्तेरर्थशक्तेस्तु साचिव्यमेव। ननु शब्दार्थयोरेकव्यञ्जकत्वेऽपरव्यञ्जकत्वं ध्रुवमेवेति कथमयं विभाग उपपद्यत इति चेदुच्यते प्राधान्याभिप्रायेण विभागोत्पत्तिरिति! यथा हि शब्दस्य परिवृत्त्यसहत्वे शब्दप्राधान्यं तस्य तत्सहत्वेऽर्थप्राधान्यमुभयसंवलने तूभयप्राधान्यमिति। अविवक्षितवाच्ये बाधेन शब्दशक्तेरेव विच्छेदादेषां प्रसङ्ग एव न। त्रिधा त्रिप्रकारकः। कथितः उक्त इति। घण्टानुरणनरूपत्वेन यत्र व्यङ्ग्यं लक्ष्यक्रमं भवति तादृशे काव्ये ध्वनिः शब्दशक्त्युत्थः अर्थशक्त्युत्थः उभयशक्त्युत्थश्चेति त्रिविधो भवतीति। कारिकांशं व्याचष्टे

शब्देत्यादि। शब्देति शब्दस्य या शक्तिः सा मूलं प्रतीतिप्रधानवीजं यस्य स तादृशो योऽनुरणनरूपः अनुदितसदृशो व्यङ्ग्योऽर्थो यत्रेति। इत्येक। अर्थेति अर्थस्य या शक्तिः सा मूलं प्रतीतिप्रधानवीजं शब्दस्य परिवृत्तिसहत्वेन यस्य स ता शो योऽनुरणनरूपः प्रतिशब्दतुल्यो व्यङ्ग्योऽर्थो यत्रेति अपरः। उभयस्य शब्दस्यार्थस्य च संवलिता या शक्तिः सैव मूलं वीजं यस्य स तादृशो योऽनुरणनरूपोऽनुस्वानसन्निभो व्यङ्ग्योऽर्थो यत्रेति तथाविधस्तृतीयः। चकारः समुच्चयार्थः। इति इत्थम्। त्रिविधः त्रिप्रकारक इति।

[ वि० वृ० ] अथ लक्ष्यव्यङ्ग्यक्रमो ध्वनिर्विभज्य दर्श्यते। अनुस्वानेति।

प्रतिध्वनितुल्यस्य संलक्ष्यपौर्वापर्यस्य व्यङ्ग्यस्य स्थितिर्यत्र स ध्वनिस्त्रिधा शब्दशक्त्युत्थोऽर्थशक्त्युत्थो द्विशक्त्युत्पन्नश्चेति। इह व्यङ्ग्यस्य शब्दादिशक्त्युत्थत्वेन त्रैविध्याद् व्यञ्जकस्यापि लक्ष्यव्यङ्ग्यक्रमाख्यस्य ध्वनेस्तेन त्रैविध्यं बोध्यम्।

**[ वृत्तिः ] तत्र—**

**[ कारिका ] अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥३८॥**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥**

**[ वृत्तिः ] वस्त्वेवेत्यनलङ्कारवस्तुमात्रम्।**

[ कमला० ] आद्यद्वैविध्यमाह तत्रेति। प्रधानत्वेन यत्र भासते इत्यन्वयः। प्राधान्याभावे गुणीभूतव्यङ्ग्यतेत्यर्थः। नन्वलङ्कारस्यापि वस्तुत्वात्कथं भेदोऽत आह अनलङ्कारमिति। गोबलीवर्दन्यायाद्भेदः।

[ सरि० ] शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यध्वनेर्भेदनिर्देशककारिकावतारणायोपक्रमते तत्रेति। तत्र तेषां मध्ये इति त्रिविधानां मध्ये इत्याशयः। कारिकामवतारयति अलङ्कार इत्यादि। यत्र शब्दात् अलङ्कारः अथ वस्तु एव प्रधानत्वेन अवभासते शब्दशक्त्युद्भवः सः द्विधा ज्ञेय इत्यन्वयः। यत्र यस्मिन् काव्ये। शब्दात् परिवृत्त्यसहत्वेनावस्थितशब्दात्। अलङ्कारः काव्यालङ्कृतिः अथ च। वस्तु वृत्तम्। एवेति अलङ्कारयोगव्यवच्छेदे केवलं वस्तुमात्रमिति। प्रधानत्वेन चारुत्वपर्यवसायित्वेन। अप्राधान्ये तु गुणीभूतव्यङ्ग्यस्य विषयता। अवभासते प्रतीयते। शब्दशक्त्युद्भवः शब्दस्य शक्तेरुद्भव उत्थानं यस्य तादृशः, यद्वा शब्दशक्त्युद्भवं व्यङ्ग्यं विद्यतेऽत्रेति काव्य इति अर्श-आदित्वादच्। सः ध्वनिः। द्विधा द्विप्रकारकः। ज्ञेयोऽवगन्तव्य इति। कारिकांशं व्याचष्टे वस्त्वेवेतीति। वस्त्वेव इति अनलङ्कारवस्तुमात्रम् न विद्यतेऽलङ्कारो यस्मिंस्तादृशं यद्वस्तु तदेवेति। शब्दशक्त्युद्भवो योऽनुरणनरूपो लक्ष्यक्रमव्यङ्ग्यो ध्वनिः सोऽपि

द्विविधोऽलङ्कारवस्तुभेदात्। ननु अलङ्कारस्यापि वस्तुत्वमेव। वस्तुत्वस्य केवलान्वयित्वात्, तत्कथं भेद इत्यपेक्षायामुच्यते सालङ्कारवस्तु अनलङ्कारवस्तु चेति। भेदश्च गोबलीवर्दन्यायेनेति।

[ वृत्तिः ] आद्यो यथा—

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥५४॥

अत्र वाक्यस्यासम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमाऽलङ्कारो व्यङ्ग्यः।

[ कमला० ] उल्लास्येति। अत्रान्यार्थेऽपि शक्तिरिति केचित्। तत्त्वं तु व्यञ्जनैवेति। भद्रात्मन इत्यस्य लक्ष्यत्वमेव। कालश्यामो वैरिनाशको वा। यः करवालः खड्गः। महदम्बु जलं धारारूपं तद्वहतीति वाहः। स चासौ स च। न च करवाल एव मेघः खड्ग एव मेघ इव मेघ इत्यर्थौ युक्तौ। एवं हि रूपकापत्तेरुपमानं स्यात्। शब्दपरिवृत्तिसहत्वेन शब्दशक्तिमूलत्वाभावाच्च। तमुल्लास्योद्यम्य। जरठं कठिनमूर्जितं महद्गर्जितं सिंहनादो यस्य तेन देवेन राज्ञा रणे युद्धे रिपूणां सकलप्रतापः धाराजलैः खड्गकान्तिभिः शामित इत्येकोऽर्थः। कालकरः श्यामकान्तिर्बालो नूतनः। बवयोरभेदान्महानम्बुवाहो मेघस्तं प्रकटीकृत्य देवेनेन्द्रेण रणे विद्युतां शब्दे सीतधारारूपैर्जलैः रिपूणां पर्वतादीनां जलवैरीणामग्न्यादीनां वा प्रकृष्टस्तापः औष्ण्यं शामित इत्यन्वयः। अत्रेति राजाऽत्र प्रकृतः इन्द्रोऽपि व्यञ्जनया भासते। तयोः स्वातन्त्र्येण बोधे वाक्यभेदः स्यादतोऽङ्गाङ्गिभावेनैकार्थो वाच्यः। तत्र रूपणेन्द्र एव राजेत्यर्थे इन्द्रप्राधान्यात्तद्रतिर्व्यङ्ग्या स्यादित्यसम्बद्धार्थत्वं स्यात्। न चेन्द्रत्वारोपाद्राजैवेन्द्र इति रूपकमुपमैव तिरोभूतभेदा रूपकमिष्यत इत्युपमाधीनविग्रहत्वेन प्राथम्यात्तथैवोपपत्तेः। उपमायां त्विन्द्र इव राजेति प्रकृतराजगोचरा रतिः सैव व्यङ्ग्येत्यर्थः। अत्र भूपमेवादिशब्दोक्तावप्रतीतेः शब्दशक्तिमूलत्वम्। न चात्र श्लेषः, उभयत्र तात्पर्याभावात्।

[ सरि० ] शब्दशक्त्युद्भवालङ्कारध्वन्युदाहरणायोपक्रमते आद्य इति। आद्यः प्रथमः शब्दशक्त्युद्भवालङ्कारध्वनिः। यथेति निदर्शने। उदाहरणं प्रस्तौति उल्लास्येति। पद्यमिदं कप्फिणाभ्युदयमहाकाव्यगतम्। अत्र हि प्राकरणिकत्वेन कप्फिणो नृपः प्रशस्यतेऽभिधयाऽप्राकरणिकत्वेन व्यञ्जनया वासवः। नात्र श्लेषस्तत्रोभयेऽप्यर्थे प्राकरणिकत्वापेक्षाभावात्। प्राकरणिकोऽर्थस्त्विवत्थम्। येन जरठोर्जित-

गर्जितेन देवेन कालकरवालमहाम्बुवाहम् उल्लास्य सकले एव रणे रिपूणाम् त्रिजगति ज्वलितः प्रतापः धाराजलैः निर्वापितं इत्यन्वयः। येन प्रकृतेन। जरठोर्जित-गर्जितेन जरठं कठोरमुर्जितं बलवद् गर्जितं सिंहनादो यस्य तेन तादृशेन। देवेन राज्ञा—'देवः सुरे घने राज्ञि' इति विश्वः। कालेति कालः कलनो यः करवालः खड्गस्तत्र यन्महदतिशयितमम्बुधाराजलं तस्य वाहः प्रसरणं तम् न च कालो यः करवालः स एव महाम्बुवाहो मेघ इति तथा सति पृथगर्थद्वयाप्रतीत्या रूपकेणैव प्रकृतार्थसिद्धेर्नोदाहरणं स्यादुपमाया। उल्लास्य तीक्ष्णीकरणेनाधिकं कृत्वा। सकले समस्ते। एव इत्यवधारणे न त्वेकस्मिन् वा द्वयोर्वेति। रणे युद्धे। रिपूणां वैरीणाम्। त्रिजगति त्रिभुवने। ज्वलितः अत्यन्तप्रसिद्धः। प्रतापः शौर्यख्यातिः। धाराजलैः खड्गधाराकान्तिभिः। निर्वापितः प्रशमितो विलोपित इति। यद्वा कालेति कालः कृष्णायसः करवालः खड्ग महः उत्सवो वैरिजयरूपः व एवाम्बु जलं तद्वन्निरन्तरप्रवृत्तिशीलः तद्वहति धारयति इति महाम्बुवाहः कालकरवालश्चासौ महाम्बुवाह इति मयूरव्यंसकादित्वात्कर्मधारयसमासः। सकल इति प्रथमान्तं प्रताप-विशेषणमित्यपि सकलः प्रताप इति। अप्राकरणिकपक्षे येन देवेन मेघाधिपतिनेन्द्रेण 'इन्द्रो वै वर्षति' इति श्रुतेः। जरठेति जरठं गम्भीरमूर्जितं स्फीतं यद्गर्जितं निर्घोषस्तेनोपलक्षितम् छत्रेण राजानमद्राक्षोदित्यादिवत् 'इत्थम्भूतलक्षणे' इति तृतीया। कालेति कालः कृष्णः करो रश्मिर्यस्य स तादृशो यो बालः (बवयोर-भेदात्, नवीनो जलपूर्ण इति यो महान् उद्धत अम्बुवाहो मेघस्तम्। उल्लास्य उद्यम्य। रणे घर्मद ह्वयमानजनकोलाहले खे रण इति कोशः यद्वा उपङ्गारादिषु। धाराजलैः आसारवारिभिः। त्रिजगति त्रिभुवने। रिपूणां जलवैरीणां तेजसाम्। सकलः समग्रः। ज्वलितः उद्दीप्तः। प्रतापः प्रकृष्टस्तापः औष्ण्यम्। निर्वापितः शमित इति। वृत्तं वसन्ततिलकं तभजाजगागा। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। वाक्यस्य देवेन निर्वापित इत्यस्य। असम्बद्धार्थाभिधायकत्वम् असम्बद्धस्याविवक्षितस्यार्थस्य वाच्यस्य अभिधायत्वं समर्पकत्वं यथा व्यङ्ग्येन सहा-सम्बद्धो यः प्रकृतो राजा तद्बोधकत्वमसम्बद्धत्वमिति सारबोधिन्यां करवालमुल्लास्ये-त्यावन्मात्रे वक्तव्ये यत्कालेत्यादिविशेषणादि पदप्रयोगस्तस्यासम्बद्धार्थकतेति काव्य-प्रदीपे रूपके राजैव महेन्द्र इत्युत्तरपदार्थस्याप्रकृतस्य प्राधान्ये तद्रहितरतेरेव व्यङ्ग्यत्वापत्त्याऽसम्बद्धार्थाभिधायकत्वप्रसङ्ग इति सुधासागरे औपम्यप्रतीतिमपहाय पर्जन्यवृत्तान्तमात्रे द्वितीयस्य वाक्यस्य पूर्ववाक्यपर्यालोचनायामघटितार्थाभिधायित्वं प्रसज्येत इति साहित्यचूडामणौ। राजरूपोऽर्थः प्राकरणिक इन्द्ररूपश्चाप्राकरणिकः। यदि हि न स्यात्तयोरङ्गाङ्गिभावस्तदा द्वितीयस्यार्थस्य। प्राकरणिकत्वेनासम्बद्धवैक

स्यात्। तेन अभिधायकत्वमत्र बोधकत्वं न तु वाचकत्वमिति वयम्। मा नैव प्रसाङ्क्षीत् प्रसज्येत। इति हेतोः। प्राकरणिकाप्राकरणिकयोः प्राकरणिकस्य राजरूपार्थस्य अप्राकरणिकस्य वासवरूपार्थस्य च तयोः उपमानोपमेयभावः प्राकरणिकस्योपमेयत्वमप्राकरणिकस्योपमानत्वमिति तद्भावः। कल्पनीयः चिन्तनीय इति इत्यम्। अत्र काव्येऽस्मिन्। उपमालङ्कारः साहश्यमुपमा भेदे इति लक्षणोऽर्थालङ्कारः। व्यङ्ग्यः प्रतीयमानार्थ इति। अस्यायमाशयः—राजरूपार्थे प्रकरणतात्पर्यादभिधानियमनेन महेन्द्ररूपार्थस्य व्यञ्जनयैव प्रतीतिः। अतथाप्रतीतौ कालेत्यादिविशेषणानां वैयर्थ्यमेव स्यादिति। तदित्थं राजरूपार्थस्याभिधया बोधे इन्द्ररूपार्थस्य व्यञ्जनया प्रतीतौ वाक्यभेदापत्तेर्व्यङ्ग्यार्थस्य असम्बद्धतैव स्यात्। तेन तयोर्वाक्यैकत्वनिमित्तं तयोरङ्गाङ्गिभावे कल्पनीयेऽन्योन्यम्। यदि तयोरङ्गाङ्गित्वं रूपकबलात्कल्प्यते राजैव महेन्द्र इति तदाऽविवक्षितस्य वासवस्य प्राधान्यात्तद्रतेरेव व्यङ्ग्यता स्यात्, येनासम्बद्धार्थाभिधायकत्वप्रसङ्ग आपतेत उपमाकल्पने तु यथा 'महेन्द्र इव राजेति तदा विवक्षितराजविषयकरतेरेव प्रतीतेरत्र द्वयोरुपमानोपमेयभावः कल्पनीय इति। न चाऽत्रोपमा वाच्यैव साधर्म्यासिद्धेः। यच्च विस्तारिकाकाराः करवाल इवाम्बुवाह अम्बुवाह इव करवाल इति व्याघ्रादिसमासं मन्यन्ते तथामते साधर्म्यसिद्धेरुपमानोपमेयभावस्य वाचनिकत्वापत्त्या न चारु इति साहित्यचूडामणिकाराः। ननु मास्त्वत्रोपमाध्वनिर्द्वितीयार्थस्य स्फुटाभावादिति चेन्न। यत्र हि साहश्यमस्फुटं यथा जलदभुजगजं विषम् इत्यादौ गरलत्वारोपणं विना जलदभुजगयोः साहश्यमस्फुटम्, तत्रैव रूपकालङ्कारो न्याय्यः। अत्र तु खड्गमेघयोः साहश्यं व्यक्ततया परसाचिव्यमनपेक्ष्य स्वमात्रविश्रान्तमिति न रूपान्तरापेक्षम्। तेनात्रोपमैव व्यङ्ग्या इत्यलमतिमात्रक्षोदनेन।

शब्दशक्तिमूलकत्वञ्चात्र देव—अम्बुवाहादि स्थाने भूपमेघादिशब्दोक्तावतथाप्रतीतेरर्थात् तेषां परिवृत्त्यसहत्वेन। उभयत्र प्रकरणसम्मततात्पर्याभावान्न चात्र श्लेष इति।

[ वृत्तिः ] तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥५५॥

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः।

[ कमला० ] अलङ्कारान्तरमाह तिग्मेति। तिग्मस्तीक्ष्णः शत्रुषु रुचिरो मित्रेषु प्रतापस्तेजो यस्य सः। विधुराणां शत्रूणां निशाकृन्नाशकरो मोहको वा। विशिष्टा भा यस्य स विभो स्वामिन्निति वा। मधुरा लीला चेष्टा यस्य। मतिः सुबुद्धिः। मानोऽभिमानस्तयोस्ताभ्यां वा तत्त्वेन वृत्तिर्यस्य। प्रतिपदं प्रतिस्थानं

पक्षाणां स्वपक्षाणामग्रेसरो भवान् विभाति। द्विपदत्वे तु तिग्मरुचिः सूर्योऽनुष्णः। विधुश्चन्द्रोऽरात्रिकर्ता। विगता भा यस्य स च मधुर्वसन्तो लीलाहीनः। मतिमान् वाऽतत्त्वज्ञः प्रतिपत्तिथिरपक्षाग्रणीः पक्षस्याद्या नेति विरोधाभासः। एकपदत्वेन प्रकृतार्थे ज्ञाते द्विपदत्वानुसन्धाने व्यङ्ग्यः। अप्रकृतत्वादपि अर्थो व्यङ्ग्य एव, न तु वाच्य इत्यर्थः।

[ सरि० ] 'उल्लास्य' इत्यादौ नोपमाध्वनिर्यथापेक्ष्यते किन्त्वेकदेशविवर्तिरूपकमेव कालकरवाल-धाराजलप्रभृतिपदेषु मयूरव्यंसकादिसमासात्। न चासावलङ्कारध्वनेर्विषयो व्यञ्जनायाः पदार्थस्मरणमात्रोपक्षीणत्वाद् वाक्यभूमिकायामेव रूपकावगमादिति तत्रारुचित्वेन अलङ्कारान्तराण्यपि व्यङ्ग्यानि भवन्तीति बोधनाय चोदाहरणान्तरं प्रस्तौति तिग्मेति। अत्रैकपदत्वेन प्रकृतार्थो ज्ञायते द्विपदत्वेन विरोधो व्यङ्ग्य इति विरोधाभासालङ्कारध्वनेरुदाहरणमिदम्। एकपदत्वपक्षे प्रकृतार्थो यथा तिग्मरुचिरप्रतापः विधुरनिशाकृत् विभः हे विभो! वा मधुरलीलः मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीः भवान् विभाति इति। द्विपदत्वपक्षे तु तिग्मरुचिः अप्रतापः विधुः अनिशाकृत् विभः मधुः अलीलः मतिमान् अतत्त्ववृत्तिः प्रतिपद् अपक्षाग्रणीः इति। प्रकृतार्थोऽत्रेत्थम्। तिग्मेति तिग्मस्तीक्ष्णः शत्रुषु रुचिरः कमनीयो मित्रेषु प्रतापस्तेजो यस्य सः। विधुरेति। विधुराणां विरोधिनां निशाकृत् नाशकारी। विभो हे निग्रहानुग्रहसमर्थ! यद्वा विशिष्टा सर्वाधिका भा श्रीर्यस्य स विभः। मधुरेति। मधुरा मनोज्ञा लीला चेष्टा यस्य सः। मतीति मतिर्बुद्धिः शास्त्रादितात्पर्यनिर्णायिका सदसद्विवेकशालिनी मानश्चित्तसमुन्नतिस्तयोस्ताभ्यां वा तत्त्वेन याथार्थ्येन वृत्तिर्वर्तनं यस्य सः। यद्वा मतिः स्वविवेकः मानं शास्त्रप्रमाणं तयोस्तत्त्वेन याथार्थ्येन वृत्तिर्वर्तनं यस्य। प्रतिपदेति प्रतिपदं प्रतिस्थानं पक्षाणामात्मीयानामग्रणीरग्रगामी। तादृशो भवान्। विभातीति शोभत इति। द्विपदत्वपक्षे तु यथा तिग्मरुचिः तिग्मास्तीक्ष्णा रुचयः किरणा यस्य स सूर्यः। अप्रतापः अनुष्णोऽतथातापकारी। विधुश्चन्द्रः। अनिशाकृत् न रात्रिकृत्। विभः विगता प्रणष्टा भा श्रीर्यस्य स दीप्तिरहितः अथ च विभातीति विभः शोभनः। मधुः वसन्तः। अलीलः विहारशून्यः। मतिमान् प्रशस्तबुद्धिः। अतत्त्ववृत्तिः न तत्त्वे परमात्मनि वृत्तिर्व्यापारो यस्य यद्वा अतत्त्वे असारभूतवस्तुनि वृत्तिर्व्यापारो यस्य। प्रतिपद् प्रथमा तिथिः। अथ च अपक्षाग्रणीः न पक्षस्य अग्रणीरादिभूता इति विरोधाभासो व्यङ्ग्यः। विरोधपरिहारश्चैकपदत्वेन। लक्ष्ये लक्षणमाह अत्रेति। अत्रेति काव्ये। एकैकस्य प्रत्येकस्य। पदस्य तिग्मरुचिरप्रताप इत्यादेः। द्विपदत्वे पदद्वयत्वेन ग्रहणे यथा तिग्मरुचिः अप्रताप इत्यादि विरोधाभासः विरोधाभासा-

लङ्कारो व्यङ्ग्य इति। प्रथममैकपद्येन प्राकरणिकार्थप्रतीतौ वाच्यतार्थस्य ततो द्विपदताऽऽभासेन विरोधाभासव्यञ्जनमिति। प्रकरणादिना प्रथमेऽर्थे एवाभिधाया नियमनान्न विरोधाभासस्य वाच्यता। शब्दानां परिवृत्यसहत्वेन व्यङ्ग्यस्य शब्दशक्तिमूलकत्वमपि। न हि तिग्मरुचिरप्रताप इत्येतस्य स्थानं तीक्ष्णशोभनप्रताप इति कथनेऽपि द्विपदता वा विरोधाभासः सम्भवतीति। द्विपदत्वज्ञानोपायस्तु भावुकानुसन्धानमेव। द्वितीयार्धेन विरोधो यत्र प्रथमार्धेन समाधानम् न ह्याभासताप्रयोजकस्य पूर्वपरत्वयोर्विशेषः। न च द्विपदत्वज्ञाने विरोधस्य वाच्यत्वमेव भवति अप्रकृतत्वेन तस्य व्यञ्जनाया एव विषयत्वात् अभिधायाः प्रकृतार्थे एव प्रकरणादिना नियमनात्। न हि विरोधस्य सर्वत्र व्यङ्ग्यत्वमेव चिन्त्यम्। विरोधव्यञ्जकस्य अपि शब्दादेर्भावे वाच्यत्वं तदभावे व्यङ्ग्यत्वमिति प्रदीपे।

[ वृत्तिः ] अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो।
अहितः सहितः साधुयशोभिरसतामसि ॥५६॥

अत्रापि विरोधाभासः।

[ कमला० ] पदैक्येऽपि विरोधव्यङ्ग्यमाह अमित इति। सङ्ग्रामात्प्राप्तैरुत्कर्षैरमितोऽपरिमितः। न चार्थभेदाद्विरोधासम्भवः। तत्कालविरोधज्ञानस्य सत्त्वात्। अमित इति पञ्चमी विभक्त्यन्तम्। अपरिमितात्सङ्ग्रामादित्यर्थो वा। मितं मानेन युतः समितोऽमितो मानहीन इति विरोध इति देवनाथः। शत्रुमित्रयोर्हर्षं द्यति खण्डयति ददाति वेति हर्षदः। असतामहितो यशोभिः सहित इत्यन्वयः। अपिशब्दाद्यभावे विरोधो व्यङ्ग्यः सोऽप्यप्रकृतत्वात्।

[ सरि० ] न केवलं द्विपदत्वेऽपितु पदैक्येऽपि विरोधं व्यङ्ग्यमुदाहरति अमित इति। हे हर्षदप्रभो समितः प्राप्तैः उत्कर्षैः अमितः असताम् अहितः साधुयशोभिः सहितः असि इति अन्वयः। हर्षं मुदं द्यति खण्डयति शत्रूणां ददाति मित्रेभ्य इति हर्षदस्तत्सम्बुद्धौ। हे प्रभो! निग्रहानुग्रहसमर्थ! भवान्। समितः युद्धात्। प्राप्तैः उपलब्धैः। उत्कर्षैः अतिशयताभिः। अमितः मितं मानं तद्रहितः अनवच्छिन्नः। असतां दुष्टानाम्। अहितः निग्राहकः। साधुयशोभिः साधुभिरुत्कृष्टैर्यशोभिः कीर्तिभिः। सहित मण्डितः। असि वर्तसे इति प्राकरणिकोऽभिधेयोऽर्थः। तत्र मितं मानं तद्रहितस्ततसहितश्च अहितः सहितश्चेति विरोधो व्यङ्ग्यः अप्रकृतत्वात्। विरोधाभासश्च पदैक्येऽपि। न हि सर्वत्र विरोधस्य व्यङ्ग्यत्वमेव। तस्याऽप्यपिशब्दादेर्व्यञ्जकस्य भावे वाच्यत्वं तदभावे एव व्यङ्ग्यत्वमभिधायाः प्राकरणिकेऽर्थे नियमनात्। वाच्यत्वञ्च यथा तीक्ष्णरुचिरप्यप्रतापः

इत्यादिकथने। लक्ष्ये लक्षणमाह अत्रापीति। अत्र काव्येऽस्मिन्। अपि च। विरोधाभासः विरोधस्याप्राकरणिकत्वेन व्यङ्ग्यत्वमिति अभङ्गेऽपि पदे।

[ वृत्तिः ] निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥५७॥

अत्र व्यतिरेकः। अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता।

[ कमला० ] निरुपादानेति। उपादानानां चित्रकाराणां सम्भारं समूहो मसीवर्त्यादि। तद्रहितं जगदेव चित्रं नानाकारं लेख्यञ्च भित्तिशून्ये देशे प्रगटयते कलाचन्द्रिका कौशलञ्च। व्यतिरेक इति व्यङ्ग्य इत्यनुषङ्गः। अन्ये हि शिल्पिनो मश्यादिना भित्तौ चित्रं कुर्वन्ति शूली त्वन्यथैवेति अप्रकृतेन व्यङ्ग्येनालेख्येन व्यङ्ग्यात्तत्कर्तुरप्रकृतात्प्रकृतस्य शूलिन उत्कर्षो ज्ञाप्यते। ननु वाच्योपेक्षोपमादेः प्राधान्यात्कथमलङ्कारताऽत आह अलङ्कार्यस्येति। श्रमणः संन्यासी। तत्र यथा ब्राह्मणत्वं संन्यासित्वञ्च तथा रसम्प्रति गुणत्वादलङ्कारत्वं वाच्यापेक्षया च प्राधान्याद् भावध्वनित्वमित्यर्थः।

[ सरि० ] शब्दशक्त्या वस्तुध्वननपरम्परयाऽलङ्कारध्वननमुदाहरति निरुपादानेति। अभित्तौ एव चित्रम् जगत् निरुपादानसम्भारम् तन्वते तन्वते कलाश्लाघ्याय तस्मै शूलिने नमः इत्यन्वयः। अभित्तौ शून्ये। एव इत्यवधारणे चित्रम् नानाकारम्। जगत् सचराचरलोकम्। निरुपादानसम्भारं निर्गतः रहितः उपादानस्य उपकरणस्य सम्भारः सङ्ग्रहो यत्र तद्यथा स्यात्तथा। उपकरणादिकं विनैवेति। तन्वते विस्तारयते। कलाश्लाघ्याय कलया चन्द्रिकायाः षोडशो भागस्तया श्लाघ्यः कमनीयस्तथाविधाय। तस्मै अनिर्वचनीयस्वरूपाय। शूलिने शूलधारिणे महादेवाय। नमः इति प्रकृतोऽर्थः। व्यञ्जनया तु अभित्तौ फलकादिकं विनैव। जगच्चित्रम् जगदेव चित्रमालेख्यम्। निरुपादानसम्भार तूलिकामस्यादिकं विनैव। तन्वते सर्जते। कलाश्लाघ्याय कला आलेख्यक्रियाकौशलं तेन श्लाघ्याय प्रशस्तक्रियाय। तस्मै सर्वोत्कृष्टकलाविदे। शूलिने नम इति। अत्र हि महादेवस्य तूलिकाद्युपादानसाहाय्येन फलकादावेवालेख्यकारिभ्यः कलावद्भ्यः उत्कर्षः प्रतीयत इति व्यतिरेकालङ्कारो व्यङ्ग्यः। तत्रापि चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलकत्वम्। उपमानादुपमेयस्यौत्कर्ष्यं व्यतिरेकः। अप्रकृततया व्यङ्ग्येनालेख्येनानुभावेन व्यङ्ग्यात्स्वकर्तुरप्रकृताच्छूलिनो व्यतिरेको व्यङ्ग्यः। न चास्य शिवविषयकरतिं प्रति गुणत्वं वाच्यापेक्षया प्राधान्येन तद्ध्वनित्वाक्षतेरित्युद्द्योते स्पष्टम्।

व्यङ्ग्यानां प्राधान्याद्धि कथमलङ्कार्यस्यालङ्कारता सम्भवतीत्यपेक्षायामाह अलङ्कार्यस्येति। अलङ्कार्यस्य अलङ्करणीयस्य। ब्राह्मणश्रमणन्यायेन श्रमणो हि संन्यासी त्यक्तशिखासूत्रादेरुज्झितसन्ध्यादि नित्यकर्मणो ब्राह्मणत्वं पूर्वकालिकब्राह्मणत्वमादायैव। यथोक्तं विद्यायोनिकर्मभिर्ब्राह्मणत्वमिति। तत्र विद्या वेदवेदाङ्गादीनां यथाशास्त्रं साविकारमध्ययनम्। यो निर्ब्राह्मण्यो ब्राह्मणाज्जन्म। कर्म वेदोक्तनित्यनैमित्तिककृत्यनिर्वाहश्चेति उदयास्तमय यावन्न विप्रः क्षणिको भवेदित्यादि रूप एव। श्रमणे हि तदभावान्न तस्य तदा ब्राह्मणत्वं किन्तु पूर्वकालिकब्राह्मणत्वमादायैवेति। तेन न्यायेन। अलङ्कारतेति। इत्थमुक्तं भवति। उपमादीनां व्यङ्ग्यानां प्राधान्येन तदा अलङ्कार्यस्यालङ्कारत्वाभावात्कथं तस्यालङ्कारत्वमित्यपेक्षायामुच्यते यथा हि तदा ब्राह्मण्याद्धीनोऽपि श्रमणः पूर्वकालिकब्राह्मणत्वमादाय ब्राह्मणश्रमण इति कथ्यते तथैवालङ्कार्यस्य व्यङ्ग्यतादशायामलङ्कारताभावेऽपि वाच्यतादशायां विद्यमानमलङ्कारत्वमादायालङ्कारत्वव्यपदेश इति। अयम्भावः—पूर्वोक्तोदाहरणेषु उपमादीना सति व्यङ्ग्यत्वेन प्राधान्ये कथं तेषामलङ्कारत्वं तेषामेवालङ्कार्यतयान्माललङ्करणात्। यदि च न तेषां प्राधान्यं तदा कथं ध्वनित्वं प्रधानत्वेनैव ध्वनित्वव्यवहारः इति चेदित्थम् व्यङ्ग्यत्वेन तेषां प्राधान्येऽपि वाच्यतादशायां तेषामलङ्कारत्वाद्यथा हि पूर्वकालिकब्राह्मणत्वमादाय श्रमणोऽपि ब्राह्मणश्रमण इत्युच्यते तथैव तेषामलङ्कारव्यपदेश इति। तेषामलङ्कारध्वनित्वञ्चालङ्कारपदेन तद्योग्यताया विवक्षितत्वादेव। न च रसादिध्वनावलङ्कारध्वनिप्रसङ्गो रसादिध्वनेरलक्ष्यक्रमत्वात्। व्यङ्ग्यस्य प्राधान्याप्राधान्येऽपि वाच्यापेक्षयैव न तु रसापेक्षया तदपेक्षया तु सर्वत्र तस्य गुणीभाव एव। तेनोपमादीनां रसापेक्षयाऽलङ्कारत्वं वाच्यापेक्षया प्राधान्यमिति सर्वमुपपद्यते इति प्रदीपादौ स्पष्टम्। शिष्यबुद्धिवैशद्याय बहूदाहृतमिति बालबोधिन्याम्।

[ वृत्तिः ] वस्तुमात्रं यथा—

> पथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।
> उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु॥५८॥
>
> [ पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।
> उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस॥ ]

अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते।

[ कमला० ] अलङ्कारव्यङ्ग्यतामुक्त्वा वस्तुतस्तामाह पथिअ इति। काचित्पथिकं प्रत्याह—

पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।
उन्नतपयोधरान् प्रेक्ष्य यदि वससि तद् वस ॥

संस्तरमास्तरणं कामशास्त्रञ्च प्रस्तराः पाषाणा मूर्खाश्च। पयोधरा मेघाः स्तनौ च पओहर इति प्राकृते द्वित्वबहुत्वयोः समं रूपम्। अत्रेति इङ्गितानभिज्ञाक्रान्ते ग्रामे मेघे उद्दीपके चोन्नतस्तनदर्शनात्कोऽन्यत्र गच्छेदिति अभिप्रायो व्यङ्ग्यो वस्तु स च पयोधरादिनानार्थसत्त्वे एवेति शब्दशक्तिमूलतेत्यर्थः। न चोपमा द्वयोर्भेदाग्रहात्।

[ सरि० ] इत्थं शब्दशक्तिमूलकानुरणनरूपव्यङ्ग्यध्वनिमुदाहृत्य सम्प्रति तादृशवस्तुध्वनिमुदाहरति पथिअ इति। द्व्यर्थैः पदैः रहस्यं प्रकटयन्त्याः कस्याश्चित्स्वयंदूत्याः पथिकं प्रति कथनमिदम्। हे पथिअ ( पथिक पत्थरत्थले ( प्रस्तरस्थले ) एत्थ अत्र गामे ( ग्रामे ) ण ( न ) मणं ( मनाक् सत्थरं ( सस्तरम् ) अत्थि ( अस्ति ) जइ ( यदि ) उण्णअपओहरं ( उन्नतपयोधरम् ) पेक्खिऊण ( प्रेक्ष्य वससि ता ( तदा ) वस इत्यन्वयः। हे पथिक ! हे अध्वनीन ! प्रस्तरस्थले प्रस्तराणां पाषाणानां स्थले तन्मये। अत्र अस्मिन्। ग्रामे पल्लौ न तु नगरे। स्रस्तरमास्तरणं कटादिकम्। न नैव। मनाक् स्वल्पमपि। अस्ति लभ्यते। नात्र शय्यादिकं लभ्यते तेन नैवायं विश्रामार्हः। यदि। उन्नतपयोधरम् उन्नतं वार्षुकं पयोधरं मेघम्। प्रेक्ष्य वीक्ष्य वर्षयाऽग्रे गन्तुं न शक्यते इति विचार्य। वससि रात्रिं यापयसि। तदा तेन हेतुना। वस इति प्रकृतोऽर्थः। व्यङ्ग्यार्थः सहृदयविषयस्तु प्रस्तरस्थले प्रस्तराः मूर्खा आकारेङ्गिताद्यनभिज्ञा अमर्मज्ञाश्च परेषाम् तादृशजनाधिष्ठिते ग्रामे मनागपि सस्तरं शास्त्रं कामशास्त्रज्ञानं नास्ति कुतः साहित्यं तु। तेन यदि त्वं युवतिमर्मज्ञः तदा उन्नतम् अनुपमर्दितं पयोधरं कुचं कामोद्दीपकं मेघञ्च वीक्ष्य यदि रोमाञ्चितोऽसि उपभोगक्षमोऽसि तदा वसेति। कुत्रोपभोगसम्भव इति त्वया न चिन्तितव्यम्। अत्र प्रस्तरे एव तत्सम्भवतीति। वृत्तं जघनविपुला। तत्र वस्तुव्यङ्ग्यमाह अत्रेति। अत्र काव्येऽस्मिन्। यदि उपभोगक्षमः उपभोगः सुरतं तस्मिन् क्षमस्तत्पर इच्छुको वा समर्थो वा। असि विद्यसे। तदा तद्धेतोः। आस्स्व तिष्ठ न तु विश्रामाशया। इति इत्यम्। व्यज्यते ध्वन्यते इति। तच्च पओहरसत्थरशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलमेव। कामकलानभिज्ञैरधिष्ठितेऽत्र स्थले अनुपमर्दितकुचयुगलोपास्थितौ मेघाद्युद्दीपने सत्यपि को नाम युवाऽन्यत्र गन्तुमुत्सहेत इति वस्तु व्यज्यत इति वस्तुव्यङ्ग्यस्योदाहरणमिदम्। नात्र कुलजाकथने उक्तार्थानवभासनाद् वक्तृप्रतिपाद्यौचित्याद्यपेक्षणेनार्थव्यञ्जकताऽपीष्टेति वाच्यं पथिकं गतिनिवृत्तौ शब्दा-

न्वयाद्यनुविधानस्य स्फुटत्वात् । शब्दार्थयोः स्वस्वव्यञ्जनायामन्योन्यसहकारिता तु भवत्येव। तत्र भेदस्तु प्राधान्यादेव। न चात्र वाच्यव्यङ्ग्ययोः परस्पर-सम्बन्धाभावेनासम्बद्धार्थकत्वापत्तिरिष्टत्वात् । तयोराच्छाद्याच्छादकभावस्य सम्बन्धत्वात् । न चात्रोपमाविषयत्वं शङ्क्यं द्वयोः समप्राधान्ये एव तदवकाशादत्र तु वाच्यमभिभूयैव व्यङ्ग्यस्य स्थितत्वात् । न चात्रालङ्कारो व्यङ्ग्यस्तेन किन्तु वस्त्वेवेति प्रदीपसुधासागरादिषु स्पष्टम् । अत्र श्लिष्टपदानां बहुत्वाद्वाक्यत्वे वाक्य-प्रकाश्यत्वमिति बालबोधिन्याम् ।

[ वृत्तिः ] शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥५९॥

अविरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।

[ कमला० ] शनिरिति शनिर्ग्रहः अशनिस्तदभावो वज्रं वा । पुनः शब्दस्त्वर्थे । यत्र तु इत्यन्वयः । स उदारो महान् दाता वा । अनुदारस्तद्भिन्नः अनुगतदारश्च धनप्राप्तौ प्रवासाभावात् स्त्रीयुतत्वम् । न चात्र विरोधाभासो व्यङ्ग्यः पूर्वार्धे विषयैक्याभावात् । तदुक्तं विरुद्धाविति शब्दतो विरुद्धावेकं कार्यं हननं व्यत्ययः कदाचिच्छनिः कदाचिदशनिरिति क्रमः । तेन पूर्वार्धमेवोदाहरणं परार्धेऽप्यर्थैकत्व-शब्देन विरोधोक्तेः । समुच्चयार्थत्वे विरोध एव व्यङ्ग्य इति देवनाथः । तत्त्वं तु मूले व्यत्ययेन विरोधोक्तेः । सालङ्कारेण वस्तुनाऽमित्रेण त्वदनुवर्तने फलं वस्तुमात्रं व्यज्यतेऽत्रेति न दोषः ।

[ सरि० ] इत्थं वस्तुमात्रव्यङ्ग्यध्वनिमुदाहृत्य सम्प्रति अलङ्कारोपरक्तस्य वस्तुनो व्यङ्ग्यत्वमुदाहरति शनिरिति । हे नरेन्द्र ! त्वम् यस्मै कुप्यसि तम् शनिः अशनिः च उच्चैः निहन्ति पुनः यत्र प्रसीदसि सः उदारः अनुदारः च भाति इत्यन्वयः । हे नरेन्द्र ! नराणां जनानामिन्द्रः प्रभुस्तत्सम्बुद्धौ हे राजन् ! त्वम् भवान् । यस्मै यस्योपरि । क्रुधद्रुहे······इति चतुर्थी । कुप्यसि क्रुध्यसि । तं तादृशं जनम् । शनिः शनिग्रहः । अशनिः वज्रम् । चेति वार्थे । उच्चैः अतिशयेन । निहन्ति पीडयति नाशयति । पुनः तद्विपरीतम् । यत्र यस्योपरि । प्रसीदसि अनुग्रहं करोषि । सः तादृशो जनः । पुनरिति त्वर्थे इत्यपि व्याख्या । उदारः उदात्तस्वभावः । अनुदारः उदारताहीनः यद्वा अनुगतदारः । च अपि । भाति शोभत एवेति प्रकृतोऽर्थः । वस्तुव्यङ्ग्यश्चात्र किमित्याह अत्रेति । अत्र काव्येऽस्मिन् । विरुद्धौ शनिः शनिग्रहः अशनिः तद्विरुद्धः नञोऽसुन्दरादाविव विरोध्यर्थकत्वात् गतौ अपि । त्वदनुवर्तनार्थम् तव अनुवर्तनं कृपाभिलाषयाऽनु-जीवनम् तदर्थम् । एकं समानमेव निहननरूपम् । कार्यं क्रियाम् । कुरुतः विधत्तः

इति इत्थम्। ध्वन्यते व्यज्यते इति। इत्थमुक्तं भवति। अत्र अशनिपदस्य शनिविरोध्यर्थावगतौ विरुद्धावपि तौ त्वदनुवर्तनाय निहननरूपं समानमेव कार्यं सम्पादयत इति वस्तु ध्वन्यते। तच्च द्वयोरेव परिवृत्त्यसहत्वेन शब्दशक्तिमूलकम्। न त्वत्र विरोधालङ्कारः द्वयो सामानाधिकरण्याभावाद् विरोधस्य च तत्रैव विश्रान्तेः। हननक्रियायां द्वयोरेव समुच्चयेनैवान्वयाच्च। उत्तरार्धे तु विरोध एव तत्र चकारस्य अप्यर्थे विरोधस्य वाच्यत्वात्समुच्चयार्थे तस्यैव व्यङ्ग्यत्वात्। सामानाधिकरण्याभावश्च एकधर्मिगतत्वेन शनित्वतद्भिन्नत्वयोरप्रतिपादनादेवेत्युद्द्योते स्पष्टम्। उदारानुदारयोस्तु तथाप्रतिपादनात्। भट्टाचार्यमते शन्यशन्योरुदारानुदारयोर्हननभानयोः चैकैकस्य कार्यस्य पृथक्त्वाद् द्वाभ्यां द्वाभ्यां निष्पाद्यत्वेन उभावधिकृत्य वृत्तिकारेण विरुद्धौ इत्युक्तम्। सङ्केतकारास्तु द्वितीयार्धं वस्तुध्वनेरुदाहरणत्वेन न गृह्णन्ति। वस्तुतस्तु पूर्वार्द्ध एव वस्तुध्वनेरुदाहरणं यतो हि त्वदनुवर्तनार्थं विरुद्धयोरपि शन्यशन्योः फलोत्प्रेक्षया विशिष्टत्वेन एककार्यकारित्वस्य वस्तुनोऽभिव्यक्तिस्तत्र। द्वितीयार्धे तु विरोधाभास एव व्यङ्ग्यो द्वयोरेव तथात्वेन भानादिति गोकुलनाथाः। पूर्वत्र श्लेषानुबन्धिनी शब्दशक्तिरुत्तरत्र विरोधशालिनी सैव मूलमिति पूर्वार्द्धे वस्तुध्वनेरुत्तरार्द्धेऽलङ्कारध्वनेर्विषयत्वेन अलङ्कारोपरक्तवस्तुध्वनेरुदाहरणमिदमिति।

[ वि० वृ० ] तेष्वाद्यमाह। अलङ्कार इति।

वस्त्वेवेत्यनलङ्कारं वस्तुमात्रम्। क्रमेणोदाहरणानि—

> सोऽयं वसन्तसमयः समियाय यस्मिन्
> पूर्णं तमीश्वरमुपोढनवानुरागम्।
> गूढग्रहा रुचिरया सह राधयाऽसौ
> रङ्गाय सङ्गमयिता निशि पौर्णमासी॥

अत्र प्राकरणिकश्रीकृष्णवर्णनेऽप्राकरणिकचन्द्रवर्णनमसम्बद्धं मा भूदिति तयोश्चन्द्रकृष्णयोरुपमानोपमेयभावः कल्प्यते। तेनात्रोपमालङ्कारो व्यङ्ग्यः। अलङ्कार्यस्याप्यलङ्कारता ब्राह्मणश्रमणन्यायात्। एवमन्ये च।

> अध्वानं व्रज धूर्त मा वृणु पुरः पश्याम्बरान्ते दृशं
> निक्षिप्योरुपयोधरोन्नतिमिमां नष्टेन्दुलेखाश्रियम्।
> नव्या कञ्चुलिकोज्ज्वला तनुरियं रागेण वल्गुश्रिया
> यावन्न स्तिमिता सती कुटिल मे वैवर्ण्यमापद्यते॥

अत्र शब्दादेव स्वाभियोगरूपं वस्तु।

[ कारिका ] अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ॥३९॥
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ।

वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥४०॥
वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः ॥

[ वृत्तिः ] ( अर्थो द्विविधः—केवलमिदं स्वप्रथमकल्पितश्चेति । ) तत्र स्वतःसम्भवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन सम्भाव्यमानः । कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः । वस्तु वाऽलङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः ।

[ कमला० ] शब्दशक्तिमूलं द्विविधमुक्त्वाऽर्थशक्तिमूलस्य भेदानाह अर्थशक्तीति । उद्भवेऽपीति पाठे ध्वनौ इति शेषः । कवेः प्रौढोक्त्या चर्वणानुगुणोक्त्या सिद्धः कल्पितो यो वक्ता तस्य प्रौढोक्त्या सिद्धः यद्यपि कविनिबद्धवक्तुरुक्तिर्न पृथगस्ति तथापि चमत्कारविशेषार्थं पृथगुक्तिरिति प्राञ्चः । तत्वं तु वृथैवेति । बहिरपीति लोकसिद्ध इत्यर्थः । अपर इति वस्तुरूपोऽलङ्काररूपश्चार्थः । प्रत्येकं स्वतःसम्भवी एकः कविनिर्मितः कविनिबद्धवक्तृनिर्मितश्चेति द्विविधोऽन्य इति सर्वस्त्रिविधः । तस्य त्रिविधस्य वस्तुनोऽलङ्कारस्य च वस्तुव्यङ्ग्यमलङ्कारो वेति द्वादशविध इत्यर्थः ।

[ सरि० ] इत्थं शब्दशक्त्युद्भवध्वनिभेदं सप्रपञ्चं निरूप्य सम्प्रति अर्थशक्त्युद्भवध्वनिनिरूपणाय सम्बद्धकारिकामवतारयति अर्थेति अर्थशक्त्युद्भवः व्यञ्जकः अर्थः स्वतःसम्भवी वा कवेः प्रौढोक्तिमात्रात् सिद्धः वा तेन उम्भितस्य प्रौढोक्तिमात्रात् सिद्धः वस्तु वा अलङ्कृतिः वा इति षड्भेदः असौ यत् वस्तु अथवा अलङ्कारम् व्यनक्ति तेन अयम् द्वादशात्मक इत्यन्वयः । अर्थशक्त्युद्भवः अर्थस्य या शक्तिः शब्दाच्छक्तेरर्थशक्तेस्तु साचिव्यमेवेति काव्यप्रकाशदर्पणे सैव उद्भवो योनिर्यस्य स तादृशः व्यञ्जकः व्यङ्ग्यार्थद्योतकः । अर्थः । अपि इति समुच्चये । स्वतः स्वयमेव । सम्भवी सिद्धत्वेन दृष्टो लोकेऽपि इत्येकः । वा इति चार्थे । कवेः काव्यकृतः । प्रौढोक्तिमात्रात् चमत्कारानुगुण्यमात्रेण न तु बहिरपि सम्भवात् । सिद्धः सम्पन्नः इत्यपरः । तेन कविना । उम्भितस्य पूरितस्य उपस्थापितस्य नायकादेरिति । प्रौढोक्तिमात्रात् सिद्धः । इति तृतीयः । वस्तु वस्तुरूपः । वा इति पक्षान्तरे । अलङ्कृतिः अलङ्काररूपः । इति इत्थम् । षड्भेदः षड्विधभेदात्मकः । षड्विधत्वञ्च यथा—१. स्वतःसम्भविवस्तुरूपः ।

२. कविप्रौढोक्तिमात्रसिद्धवस्तुरूपः । ३. कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुरूपः । ४ स्वतःसम्भव्यलङ्काररूपः । ५. कविप्रौढोक्तिमात्रसिद्धालङ्काररूपः । ६. कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धालङ्काररूपश्चेति । असौ षड्विधोऽर्थः । यत यथा । वस्तु वृत्तम् । अथवेति पक्षान्तरे । अलङ्कारम् अलङ्कृतिम् । व्यनक्ति व्यङ्ग्यत्वेनाक्षिपति । तेन तस्माद्धेतोः । अयम् अर्थशक्त्युद्भवव्यङ्ग्यध्वनिः । द्वादशात्मकः द्वादशविधो भवतीति । कारिकां व्याख्याति स्वत इति । स्वतःसम्भवी इति न केवलं भणितिमात्रनिष्पन्नः भणितिः कथनचातुरी तन्मात्रेण निष्पन्न उत्पन्नः । यावत् । बहिरपि लोकेऽपि । औचित्येन योग्यतया सम्भाव्यमानः गृह्यमाणः । न केवलं कथनवैचित्र्यमात्रः सिद्धः अत्यन्तासत्यप्यर्थे शब्दस्य ज्ञानजनकत्वात् अपितु लोकेऽपि प्रसिद्ध इति । कविना काव्यकारेण । प्रतिभामात्रेण केवलं प्रज्ञयैव । बहिः लोके । असन् अनस्तित्वः । अपि निर्मितः कल्पितः । वा । कविनिबद्धेन कविनोपस्थापितेन । वक्त्रा नायकादिना । निर्मितः कथितः । इति इत्थम् । अपरः स्वतःसम्भविभिन्नः । द्विविधः द्विप्रकारकः । इति इत्थम् । त्रिविधः त्रिप्रकारकः । असौ त्रिविधो ह्यर्थः । वस्तु वृत्तम् । वा । अलङ्कारः इति इत्थम् । षोढा षड्विधः । व्यञ्जकः व्यङ्ग्यप्रत्यायकः । तस्य षड्विधस्यार्थस्य । वस्तु वा अलङ्कारः । व्यङ्ग्यः प्रतीतिविषय । द्वादशभेदः द्वादशप्रकारकः । अर्थशक्त्युद्भवः अर्थशक्तिमूलः । ध्वनिरिति । अयमाशयः—अर्थो द्विविधः स्वतःसम्भवी प्रौढोक्तिसिद्धश्च । अपरो द्विविधः—कविप्रौढोक्तिसिद्धः कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्चेति । तेन त्रिविधोऽर्थः ।

अत्रेदमवधेयं यत्कविकल्पितवक्त्राऽपि न कविभिन्नः तथापि तस्य विषयेण सह प्रत्यक्षसम्बन्धेन कवितोऽप्यनुरागाधिक्यात्तदुक्तिरधिकं चमत्करोतीति तस्य पृथगेव प्रतिपादनम् । ध्वन्यालोककारिकायां तु अर्थशक्त्युद्भवध्वनेर्द्वैविध्यमेवोक्तं स्पष्टतः । यथोक्तम् —

> प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।
> अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥ इति ।

किन्तु वृत्तिकारस्तु तत्रापि अर्थस्य त्रैविध्यमेवाह । त्रिविधस्याप्यस्य प्रत्येकं वस्त्वलङ्कारभेदेन द्वैविध्यात् षड्विधा व्यञ्जकोऽर्थः । स च प्रत्येकं वस्तु वाऽलङ्कारं ध्वनयतीति द्वादशविधोऽर्थशक्तिमूलध्वनिरिति । तदित्थम्—

१. वस्तुरूपस्वतःसम्भव्यर्थाक्षिप्तवस्तुरूपः ।
२. ,, ,, प्तालङ्काररूपः ।
३. अलङ्कार ,, ,, ,, वस्तुरूपः ।
४. ,, ,, ,, ,, प्तालङ्काररूपः ।
५. वस्तुरूपकविप्रौढोक्तिसिद्धार्थाक्षिप्तवस्तुरूपः ।
६. ,, ,, प्तालङ्काररूपः ।
७. अलङ्काररूप ,, वस्तुरूपः ।
८. ,, ,, ,, प्तालङ्काररूपः ।
९. वस्तुरूपकविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थाक्षिप्तवस्तुरूपः ।
१०. ,, ,, प्तालङ्काररूपः ।
११. अलङ्काररूप ,, ,, ,, ,, ,, वस्तुरूपः ।
१२. ,, ,, ,, ,, प्तालङ्काररूपः ।

इति द्वादशविधोऽर्थशक्त्युद्भवो ध्वनिः ।

[ वृत्तिः क्रमेणोदाहरणम्—

अलसशिरोमणि धुत्ताणं अग्गिमो पुत्ति धणसमिद्धिमओ ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥६०॥

[ अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥ ]

अत्र ममैवोपभोग्य इति वस्तुना व्यज्यते ।

[ कमला० ] स्वतःसम्भविवस्तुना वस्तुव्यङ्ग्यमाह **अलसेति** । अलसशिरोमणिर्धूर्तानामग्रणीः पुत्रि धनसमृद्धिमयः । इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता । अलसत्वादप्रवासी । धूर्तः सुरतविदग्धः । धनित्वात्सुखी । प्रफुल्लेति स्वस्याऽपि धूर्तत्वात्समानशीलः व्यसनेषु सख्यमित्युक्तेः । तदुक्तं ममैवेति । हर्षादिवस्तुना ममोपभोग्य इति वस्तु व्यज्यत इत्यन्वयः ।

[ सरि० ] तत्र स्वतःसम्भवित्यर्थे वस्तुना वस्तुव्यङ्ग्यमुदाहरति । विवाहप्रसङ्गे कुमार्या अभिमतज्ञानाय नियुक्तायाः कस्याश्चिन्नियोक्त्रीं प्रति उक्तिरियम् । पुत्ति ! ( पुत्रि ) अलसशिरोमणि ( अलसशिरोमणिः ) धुत्ताणं ( धूर्तानाम् ) अग्गिमो ( अग्रिमः ) धनसमिद्धिमओ ( धनसमृद्धिमयः ) इअ ( इति ) भणिएण ( भणितेन ) णअङ्गी ( नताङ्गी ) पप्फुल्लविलोअणा ( प्रफुल्लविलोचना ) जाआ ( जाता ) इत्यन्वयः । हे पुत्रि ! वत्से ! अलसशिरोमणिः अलसानां निरुद्योगानां

शिरोमणिः श्रेष्ठः अरसेति पाठे नीरसेषु श्रेष्ठ इति। अलसतया अन्यत्र गन्तुमनुत्सुकः सदा सान्निध्यस्थायीति। धूर्तानां चतुराणाम्। अग्रिम. अग्रगण्यः। धूर्तत्वेन रतेष्वनावृतगुणः सम्भोगेनातृप्त इति। धनसमृद्धिमयः प्रचुरवैभवशाली। प्रचुरतरधनवत्तया कृपणो नायिकान्तरासङ्गीति। इति इत्थम्। भणितेन भाषितेन। नताङ्गी लज्जयाऽवनतशिरस्का। प्रफुल्लविलोचना प्रफुल्ले विकसिते विलोचने नयने यस्याः सा। लोचनयोर्विकसनेन हर्षातिरेक इति। जाता सम्पन्नेति। तत्र वस्त्वाक्षिप्तवस्तुमाह अत्रेति। अत्र काव्येऽस्मिन्। वस्तुना प्रफुल्लविलोचनत्वेन वस्तुना। मम। एवेत्यवधारणे नान्यासामिति। उपभोग्यः उपभोगयोग्यः। इति इत्थम्। व्यज्यते ध्वन्यते। अयम्भावः अलसत्वात्प्रवासे वा नायिकान्तरावासे गन्तुमनिच्छुः धूर्तत्वात्सम्भोगातृप्तः धनसमृद्धिमतया कृपणो नार्यन्तरसम्पर्कायोग्य इति आत्मन एवानुकूलतया हर्षातिरेकेण प्रफुल्लनयनत्वेन मम एवायमुपभोग्यस्तेन ममानुकूलोऽयं वा इति प्रफुल्लनयनत्वेन वस्तुना स्वीकाररूपं वस्तु व्यज्यत इति स्वतःसम्भविना वस्तुनो वस्तुव्यङ्ग्यस्योदाहरणमिदम्। स्वतःसम्भवित्वञ्चास्य लोकेऽपि हर्षातिरेके लोचनयोः प्रफुल्लत्वस्य प्रसिद्धिर्वा ज्ञानमेवेति।

[ वृत्तिः ] धन्यासि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि॥ ११॥

अत्र त्वमधन्याऽहं तु धन्येति व्यतिरेकालङ्कारः।

[ कमला० ] स्वतःसम्भविवस्तुनाऽलङ्कारव्यङ्ग्यमाह धन्यासीति। गर्विताया एकस्याः पराजेयत्वादेकत्वं बह्वीनां बोधनात् सख्य इति बहुत्वम्। रतमध्येषु आदावन्ते वा यथा तथास्तु रतविशेषे तु वा। प्रियसङ्गमे आलिङ्गनादौ। विस्रब्धानि विश्वासादनर्गतानि मुञ्चमुञ्चेत्यादीनि यत्कथयस्यतो धन्याऽसि। अहन्तु कान्तेन नीवीं प्रति हस्ते प्रणिहितेऽर्पितु सङ्कल्पिते न त्वर्पिते रतादावेव किं पुनर्मध्ये किञ्चिदुक्तमपि यदि स्मरामि तदा शपामि सुखगौरवश्यान्नैव स्मरामीत्यर्थः। शपामीति शपथे शप इति नात्मनेपदम्। मिथ्यानिराशमात्रतया शपथाभावात्। शप उपालम्भ इत्यात्मस्पर्शस्यैव शपथत्वाद्। अत्रेति। ननु व्यतिरेकालङ्कार एवात्र व्यञ्जकः तत्कथमत्र वस्तु व्यञ्जकम्। उपमेयगतो ह्यलङ्कारः। स्वस्मिन् कथनाभावो न शाब्दः। व्यङ्ग्यत्वेऽपि तमनपेक्ष्य वस्तुन एव व्यङ्ग्यो न व्यतिरेक इत्यन्ये। अत्राधन्यत्वे विपरीतलक्षणेति केचित् विप्रलम्भार्थं धन्यत्वं विवक्षितमेवेत्यन्ये।

[ सरि० ] यत्र हि वस्तुरूपस्वतःसम्भव्यर्थेनालङ्कार आक्षिप्यते सोऽपि अर्थशक्त्युद्भवध्वनेरेको भेदः। तमेवोदाहरति धन्यासीति। रतिकथालापे स्वोत्कर्षं प्रकटयन्त्या कस्याश्चिदुक्तिरियम्। पद्यमिदं शाङ्गधरपद्धतौ विज्जिकाकृतत्वेनोद्धृतं दृश्यते। विज्जिका हि काचिन्नीलोत्पलदलश्यामा दाक्षिणात्या कवयित्री। या प्रियसङ्गमे अपि रतान्तरेषु विस्रब्धचाटुकशतानि कथयसि सा त्वम् धन्या असि सख्यः प्रियेण नीवीम् प्रति करे प्रणिहिते तु यदि किञ्चित् अपि स्मरामि शपामि इत्यन्वयः। काव्येऽस्मिन् वाक्यद्वयम्। पूर्वार्द्धे स्वरतोत्सववृत्तं सगर्वं कथयन्तीं सखीं प्रति वचनमुत्तरार्द्धे तु उपस्थिताः सखीः प्रति। या त्वम्। प्रियसङ्गमे प्रियस्य दयितस्य सङ्गमे गाढालिङ्गनादिरूपसमागमे। अपि इत्यवधारणे। रतान्तरेषु सुरतमध्येषु विस्रब्धचाटुकशतानि विस्रब्धानि विश्वासयुक्तानि चाटुकशतानि रिरंसोद्दीपकप्रियवाक्यानि। कथयसि स्मृत्वा स्मृत्वाऽनुवदसि तेनेदमुक्तं मयेत्थं प्रत्युक्तमिति। तेन त्वं धन्या भाग्यवती। असि विद्यसे। सख्यः! हे वयस्याः! प्रियेण कान्तेन। नीवीम् कटिवस्त्रग्रन्थिम्। प्रति उद्दिश्य। करे हस्ते। प्रणिहिते अर्पणाय उद्यते न त्वर्पिते एव अवाचकत्वापत्तेरभिप्रायस्य लघुत्वापत्तेश्च। तु इति अप्यर्थेऽव्ययानामनेकार्थत्वात्। किमुतार्पित एवेति। यदि। किञ्चित् किम्मात्रमपि स्वल्पमपि। स्मरामि अभिजानामि। चेत् शपामि शपथं करोमि। भवतीनां शपथोऽहं तु नैव किञ्चित्स्मरामीत्याशयः। शपामीत्यत्र शपथे शप इति नात्मनेपदं शपथस्यामुख्यत्वाच्च। कार्यमपि नैव मे स्मृतिपथमायाति किमुत वाक्यमिति। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। त्वम् अधन्या मन्दभाग्या, या हि सुरते लीनाऽपि आत्मानं न विस्मर्तुं प्रभवसि। अहं तु धन्या भाग्यवती या रतादावेव तन्मयत्वमायामि इति व्यतिरेकालङ्कारः, उपमानादुपमेयस्योत्कर्षरूपार्थालङ्कारः व्यङ्ग्यः प्रतीतिविषयः इति। वाच्येन वस्तुना स्वस्य महानन्दाप्तिसूचनद्वारा त्वमधन्याऽहं तु धन्येति व्यतिरेकालङ्कारो ध्वन्यत इति। उपमानभूताया रतमध्येऽपि विषयान्तरवेदनेनातन्मयतया अधन्यत्वमुपमेयभूतायास्तु रतादावेव तन्मयत्वाद् धन्यत्वमित्युपमानादुपमेयस्योत्कर्षः। नात्र धन्यासीत्यत्राधन्यत्वे विपरीतलक्षणा शङ्क्या विप्रलिप्सयाऽपि धन्यत्वस्यैव विवक्षितत्वात्। ननु धन्यासीति व्यञ्जकस्त्वत्पदार्थस्य व्यतिरेकालङ्कार एव तत्कथं वस्तुनो व्यञ्जकत्वमिति न शङ्क्यम्। सम्बोध्य व्यतिरेको न वाच्यः आत्मनि कथनाभावस्य अशाब्दत्वात्। सत्यपि व्यङ्गयत्वे तदनपेक्षया वाच्येन वस्तुमात्रेण व्यतिरेकव्यञ्जनादिति प्रदीपे।

[ वृत्तिः ] दर्पान्धगन्धगजकुम्भकपाटकूट
सङ्क्रान्तिनिघ्नघनशोणितशोणशोचिः।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः॥६२॥

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात् करिष्यते इति वस्तु।

[ कमला० ] स्वतःसम्भविनोऽलङ्काराद्वस्तुव्यङ्ग्यमाह दर्पेति। दर्पो मद-गन्धस्तेनान्धो यो गन्धगजः 'यस्य गन्धः समाघ्राय न तिष्ठन्ति प्रतिद्विपाः। तं गन्धहस्तिनं विद्यान्नृपतेर्विजयावहम्'॥ इत्युक्तलक्षणः तस्य कुम्भ एव कपाटं विशालत्वाद् दुर्भेद्यत्वाच्च, तस्य कूटमग्रं तस्मात्सङ्क्रान्तं निघ्नं सम्बद्धं घनं निविड यच्छोणितं तेन शोणं शोचिस्तेजो यस्य। कोपेन कषाया रक्ता कान्तिर्यस्येति कटाक्षविशेषणम्। अत्रेति। सादृश्यस्य लोके सत्त्वादुपमालङ्कारोऽत्र स्वतःसम्भवी। न चात्रोत्प्रेक्षया नोपमेति वाच्य सम्भावनाभावात्तादात्म्याध्यवसायाभावाच्च।

[ सरि० ] अलङ्काररूपस्वतःसम्भव्यर्थेन वस्तुव्यङ्ग्योऽर्थशक्तिमूलध्वनेरपरो भेदः। तमुदाहरति दर्पेति। युधि यस्य करे वीरैः दर्पान्धगन्धगजकुम्भकपाटकूट-सङ्क्रान्तनिघ्नघनशोणितशोणशोचिः कोपकषायकान्तिः कालीकटाक्षः इव कृपाणः व्यलोकि इत्यन्वयः। युधि युद्धे। वीरैः रणोद्यतैर्जनैः साधारणभटानां भयप्रदत्वा-दत्यन्तशूरैरेव। यस्य राज्ञः। करे हस्ते। दर्पेति दर्पेण मदगर्वेण अन्धः उन्मत्तः यो गन्धगज उत्कटगन्धो हस्ती यस्य गन्धेन प्रतिहस्तिनो दूरमपसर्पन्ति सः तस्य कुम्भः गण्डः एव कपाटः द्वारफलकमत्यन्तविस्तृतत्वात् तस्य कूटमग्रभागः तत्र सङ्क्रान्त्या सम्बन्धेन पतनेन निघ्नं दृढसम्बद्धं घनं निविडं यच्छोणितं रक्तं तेन शोणं रक्तं शोचिः कान्तिर्यस्य सः वा यत्र तादृशः। कोपेति कोपेन क्रोधेन कषाया नितान्तरक्ता कान्तिश्छविर्यस्य यत्र वा तादृशः कालीकटाक्षः काल्याः दुर्गायाः कटाक्षः दृष्टिपातः। इव यथा। व्यलोकि अदर्शि। इति। लक्ष्ये लक्षणं घटयति अत्रेति। अत्रेति काव्येऽस्मिन्। उपमालङ्कारेण उपमेयस्य कृपाणस्य उपमानेन कालीकटाक्षेण परोपमर्दनक्षमता साधर्म्यवर्णनाद् भेदेन वाच्यभूतेनोपमालङ्कारेण 'साधर्म्यमुपमा भेदे' इति तल्लक्षणात् अत्र इवशब्दो वाचकः। सकलेति सकलं समस्तं रिपूणां वैरीणां बलं शक्तिः सैन्यं वा तस्य क्षयो नाशः। क्षणात् कालक्षेपं विनैव। करिष्यते विधास्यते। इति इत्थम्। वस्तु वृत्तम्। व्यज्यत इति शेषः। काव्येऽस्मिन् उपमालङ्कारो वाच्यः, किन्तु तया तु वर्णसाम्यमेव प्रत्याय्यते, न तु कालीकटाक्षनिष्ठं सकलरिपुक्षयकारित्वं तत्कथं तद्वस्तु व्यञ्जकत्वमुपपद्यते इति न

वाच्यम् । यद्यपि रिपुक्षयकारित्वं न केवलमुपमाननिष्ठमेव, न वोपमेयनिष्ठमात्रम-पितु उभयनिष्ठमेव, तथा सत्यपि वा उपमानधर्मत्वमात्रेण स्थितेऽपि व्यञ्जनया उपमेये कृपाणे तदवगमे नैव बाधकत्वं कस्यापि । न चात्रोत्प्रेक्षा सम्भावनाविरहात् । न च शब्दशक्त्युद्भवत्वमस्य, तस्य तु वर्णसाम्योपस्थापनैवोपरतत्वात् । तेन व्यञ्जनं त्वर्थशक्त्यैव । उभयोः साम्यावगमानन्तरमुपमानगतधर्मान्तरं रिपुक्षयक्षमरूपमुप-मेये प्रतीयत इति सर्वं यथोक्तमुपपद्यत एव । यथा हि 'कैलाशगौरं वृषमारुरुक्षो' इत्यत्र गौरत्वनिर्देशो गोच्छ्रायस्यापि इति सुधासागरे । भट्टाचार्यास्तु उपमानगत-धर्मस्योपमेयगतत्वेनानिर्देशान्न तथेति प्रतिवदन्ति । गोकुलनाथास्त्वत्र उपमाशब्द-मुत्प्रेक्षापरमेव मन्यन्ते चण्डीदासा इव । कृपाणेन कालीकटाक्षसादृश्यमात्रावगतौ रिपुक्षमकर्तृत्वं व्यङ्ग्यमेव न प्रतिभासेत । न हि तत्सदृशस्य तत्कार्यकारित्वनियमः इति ते । प्रदीपकारास्तु 'अत्र कालीकटाक्ष इव कृपाणो व्यलोकि इत्युपमैव न पुनरुत्प्रेक्षासम्भावनाविरहादिति । सम्भावनाया मनुगतधर्मस्यैव प्रयोजकत्वं न तु बिम्बप्रतिबिम्बभावमापन्नस्य । अत्र तु शोणशोचिः कषायकान्त्योर्बिम्बप्रतिबिम्ब-भावेन समानधर्मत्वात्सम्भावनाविरह इति उद्द्योतकाराशयः । किन्तु बिम्बप्रतिबिम्ब-भावत्वमापन्नस्य नैव सम्भावनायां प्रयोजकत्वमिति नैव राजाज्ञा 'सञ्चारिणी पल्ल-विनी लतेव' इत्यत्र तथादर्शनात् । न ह्यत्रोपमा सञ्चारित्वाभावादुपमानभूताया लतायाः । तेनात्रोत्प्रेक्षैवेति चित्रमीमांसायां स्पष्टम् । तेन वैद्यनाथाः सम्भावना-विरहत्वं तदविवक्षयैवेति व्याख्यान्ति । विवक्षितत्वे तु तस्याः विधेयतया प्रति-पाद्यतः स्यात् न तु विलोकनकर्मविशेषणतया सिद्धवदेव व्यलोकीत्यस्यैवोत्प्रेक्षणीयत्वे 'इव'शब्दस्यानर्थक्यमिति सारबोधिनीकारा अपि नात्रोत्प्रेक्षाभिधानं न सहन्ते । तदनुसारेण न हि तत्सदृशस्य तत्कार्यकारित्वनियम इति तन्मात्रवृत्तिरूपधर्मस्यैवोप-युज्यते न तु उभयसाधारणस्य । रिपुबलक्षयकारित्वमुभयोरेव साधारणो धर्म इति तस्य कृपाणेऽवबोधेन काचिदनुपपत्तिरिति । यद्यत्रोपमापदेनोत्प्रेक्षाभिधानत्वं मन्येत तदा उत्प्रेक्षायाः कविप्रौढोक्तिनिष्पन्नत्वेन स्वतःसम्भवित्वविरहात् तल्लक्ष्यतैव न स्यादिति । अर्थस्य स्वतःसम्भवित्वञ्च सादृश्यस्य बहिरपि सत्त्वात् । निर्दिष्ट-साधारणधर्मेण सादृश्यपर्यवसानान्नोक्तव्यङ्ग्यस्य वाच्याङ्गतेति उद्द्योते स्पष्टम् ।

[ वृत्तिः ] गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥६३॥

अत्र विरोधालङ्कारेणाधरनिर्दंशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता। मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यते इत्युत्प्रेक्षा च। एषूदाहरणेषु स्वतःसम्भवी व्यञ्जकः।

[ कमला० ] स्वतःसम्भविनाऽलङ्कारेणालङ्कारव्यङ्ग्यमाह गाढेति। यो राजा युद्धे कोपेन स्वोष्ठं निर्दशन् शत्रुस्त्रीसमूहस्य ओष्ठा एव प्रवालशकलानि विद्रुमः पल्लव इत्येके। निबिडभर्तृदन्तक्षतदुःखरूपात्सङ्कटादमोचयदित्यर्थः। यत्रेति। ओष्ठदंशमोचनयोर्विरोधः प्रतियोगिभेदादाभासः। यद्वा स्वोष्ठदंशः कारणं तत्काले वधूदन्तक्षतमोककार्योक्तेः। कारणकार्ययोः पौर्वापर्यभावरूपातिशयोक्तिस्तयोर्वैय्यधिकरण्यरूपोऽसङ्गत्यलङ्कारो वा विरोधपदेनोच्यत इति मधुमतीदेवनाथादयः। तुल्येति। यद्यप्यत्र तु प्रकृतानामप्रकृतानाञ्चैकधर्मसम्बन्धरूपा मुख्या तुल्ययोगिता नास्ति तथा तुल्यं समकालं योगितारूपः समुच्चयालङ्कार एव तत्पदेनोच्यते। ओष्ठो दष्टः शत्रवो हताश्चेति समकालोक्तेरिति दर्पणादयः। ओष्ठदंशशत्रुहननयोर्वीरानुभावत्वेन प्रकृतयोः कालोपाधिसूर्यक्रियारूपैकधर्मसम्बन्धान्मुख्यैवेति परमानन्दः। कार्यकारणयोरेककालतारूपातिशयोक्तिरेवापीति मधुमती। तद्बुद्धिर्नृपबुद्धिरुत्प्रेक्षा च प्रसज्यत इति शेषः। एष्विति। क्वचित् कोपजकामजयोरधरदंशनयोर्वैजात्येन विरोधात्कविप्रौढोक्तिसत्त्वेऽपि प्राधान्यात् स्वतःसम्भवित्वमित्यर्थः।

[ सरि० ] स्वतःसम्भविनाऽलङ्कारेणालङ्कारोऽपि व्यज्येत इत्येकोऽयं शक्त्युद्भवध्वनेर्भेदः। तमुदाहरति गाढेति। कप्फिणाभ्युदयमहाकाव्यगतं पद्यमिदम्। युधि रुषा निजाधरम् निर्दशन् यः अरिवधूजनस्य ओष्ठविद्रुमदलानि गाढकान्तदशनक्षतव्यथासङ्कटात् अमोचयत् इत्यन्वयः। युधि रणे। रुषा क्रोधेन। निजाधरं स्वनिम्नोष्ठम्। निर्दशन् दन्तैः खण्डयन्। यः यो हि राजाऽत्र कप्फिणः। अरिवधूजनस्य शत्रुविलासिनीनाम्। ओष्ठविद्रुमदलानि ओष्ठा एव विद्रुमस्य प्रवालस्य दलानि पत्राणि। गाढेति गाढो दुःसहो यः कान्तस्य वल्लभस्य दशनो दन्तानां क्षतो व्रणः तस्य व्यथा पीडा सा एव सङ्कटो विपत्तिस्तस्मात् यद्वा गाढा तीव्रा या कान्तदशनक्षतव्यथा दयितदन्तव्रणार्ति तद्रूपात्सङ्कटात् अथवा गाढो यः कान्तदशनक्षतव्यथासङ्कटस्तस्मात्। अमोचयत् मोचितवानिति। वैरिवधेन तद्रमणीनां दन्तक्षताभाव इत्याशयः। वृत्तमत्र रथोद्धता। लक्ष्ये लक्षणं घटयति अत्रेति। अत्र काव्येऽस्मिन्। विरोधालङ्कारेण स्वोष्ठदंशनेन परोष्ठदंशव्रणमोचनयोर्विरोधेन वैरिवधेन तथासम्पादनादिति तत्परिहारेण च विरोधाभासोऽलङ्कारस्तेन। अधरनिर्दंशनसमकालम् स्वनिम्नोष्ठखण्डनतुल्यसमयमेव यदा हि अधरं निर्दष्टं तदैव। एवेत्यवधारणे विना कालक्षेपमिति। शत्रवः वैरिणः।

व्यापादिताः पातिताः। इति हेतोः तुल्ययोगिता अधरदशनशत्रुहननयोरेक-
कालघटनरूपैकसम्बन्धेन तदलङ्कारः नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता इति
तल्लक्षणात्। मम मे। क्षत्या हान्या। अपि। अन्यस्य परस्य। क्षतिः हानिः।
निवर्तताम् निरस्यताम्। इति इत्थम्। तद्बुद्धिः तथाविधमतिः। उत्प्रेक्ष्यते
उन्नीयते। इति हेतोः। उत्प्रेक्षा 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य परेण यत्' इति
लक्षणोऽलङ्कारः। चेति समुच्चये। विरोधालङ्कारो हि स्वतःसम्भवी वाच्यः।
तेन व्यञ्जकेन तुल्ययोगिता व्यज्यते उत्प्रेक्षा चेति तयोर्निरपेक्ष्येणावस्थानात्संसृष्टि-
रित्याशयः। सन्त्यत्र व्याख्याकाराणां प्रतिपत्तिविप्रतिपत्तयः। अत्र विरोधा-
लङ्कारश्चिन्त्य इति अच्युतभट्टाचार्याः। विरोधपदेनात्र कार्यकारणपौर्वापर्य-
विपर्ययविरोधात्मकाऽतिशयोक्त्यलङ्कारोऽभिधीयत इति काव्यदर्पणकारा रत्नपाणि-
भट्टाचार्या अच्युतभट्टाचार्यतनयाः। विरोधालङ्कारेणात्र वास्तवविरोधमूला-
सङ्गत्यलङ्कारेणाशयः स्वाधरनिर्दंशवैरिवनितोष्ठमोचनयोः कार्यकारणयोर्वैयधि-
करण्येन निर्देशाद् विरोधस्य स्फुटत्वात् इति मधुमतीकाराः रविभट्टाचार्याः रत्न-
पाणितनया अच्युतपौत्राः। निजाधरदशनवैरिवधूजनोष्ठदशनव्यथामोचनयोः
कार्यकारणयोः पौर्वापर्यभावलक्षणेऽतिशयोक्त्यलङ्कार इति गोविन्दठक्कुराः प्रदीप-
काराः। विरोधगर्भत्वादियमेव विरोधपदेनोक्तेति वैद्यनाथमहोदयाः। अत्रोष्ठ-
दशनकतन्मोचनयोर्विरोध ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात्। प्रतियोगि-
भेदेनाभास इति विरोधालङ्कारो निर्बाध इति सुधासागरकारा भीमसेनमहाभागाः।
ओष्ठविषयकदशनमोचनयोर्विरोधः प्रतियोगिभेदेनाभास इति। यद्वा विरोधपदेनात्र
कार्यकारणपौर्वापर्यविषयरूपातिशयोक्त्यलङ्कारोऽभिधीयत इति सारबोधिनीकाराः
श्रीवत्सलाञ्छनभट्टाचार्याः। विरोधमूलेन कार्यकारणपौर्वापर्यविपर्ययरूपेणातिशयोक्त्य-
लङ्कारेणेत्यर्थः। कारणभूतस्य स्वाधरनिर्दंशनस्य कार्यभूतस्य वैरिवनितोष्ठपीडा-
मोचनस्य च समकालिकतया निर्देशादिति विश्वनाथाः। अत्रोष्ठनिर्दंशनमोचन-
क्रिययोर्वर्तमानातीतापदेशाद्विपरीतकालयोर्विरोधः कार्यकारणव्यत्ययातिशयोक्तिरूपो
वाच्य इति चण्डीदासपण्डिताः। अतिशयोक्तिमूलकता तु सर्वेषामेवालङ्काराणां
भवति न हि स्वभावोक्तौ कश्चिच्चमत्कारो यथा कृतोद्वाहो देवदत्तो मोदते इत्यादौ।
तेनाऽत्रापि अतिशयोक्तिविषयता त्वापतत्येव निजाधरदंशनकारणेन परस्त्र्यधरसङ्कट-
मोचनकार्यस्य सत्त्वकथनात् किन्तु ओष्ठयोः प्रतियोगिभेदेनावभासनादत्र विरोधस्तु
स्पष्ट एव। तेन हि 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति लक्षणो
विरोधालङ्कार एवात्र स्फुटः। अनेन स्वतःसम्भविनाऽपि भाव्यमेव। अति-
शयोक्तिकल्पने तु कविप्रौढोक्तिविषयताऽऽपद्येत। निजोष्ठदंशनेन कारणेन क्रोधाभि-

भूतत्वेन शत्रुहननं तेन शत्रुनार्यधरदंशननिवारणञ्च लोके सिद्धमेत्र वस्तु। स्वाधर-निदंशनवैरिवनितोष्ठमोचनयोः कार्यकारणयोर्वैयधिकरण्येन निर्देशाद् विरोधस्तु स्फुट एव। क्रोधाद्वैरिवधेन तद्वधूनां रतिक्रीडाविरहाद् दन्तक्षताभाव इति तत्परिहारश्च स्फुट एवेति। ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात्प्रतियोगिभेदेना-भास इति।

एवमेव तुल्ययोगिताविषयेऽपि। 'तल्लक्षणञ्च नियतानां सकृद्धर्मः तुल्ययोगिता' इति। अत्र तु 'एकस्याः काले तदन्यस्याः अपि क्रियायास्तुल्यो योग इति विवक्षणा-दियं तुल्ययोगिता' इति साहित्यचूडामणिकाराः। अधरो निर्दष्टश्च शत्रवो व्यापा-दिताश्चेति तुल्यकालमेककालं योगिनौ तयोर्भावस्तुल्ययोगितेति व्युत्पत्त्या समुच्चया-लङ्कारो व्यज्यत इत्यर्थः। न तु प्रकृतानामप्रकृतानां गुणक्रियान्यतरैकरूपधर्म-सम्बन्धात्मिकायास्तुल्ययोगितायाः प्रसङ्गोऽपीति नरसिंहठक्कुराः। अन्ये तु तुल्ययोगितायां धर्मो गुणक्रियाऽन्यतर एवेत्यत्र न हि किञ्चिन्मानम्। तेन कालो-पाधेरपि सूर्यक्रियारूपत्वाच्च ओष्ठदशनतद्व्यथामोचनयौगपद्यविरोध एवाभासमानो व्यञ्जको वाच्यतया सामानाधिकरण्येनाप्रतीतस्यापि व्यङ्ग्यतया तथाप्रतीति-सम्भवात्तुल्ययोगितैव युक्तेति वदन्ति। केचित्तु अधरनिर्दंशनवैरिव्यापादनक्रिययोः यौगपद्यप्रतीतेरत्र तुल्ययोगितापदेन समुच्चयालङ्कारोऽभिमत इति वदन्ति। अपरे तु अधरनिर्दशनशत्रुव्यापादानयोर्द्वयोरपि वीरानुभावत्वेन प्रकृतयोरेककालरूपैकधर्म-सम्बन्धेन तदनपायान्न तथेति वदन्ति। तदनुसारेण न च धर्मस्य गुणक्रियाऽन्यतरत्वेन कल्पितत्वाभावादनुपपत्ति तादवस्थ्यमिति वाच्यम्। कालोपाधेः सूर्यपरिस्पन्दत्वेन क्रियातोऽनन्यत्वात्। इति। वस्तुतस्तु यथा हि ओष्ठविषयकदशनमोचनयोः ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वाद्विरोधेन तयोश्च प्रतियोगिभेदेनाभास इति विरोधालङ्कारो निर्बाधस्तथैव अधरदशनशत्रुव्यापादनयोर्वीराऽनुभावत्वेन प्रकृतयोः सूर्यक्रियारूपैककालोपाधिसम्बन्धेन तुल्ययोगिताऽपि निर्बाधैवेति सुधासागरे स्पष्टम्। तथैव स्वहान्याऽपि परहानिनिवारणपरत्वबुद्धेर्नृपस्योत्प्रेक्षणात् उत्प्रेक्षाऽपि स्पष्टैव, व्यङ्ग्यत्वेन सम्भावनाया अशाब्दत्वात्। तयोश्च संसृष्टिरिति चकारार्थः।

अत्र कोपकृतकामकृतयोरधरदंशनयोरत्यन्तवैजात्येन कथं विरोधः एकविषयदंशन-मोचनयोरेव तत्त्वात्। यद्यैकस्याध्यवसाय ईति चेत् तस्य कविप्रौढोक्तित्वं सञ्जायते। तेनाऽत्र कथं स्वतःसम्भविव्यञ्जकतेत्यपेक्षायामाह एष्विति। एषु पूर्वोद्धृतेषु। उदाहरणेषु लक्ष्येषु। स्वतःसम्भवी लोकेऽपि दृष्टो वस्त्वलङ्कारान्यतमः। व्यञ्जकः व्यङ्ग्याक्षेपक इति। तत्र तत्र तथा कल्प्येयं येन तेषां स्वतःसम्भवित्वं

न हीयेतेति। सत्यपि कविप्रौढोक्तिरूपाणामलङ्काराणां वा वस्तूनां सम्भाव्यमानत्वे प्राधान्येन व्यवहारात्तेषां स्वतःसम्भवित्वमेवेति। यथा गाढेत्यादौ सत्यामपि व्यञ्जकताभेदाभेदरूपायामतिशयोक्तौ तस्या अपि विरोधस्यैव निर्वाहकत्वं न तु प्राधान्यमपि इति।

[ वृत्तिः ] कैलासस्य प्रथमशिखरे वेणुसम्मूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥६४॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते।

[ कमला० ] कविप्रौढोक्तिसिद्धान् क्रमेणाह कैलासस्येति। प्रथमं सर्वोच्चम्। वेणुना सम्मूर्च्छनास्तदुत्थो रागः—

स्वरः सम्मूर्च्छितो यत्र रागतां प्रतिपद्यते।
मूर्च्छनामिति तां प्राहुर्गीतितत्त्वविदो जनाः॥

इत्युक्तैस्तैः सुरस्त्रीभिर्गीयमानां यस्य कीर्तिं श्रुत्वा स्रस्तापाङ्गास्तिर्यग्भूतापाङ्गाः। पुलिने बिसोत्पत्तेः श्रवणे तद्रूपत्वम्। कीर्तेः शुक्लत्वात्कर्णे बिसमस्तीति भ्रान्त्या भक्ष्यार्थं तत्र शुण्डा क्षिपन्तीत्यर्थः। वस्तुनेति कीर्तेर्बिसवत्कर्णप्रवेशरूपेण कविप्रौढिसिद्धेनेत्यर्थः। अर्थेति गीतार्थज्ञानम्। एवमादीति बिसधीजननेत्यर्थः। यद्यपि सञ्जातशङ्केति भ्रान्तिमान् सन्देहो वाऽलङ्कारो व्यञ्जक इति नात्र वस्तुनो व्यञ्जकत्वं तथापि तदप्रतिसन्धाने एतदिति देवनाथः। भ्रमरपटलीझाङ्कृतिभ्रष्टनिद्राः पुलिने इति युगले इति पाठाद्वस्तुव्यञ्जकतेति नव्याः।

[ सरि० ] वस्तुरूपकविप्रौढोक्तिसिद्धार्थाक्षिप्तवस्तु अर्थशक्त्युद्भवध्वनेरेको भेदः। तदुदाहरति। कैलासस्येति। कैलासस्य प्रथमशिखरे वेणुसम्मूर्च्छनाभिः विबुधरमणीगीयमानाम् यदीयाम् कीर्तिम् श्रुत्वा सरसबिसिनीकाण्डसञ्जातशङ्का स्रस्तापाङ्गाः दिङ्मातङ्गाः श्रवणपुलिने हस्तम् आवर्तयन्ति इति अन्वयः। नव्यानां पाठे तु भ्रमरपटलीझाङ्कृतिभ्रष्टनिद्राः श्रवणयुगले इति। कैलासस्य कैलासमहाशैलस्य। प्रथमशिखरे सर्वोच्चशृङ्गे। वेणुसम्मूर्च्छनाभिः वेणुना वंशिना या सम्मूर्च्छना रागोदयस्ताभिः। यथोक्तम्—

स्वरः सम्मूर्च्छितो यत्र रागत्वं प्रतिपद्यते।
मूर्च्छनामिति तां प्राहुर्गीततत्त्वविदो जनाः॥ इति।

विबुधरमणीगीयमानाम् विबुधानां देवानां रमणीभिः विलासिनीभिः गीयमानामुपश्लोक्यमानाम्। यदीयाम् यत्सम्बद्धाम्। कीर्तिं यशः। श्रुत्वा आकर्ण्य। सरसेति सरसमशुष्कमत एव धवलं यद्विसिन्याः कमलिन्याः काण्डं मृणालस्तस्य सञ्जाता समुत्पन्ना शङ्का सन्देहो येषां यद्वा सरसेषु विसिनीकाण्डेषु सञ्जाता शङ्का येषां कीर्तेर्धवलत्वेन तत्र विसिनीकाण्डभ्रमस्तस्यापि शौक्ल्यादिति। तथाविधाः अत एव स्रस्तापाङ्गाः स्रस्ताश्वलिता वा तिर्यग्भूता अपाङ्गा नेत्रप्रान्तभागा येषान्ते शौक्लस्याश्रोत्रग्राह्यत्वादपाङ्गचालनम्। दिङ्मातङ्गाः ऐरावतप्रमुखाः। यथोक्तम्—

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः॥ इति।

श्रवणपुलिने कर्णतटे। पुलिनत्वेन विसिनीकाण्डभ्रमः। हस्तम् शुण्डाम्। आवर्तयन्ति मुहुर्व्यावर्तयन्ति इति। नव्यपाठे तु भ्रमरपटलीझाङ्कृतिभ्रष्टनिद्राः भ्रमराणां पटली तस्या इव या झाङ्कृतिस्तया भ्रष्टा प्रणष्टा निद्रा स्वापो येषान्ते तादृशा दिग्गजाः। लक्ष्ये लक्षणमाह अत्रेति। अत्रेति काव्येऽस्मिन्। वस्तुना हस्तिनां राजकीर्तिश्रवणानन्तरं कर्णयोर्हस्तावर्तनरूपकविप्रौढोक्तमात्रसिद्धवस्तुरूपार्थेन लोके तथाऽदृष्टत्वान्न तस्य स्वतःसम्भवित्वमिति। येषां प्राणिनाम्। अर्थाधिगमः आशयज्ञानम्। अपि। नास्ति न भवति। तेषां तादृशानाम्। अपि किमुताधिगतार्थानां त्विति। एवमादिबुद्धिजननेन मृणालादिमत्युत्पादनेन। चमत्कारं चित्ताह्लादनम्। करोति विदधाति। इति इत्थम्। वस्तु वस्तुरूपोऽर्थः। ध्वन्यते व्यज्यत इति। अत्र सरसविसिनीकाण्डसञ्जातशङ्का इति भ्रान्तिमान् सन्देहो वा लङ्कारो व्यञ्जक इति कथं वस्तुमात्रव्यञ्जकत्वोदाहरणमिदमिति न वाच्यं तद्भागनैरपेक्ष्येणाऽपि तावन्तं भागमनपेक्ष्यापि किञ्चिच्छुक्लं कर्णे प्रविशत्येतावताऽपि वस्तुमात्रेणाप्यनधिगतार्थानामपि श्वैत्यमूर्तत्वादिधीजननेन यत्कीर्तिश्चमत्कारोतीति व्यक्तिसम्भवात्। तथैव 'श्रवणपुलिने' इत्यत्र रूपकालङ्कारसद्भावेऽपि तस्य व्यञ्जकत्वाभावान्न वस्तुनो व्यञ्जकत्वे काऽपि क्षतिः। कीर्तिं श्रुत्वा हस्तिनः कर्णे शौक्ल्यसाम्येन विसिनीकाण्डशङ्कया शुण्डावर्तनं न लोके दृष्टं वा स्वतःसम्भवि किन्तु कविसम्प्रदायात्कविना वर्णितमित्यस्य कविप्रौढोक्तिमात्रसिद्धत्वम्।

[ वृत्तिः ] केसेसु बलामोडिअ तेण अ समरम्मि जअसिरी गहिआ।
जह कन्दराहिं विहुरा तस्स दढं कण्ठअम्मि संठविआ॥६५॥
[ केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिता:॥ ]

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ती इत्युत्प्रेक्षा। एकत्र सङ्ग्रामे विजयदर्शनात् तस्यारयः प्रपलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः। न प्रपलाय्य गतास्तद्वैरिणोऽपितु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च।

[ कमला० ] कविप्रौढोक्तिसिद्धवस्तुनाऽलङ्कारव्यङ्ग्यमाह केशेष्विति। केशेषु बलादामोद्यते न समरे जयश्रीर्गृहीता यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः तस्य विधुराः शत्रव इत्यन्वयः। तेन राज्ञा समरे केशेषु बलाद्धृत्वा तथा जयश्रीर्गृहीता यथा सुरतकालीनकेशग्रहणदर्शनात्कन्दराभिरपि मदनवशात्तस्यारयः कण्ठे स्थापिताः स्वयमङ्गीकृतेत्युत्प्रेक्षा कन्दराणां नायिकात्वासिद्धेः। कथं सा व्यङ्ग्या? व्यञ्जनया तल्लाभे तु समासोक्तिरेव स्यादिति चिन्त्यमेतदिति काव्यप्रदीपः। समासोक्तेरुत्प्रेक्षाङ्गत्वमिति परमानन्दः। कथं तर्हि वस्तुव्यञ्जकमलङ्कारस्य तत्त्वात्। अलङ्कारस्य तत्त्वेऽपि वस्त्वपि व्यञ्जकमिति अन्ये। तत्त्वमाह एकत्रेति। जयश्रीग्रहणेन हेतुना भीताः शत्रवो गुहासु तिष्ठन्तीति काव्यहेतुः। काव्यलिङ्गमलङ्कारः अपह्नुतिश्चेति। अप्रस्तुतस्य पलायनस्यापह्नवादपह्नुतिरलङ्कारश्च व्यङ्ग्यः इत्यर्थः।

[ सरि० ] कविप्रौढोक्तिसिद्धवस्तुरूपार्थाक्षिप्तलङ्काररूपार्थोऽपि अर्थशक्त्युद्भवध्वनेरेको भेदः। तमेवोदाहरति 'केसेसु' इति। तेण ( तेन ) अ ( च ) समरम्मि ( समरे ) जयसिरी ( जयश्रीः ) केसेसु ( केशेषु ) बलामोडिअ ( बलात्कारेण ) गहिआ ( गृहीता ) जह ( यथा ) कन्दराहिं ( कन्दराभिः ) तस्स ( तस्य ) विहुरा ( विधुराः ) कंठअम्मि ( कण्ठे ) दढं ( दृढम् ) संठविआ ( संस्थापिताः ) इत्यन्वयः। तेन प्रकृतेन राज्ञा। च अपि। समरे युद्धे। जयश्रीः विजयलक्ष्मीः। केशेषु कचेषु। बलात्कारेण प्रसह्य विक्रम्य। गृहीता अवधारिता। यथा यथा हि। तस्य राज्ञः। विधुरा वैरिणः। कन्दराभिः गुहाभिः। कण्ठे गले। दृढं निभृतम्। संस्थापिताः समारोपिताः इति। तेन हि विक्रम्य युद्धे जयलक्ष्मीः केशेषु गृहीता तदसहिष्णवस्तु कन्दराभिर्गाढं संस्थापिता इति प्राकरणिकोऽर्थः। तेन पराजिता रिपवस्तद्भयाद् गुहास्वाश्रिताऽति तात्पर्योऽर्थः। गीतिश्छन्दः। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। केशेति केशानां कचानां ग्रहणं सुरताशयेनावधारणं तस्यावलोकनमीक्षणं तेनोद्दीपित उत्कर्षतां नीतो मदनः कामो यस्या सा। तथाविधा। इव इत्युत्प्रेक्षा। कन्दरा दर्पः। तद्विधुरान् तद्रिपून् सम्भोगासहिष्णून्। कण्ठे गले। गृह्णन्ति आलिङ्गयन्ति। इति इत्थम्। उत्प्रेक्षा 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य परेण यत्' इति लक्षणोऽलङ्कारः। एकत्र

एकस्मिन्। सङ्ग्रामे युद्धे। विजयदर्शनात् सफलतावलोकनेन। तस्य राज्ञः अरयः शत्रवः। पलाय्य पलायनं कृत्वा। गुहासु कन्दरासु। तिष्ठन्ति वसन्ति। इति अनेन काव्यहेतुः काव्यलिङ्गाख्यः। अलङ्कारः हेतोर्वाक्यपदार्थत्वे काव्यलिङ्ग-मिति तल्लक्षणात् विजयदर्शनस्यात्र पलायनहेतुत्वाच्च। व्यङ्ग्यान्तरमपि निर्दिशति नेति। तद्वैरिणः तस्य राज्ञो वैरिणः शत्रवः। पलाय्य युद्धं त्यक्त्वा। न। गताः गुहां प्राप्ताः। अपितु। ततः राज्ञः। पराभवम् पराजयम्। सम्भाव्य अनुमीय। कन्दरा दरी एव। तान् तदरीन्। न। त्यजन्ति प्रस्थापयन्ति इति अनेन। अपह्नुतिः पलायनस्यापह्नवात्तदारकोऽलङ्कार इति। चकारः उत्प्रेक्षा-काव्यलिङ्गअपह्नुतीनां सङ्करः इति। सङ्करश्च सारबोधिनीकारादिमतेन एक-व्यञ्जकानुप्रवेशः। सुधासागरमते तु तस्य प्रामादिकत्वमेव वस्तुतस्तु प्रदर्शित-व्यङ्ग्यालङ्कारत्रयेऽन्यतम परिग्रहे साधकबाधकाभावादनिश्चयसङ्कर इति। विस्तारिकाकारमतेऽप्यत्र एकव्यञ्जकानुप्रवेशसङ्कर एव। एकव्यञ्जकानुप्रवेश-सङ्करलक्षणं तु स्फुटमेकत्रविषये शब्दार्थालङ्कृतिद्वयम्' इति।

अत्रोत्प्रेक्षाया विषयत्वं तदैवापतेद्यदा पूर्वं कन्दरादीनां नायिकात्वाद्यारोपः स्यात्। तदभावेन केशग्रहस्य मदनोद्दीपकत्वायोगात् कथञ्चित् एककर्तृककेशाकर्षणदर्शनेन अपरयाऽरस्य दृढकण्ठस्यापनरूपश्लिष्टविशेषणैः कन्दराभिरिति स्त्रीलिङ्गेन समा-सोक्त्या कन्दराणां नायिकात्वारोपाभ्युपगमे न वस्तुमात्रस्य व्यञ्जकत्वमपि तु समासोक्त्यलङ्कारसहितवस्तुन इति प्रदीपकाराः। एवमेव विस्तारिकाकारा अपि एकस्या नायककर्तृककेशाकर्षणदर्शनेनापरस्या. कामोद्रेकः स्यादेव समासोक्तितः इति वदन्ति। श्रीवत्सलाञ्छनमहोदया अपि अत्रोत्प्रेक्षाव्यञ्जकत्वं समासोक्तेरेव कन्दरा: स्त्रीव्यवहारसमारोपं विना उद्दीपितमदना इवेत्युत्प्रेक्षाया असम्भवात्। पुनः सोत्प्रेक्षाया एवाङ्गमिति। सुधासागरकारास्तु यथेति यच्छब्देनोत्तरवाक्यगतेन तच्छब्द आक्षिप्यते। तेन च पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भात् वाक्यैकवाक्य-मिदम्। तत्र तेनेति कन्दराभिरिति च पदद्वयं विशेष्यसमर्पकं श्लिष्टञ्च। तथा च न समासोक्तिः विशेष्यविशेषणवाचिनां सर्वेषां श्लिष्टत्वे तत्स्वीकारात्। किञ्च यत्रोभयतात्पर्यवशादभिधयैवार्थोपस्थितिस्तत्र श्लेष.। प्रकृते तु व्यञ्जनया द्वितीयार्थस्य प्रतिभामात्रमिति अत्र वस्तुन एव व्यञ्जकत्वमिति। तस्य च व्यङ्ग्यमुत्प्रेक्षा।

एवमेव जयश्रीग्रहणेन वाक्यार्थभूतेन हेतुना जातभयाः शत्रवः पलाय्य गुहासु गता इति काव्यलिङ्गमलङ्कारस्तस्य च उत्प्रेक्षया सङ्कीर्णत्वम्। कन्दरा एव पराभवशङ्कया तान् न त्यजन्तीति पलायनस्यापह्नवात् अपह्नुत्यलङ्कारश्च

व्यङ्ग्य इति । वाक्यार्थस्यालोकसिद्धत्वेनास्य कविप्रौढोक्तिमात्र-सिद्धत्वम् ।

[ वृत्तिः ] गाढालिंगणरहसुज्जुअम्मि दइए लहु स ोसरइ ।
माणसिणीण माणो पीलणभीअ व्व हिअआहिं ॥ ८६ ॥

[ गाढालिङ्गनरभसोद्यते दयिते लघु समुपसरति ।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥ ]

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

[ कमला० ] कविप्रौढोक्तिसिद्धालङ्कारेण वस्तुव्यङ्ग्यमाह गाढेति । गाढा-लिङ्गनरभसोद्यते दयिते लघु समपसरति । मनस्विन्या मानः पीडनभीत इव हृदयात् । पत्यौ गाढालिङ्गनोद्यते सति मानिन्या मानः हृदयात्पीडनभयेनेव लघु शीघ्रं पलाय्य गच्छतीत्यर्थः । त्रयोत्प्रेक्षया प्रत्यालिङ्गनं विना पीडनं नेति तत् व्यज्यते । अत्रेति । आदिपदेन प्रसादहसितादि गृह्यते ।

[ सरि० ] कविप्रौढोक्तिसिद्धालङ्कारस्य वस्तुव्यञ्जकत्वमुदाहरति **गाढा-लिंगण** इति । गाढालिंगणरहसुज्जुअम्मि ( गाढालिङ्गनरभसोद्यते ) दइए ( दयिते ) माणसिणीण ( मनस्विन्याः ) माणो ( मानः ) पीलणभीअ ( पीडन-भीतः ) व्व ( इव ) हिअआहिं ( हृदयात् ) लहुं ( लघु ) समोसरइ ( समुपसरति ) इत्यन्वयः । गाढालिङ्गनरभसोद्यते गाढं दृढं यदालिङ्गनामाश्लेषस्तदर्थं रभसेन हर्षातिरेकेण वेगेन वा उद्यते उद्युक्ते । **दयिते** प्रियतमे । उद्युक्तमात्रे न त्वाचरित-वतीति । **मनस्विन्याः** मानिन्याः । **मानः** कोपः -- 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इत्युक्तलक्षणः । **पीडनभीतः** पीडनादाश्लेषजन्यपीडातः भीतस्त्रस्तः । इव इत्युत्प्रेक्षा । लघु शीघ्रं गुप्तं वा । समुपसरति निःशेषतो गच्छतीति । प्रिये दृढालिङ्गनतत्परे मानिन्या मानः आश्लेषजन्यसम्पीडातो भीत इति त्वरितं गच्छतीति । लक्ष्ये लक्षणं घटयति अत्रेत्यादि । अत्र काव्येऽस्मिन् । उत्प्रेक्षया पीडनभीत इति भयोत्प्रेक्षारूपेणालङ्कारेण पीडनभीतत्वं चेतनेष्वेव सम्भवात् मानस्याचेतनत्वात्स्वतःसम्भवित्वाभावेन कविप्रौढोक्तिमात्रसिद्धेनेति । **प्रत्यालिङ्गनादि** प्रत्यालिङ्गनं नायिकाकृतनायकाश्लेषोऽत्र मानभङ्गे तस्या-वश्यम्भावित्वात् । आदिपदात् प्रसादहसितादि च । तत्र तत्प्रसङ्गे । **विजृम्भते** अवगम्यते । इति एवंविधः । वस्तु व्यज्यत इति । गाढालिङ्गनमात्रेणैव पीडन-भयमिति प्रत्यालिङ्गनस्य न वाच्यसिद्ध्यङ्गताऽपितु व्यङ्ग्यतैव । पुरुषेणा-लिङ्गने कृते सति स्त्रीकृतप्रत्यालिङ्गनमन्तरेण गाढालिङ्गनकृतभयासम्भवा-त्प्रत्यालिङ्गनलक्षणं वस्तु व्यज्यत इति बालचित्तानुरञ्जन्याम् । आलिङ्गनोद्यम-

मात्रेणैव वाच्यस्य सिद्धेः प्रत्यालिङ्गनप्रसादहसितादीनां न तदङ्गत्वमिति काव्यप्रकाशदर्पणे। गाढालिङ्गनामात्रेणैव पीडनभयसिद्धेर्न वाच्यसिव्यङ्गता प्रत्यालिङ्गनादेरिति उद्द्योते। प्रत्यालिङ्गनहसितप्रसादादीनां मानापसरणरूपवाच्यापेक्षया सम्भोगं प्रत्यासन्नत्वेन न वाच्याङ्गतेति तत्रैव।

[ वृत्तिः ] जा ठेरंव्व हसंती कइवअणंबुरुहबद्धविणिवेसा।
दावेइ भुअणमंडलमण्णं विअ जअइ सा वाणी॥ ६७॥

[ या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी॥ ]

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगदजडासनस्था निर्मिमीते इति व्यतिरेकः। एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः।

[ कमला० ] कविप्रौढोक्तिसिद्धालङ्कारादलङ्कारव्यङ्गचमाह आ ठेरमिति।

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी॥

स्थविरं ब्रह्माणम्। उत्प्रेक्षया इवद्वयोक्तया ब्रह्मसर्गादुपमानादुपमेयकविसर्गस्याधिक्यं व्यतिरेकः हसन्तीति ब्राह्मणः अन्यदिवेति जगदित्यर्थः। अजलजेति पद्मभिन्नकविमुखरूपासनस्या। अनम्बुजेति पाठेऽम्बुजासनो ब्रह्मा तद्भिन्ना तज्जडं पद्मम् अस्यास्त्वजडमित्याधिक्यमित्यर्थः।

[ सरि० ] अलङ्काररूपकविप्रौढोक्तिसिद्धार्थाक्षिप्तालङ्काररूपव्यङ्गचोऽपि अर्थशक्त्युद्भवध्वनेरपरो भेदः। तमुदाहरति जाठेरमिति। जा ( या ) कइव अणोवुरुहबद्धविणिवेसा ( कविवदनाम्बुरुहबद्धविनिवेशा ) वाणी ठेरं ( स्थविरम् ) हसंती ( हसन्ती ) व ( इव ) भुअणमंडलं ( भुवनमण्डलम् ) अण्णं ( अन्यत् ) विअ ( इव ) दावेइ ( दर्शयति ) सा जअइ ( जयति ) इत्यन्वयः। या या हि प्रसिद्धा। कवीति कवीनां काव्यकाराणां वदनानि मुखानि एव अम्बुजानि कमलानि तेषु बद्धो रचितो विनिवेशः स्थितिर्यस्याः सा तादृशी। वाणी भारती। स्थविर वृद्धं स्वपूर्ववर्तिनं ब्रह्माणम्। हसन्ती उपहासं कुर्वती। इव इत्युत्प्रेक्षा। भुवनमण्डलं जगत्। अन्यत विलक्षणम्। इव इत्युत्प्रेक्षा। दर्शयति उपस्थापयति। सा तथाविधा। वाणी। जयति सर्वोत्कृष्टत्वेन वर्तते इति। यथा हि पद्मासनो ब्रह्मा परमाण्वादिकारणपरतन्त्रं सुखदुःखात्मकं नियतधर्मं जगदेव निर्माति वाणी तु कविवदनाम्बुजासनाऽत एव अजडासना तद्विलक्षणमनन्यपरतन्त्रमनियतधर्मं जगत्सृज-

तीवात एव ब्रह्माणमुपहसतीवेति सा जयतीति वाच्यार्थः इवद्वयजनितोत्प्रेक्षा-लङ्काररूपः। तेन च उपमानभूताद् ब्रह्मण उपमेयभूतायाः कविवाण्या उत्कर्षा-धानरूपव्यतिरेकालङ्कारो व्यज्यते तस्याशाङ्गत्वादिति। तदेवाऽऽह अत्रेति। अत्र काव्येऽस्मिन्। 'हसन्तीव' 'अन्यदिव' इतिइवद्वयजनितोत्प्रेक्षालङ्कारेण 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य परेण यत्' इति लक्षणलक्षितेन। नात्रोपमा ब्रह्मसृष्टे-र्वाणीसृष्टेरुत्कर्षवर्णनेन साधर्म्याभावात्। अजडासनस्था—पद्मरूपमपि अजडं कविवदनरूपं यदासनं तत्र स्थिता। चमत्कारिककारणं चमत्कारातिशयहेतुभूतम्। नवं नवं यथा यथा परिकल्पितं तथा तथैव। अभिनवमिति न तु पारम्परिकमिति— 'यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते' इति। जगत् भुवनम्। निर्मिमीते सृजति कल्पनामात्रेणेति। इति हेतोः। व्यतिरेकः उपमानापेक्षयोपमेयस्योत्कर्षरूपास्त-दाख्योऽलङ्कारो व्यज्यत इति शेषः। उत्प्रेक्षया व्यतिरेक इत्यादावेकवचनं जत्यभिप्रायेण। वस्तुतस्तु हसन्तीवेत्यनेनैका अन्यदिवेत्यनेन चापरोत्प्रेक्षा तथैव कविवदनाम्बुजबद्धविनिवेशेति एको व्यतिरेकः अन्यदित्यपरः। वाण्या हसनादिकं कविवाण्याऽन्यजगद्दर्शनस्य चालोकसिद्धत्वात्कविप्रौढोक्तिमात्रसिद्धत्वम्। उत्प्रेक्षा विनाऽपि वस्तुमात्रस्यापि व्यतिरेकव्यञ्जकत्वे सिद्धे यथा नियतिकृतनियमरहिता-मित्यादौ तस्य स्फुटत्वाय वा वस्तुमात्रस्य व्यञ्जकत्वेऽपि उत्प्रेक्षाव्यञ्जकत्वस्य विघाताभावात्तत्साहित्येनाऽपि तद्व्यङ्ग्यावगतेश्च प्राधान्येनोत्प्रेक्षाया एवं व्यञ्जकत्व-मित्यलङ्कारेणालङ्कार व्यङ्ग्यस्योदाहरणमिदं कविप्रौढोक्तिमात्रसिद्धेन। प्रकरण-प्रसङ्गं निर्दिशति एष्विति। एषु पूर्वोक्तेषु चतुर्ष्वेवोदाहरणेषु। कविप्रौढोक्तिमात्र-निष्पन्नः लोके ह्यतथासिद्धत्वात्कविप्रौढोक्तिवशादेव सिद्धो वस्त्वलङ्काररूपोऽर्थः। व्यञ्जकः वस्त्वलङ्काररूपव्यङ्ग्याक्षेपक इति।

[ वृत्तिः ] जे लङ्कागिरिमेहलासु खलिआ सम्भोगखिण्णोरई
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तण।
ते एह्णि मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥६८॥

[ ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्य पूर्णा इव। ]

अत्र निःश्वासैः प्राप्तैश्वर्याः वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते।

[ कमला० ] कविनिबद्धवक्तृप्रौढोक्तिसिद्धानाह। जे लंकेति। ये लङ्का······ इव। ये मलयानिलाः सर्वत्रासाल्लङ्कारसमीपे गिरिर्मलयस्तन्मेखलातः संवलिताश्च्युता गिरिपातेन हस्तपादभङ्गात्कृशत्वम्। श्रमे भोजनाधिक्यात् स्त्रीणां स्वेदाधिक्याच्चोत्प्रेक्षया खिन्नोरग्युक्तम्। मन्दवायुना विरहाधिक्यम्। स्फारा वितता उत्फुल्ला ऊर्ध्वप्रसूतास्तेन ग्रासेन स्थूलता कवलनाद् भक्षणात् सप्तम्यन्ते पाठे सति सप्तमी। दरिद्रत्वं कृशत्वमल्पत्वमित्यर्थः। प्राप्तास्ते बाल्येऽपि तारुण्यपूर्णा इव जाता इत्यर्थः। अत्रेति। निःश्वासैर्वस्तुना तद्रूपेण वस्तुना प्राप्तैश्वर्याः किं न कुर्वन्त्यनौचित्यं विरहिणीनिःश्वासस्यागणनान्निर्दयत्वञ्च वस्तु व्यज्यत इत्यर्थः। पुरुषसंयोगे निःश्वासाधिक्यान्निःश्वासैश्चर्वाद्याधिक्यान्निःश्वासैरित्यत्र निःश्वासा इति पाठो वा। अत्र पूर्णा इवेत्युत्प्रेक्षा। सत्त्वेऽपि निःश्वासस्य तारुण्यहेतोः सत्त्वात् काव्यलिङ्गसत्त्वेऽपि तदविवक्षया वस्तुनो व्यञ्जकत्वोक्तिः। अत्र कविनिबद्धो वक्ता कर्पूरमञ्जरीसंज्ञा नायिका तत्प्रौढ्यात्सिद्धता। वायूनां कृशत्वादित्यर्थः।

[ सरि० ] कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धवस्तुनो वस्तुव्यञ्जकत्वमुदाहरति जे लंकेति। मानिनीं नायिकां प्रति तत्सख्या इयमुक्तिरिति उद्द्योते। पद्यमिदं राजशेखरप्रणीते कर्पूरमञ्जरीसट्टके लभ्यते विचक्षणा देव्याज्ञया राजानं श्रावयतीदं स्वकृतित्वेन तत्र। जे ( ये ) लंकागिरिमेहलासु ( लङ्कागिरिमेखलासु ) खलिआ ( स्खलिताः ) संभोगाखिण्णोरईफारुप्फुल्लफणावलीकवलणे ( सम्भोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलने ) दरिद्दत्तणं ( दरिद्रत्वम् ) पत्ता ( प्राप्ताः ) ते ते ) मलआणिला ( मलयानिलाः ) एह्णि ( इदानीम् ) विरहिणीणसाससंपक्किणो ( विरहिणीनिःश्वाससम्पर्किणः ) चिसुत्तणे शिशुत्वे ) वि ( अपि ) तारुण्णपुण्णा ( तारुण्यपूर्णाः विअ ( इव ) बहला ( बहलाः ) झत्ति ( झटिति ) जादा ( जाताः ) इत्यन्वयः।

ये ये हि अनिलाः। लङ्कागिरिमेखलासु लङ्कागिरिर्हेमकूटो नवकूटेष्वन्यतमस्तस्य मेखलासु नितम्बेषु। स्खलिताः मन्दं मन्दमेव वाताः स्वभोक्तृसर्पभयादिति पतिता एव। सम्भोगेति सम्भोगेन सुरतेनाधिकं सेवितेन खिन्नानामत्यन्तश्रान्तानामत एव क्षुत्पीडितानामुरगीणां सर्पिणीनां स्फारा वितता उत्फुल्ला ऊर्ध्वं प्रसृता या फणावली फणापङ्क्तिः तया कवलने भक्षणे। आहारद्वैगुण्यद्योतनायोरगीव्यपदेशः 'आहारो द्विगुणः स्त्रीणाम्' इति प्रसिद्धेः। क्षुदतिशयाय सम्भोगखिन्नेति। कवलने स्थौल्यद्योतनाय स्फारोत्फुल्लेति। क्वचित्पञ्चम्यन्तोऽपि पाठः कवलनादिति हेतोः। दरिद्रत्वं कृशत्वमल्पत्वमिति। प्राप्ताः स्वल्पावशिष्टा इति। ते तथाभूताः। मलयानिलाः मलयमारभ्य वाता वायवः। इदानीं सम्प्रति

मधुसुरभिसमये। विरहिणीनिःश्वाससम्पर्किणः विरहिणीनां वियोगिनीनां निःश्वासैः दीर्घश्वासैः सम्पर्किणः प्राप्तसम्पर्काः ईषत्सम्बन्धा न तु संवलिता एव। मिश्रिताः सन्त इति। शिशुत्वे क्षीणत्वेऽल्पत्वे। अपि। बहला बाहुल्ययुक्ताः। तारुण्यपूर्णाः यौवनमत्ताः। इव इत्युत्प्रेक्षा, झटिति शीघ्रमेव। सञ्जाताः सम्पन्ना इति। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। निःश्वासैः विरहिणीदीर्घश्वासैः। प्राप्तैश्वर्याः लब्धविभवा अत एव बाहुल्यमाप्तास्तरुणायिताश्च वाताः। किं किं किम्मात्रम्। न नैव। कुर्वन्ति विदधति अपितु सर्वमेव साधयन्ति तेन सम्प्रति मानो न युक्त इति। इति इत्थम्। वस्तु व्यङ्गचोऽर्थस्तद्रूपः। वस्तुना वातोः स्खलनयौवनरूपेण बहिरसम्भाव्येन वाक्यार्थरूपेण। व्यज्यते ध्वन्यत इति। न चात्र 'तारुण्णगुण्णा विअ' इत्यत्रोत्प्रेक्षायाः सत्त्वेन न वस्तुनो व्यञ्जकत्वमिति वाच्यं तस्या व्यक्तावनुपयोगात्। न च तथासति तस्या वैयर्थ्यमेव शङ्क्यमुक्तिविशेषपरिपोषकत्वात्। न च निःश्वाससम्पर्कस्य बहलत्वहेतोरुपादानादत्र काव्यलिङ्गस्य व्यञ्जकत्वमेव शङ्कयं तस्य हेतुत्वस्य विवक्षाभावेऽपि तथाऽभिव्यक्तेः सत्त्वेऽप्यलङ्कारत्वे वस्तुन एव प्राधान्यात्तेनैव व्यञ्जकत्वव्यपदेशः प्राधान्येन व्यपदेशभावात्। अत्र कविनिबद्धवक्ता विचक्षणा तस्याः प्रौढ्या सिद्धं न तु बहिः सम्भाव्यमिति कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुनो वस्तुव्यञ्जकत्वस्योदाहरणमिदमिति।

[ वृत्तिः ] सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासं।
पिअदंसणविहलंखलक्खणम्मि सहसत्ति तेण ओसीरअं॥

[ सखि विरचय्य मानस्य मध्ये धीरत्वेनाश्वासम्।
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम्॥ ]

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा वा।

[ कमला० ] ईदृशेन वस्तुनाऽलङ्कारव्यङ्गयमाह सहीति। सखि······पसृतम्। विहलंखणे इति पाठे विह्वलक्षणे इत्यर्थः। वस्तुना प्रियदर्शनेन विभावना कारणाभावे कार्योक्तिः। प्रियेति नूनं प्रियदर्शनबलाद् धैर्यं पलायितमित्यर्थः।

[ सरि० ] वस्तुरूपकविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धार्थेनालङ्कारव्यञ्जनसमर्थशक्त्युद्भवध्वनेरन्यतमो भेदः। तमेवोदाहरति सहि इति। हे सहि (सखि) धीरत्तणेण (धीरत्वेन) माणस्य (मानस्य) मज्झ (मध्ये) आसासं (आश्वासम्) विरइऊण (विरचय्य) पिअदंसणविहलंखलक्खणम्मि (प्रियदर्शनविशृङ्खलक्षणे)

तेण ( तेन ) सहसत्ति ( सहसा इति ) ओसरिअम् ( अपसृतम् ) इत्यन्वयः। प्रियं प्रति मानमाहितुमसमर्थायाः कस्याश्चित्सखीमुद्दिश्योक्तिरियम्। हे सखि ! हे प्रियवयस्ये ! धीरत्वेन धैर्येण – मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व धृतिबधानऋजुतां दूरं कुरु प्रेयसि' इत्यादिवचनैस्त्वदर्पितेन। कर्त्ता। मानस्य प्रणयकोपस्य। मध्येऽन्तराले। आश्वासम् अहं त्वां स्थिरीकरोमि' इति वचनेन शान्त्वनाम्। विरचय्य कृत्वा। प्रियेति। प्रियस्य वल्लभस्य यद् दर्शनं विलोकनं तेन विशृङ्खले विह्वलीभूते क्षणेऽवसरे। तेन धैर्येण। सहसा अकस्मादेव। यद्वा सहसा मयेदं कारितं सम्प्रति न ते माने साहाय्यं कर्तुं प्रभवाभि। इति इत्थमुक्त्वेव। सहसेति वाक्यैकदेशानुकरणमतिसम्भ्रमवशादेकदेशस्यैव प्रयोग इति। अपसृतं पलायितम्। केषाञ्चिन्मते इतिशब्दो वाक्यसमापकोऽन्ते योजनीय इति। प्रथमं त्वहं त्वां माने सफलीकारयामीति धैर्येण समाश्वास्य मानं कारिता। किन्तु प्रियावलोकनजनितचित्तोत्तरङ्गितत्वावसरे अहं न तत्र मुहूर्तं क्षम इति तेन त्वरितं पलायितमिति। तत्राभीष्टमाह अत्रेति। अत्र काव्येऽस्मिन्। वस्तुना कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन वस्तुरूपवाक्यार्थेन प्रियदर्शनेनैव मानो भग्न इति रूपेण। प्रार्थने मानभङ्गायाः मुनये। अकृते अविहिते। अपि प्रसादनं विनैवेति कारणं विनैव कार्योत्पत्तेः। इति हेतोः। विभावना विभावनाविनाऽपि स्यात्कारणं कार्यजन्म चेत्। इति लक्षणोऽलङ्कारः। प्रियदर्शनस्य वल्लभावलोकनस्य। सौभाग्यबलं सन्नियतित्वप्रभावम्। धैर्येण धीरतया। सोढुं निष्प्रभावीकर्तुम्। न। शक्यते पार्यते। नूनमिति। वा पक्षान्तरे। उत्प्रेक्षा 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य परेण यत्' इति लक्षणोऽलङ्कारः। तयोश्च मियोऽनपेक्ष्य स्थितित्वात्संसृष्टिरिति। अयम्भावः—अत्र हि प्रियावलोकनेनैव धैर्यपलायनार्थकवस्तुरूपवाक्यार्थेन लोके धैर्यस्य पलायनस्यादृष्टत्वात्कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन प्रसादनं विनैव प्रसन्नेति विभावनालङ्कारः प्रियदर्शनसौभाग्यबलं हि धैर्यं सोढुं न शक्नोति इत्युत्प्रेक्षा च व्यज्येते इति कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धवस्तुनोऽलङ्कारव्यञ्जकत्वस्योदाहरणमिदम्।

[ वृत्तिः ] ओल्लोल्लकरअरअरुखएहिं तुह लोअणेसु मह दिण्णं।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥७०॥

( आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम्।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥ )

अत्र किमिति लोचने कुपिते वहसि इत्युत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु।

[ कमला० ] ईदृशेनालङ्कारेण वस्तुव्यङ्ग्यमाह उल्लोलेति। आर्द्रार्द्र······ आक्रान्ते। सपत्नीदत्तनखक्षतदर्शनात्क्रुद्धां नायिकां प्रति किमिति कोपादरुणे नेत्रे इति कान्तेन पृष्टे तस्या उक्तिः। पुनस्त्वर्थे। इमे नेत्रे तु कोपेन नाक्रान्ते किन्तु तव क्षतैर्मम लोचनयोरित्यन्वयः। रक्तांशव एव रक्तांशुकं वस्त्रञ्च प्रसादो दत्त इत्यर्थः। अत्रेति इति प्रश्ने कृते सति वाच्येनोत्तररूपेणालङ्कारेण न केवलं नखक्षतान्याच्छाययसि किन्तु तेषां क्षतानां प्रसादपात्रमप्यहं जाता मह्यं दर्शयस्यपीति महान् प्रसादः कृत इति वस्तु व्यज्यत इत्यर्थः। कोपनिषेधादपह्नुत्या चेति देवनाथः। प्रतिषेधात्प्रश्नाक्षेपेणोत्तरालङ्कारविश्रान्तेर्नापह्नुतेर्व्यञ्जकत्वम्। यथा सत्प्रतिपक्षोत्थापकस्योपाधेर्न हेत्वाभासत्वमुपक्षीणत्वादिति परमानन्दः।

[ सरि० ] कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धालङ्कारार्थेन यत्र वस्तु व्यज्यते तदपि अर्थशक्त्युद्भवध्वनेरन्यतमो भेदः। तदुदाहरति ओल्लोल्ल इति। सपत्नीदत्तनखक्षताङ्कितं दृष्ट्वा नायकं कुपितां नायिकां किमर्थं ते नयनेऽरुणे इति पृष्टवन्तं नायकं नायिकायाः प्रत्युक्तिः। तुह ( तव ) ओल्लोल्लकरअरअणक्खएहिं ( आर्द्रार्द्रकरजरदनक्षतैः ) मह ( मम ) लोअणेसु ( लोचनयोः ) रत्तंसुअं ( रक्तांशुकम् ) पआओ ( प्रसादः ) दिण्णं ( दत्तम् ) इमे ( इमे ) कोवेण ( कोपेन ) पुणो ( पुनः ) ण ( न ) अवक्कमिआ ( आक्रान्ते ) इत्यन्वयः। पुणो इमे इत्यप्यन्वयः। तव ते। आर्द्रार्द्रकरजरदनक्षतैः आर्द्रार्द्रैः नितान्तसद्यस्कैः करजानां नखानां रदनानां दन्तानाञ्च क्षतैः व्रणैः कयाऽपि कृतैः सम्प्रत्यपि तवाङ्गे स्पष्टतया दृश्यमानैः। मम मे। लोचनयोः नयनयोः। रक्तांशुकम् रक्तवस्त्रम्। प्रसादः प्रसान्नतोपहारः। दत्तम् समर्पितम्। पुनः। इमे मदीये नयने। कोपेन क्रोधवशात्। पुनः तु। न। आक्रान्ते व्याप्ते इति। नेमे नयने क्रोधेन रक्तेऽपितु त्वदङ्गदृश्यमानात्यार्द्रनखदन्तक्षतैरनयो रक्तवस्त्रं प्रसादरूपेण दत्तमिति वाक्यार्थः। तत्र वक्तव्यमाह अत्रेति। अत्र काव्येऽस्मिन्। किमिति किमर्थम्। कुपिते क्रुद्धेऽत एव रक्ते। लोचने नयने। वहसि धारयसि। इति प्रश्नस्य। उत्तरालङ्कारेण प्रश्नोन्नायकेन प्रकृतवाक्यार्थरूपेणोत्तरेण 'उत्तरमुतिमात्रतः। प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति। असकृद्यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम्।' इति लक्षणेनाऽत्र वाक्यार्थभूतेनालङ्कारेण। न। केवलम्। आर्द्रानखक्षतानि सद्यस्कनखचिह्नानि। गोपायसि आच्छादयसि। यावत्। तेषां क्षतानाम्। अहम्। प्रसादः पात्रम् कृपाभाजनम्। जाता सम्पन्ना। इति इत्थम्। वस्तु वस्तुरूपोऽर्थः। व्यज्यत इति शेषः। अयम्भावः—अत्र उत्तरेण प्रश्नस्योन्नयनादुत्तरोऽलङ्कारो वाच्यः स च क्षतैः प्रसाददानस्यादृष्टत्वात्कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धस्तेन च वाक्यार्थभूतेन आर्द्रनखदन्तक्षतानि तु गोपायस्येव तेषामहं प्रसादमात्रं जातेत्यपि त्वं गोपायसि इति

वस्तु व्यज्यते इति। नात्र 'कोवेण इमे ण अक्कमिआ' इति अपह्नवेन अपह्नुते-र्व्यञ्जकत्वं शङ्क्यं वाक्यार्थप्रसङ्गे प्रतिषेधानुपपत्त्या प्रश्नमाक्षिप्य विश्रान्ता-दुत्तरालङ्कारस्यैव व्यञ्जकत्वादपह्नुतेस्तु तन्मुखनिरीक्षकत्वात् तस्याः साहाय्य-मात्रत्वादप्राधान्याच्च। यथोक्तं निषेधरूपाया अपह्नुतेः कोपप्रसञ्जक प्रश्नाक्षेपकत्वा-दुत्तरालङ्काराङ्गत्वमिति। तथा सत्प्रतिपक्षोत्थापकस्योपाधेर्न हेत्वाभासत्वमुप-क्षीणत्वादिति च। वस्तुतस्तु उत्तरेण किमिति रक्ते नयने वहसि इति प्रश्नोन्नयना-दुत्तरालङ्कारेण 'पुणो इमे ण अक्कमिआ' इत्यपह्नुतिसचिवेन वस्तु व्यज्यतेऽत्रेति प्रदीपादौ स्पष्टम्।

[ वृत्तिः ] महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।
अणुदिणमणण्णकम्मा अंगं तणुअं वि तणुएइ ॥७१॥

( महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति॥ )

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः। एवं द्वादश भेदाः।

[ कमला० ] कविनिबद्धवक्तृसिद्धस्यालङ्कारव्यङ्ग्यमाह महिलेति। महिला··· तनूकरोति। महिला स्त्रीः। नायकं प्रति दूत्युक्तिः। चित्ते अमान्तीत्यत्र स्त्रीसहस्र-भृतत्वेन हेतुनाऽलङ्कारेण तनुत्वे कारणे सत्यपि हृदयवर्तनं कार्यं नेति विशेषोक्ति-रित्यर्थः। अत्र कविनिबद्धवक्त्री दूती। एवमिति अर्थशक्तिमूलस्य लक्ष्य-क्रमस्येत्यर्थः।

[ सरि० ] कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारेण यत्रालङ्कारो व्यज्यते सोऽपि अर्थशक्त्युद्भवध्वनेरन्यतमो भेदः। तदुदाहरति महिला इति। सुहअ ( सुभग ) तुह ( तव ) महिलासहस्सभरिए ( महिलासहस्रभरिते ) हिअए ( हृदये ) अमाअन्ती ( अमान्ती ) सा अणण्णकम्मा ( अनन्यकर्मा ) तणुअं ( तनु ) वि ( अपि ) अंगं ( अङ्गम् ) अणुदिणम् ( अनुदिनम् ) तणुएइ ( तनयति ) इत्यन्वयः। हे सुभग ! सुन्दर ! तव भवतः। महिलेति महिलानां विलासिनीनां सहस्रं तेन भरिते पूर्णे। हृदये हृदि। अमान्ती अवकाशमलभमाना। सा वराकी। अनन्यकर्मा न विद्यते अन्यत् अपरम् कर्म कृत्यं यस्याः सा तथाभूता। सती। तनु कृशतमम्। अपि। अङ्गम् शरीरम्। तनयति कृशयति इति। नायकं प्रति दूत्युक्तिः। तत्राभीष्टमाह

अत्रेति। अत्र काव्येऽस्मिन्। हेत्वलङ्कारेण हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमिति लक्षणेन काव्यलिङ्गालङ्कारेण। एकवचनं जात्यभिप्रायेण। वस्तुतस्तु अवकाशालाभस्य महिलासहस्रभरितत्वमेव हेतुः तनूकरणस्य अमान्तीत्वमेव हेतुरिति द्वाभ्यां काव्यलिङ्गाभ्यामेव। तनोः शरीरस्य। तनूकरणे नितान्तकृशीकरणेऽपि। तव ते। हृदये हृदि। न। वर्तते स्थानं लभते सेति। विशेषोक्तिः हेतौ सत्यपि फलाभावलक्षणोऽलङ्कारस्तदाऽऽख्यः। व्यज्यत इति कारणसत्त्वेऽपि कार्यानुत्पत्तेरिति।

प्रकरणप्रसङ्गमाह एष्विति। एषु पूर्वोपस्थापितेषु चतुर्ष्वेवोदाहरणेषु। कवीति। कविना निबद्ध उपस्थापितो यो वक्ता तस्य प्रौढोक्त्या निष्पन्नं समुपजातं शरीरं विग्रहो यस्य तादृशः। वस्तुरूपो वाऽलङ्काररूपः। व्यञ्जकः वस्त्वलङ्काररूपव्यङ्ग्यार्थप्रत्यायकः।

प्रकरणमुपसंहरति एवमिति। एवमित्थं हि स्वतःसम्भविकविप्रौढोक्तिमात्रसिद्धकविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धवस्त्वलङ्कारार्थाक्षिप्तवस्त्वलङ्काररूपव्यङ्ग्येन। अर्थशक्त्युद्भवध्वनेः। भेदाः। द्वादश इति त्रिविधस्य प्रत्येकं चतुर्विधभेदैरिति।

[ वि० वृ० ] अथ द्वितीयमाह—अर्थशक्त्युद्भव इति।

अर्थोऽपि अर्थशक्त्युद्भवे ध्वनौ व्यञ्जकः। स च स्वतः सम्भवी लोकेऽपि दृष्टः। तस्मिन्नदृष्टोऽपि कवेः प्रतिभामात्रेण सिद्धः। तेन कविना पूरितस्य वक्तुर्नायकादेर्वेति त्रिविधोऽसौ प्रत्येक वस्तुत्वालङ्कृतित्वाभ्यां द्वैविध्यात् षड्भेदः सन्नेकैकौ वस्त्वलङ्कारौ व्यनक्तीति तस्य द्वादशविधो व्यङ्ग्यः। तेन हेतुनाऽयमर्थशक्त्युद्भवो ध्वनिरपि द्वादशविधः। क्रमेणोदाहरणानि—

हस्तमुत्क्षिप्य यातोऽसि बलात्कृष्ण किमद्भुतम्।
हृदयाद्यदि निर्यासि पौरुषं कथयामि ते॥

अत्र वस्तुना भक्तानुरक्तो भगवानिति वस्तु।

मम क्षमस्वालि निजस्य दोषं कृपाप्रयोगं कुरु देवि भद्रे।
वक्रालकाः कान्तमुखावरूढाः शोभां तवामी कलयन्तु काचित्॥

अत्र वस्तुनोपमा।

ध्याता मूर्तिः क्षणमप्यच्युतस्य श्रेणी नाम्नां गदिता हेलयाऽपि।
संसारेऽस्मिन् दुरितं हन्ति पुंसां वातोर्मी पोतमिवाम्भोधिमध्ये॥

अत्रोपमया निदिध्यासनादिरूपा भगवद्भक्तिः समूलोन्मूलनलक्षणं कल्मषनाशं सद्यः करोति इति वस्तु ।

रङ्गे बाहुविरुग्नाद्दन्तीन्द्रान्मदलेखा ।
लग्नाभून्मुरशत्रौ कस्तूरीरसचर्चा ॥

अत्र रूपकेणोत्प्रेक्षा । एषु चतुर्षु स्वतःसम्भवी व्यञ्जकः ।

स्पन्दते यदि पदादि तदासां स्पन्दते मधुरिमाऽमृतधारा ।
सङ्गतः पवनजाद् व्रततीनामङ्गतो मधुकणा इव भूमौ ॥

अत्र यासां पदादिस्पन्दनमात्रादेवं माधुर्यरसवृष्टिरहो लोकोत्तरत्वं तासामिति वस्तुना रासलास्यविधौ वा कीदृशी तद्वृष्टिरिति वस्तु ।

क्षपासु शशभृत्कान्त्या प्रकाशितमिदं जगत् ।
धवलीकुरुते कीर्तिरनिशं तव माधव ॥

अत्र वस्तुना चन्द्रकिरणापेक्षया कीर्तेरधिककालप्रकाशित्वाद् व्यतिरेकः ।

गाढालिङ्गनदानाय हरौ समुपसर्पति ।
निर्याति हृदयान्मानस्तन्व्याः पीडनभीरिव ॥

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तस्मै तया दत्तमिति वस्तु ।

नयनासितपङ्कजस्रजा प्रणयार्द्रं हरिमर्चयन्ति याः ।
अधरासवदानसोत्सवाः प्रणतस्ता व्रजवल्लवीर्भजे ॥

अत्र रूपकेण व्रजवल्लवीनामर्चकान्तरेभ्यो वैलक्षण्याद् व्यतिरेकः । एषु चतुर्षु कविप्रौढोक्तिसिद्धो व्यञ्जकः ।

परिपुट्ठे परिपुट्ठं झीणे झीणं समम्मि समम् ।
माहव तीए अगं तुज्झ सिणेहेण धडिअं व ॥

अत्र सायुषा न जीवति किन्तु त्वत्स्नेहेनैवेति वस्तुना वस्तु ।

हृदये न्यधायि मानः प्रियसहचरि सावधानयाऽपि ।
दृष्टे सति मुरशत्रौ स निर्गतः क्वेति नाज्ञाऽपि ॥

अत्र वस्तुना विनाऽपि प्रार्थनां प्रसन्नेति विभावना ।

करजरदक्षतनिचयैर्मदीक्षणानां हरे वितीर्णोऽसि ।
रक्ताम्बरप्रसादः कोपेन पुनर्युते नैते ॥

अत्र किमिति नेत्रे कुपिते तवेत्युत्तरालङ्कारेण कथं नखादिक्षतानि संवृणोषि यावत्तेषां प्रसादपात्रमहं जातेति वस्तु ।

युवतिचयपरिपूर्णे तव हृदि मुरहर तयामान्त्या ।
प्रतिदिनमनन्यमनसा तनोस्तनुत्वं तनोरपि क्रियते ॥

अत्र काव्यलिङ्गेन तनोस्तनूकरणेऽपि तव हृदि सा न वर्तत इति विशेषोक्तिः । एषु चतुर्षु कविकल्पितवक्तृप्रौढोक्तिसिद्धो व्यञ्जकः कविनिबद्धस्य वक्तुः कवितोऽप्यनुरागाधिक्यात् तदुक्तिरधिकं चमत्करोतीति पृथक्प्रतिपादिता । एवं द्वादशभेदाः ।

[ कारिका ] शब्दार्थोभयभूरेकः......... ।

[ वृत्तिः ] अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥७२॥

अत्रोपमा व्यङ्ग्या ।

[ कमला० ] उभयशक्तिमूललक्ष्यक्रममाह शब्दार्थेति । एकोऽलङ्कारः । यद्यप्युभयशक्तिमूलं वस्त्वपि व्यङ्ग्यं तथापि रहस्यवस्तुनो व्यङ्ग्यस्य गोपनायैव नानार्थपदोपादानं तद्गोपनञ्च शब्दशक्त्यैवेति शब्दशक्तिमूलत्वेवेति परमानन्दः । अतन्द्रेति । अतन्द्रोऽनल्पश्चन्द्रः शशी आभरणं यस्याः पक्षे चन्द्रोऽर्भकः कर्पूरो वा येषु तान्याभरणानि यस्याः समुद्दीपितो बद्धः कामो यस्याः सा पक्षे समुत्सहर्षा दीप्तकामा तारका नक्षत्राणि नेत्रकनीनिका च तैस्तया च तरला धैर्यविहा श्यामा रात्रिः षोडशवार्षिकी च कं पुमांसमानन्दं न करोतीत्यर्थः । अत्र रात्रिः कान्तेवेत्युपमागम्या सा चाचन्द्रतारका श्यामा पदानां परिवृत्त्यसहत्वादन्येषां तत्सहत्वाच्चोभयमूला । यद्यप्यर्थशक्तिमूले शब्दस्य तन्मूले चार्थस्येति । उभयशक्तिमूलत्वं सर्वत्रास्ति तथाऽप्युभयोः प्राधान्ये उभयशक्तिमूलत्वं गुणप्रधानभावे त्वेकैकमूलत्वमित्याहुः ।

[ सरि० ] अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिध्वनेर्भेदनिरूपणप्रसङ्गे द्विविधं शब्दशक्तिमूलं द्वादशविधमर्थशक्तिमूलं निरूप्य सम्प्रति शब्दार्थोभयशक्तिमूलनिरूपककारिकामवतारयति शब्देति । **शब्दार्थोभयभूः** शब्दश्चार्थश्च तौ तद्रूपं यदुभयं ततो भवति इति । शब्दार्थोभयशक्त्युत्थः । एकः अलङ्काररूप इति । यद्यपि वस्त्वपि व्यङ्ग्यं तथापि रहस्ये वस्तुनि व्यङ्ग्य एव गोपनाय नानार्थपदोपादानम् । तद्गोपने च शब्दशक्तय एव प्रभवन्ति इत्युभयशक्तिमूलताविरहादेकस्यैवोद्धारः । यद्यपि शब्दस्य व्यञ्जकत्वेऽर्थस्यार्थस्य व्यञ्जकत्वे शब्दस्य च सहकारित्वं तु भवत्येव । तेनोभयशक्तिमूलकत्वं सर्वत्रैवास्ति तथापि तत्र तयोर्गुणप्रधानभावेन तद्व्यपदेशः । यत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वं तत्रोभयशक्तिमूलकत्वमुक्तम् । तयोः

प्राधान्ये शब्दस्य परिवृत्तिसहिष्णुत्वं तदसहिष्णुत्वं वा मूलम्। यत्र तु शब्दस्य तदुभयप्रकृतिस्तदोभयशक्तिमूलकत्वं भवतीति। तदुदाहरणायोपक्रमते यथेति। उदाहरणं प्रस्तौति **अतन्द्रेति**। अन्वयः स्पष्टः। **अतन्द्रचन्द्राभरणा** अतन्द्रः स्फुरत्कलो मेघाद्यनावृततया चन्द्र इन्दुरेवाभरणं भूषणं यस्याः सा तथाविधा। **समुद्दीपितमन्मथा** समुद्दीपितः सम्यगुद्दीपनेन प्रबलीकृतो मन्मथः कामो यया सा। **तारकातरला** तरलाऽल्पा तारका नक्षत्राणि यस्यां सा। आहिताऽन्यादेराकृतिगणत्वा-द्विशेषणस्य परनिपातः। तथाविधा **श्यामा** ज्योत्स्नी निशा ज्यौत्स्नीत्वं तु विशषणत्रलादेव। **कं** कतममेव। **सहृदयम्**। **सानन्दं** हर्षोत्फुल्लम्। **न**। **करोति** विदधाति अर्थात् सर्वमेवानन्दयतीति रात्रिपक्षेऽर्थः। अतन्द्रेति। अतन्द्रा निरालसाऽत एव समागमपरायणा चासौ चन्द्रः स्वर्णनिर्मितशिरोभूषणविशेषः एव आभरणमाभूषणं यस्याः सा 'चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु' इति कोशः। सुरतोत्सुका स्वर्णाभरणभूषिता च। **समुद्दीपितमन्मथा** समुद्दीपितः सम्प्रबोधितः मन्मथः कामो यस्यां सा यद्वा समुत् मुदा हर्षेण सहिता चासौ दीपितो दीप्तिं प्रापितो मन्मथो यया सा। **तारकातरला** तरला चञ्चला तारकाऽक्षिकनीनिका यस्याः सा यद्वा तारकावत् अस्ति दीप्त इति तरलो हारमध्यमणिर्यस्या सा। तादृशी। **श्यामा** षोडशो श्यामा षोडशहायना इत्युक्तेः। कमेव जन सानन्दं न करोति अपितु सर्वमेवेति प्रमदापक्षेऽर्थः। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। उपमा प्रमदेव ज्यौत्स्नी ज्यौत्स्नीव प्रमदेति वोपमा भेदे साधर्म्य-कथनात्। तस्याश्च वाचकशब्दाभावाद् व्यङ्ग्या वस्तुना प्रत्यायितेति! अत्र हि चन्द्रतारकातरलश्यामाशब्दानामपरिवृत्तिसहत्वं पर्यायान्तरेणापरार्थवोधनासम्भवात्। अतन्द्राभरणसमुद्दीपितमन्मथशब्दास्तु परिवृत्तिसहिष्णवः पर्यायान्तरैरपि तदर्थप्रतीतेः। एवं ह्युपमाः केषाञ्चिच्छब्दानां परिवृत्त्यसहतया केषाञ्चिच्च तत्सहतया उभयस्यापि प्राधान्येन व्यञ्जकत्वाच्छब्दार्थोभयशक्तिमूलेति। अत्र हि प्रस्तुतायामभिधाऽन्यत्र व्यञ्जनमेव। उभयत्र वाचकत्वाभावान्नात्र श्लेषः। इति।

[ वि० वृ० ] अथ तृतीयमाह – शब्दार्थोभयभूरेकः।

> अशेषसन्तापहरो जनुर्भृतां सदा बलाकामदनेद्धुरद्युतिः।
> त्विषाञ्चयैर्माधवजीवनप्रदो भावान्भुवं श्यामयते घनो नभः॥

अत्र बलाकादिशब्दाः स्वपरिवृत्तिं न सहन्ते सन्तापादिशब्दास्तु अर्थपरिवृत्तिम्। अतः शब्दार्थशक्त्या माधवघनयोरुपमाऽत्र व्यङ्ग्या।

**[ कारिका ] ............भेदा अष्टादशास्य तत्॥१८॥**

[ वृत्तिः ] अस्येति ध्वनेः।

[ कमला० ] अष्टादशेति । अविवक्षितवाच्यस्य अर्थान्तरसङ्क्रमित-वाच्यात्यन्ततिरस्कृतवाच्यौ द्वौ भेदौ विवक्षितान्यपरवाच्येऽलक्ष्यक्रमव्यङ्ग्य एकः लक्ष्यक्रमव्यङ्ग्ये शब्दशक्तिमूले वस्त्वलङ्कृती व्यङ्ग्ये इति द्वौ अर्थशक्तिमूला द्वादश उभयशक्तिमूलश्चैक इत्यष्टादशेत्यर्थः । अस्येत्यव्यवधानादुभयशक्तिमूलस्येति भ्रमः स्यात्तत्राह ध्वनेरिति ।

[ सरि० ] सुखाववोधार्थमुक्तभेदपरिगणनाय सम्बद्धकारिकामवतारयति भेदा इति । तत् अस्य अष्टादश भेदा इत्यन्वयः । तत् तेन हि । अस्य ध्वनेः अनन्तरा-कृष्टत्वेन न तु शब्दार्थोभयशक्तिभुवः । अष्टादश अष्टादशसङ्ख्याकाः । भेदाः प्रकारा इति । तेन हि ध्वनेरष्टादश भेदा भवन्ति । तथा हि वाच्यस्याविवक्षितत्वेन यो ध्वनिस्तस्य अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यत्वेन द्वौ भेदौ । यत्र हि वाच्योऽन्यपरत्वेन विवक्षितस्तस्य ध्वनेरलक्ष्यक्रमव्यङ्ग्य एकः संलक्ष्यक्रमव्यङ्ग्यस्य शब्दशक्तिमूलस्य अलङ्कारोऽथ वस्त्वेवेति द्वौ भेदौ अर्थशक्तिमूलस्य द्वादश भेदाः शब्दार्थोभयभूरेक इति पञ्चदशभेदाः । पूर्वोक्तैस्त्रिभिः सह ध्वनेरष्टादश भेदा इति । अस्येति पदं व्याख्याति मा भूदनवधानतया भ्रम इति । अस्येति । अस्य इति ध्वनेः न तु शब्दार्थोभयशक्त्युत्थस्येति । अनन्तराकृष्ट्या सङ्गतिः । विप्रकृष्टार्थपरामर्शार्थ-मिदं शब्दोऽत्रेति ।

[ वि० वृ० ] भेदा इति ।

अस्य ध्वनेः । तथा हि—अविवक्षितवाच्यस्य द्वौ भेदौ विवक्षितान्यपरवाच्यस्य तु षोडश । तत्रालक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरेकः संलक्ष्यक्रमव्यङ्ग्यस्तु पञ्च-दशविध इति ।

**[ वृत्तिः ] ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह—**

**[ कारिका ] रसादीनामनन्तत्वाद् भेद एको हि गण्यते ।**

**[ वृत्तिः ] अनन्तत्वादिति । तथा हि नव रसाः । तत्र शृङ्गारस्य द्वौ भेदौ । सम्भोगो विप्रलम्भश्च । सम्भोगस्याऽपि परस्परावलोकनालिङ्गन-परिचुम्बनादिकुसुमोच्चयजलकेलिसूर्यास्तमयचन्द्रोदयषड्तुवर्णनादयो बहवो भेदाः । विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभाव-व्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम् । तत्रापि देशकालावस्थादिभेदाः, इत्येकस्यैव रसस्यानन्त्यं, का गणना**

त्वन्येषाम् । असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते ।

[ कमला० ] रसादीनामिति । आदिपदाद् भावादीनाम् । दर्शनादिकम् यान्त्या मुहुर्वलितकन्धरमाननं तदित्यादौ स्पष्टम् । कुसुमानामुच्चयोऽवचयः । तदादीनामृत्वन्तानामुदाहरणानि माघकिरातार्जुनीयादौ स्पष्टानि । आदिपदात्प्रभातरतान्तरवयःसन्चयः । तेषामपि तत्रैव ज्ञेयानि । नायकयोरिति नायिका च नायकश्च तयोः । तत्र नायिकाया उत्तमादित्वं यथा—'मुग्धा मध्या प्रगल्भा च त्रिविधा नायिका भवेत् । मुग्धा नववधूसूत्रनवयौवनमण्डिता । नवाऽलङ्कारहस्ताऽपि लज्जाप्रायरतिर्भवेत् । आरूढयौवना मध्या प्रादुर्गतमनोभवा । प्रगल्भयौवना किञ्चिद्विचित्रसुरता भवेत् । लब्धापतिः प्रगल्भा स्यात्समस्तरतकोविदा । धीराधीरा च मध्या च सा पुनस्त्रिविधा भवेत् । कृतदोषेऽपि सा धीरा पत्यौ विनयमाचरेत् । अधीरा च रुषा हन्ति सन्त्यज्य दयितं बलात् । मध्या प्रतिदिनञ्चैव सोत्कण्ठं साधुभाषणैः ।। साऽप्येकैकाष्टविधा, यथा—स्वाधीनपतिरुत्का च तथा वासकसज्जिका । अभिसन्धिका विप्रलब्धा खण्डिता चाभिसारिका । प्रोषितप्रेयसी चेति नायिका सूचिताः क्रमात् । यस्याः रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति । विचित्रविभ्रमासक्ता सा स्वाधीनपतिर्भवेत् । उत्का भवति सा यस्याः सङ्केतं नागतः प्रियः । तस्यानागमने हेतुं चिन्तयत्याकुला क्वचित् । भवेद्वासकसज्जाऽसौ सज्जिता सङ्गमाशया । निश्चित्यागमनं भर्तुर्द्वारेक्षणपरायणा ! निरस्तो मन्युना कान्तो नमन्नपि यथा पुनः । दुःस्थिता चाविलासाभिसन्धिता कथिता भवेत् । प्रेष्य दूतीं स्वयं गत्वा सङ्केतन्नागतः प्रियः । यस्यास्तेन विना दुःस्था विप्रलब्धा तु सा भवेत् । दूरदेशे स्थिते पत्यौ नायिका खण्डिता भवेत् । कान्तार्थिनी तु या याति सङ्केतं साभिसारिका । पत्यौ देशान्तरगते प्रोषितप्रेयसी भवेत् ।। साऽप्येकैका त्रिधा अहितेऽपि प्रिये हितोत्तमा हिताहितप्रिये हिताहितकारिणी मध्या हितेऽप्यहितकारिण्यधमा । तथा दक्षिणश्चानुकूलश्च शठो धृष्ट इति क्रमात् । चतुर्विधस्तु सम्प्रोक्तो नायको भरतादिभिः । यो गौरवं भयं प्रेम सद्भावं पूर्वयोषिति । न मुञ्चत्यन्यचित्तेऽपि ज्ञेयोऽसौ दक्षिणो भवेत् । अतिरिक्ततया नार्यां सदाव्यक्तपराङ्गनः । सीतायां रामवत्सोऽयमनुकूलस्तु नायकः । प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् । त्यक्तापराधचेष्टश्च शठोऽसौ नायको भवेत् । निःशङ्कः कृतदोषोऽपि विलज्जस्तर्जितोऽपि सन् । मृषावाग्दृष्टदोषो पि धृष्टोऽसौ नायको भवेत् ।। इति नायिकानायकयोर्भेदः । देशो विजनादिः । कालो वसन्तादिः यौवनादिरवस्था । कालवयोवस्थाभावकन्दर्पनायकैः । इतरा अप्यवस्थाः स्युर्नोक्ता विस्तरकारणात् । अभिलाषोऽथ चिन्ता च स्मरणं गुणकीर्तनम् । उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिपीडनम् । जडता मरणञ्चैव दशावस्था द्वयोः क्रमात् ।। इत्युक्ताः ।-अन्येषां हासादीनां रसानां भावादीनां वा ।

[ सरि० ] रसभावादीनां बहुत्वात्कथमष्टादशत्वमुपपद्यत इत्याशङ्कानिरासाय सम्बद्धकारिकावतरणाय वृत्तिकृदुपक्रमते **नन्विति**। ननु इति जिज्ञासायाम्। **रसादीनां** रसभावादीनाम्। **बहुभेदेन** बहुविधत्वेन। **कथम्** केन प्रकारेण। **अष्टादश** ध्वनेरष्टादशैव भेदाः। इति प्रश्ने। **अतः** हेतोः। **आह** कथयति। कारिकामवतारयति **रसादीनामिति**। रसादीनाम् अनन्तत्वात् एकः हि भेदः गण्यते इत्यन्वयः। **रसादीनां** रसभावादीनाम्। **अनन्तत्वात्** असङ्ख्येयत्वात्। **एकः**। **हि** इति एवार्थेऽव्ययानामनेकार्थत्वात्। **भेदः** प्रकारः। **गण्यते** मन्यते इति। कारिकांशं व्याख्याति **अनन्तत्वादिति**। अनन्तत्वादिति कारिकायां यदुच्यते तस्यायमेवाशयो यत्। **तथा हि** इति निदर्शने। **नव रसाः** शृङ्गारहास्यकरुणरौद्र-वीरभयानकबीभत्साद्भुतशान्ताख्याः। **तत्रापि** रसानां प्रत्येकं भेदा यथा शृङ्गारस्य **द्वौ भेदौ** प्रकारौ। **सम्भोगः विप्रलम्भश्च**। तयोरपि प्रत्येकं बहवो भेदाः। यथा **सम्भोगस्य**। **अपि**। **परस्परेति**। परस्परमन्योन्यमवलोकनं सुरताशयेन वीक्षणं सोत्कण्ठम् आलिङ्गनमाश्लेषः परिचुम्बनं परितो नेत्रप्रान्तकपोलभाल-केशाधरादिषु निरीक्षणम् आदिपदाद् गुह्याङ्गपरामर्शादि च कुसुमोच्चयपुष्पग्रहणं जलकेलिर्जलक्रीडा सूर्यास्तमयः सन्ध्या चन्द्रोदयः शशिदर्शनम् षड्तूनां वसन्तादीनां वर्णनं तदादयः। **बहवः** अनेके। **भेदाः** प्रकाराः अनुभावोद्दीपनविभावरूपाः। **विप्रलम्भस्य अपि अभिलाषादयः** अभिलाष-चिन्ता-स्मरण-गुणकीर्तन-उद्वेग-प्रलाप-उन्माद-व्याधि-जडता-मरणादिका अवस्थाः। **तयोः** सम्भोगविप्रलम्भयोः। **अपि च**। **विभावेति** विभावानामालम्बनोद्दीपनरूपाणामनुभावानां भावोद्बोधनान्तर-कार्याणां कटाक्षादीनां व्यभिचारिणां लज्जादीनां वैचित्र्यं वैविध्यम्। **तत्रापि** विभावे एव। **नायकयोः** नायिका च नायकश्च तयोरुभयोरेव। **उत्तमेति** उत्तमः प्रकृतित्वं विप्रियकारिण्यपि ऋजुत्वम् मध्यमप्रकृतित्व यथा उपकारिण्युपकारोऽपकारिण्य-पकारश्च। वाऽनुकूले आनुकूल्यं प्रतिकूले प्रातिकूल्यम् अधमप्रकृतित्वं यथाऽनुकूलेऽपि प्रातिकूल्यमिति। तत्रापि नायकस्य अनुकूलदक्षिणशठधृष्टभेदेन चातुर्विध्यं नायिकायाश्च तथैव स्वीयाऽन्या साधारणीति त्रयो भेदाः। अथ तासां स्वाधीनपतिका-द्यष्टाववस्थाः। **तत्रापि**। **देशेति** देशो निर्जनादिः कालो वसन्तादिः अवस्था यौवनादि आदिभेदाः। **इति** इत्थम्। **एकस्य** शृङ्गारस्य। **एव**। **रसस्य**। **आनन्त्यमसङ्ख्येयत्वम्**। **अन्येषां** तदितरेषां हास्यादीनां तु। **का हि गणना** असङ्ख्येयतैव। **तेन असंलक्ष्यक्रमत्वम्** अनिर्लक्ष्यव्यञ्जकव्यङ्ग्यपौर्वापर्यत्वम्। **तु**। **सामान्यम्** समष्टिम् जातिं वा रसभावादिसाधारणधर्मम्। **आश्रित्य** आधारीकृत्य। **रसादिध्वनिभेदः** रस-भावरसाभास-भावाभास-भावशान्ति-भावसन्धि-भावोदय-भावशबलता ध्वनिप्रकारः। **एकः** एकविधः। **एव** इत्यवधारणे। **गण्यते**

सङ्ख्यायते इति। रसादिध्वनेर्भेदानामसङ्ख्येयत्वेन समष्टिमाश्रित्य एक एव भेद उक्त इति।

[ वि० वृ० ] ननु रसादीनां बहुभेदत्वात्कथमष्टादशेति तत्राह—रसादीनामिति। असंलक्ष्यक्रमत्वं जातिमादाय रसादिरेक एव गण्यते। अन्यथा तद्वर्णनमशक्यम् प्रत्येकं भेदबाहुल्यात्।

[ कारिका ] वाक्ये द्व्युत्थः.........।

[ वृत्तिः ] द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः।

[ कमला० ] वाक्ये इति। द्व्युत्थः शब्दार्थमूलो यो ध्वनिः स वाक्ये एवेति सावधारणं ज्ञेयम्।

[ सरि० ] एवमष्टादशविधत्वं ध्वनेः प्रतिपाद्य सम्प्रति तत्तद्भेदावस्थानं निर्दिदिक्षुः प्रथमं शब्दार्थोभयशक्तिमूलध्वनेस्तन्निर्देशाय सम्बद्धकारिकांशमवतारयति वाक्य इति। द्व्युत्थः द्वाभ्यां शब्दार्थाभ्यां समन्वितत्वेन उत्तिष्ठते उद्भवतीति व्यक्तो भवतीति। शब्दार्थोभयशक्तिमूलो ध्वनिरिति। वाक्ये पदसमूहो वाक्यं तत्रैव न तु पदे एवेति। भवतीति शेषः। एकस्यैव पदस्य परिवृत्तिसहिष्णुत्वासहिष्णुत्वयोर्वक्तुमयोग्यत्वात्। कारिकागतं द्व्युत्थपदं व्याख्याति द्व्युत्थ इति। द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः न तु शब्दशक्तितोऽर्थशक्तितश्चेति द्विविधो ध्वनिरिति। केषाञ्चिन्मते त्वेतत्प्रायिकमेव पदेऽपि तस्य सम्भवादिति। परे तत्र मन्यन्ते। एकदेशस्थाशब्दशक्तिरेकदेशान्तरस्थाऽर्थशक्तिर्व्यङ्ग्यं प्रति व्याप्रियत इति वाक्ये एवोभयशक्तिमूलत्वं सम्भवतीति ते। शब्दशक्तिस्तु पदगतैव भवति किन्त्वर्थशक्तिस्तु वक्त्राद्यौचित्यादेर्वाक्ये एव भवतीति द्व्युत्थस्य वाक्यमात्रावस्थानम्। शब्दशक्तिः श्लेषवशादर्थशक्तिस्तु प्रकरणवशादिति श्रीमदभिनवगुप्तपादाचार्या अपि। केचिदमुं प्रबन्धगतमपि मन्यन्ते। ते हि शिशुपालवधगतम् 'उभयं युगपन्मयोदितमि'ति प्रबन्धे सन्धिविग्रहयोः क्रमेण वाच्यतया व्यङ्ग्यतया च प्रतिपादनादुभयशक्तिमूलकत्वं तत्र पश्यन्ति। अन्ये तत्प्रतिवदन्ति तस्योभयशक्तिमूलकत्वेऽपि ध्वनित्वाभावाद्वाच्यार्थेन सह व्यङ्ग्यस्य तुल्यप्रधानभावात्। लक्ष्याणां बहुत्वाद् वृत्तिकृता नोदाहृतमिति। यच्च—

तमनुगतवती शठं मदर्थे त्वमपि च मत्सदृशीकृतासि धात्रा।
वहति वपुरिदं गतागतैस्ते नवरतखेदमवाप्य यद् दुकूलम्॥

इत्यत्र नवरतेत्यत्र गुरुपरि इति पाठे वक्तृबोद्धव्यवैशिष्ट्येन दूत्याः कामुकसम्भोगप्रकाशेनार्थशक्तिमूलत्वम्। सति च तस्मिन्नेव पाठे वक्त्रादिवैशिष्ट्यमनपेक्ष्यैव

शब्दशक्तिरेव प्रभवतीति पदेऽप्युभयशक्तिमूलकताऽप्युच्यते, तन्न । तत्पदान्वयव्यति-रेकानुविधानेन तन्मूलताविरहात् गुरुपरीति पाठे प्रथमरताप्रतीतेरिति विस्तारिकायां स्पष्टम् । एतेन 'बाधकेऽसति सर्वं हि वाक्यं स्यात्सावधारणम्' इति न्यायाद् वाक्ये एव द्वयुत्थ इत्यवधार्यमिति सङ्क्षेते ।

[ वि० वृ० ] वाक्ये इति । शब्दार्थशक्त्युत्थो वाक्ये एव न पदे ।

[ कारिका ] ·········पदेऽप्यन्ये ।

[ वृत्तिः ] अपिशब्दाद् वाक्येऽपि । एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्यापि भारती भासते ।

[ कमला० ] अन्येऽर्थान्तरसङ्क्रमितवाच्यादयः सप्तदश भेदाः । वाक्ये पदे वेत्यर्थः । ननु पदव्यञ्जकत्वे कथं समस्तवाक्ये चारुत्वं तत्राऽऽह एकेति । यद्वा पदव्यङ्ग्यत्वे कथं वाक्यस्य काव्यत्वमव्यङ्ग्यादत आह एकेति । वाक्यस्य व्यङ्ग्यं यत्र सा वाक्यव्यङ्ग्या । तदुक्तं ध्वनिकृता—

एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदव्यङ्ग्येन तु कवेर्ध्वनिना भाति भारती ॥

[ सरि० ] ध्वन्यवस्थाननिरूपणप्रसङ्गे द्वयुत्थावस्थानं निरूप्य सम्प्रति तद्भिन्न-ध्वनिभेदावस्थाननिरूपकं कारिकांशमवतारयति पदे इति । अन्ये पदे अपि इत्यन्वयः । अन्ये द्वयुत्यातिरिक्तसप्तदश भेदाः । पदे वाक्यैकदेशे । अपिपदात् वाक्ये च भवन्तीति । द्वयुत्यातिरिक्त सप्तदश ध्वनिभेदाः पदे वाक्ये च भवन्तीत्याशयः । कारिकांशं व्याख्याति अपीति । अपिशब्दात् 'पदेऽप्यन्ये' इत्यत्र योऽपिशब्दस्तस्मात् । वाक्ये पदसमुदाये । अपि चेति । पदे वाक्ये चेति । ननु कथमेकदेशिकः पदविषयो ध्वनिर्महावाक्योपयोग्यपीत्यत्राह एकेत्यादि । एकावयवस्थितेन एकस्मिन् कस्मिंश्चिदवयवेऽङ्गे श्रोत्रयोर्वा नासिकायां गले वा स्थितेन संलग्नेन । भूषणेन अलङ्कारेण । कामिनी प्रमदा । इव यथा । पदद्योत्येन पदाक्षेप्येण पदप्रकाशितेन पदांशादीनामलङ्कारव्यञ्जकत्वाभावात् पदग्रहणम् । व्यङ्ग्येन व्यञ्जनाविषयेण । वाक्यव्यङ्ग्या वाक्यस्य व्यङ्ग्यं यस्याः सा तादृशी यद्वा वाक्येन व्यञ्जयितुं योग्या अथवा वाक्यव्यङ्ग्यमस्त्यस्यामिति अर्शआदित्वादच् । टाप् । काव्यार्थ-स्वरूपवक्तव्यात्मिका । भारती कविता । भासते चमत्कुरुते इति । ननु समुदाय-रूपकाव्यविशेषत्वेन ध्वनेर्वाक्यव्यङ्ग्यत्वे कथं पदव्यङ्ग्यत्वं समर्थ्यते इति न वाच्यम् । यथा हि सर्वाभरणभूषिताऽपि कामिनी एकेन केनापि आभूषणेनेतरापेक्षयाऽधिकं

भासते तथैव वाक्यव्यङ्ग्यस्यापि पदव्यङ्ग्यत्वमविरुद्धम्। उक्तमेव यथा ध्वनिकारेण—

विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥ इति।

न च पदव्यङ्ग्यत्वं हि पदमात्रस्य व्यञ्जकतया। तत्तु तस्य प्राधान्येन भवति। यत्रैकस्य पदस्य प्राधान्येन व्यङ्ग्यार्थोपस्थितावानुगुण्यमन्येषां तु सहकारितामात्रं तत्र व्यङ्ग्यस्य पदनिष्ठत्वं नानापदानां तथारूपत्वे तु वाक्यगतत्वमेव। पदनिष्ठत्वमपि पदस्य शक्तेरुद्भटत्वमेव न तु सर्वस्वम्। यथा निःशेषच्युतचन्दनमित्यादिकाव्ये अधमपदस्य। अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्तिशब्दस्य वार्थस्य कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमिति पदव्यङ्ग्यत्वेऽपि वाक्यव्यङ्ग्यायाः भारतेर्न क्षतिः। एकदेशस्थितेनाऽपि तथाविधपदेन समस्तमेव वाक्यमुपक्रियते इति। न चैकस्मिन् पदे एव तादृशं सामर्थ्यं सम्भवति। यद् भवति तत्त्वन्यसहकारेणैवेति पदव्यञ्जकत्वं वाक्योपस्थमारकमेवेत्याशयः। तत्र वाक्यव्यङ्ग्यं तूदाहृतमेव पूर्वम्। सम्प्रति व्यङ्ग्यस्य पदप्रकाश्यत्वमुदाह्रियते।

[ वृत्तिः ] तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि—

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति॥७३॥

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वादि-सङ्क्रमितवाच्याः।

[ कमला० ] पदेऽप्यर्थान्तरसङ्क्रमितवाच्यमाह यस्येति। यस्य राज्ञो मित्राणि मित्राण्येव विश्वस्तान्येव नान्यथा शत्रवो दम्या एव अनुकम्प्यः स्नेहपात्रमेव स एव सुजन्मा स च श्लाघ्यजीवित इत्यर्थः। चशब्द एवार्थे। अत्रेति द्वितीय-मित्रादिशब्दा वैयर्थ्यादविवक्षितवाच्याः सन्त आश्वस्तादि लक्षयन्ति। तेन नायके स्थिरप्रतिज्ञत्वं व्यङ्ग्यः। अत्र पदानां प्रत्येकमर्थसमाप्तेर्नैकवाक्यता। तेन पदानि व्यञ्जकानि न वाक्यम्। त्वामस्मीति तादृशनानापदघटितत्वाद् वाक्यं व्यञ्जकम्। अत्र त्वेकवाक्ये एकमेव पदं व्यञ्जकमिति वैषम्यमिति देवनाथः।

[ सरि० ] व्यङ्ग्यस्य द्व्युत्थभिन्नस्य तस्य वाक्यमात्रप्रकाश्यत्वेन पदवाक्याभ्यां प्रकाश्यत्वं यदुक्तं तत्र तस्य वाक्यप्रकाश्यत्वं तु समुदाहृतमेव तत्र तत्र। सम्प्रति तस्य पदप्रकाश्यत्वोदाहरणाय वृत्तिकृदुपक्रमते तत्रेति। तत्र ध्वनेः द्व्युत्थभिन्नस्य पदवाक्यप्रकाश्यत्वेन द्वैविध्ये प्रत्येकम्। पदप्रकाश्यत्वे पदद्योत्यत्वे। क्रमेण

अविवक्षितवाच्यादिशृङ्खलया कारिकोक्तया। उदाहरणानि निदर्शनानि। उपस्थाप्यन्त इति। उदाहरति प्रथममर्थान्तरसङ्क्रमितवाच्यध्वनेः पदप्रकाश्यत्वं यस्येति। यस्य मित्राणि मित्राणि तथा शत्रवः शत्रवः अनुकम्प्यः अनुकम्प्यः च स जातः स च जीवति इत्यन्वयः। यस्य पुरुषस्य मित्राणि सुहृदः। मित्राणि विश्वासपात्राणि आपदि सुखे च समक्रियाणि सन्ति। तथा एवमेव शत्रवो वैरिणः शत्रवः दमनीयाः एव सन्ति। अनुकम्प्यः आश्रितः। अनुकम्प्यः स्नेहपात्रमेव अस्ति। चकारः समुच्चयार्थे त्रयाणामेव। सः तादृशो जनः। जातः सुजन्मा भवति। सः तथाविध एव जनः। च एव नान्यः। जीवति श्लाघ्यजीवनो भवतीति। तत्र कथनीयमाह अत्रेति। अत्र काव्येऽस्मिन्। द्वितीयमित्रादिशब्दाः द्विःपठिता मित्रशत्र्वनुकम्प्यशब्दाः। आश्वस्तत्वेति क्रमेण आश्वस्तत्वं विश्वसनीयत्वं नियन्त्रणीयत्वं दमनीयत्वं स्नेहपात्रत्वं प्रेमभाजनत्वञ्च तदादिषु सङ्क्रमितः वाक्ये मुख्यार्थस्यानुपयोगित्वेन बाधात्तदर्थे स्थानान्तरितः वाच्यो मुख्योऽर्थो येषां ते तादृशाः भवन्तीति शेषः। अयम्भावः—द्विःपठितमित्रशत्रु-अनुकम्प्यशब्दाः स्वमुख्यार्थेऽनुपयुक्ताः सन्त वाच्यस्याविवक्षितत्वेन, आश्वस्तत्वादि लक्षयन्ति यैर्नायकस्य व्यवहारकुशलतादिकं व्यज्यते उपादानलक्षणायाः फलत्वेनेति। तेषु हि लक्षणायां सामान्यविशेषभावः सम्बन्धः। अत्र हि वाच्यदृष्टया वाक्यपञ्चके सत्यपि व्यङ्ग्य-दृष्टया तु तेषामेकवाक्यत्वमेव। उक्तमेव हरिणा—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥ इति।

सत्यपि तथाऽत्र पदप्रकाश्यत्वं ध्वनेस्तु वाक्यार्थानां प्रत्येकविश्रान्तत्वेनेति। अर्थात्तत्तद्वाक्यगतस्यैकैकपदस्यैव व्यञ्जकतेति। यथोक्तम्—अत्र प्रत्येकमेव मित्रादि पदं लक्षकं सन्नायकस्योचितव्यवहारत्वादिकं प्रकाशयति इति। ननु 'त्वामस्मि वच्मि' इत्यत्र कथं न पदप्रकाश्यत्वं ध्वनेस्तत्रापि व्यङ्ग्यस्य प्रत्येकपदप्रकाश्यत्वा-दिति चेदित्थम्। न तत्र प्रत्येकपदव्यङ्ग्यप्रकाशता। तत्र तु व्यङ्ग्यार्थोपस्थिति एकवाक्यस्थैः सर्वैरेव पदैरिति तत्र वाक्यप्रकाश्यत्वादेव व्यङ्ग्यस्य। तत्र तस्मादत्र सावधानेन भाव्यमिति यद्व्यङ्ग्यं तत्पदसमुदायरूपवाक्याभिप्रायेणैव। अत्र तु नायकस्य व्यवहारप्रावीण्यं प्रत्येकमेवार्थान्तरसङ्क्रमितवाच्यैर्मित्रादिपदैर्व्यज्यते इति व्यङ्ग्यस्य पदप्रकाश्यत्वस्योदाहरणमिदमिति।

[ वृत्तिः ] खलव्ववहारा दीसंति दारुणा जहवि वहवि धीराणं।
हिअअवअस्सवहुमंआ ण हु ववसाआ विमुज्झंति॥७४॥

( खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ।। )

अत्र विमुह्यन्तीति ।

] कमला० ] पदेऽत्यन्ततिरस्कृतवाच्यमाह खलेति । खलव्यवहारा.........विमुह्यन्ति । यद्यपि खलव्यवहारा दारुणास्तथापि धीराणां हृदयमेव वयस्यः सखा सदर्थग्राहित्वात् तस्य बहुमताः सम्मता व्यवसाया न तिष्ठन्तीत्यर्थः । अत्रेति । विमुह्यन्तीति व्यञ्जकमिति शेषः । अचेतने व्यवसाये चेतनधर्मस्य मोहस्य बाधात्कुञ्चितत्वं लक्ष्यं दृष्टकारित्वं व्यङ्ग्यम् ।

[ सरि० ] व्यङ्ग्यस्य पदप्रकाश्यत्वोदाहरणप्रसङ्गे क्रमप्राप्तमत्यन्ततिरस्कृतवाच्यमुदाहरति खलेत्यादि । जहवि ( यद्यपि ) खलव्ववहाराः ( खलव्यवहाराः ) दारुणा ( दारुणाः ) दीसन्ति ( दृश्यन्ते ) तहवि ( तथापि ) धीराणं ( धीराणाम् ) हिअअवअस्सबहुमआ ( हृदयवयस्यबहुमता ) ववसाआ ( व्यवसायाः ) ण ( न ) विमुज्झन्ति ( विमुह्यन्ति ) हु ( खलु ) इत्यन्वयः । यद्यपि एकतः । खलव्यवहाराः खला दुष्टास्तेषां व्यवहाराः चरितानि । दारुणाः अनियतगतय अन्यहितबाधकाः । दृश्यन्ते प्रसिद्धा एव । तथापि अपरतस्तु । धीराणां धैर्यशालिनाम् । हृदयेति । हृदयं स्वान्तमेव वयस्यः सखा तस्य बहुमता अनुमोदिता विचिन्त्य गृहीताः । व्यवसायाः उद्यमाः । न । विमुह्यन्ति प्रतिबद्धा वा बाधिता भवन्तीति । दुष्टानां क्रियाः प्रतिपद भिद्यमाना दृष्टाः धीरास्तु प्रथममेव साधु विचिन्त्य प्रारभन्ते किमपि प्रारब्धञ्च तेषां न प्रतिबद्धं भवति केनापीति यद्वा यद्यपि दुष्टा दुष्टहृदयाः सन्तो दारुणमाचरन्त्येव तथापि धीरास्तु सरलहृदयाः भवन्ति तेन ते तेषामप्युपकारमेव कुर्वन्तीति । तत्र कथनीयमाह अत्रेति । अत्र काव्येऽस्मिन् । विमुह्यन्ति त्रुटयन्ति । इति इतिपदं व्यङ्ग्यप्रकाशकमिति । मोहस्तु सचेतनस्यैव धर्मः ! तस्य व्यवसायेऽचेतने बाधितः कार्यकारणभाव सम्बन्धादत्यन्ततिरस्कृतवाच्यत्वेन विराम रूपमर्थं लक्षयति दृष्टकारित्वञ्च व्यङ्ग्यं लक्षणलक्षणया जनितमिति स्पष्टम् । 'उपकृतं बहु.........' इत्यादौ तु सर्वेषामेव पदानामिति तत्र वाक्यप्रकाश्यत्वमत्र तु पदस्यैकस्य व्यञ्जकत्वमिति अत्यन्त तिरस्कृतवाच्यध्वनेः पदप्रकाश्यत्वस्योदाहरणमिदम् ।

[ वृत्तिः ] लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ।।७५।।

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते ।

[ कमला० ] पदस्यालक्ष्यक्रममाह लावण्यमिति । लावण्यं संस्थानविशेषः कान्तिरुज्ज्वलता रूपं वर्णः । तदा सम्भोगेऽनुभवे सुधास्पदं स्मरणे ज्वर इत्यर्थः ।

अत्रेति । अनुभवैकगोचराः निर्वक्तुमशक्याः । तदादिशब्दानां बुद्धिस्थे शक्तेर्लावण्याद्यतिशया व्यङ्ग्याः । विप्रलम्भसत्त्वेऽपि तदादीनामेव प्राधान्यात् पदमेव व्यञ्जकम् ।

[ सरि० ] व्यङ्ग्यस्य पदप्रकाश्यत्वोदाहरणप्रसङ्गे क्रमप्राप्तेऽलक्ष्यक्रम व्यङ्ग्ये विप्रलम्भशृङ्गारस्य पदप्रकाश्यत्वमुदाहरति लावण्यमिति । तत् लावण्यम् असौ कान्तिः तत् रूपम् सः वचःक्रमः तदा सुधास्पदम् अभूत् अधुना तु महान् ज्वर इत्यन्वयः । तत् अनिर्वचनीयम् । लावण्यं सौन्दर्यम् । असौ वक्तुमशक्या । कान्तिः द्युतिः । तत् अप्रतिमम् । रूपमाकृतिः । सः सुधाधिककमनीयः वचःक्रमः वाग्विन्यासः । तदा सम्भोगकाले । सर्वमेव । सुधा-स्पदम् पीयूषस्थानकममृतायमानम् । अभूत् आसीत् । अधुना सम्प्रति विप्रलम्भकाले । तु इति व्यवच्छेदे तद्विपरीतमिति । महान् दारुणोऽचिकित्स्यः । ज्वरः ताप इति । तत्र कथनीयमाह अत्र काव्येऽस्मिन् । तदादिपदैः तद्-अदस्-शब्दात्मकैः पदैः अनुभवैकगोचराः अनुभवमात्रविषया निर्वक्तुमशक्या अत एव लावण्याद्यतिशयरूपाः । अर्थाः व्यङ्ग्यार्थाः । प्रकाश्यन्ते द्योत्यन्ते । यथा हि तल्लावण्यमिति अनिर्वचनीयं सौन्दर्यम् । यथोक्तम्—

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमुदीरितम् ॥ इति ।

एवमेव निर्वक्तुमशक्योज्ज्वलता । अनिर्वचनीयं संस्थानसौष्ठवम् । अवयवस्य संस्थानसौष्ठवं रूपमवयविनस्तदेव लावण्यमिति तन्मर्मज्ञाः । वचनपरिपाटी चाशब्दविषयेति । अत्र तदादिभिर्विशिष्यवचनानर्हतया लावण्यादिगतलोकोत्तरत्वप्रतिपादनद्वारा विप्रलम्भाभिव्यक्तिरिति अलक्ष्यक्रमव्यङ्ग्यस्य पदप्रकाश्यत्वोदाहरणमिदम् । यद्यप्यत्र वाक्येन विप्रलम्भप्रतीतिस्तथापि तदादिपदद्योत्याह्लादकारित्वादिविशिष्टस्यैव लावण्यादेरनुभवत्वमिति रसस्यापि पदप्रकाश्यत्वमविरुद्धमिति बालचित्तानुरञ्जन्याम् । तत्र विशिष्टलावण्याद्यनुभवप्रतीतिसमये एव रसस्यापि प्रतीतिरित्यसंलक्ष्यक्रमत्वमप्यविरुद्धमित्यपि तत्रैव । अत्र तदादीनां बुद्धिविषयतावच्छेदकादिप्रकारेण शक्त्युपगमे लावण्याद्यतिशयो व्यङ्ग्यः । विप्रलम्भप्रतीतेर्विभावादिसामग्रीसत्त्वेऽपि तदादिपदानां प्राधान्यमिति पदव्यञ्जकतेति सारबोधिन्याम् ।

[ वृत्तिः ] यथा वा—

मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते,
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।

सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना,
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥७६॥

अत्र भीताननेति। एतेन हि नीचैःशंसनविधानस्य युक्तता गम्यते। भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते।

[ कमला० ] सम्भोगमप्याह मुग्धे इति। मुग्धे हिताग्राहिणि। एवकारेणायोगव्यवच्छेदः। अखिलः भविष्योऽपि भूतस्तु जात एव। प्रियानर्थं मानं धारय। धैर्यस्य बन्धनादनपनेयता। प्रेयसि प्रिये ऋजुतां साधुतां त्यजता सखीं प्रति वचः प्रतिकूलं वचः। अत्रेति। व्यञ्जकमिति शेषः। भयकार्यशोषवैवर्ण्यवत्त्वान्मुखे भीतत्वोक्तिः। एतेन हीति। शनैः शंसनस्य विधानमप्राप्तप्रापणम्। तस्य युक्तत्वम्। भयगम्यानुरागस्याकृत्रिमत्वात्सम्भोगप्रकर्षो गम्यः। स च भीताननापदगम्य इत्यर्थः। भावादीनामिति। अधिकवाक्यापेक्षयाऽतिरिक्तं नेत्यर्थः।

[ सरि० ] व्यङ्ग्यस्य पदद्योतत्वोदाहरणप्रसङ्गे अलक्ष्यक्रमव्यङ्ग्यस्यैवोदाहरणानन्तरं प्रस्तौति यथेति। यथेति निदर्शने। वेति विकल्पे। न केवलं सर्वमपदानामेवापितु अन्येषामपि पदानां रसादिव्यञ्जकता भवतीति निदर्शनाय सम्भोगशृङ्गारद्योतकोदाहरणस्य प्रस्तावोऽयम्। उपस्थापयति मुग्धे इति। हे मुग्धे! अखिलः कालः मुग्धतया एव नेतुम् किम् आरभ्यते? मानम् धत्स्व धृतिम् बधान प्रेयसि ऋजुताम् दूरे कुरु एवं सख्या प्रतिबोधिता भीतानना ताम् प्रतिवचः आह नीचैः शंस हि ननु मे हृदि स्थितः प्राणेश्वरः श्रोष्यति इत्यन्वयः। हे मुग्धे! हे अज्ञातमानास्वादे! अखिलः समस्तः भविष्योऽपि भूतस्तु यात एव। कालः समयः। मुग्धतया प्रमदाजनोचिताचरितं विना। एव इत्यवधारणे। नेतुम् अतिवाहयितुम्। किम् कस्मात्। आरभ्यते प्रक्रम्यते। तर्हि किं क्रियतामित्याह कारणं विनाऽपि मानं कोपम्। धत्स्व धारय। तदर्थं धृतिं धैर्यम्। बधान अवस्थापय। प्रेयसि दयिते। ऋजुतां सरलताम्। दूरे कुरु त्यज। एवम् इत्थम्। सख्या वयस्यया। प्रतिबोधिता मुहुर्मुहुरुपदिष्टा। सती। भीतानना भीतं त्रस्तमिवाननं वदनं यस्याः सा। ताम् सखीम्। प्रतिवचः प्रतिकूलवचनम्। आह कथयति। नीचैः मन्दम्। शंस बद। हि यतः। ननु इति शङ्कायाम् अनुनये वा। मे मम। हृदि हृदये। स्थितः आसीनः प्राणान् गृहीत्वाऽवस्थितः। प्राणेश्वरः वल्लभः। श्रोष्यति आकर्णयिष्यति इति। पद्यमिदममरुशतकगतम्। तत्र कथनीयमाह अत्रेति। अत्र काव्येऽस्मिन्। भीतानना इति पदं सम्भोगशृङ्गारव्यञ्जकम्। तत्र हेतुमाह एतेनेति। एतेन भीताननेति शब्देन। हि यतः। नीचैःशंसनविधानस्य मन्दकथनक्रियायाः। युक्तता सार्थक्यम्। गम्यते

ज्ञायते इति। अयमाशयः—हृदि स्थितो हि प्राणेश्वरो रुष्टः प्राणानेवादाय न तिष्ठेदिति भीतवद् व्यग्रानत्वेनैव कदाचित्स न शृणुयादिति नीचैः शंसनविधानमुपयुक्तमिति। तेनैवोक्तं नीचैःशंसनविधानस्यानाहार्यत्वेन युक्तत्वं तद्वाननगतविच्छायत्वानुमितभयगम्यमिति। भयप्रतिपाद्याकृत्रिमानुरागेण च सम्भोगः प्रकृष्यते इति तस्य प्राधान्येन भीताननपदप्रकाश्यतेति। भावादीनां पदप्रकाश्यता कथमुपेक्षितेत्यत आह भावादीनामिति। भावादीनां भावतदुदयशान्तिसन्धिशबलतादीनाम्। पदप्रकाश्यत्वे पदेन द्योत्यत्वे। न नैव। अधिकं वाक्यापेक्षयाऽतिरिक्तम्। वैचित्र्यमास्वादजनकत्वम्। इति हेतोः। तत् भावादीनां पदप्रकाश्यत्वम्। न नैव। उदाह्रियते निदर्श्यते इति। रसस्यैव भावादेरपि पदप्रकाश्यता तु भवत्येव। तथापि तत्र वाक्यप्रकाश्यत्वातिरिक्तं न वैचित्र्यमिति नात्रोदाहृतमिति। यथा—

'तन्मञ्जु मन्दहसितं श्वसितानि तानि।
सा वै कलङ्कविधुरा मधुराननश्रीः॥'

इत्यत्र तच्छब्दव्यञ्जकत्वेन भावध्वनित्वमिति ग्रन्थान्तरे।

[ वृत्तिः ] रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीम ॥७७॥

**अत्र भीषणीयस्य भीमसेन उपमानम्।**

[ कमला० ] विवक्षितान्यपरवाच्यलक्ष्यक्रमस्य शब्दशक्तिमूलमलङ्कारपदव्यङ्ग्यमाह रुधिरेति। रुधिरस्य विसरः प्रवाहस्तेन प्रसाधितोऽलङ्कृतः करालो भीषणीयः करवालः खड्गस्तेन रुचिरो मित्राणां प्रियो भुज एव परिघोऽर्गला यस्य। वैरिरोधकत्वादर्गलात्वम्। भृकुट्या विटङ्कितस्तरङ्गायितः यद्वा भृकुट्यां विटङ्कवत्कपोतपालिकावदाचरितो ललाटपट्टो यस्य सः भवान् भीमो भीषणो भीमसेनश्च भासि। अत्रेति। भीषयति भीषणीयः कृत्यल्युटो बहुलमित्युक्तेः कर्तर्यनीयर्। भीमपदे प्रकृतयोः सादृश्यादुपमा व्यङ्ग्या।

[ सरि० ] व्यङ्ग्यस्य पदप्रकाश्यत्वोदाहरणप्रसङ्गे संलक्ष्यक्रमव्यङ्ग्ये शब्दशक्तिमूलकमलङ्कारव्यङ्ग्यमुदाहरति रुधिरेत्यादि। हे भीम नृप रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः झटिति भ्रुकुटिविटङ्कितललाटपट्टः विभासि इत्यन्वयः। हे भीम परेषां भयङ्कर! नृप! पार्थिव! रुधिरेति रुधिरस्य रक्तस्य विसरः प्रसरः तेन प्रसाधित प्रकर्षेणारक्तीकृतोऽत एव करालो भयङ्करः यः

करवालः खड्गस्तेन रुचिरः श्लाघ्यः परिघोऽर्गला इव विपुलो भुजोः बाहुर्यस्य स तादृशः। तथा झटिति द्रुतमेव। भ्रुकुटीति भ्रुकुट्या भ्रूभङ्गेन विटङ्कितं तरङ्गितं यद्वा विटङ्कं कपोतपालिका तदाकाररेखान्वितं यल्ललाटं भालं तदेव पट्टः फलको यस्य स तादृशः। तादृशो भीमः इति पाठे भीमः भीषणो भीमसेनश्च। भासि शोभसे इति। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। भीषणीयस्य भीषयतीति भीषणीयः। बाहुलकात्कर्तर्यनीयर् 'कृत्यल्युटो बहुलमि'ति। तस्य। भीमसेनः वृकोदरः। उपमानम् व्यङ्ग्यमिति। यथा भीमो भयङ्कर इति वाच्यः भीमसेनः पाण्डवभेदो व्यङ्ग्य इति। तयोरुपमा व्यङ्ग्येति सा च भीमेति पदादिति तस्य परिवृत्त्यसहत्वेन शब्दशक्तिमूलकालङ्कारध्वनेरुदाहरणमिदम्। तेनैवोक्तम्—अत्र भीमेति भीषणीयार्थेन नृपसम्बोधनविशेषेण भीमसेनोपमा व्यज्यत इति। नात्र रूपक विभासीति मध्यमपुरुषानन्वयात् विधेयप्राधान्येनैवान्वयात्तत्रेति। यथा हि मुखचन्द्रो हसति इत्यत्र हसनस्य रूपके बाधकत्वमुपमायां तु साधकत्वम्।

[ वृत्तिः ] भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः॥७८॥

काचित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति।

[ कमला० ] पदे शब्दशक्तिमूललक्ष्यक्रमस्य वस्तुव्यङ्ग्यमाह भुक्तीति। सदागमः सच्छास्त्रम् सतः कान्तस्यागमनञ्च। कस्यानन्दधारां न करोति। यदा भुक्तिर्भोगः स्वर्गादिर्मुक्तिर्मोक्षः पक्षे भुक्तिः सम्भोगः मुक्तिः सर्वत्यागः तं करोतीति कृत् एकान्तोऽद्वैतं समादेशनं विधिश्च तत्परः ब्रह्मकर्मकाण्डपरत्वात् पक्षे एकान्तस्य विजनस्योपदेशे परः। काचिदिति। एवं श्लिष्टपदेन। ननु कान्तागमवच्छास्त्र-मित्युपमा किं न तत्राऽऽह मुख्ययेति। सदागमपदे षष्ठीतत्पुरुषात्कर्मधारयबलीय-स्त्वात्पूर्वं सच्छास्त्रधीः। ततो रतरूपार्थस्य गोपनार्थं शास्त्रधीमुखेन कान्तागमस्योप-देशत्वेन प्राधान्यान्नोपमा समप्राधान्ये एव तत्सत्त्वात्। तेनेह गच्छेति वस्त्वेवं व्यङ्ग्यमित्यर्थः।

[ सरि० ] शब्दशक्तिमूलवस्तुव्यङ्ग्यस्य पदप्रकाश्यत्वमुदाहरति भुक्तीत्यादि। भुक्तिमुक्तिकृत् एकान्तसमादेशनतत्परः सदागमः कस्य आनन्दनिस्यन्दम् न विदधाति इत्यन्वयः। भुक्तिमुक्तिकृत् भुक्तिर्भोगः स्वर्गादिः मुक्तिरपवर्गश्चरमदुःखध्वंसः ते उभे करोति सम्पादयति तच्छील इति क्विप्। तुक्। एकान्तेति एकान्तस्य। द्वैतस्य समादेशनं विधानं तत्र तत्परः सदोद्यतः। सदागमः सच्चासावागमः शास्त्रम्। कस्य कस्य हि जनस्य। आनन्दनिस्यन्दम् आनन्दस्य नित्यसुखस्य

निस्यन्दं प्रस्रवणम्। न। करोति विदधाति इति अक्षरार्थः। पक्षे भुक्तीति युक्तिः सम्भोगो मुक्तिः कामतापनिवृत्तिस्ते उभे करोतीति कृत्। एकान्तेति। एकान्तस्य विजनस्थानस्य समादिशने कथने तत्परः समुद्यतः। सदागमः सतः सुन्दरस्य युवकस्य आगम आगमनम्। कस्य कस्यैव प्रमदाजनस्य। आनन्दनिस्यन्दम् आनन्दस्य रतिसुखस्य निस्यन्दं प्रवहणम् न करोति अपितु निश्चयेन करोत्येवेत्युभयत्र। लक्ष्ये लक्षणमाह काचिदिति। काचित् काऽपि सङ्गमार्थिनी। सङ्केतदायिनं सङ्केत-सूचनपरमुपनायकम्। एवं पूर्वोक्तप्रकारेण प्राकरणिकस्य सङ्केतस्वीकाररूपस्यार्थस्य रहस्याच्छादनायाप्राकरणीकृत्य अप्राकरणिकस्य शास्त्रस्तुतिरूपार्थस्य प्राकरणिकत्वेनो-पस्थाप्य। मुख्यया अभिधया केषञ्चिन्मते व्यञ्जनया। वृत्त्या शब्दशक्त्या। शंसति कथयति इति। ये खलु मुख्यया अभिधयेति मन्यन्ते तेषां मते शक्यस्याऽप्यर्थ-स्याप्राकरणीकृतत्वेन व्यङ्ग्यत्वमिति। सारबोधिनीकारास्तु शुष्कविवादपरिहाराय 'मुख्यया वृत्त्या' इति मुख्यप्रकारेण सदागमव्यपदेशरूपेणेति व्याख्यान्ति। चण्डीदासा अपि मुख्यप्रकारेण अभिधावृत्तिबोध्यप्राकरणिकार्थेनेति वदन्ति। गोकुलनाथास्तु अत्र शास्त्रे प्रधानीभूतया वृत्त्येति विवृण्वते। ते हि 'अमुख्यया' इति पाठान्तरमपि कल्पयन्ति। वैद्यनाथास्तु मुख्ययेति अभिधयेति वदन्ति गोपनार्थं प्रकृतस्याप्रकृतत्वेना-प्रकृतस्य च प्रकृतवदभिधानादिति शंसतीति सङ्केतदानेनेष्टसम्पादकतया व्यञ्जय-तीति। वयं तु मुख्ययेति मुख्योपस्कृतया व्यञ्जनयेति ब्रूमः। यथाहुः रविभट्टाचार्या अपि प्रकृतव्यञ्जनाया अभिधामूलत्वात्परम्परया तत्प्रयोजकमभिप्रेत्य मुख्यया शक्त्या इत्युक्तम् इति। अत्र मुख्यतया विवक्षितोऽर्थस्तु उपपतिस्तुतिरेव, यो हि रहस्या-च्छादनायाप्रकृतत्वेन व्यवहृतः तेनात्र शास्त्रस्तुतिरूपवस्तुना उपपतिस्तुतिरूपवस्तु व्यज्यते। व्यक्तिश्च सदागमशब्दबलेनैवेति पदप्रकाश्यता व्यङ्ग्यस्य तस्य च परिवृत्त्यसहिष्णुत्वेन शब्दशक्तिमूलकता च। नात्र सुन्दरागमनमिव सच्छास्त्रमित्युपमा शङ्क्या मुख्यया वृत्त्या उद्देश्यत्वेन सुन्दरागमनस्य वस्तुतः प्रकृतस्य नोपमानता न चोपमेयता सच्छास्त्रस्यैव प्रकरणावतारात्। रहस्यभङ्गभयेन सच्छास्त्रेणाच्छा-भिधानात्। तेनात्र वस्तुध्वनिरेवेति विस्तारिकायां स्पष्टम्।

[ वृत्तिः ] सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं,
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः।
आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम् ॥७९॥

अत्र वस्तुना कृतपरपुरुषपरिचर्या क्लान्ताऽसीति वस्तु अधुनापदद्योत्यं व्यज्यते।

[ कमला० ] अर्थशक्तिमूलध्वनेर्द्वादशभेदेषु पदे स्वतःसम्भविवस्तुना वस्तुव्यङ्ग्यमाह सायमिति। श्रमापनयनव्याजेन स्वाङ्गप्रसाधनं गोपयन्तीं सखीं प्रति नायिकोक्तिरियम्। सायं स्नानं कृतम्। चन्दनेन चाङ्गं सायं लिप्तम्। न तु मध्यदिने सूर्यतापवशात्स्नानञ्च। तत्राह अम्बरमणिः सूर्योऽस्तङ्गतः। विस्रब्धममन्दमत्रागमनम्। अभितः सर्वतः श्रान्तासि। अतस्तव सौकुमार्यमाश्चर्यम्। आतपेन श्रमः। अधुना कारणाभावेऽपि क्लान्तासीत्याश्चर्यम्। येन श्रमेणामीलनममुद्रणं तस्य व्यतिकरः सम्बन्धो यस्य तत् ते नेत्रद्वन्द्वमासितुं स्थातुं न शक्नोति। श्रमे हि नेत्रमुद्रणे दृष्टम्। इह च तदभावः। अतोऽप्याश्चर्यमित्यर्थः। अत्रेति अधुना कारणाभावे इत्येवंरूपेणार्थेन स्वतःसम्भविना कृतः परपुंसा परिचयः सङ्केतो यया सा त्वं स्नातासीति व्यङ्ग्यमित्यर्थः। केचित्तु रतश्रमेण स्नातासीति रतखेदरूपं वस्तु व्यज्यत इत्यर्थमाहुः। ते त्वक्षरानार्जवादुपेक्ष्याः।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे स्वतःसम्भविवस्तुनो वस्तुव्यङ्ग्यप्रकाश्यमुदाहरति सायमित्यादि। सायम् स्नानम् उपासितम् अङ्गम् मलयजेन समालेपितम् अम्बरमणिः अस्ताचलमौलिम् यातः अत्र आगतिः विस्रब्धम्। तव सौकुमार्यम् आश्चर्यम्, येन अधुना अभितः क्लान्ता असि ते नेत्रद्वन्द्वम् अमीलनव्यतिकरम् आसितुम् न शक्नोति इत्यन्वयः। सायं सन्ध्याकाले। स्नानं जलावगाहनम्। उपासितं विहितम्। श्रमापनोदसमर्थं यथा स्यात्तथा कृतमेव। अङ्गं शरीरम्। मलयजेन चन्दनेन। समालेपितं प्रसाधितमेव। अम्बरमणिः अम्बरस्याकाशस्य मणिरिव मणिः सूर्यः। अस्ताचलमौलिम् पश्चिमाद्रिशिखरम्। यातः प्राप्तः। अत्र मत्सविधे। आगतिरागमनम्। विस्रब्धं मन्थरं निःशङ्कं वैव। तव भवत्याः। सौकुमार्यं कोमलत्वम्। आश्चर्यं विस्मयकारि। येन सौकुमार्येण। अधुना सम्प्रति श्रमासम्भवावसरेऽपि। अभितः सर्वतः सर्वाङ्गिणः। क्लान्ता श्रमार्ता। असि विद्यसे। ते भवत्याः। नेत्रद्वन्द्वम् अक्षियुगलम्। अमीलनव्यतिकरम् न विद्यते मीलनस्य मुद्रणस्य व्यतिकरः सम्बन्धः पौनःपुन्यं यत्र तथा। आसितुं स्थातुम्। न नैव। शक्नोति पारयति इति। त्वं बहिरन्तश्च श्रान्ता दृश्यसे। सम्प्रति श्रमकारणमपि नैव दृश्यते किमपि। त्वया स्नातयैव। तेन स्नानाभावोऽपि न ते श्रमकारणम्। शरीरं चन्दनेनानुलिप्तमेव। तेन न रूक्षत्वं श्रमकारणम्। सूर्योऽप्यस्तङ्गत एव। तेन घर्मोऽपि न श्रमकारणम्। तेऽत्रागमनमपि मन्थरमेव। तेन गतिरपि न श्रमकारणम्। अवश्यं तव सौकुमार्यमेव श्रमहेतुः। अपि च ते नेत्रे मीलनपौनःपुन्येन सर्वाङ्गीणं श्रमं जनयतोऽपि। इति। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। वस्तुना श्रमकारणाभावेऽपि श्रान्तत्वेन

वस्तुना। कृतपरपुरुषपरिचया कृतो विहितः परपुरुषस्योपपतेः परिचयः सम्पर्को यया सा तथाभूता सती। क्लान्ता श्रान्ता। असि विद्यसे। इति इत्थम्। अधुनापदद्योत्यम् अधुनेति पदेन प्रकाश्यम्। वस्तु व्यङ्ग्योऽर्थः। व्यज्यते ध्वन्यते इति। अयम्भावः—अत्र प्रत्येकपदव्यञ्जकानि सौकुमार्यादिवैयर्थ्योपपादकानि। तेन तव सौकुमार्यमाश्चर्यं येनाधुना क्लान्तासि इति पदसमुदायस्यैव व्यञ्जकत्वेऽपि अधुनैवेदृशः श्रमो दृष्टो नान्यदा कदापि इति स उपपतिनिर्दयोपभोगजनित एवेति अधुनेति पदबलेन व्यज्यते इति व्यङ्ग्यस्य पदद्योत्यत्वमिति।

[ वृत्तिः ] तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥८०॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥८१॥

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम्। एवं चाशेषचयपदद्योत्ये अतिशयोक्ती।

[ कमला० ] पदे स्वतःसम्भविवस्तुनाऽलङ्कारव्यङ्ग्यमाह— तदप्राप्तीति। विष्णुपुराणीयमिदम्। तस्य कृष्णस्याप्राप्तिर्विरहस्तज्जदुःखेन नष्टपापा तस्य चिन्ता ध्यानं तज्जानन्देन क्षीणपुण्याभोगेन पुण्यपापयोर्नाशात् निरुच्छ्वासः प्राणापगमाभावः तत्तया गोपकन्या मोक्षं गता 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त' इति श्रुतेः। अत्रेति। श्रीकृष्णवियोगजदुःखस्य तद्ध्यानजानन्दस्य चानन्तपापपुण्यफलाभेदाऽध्यवसानादतिशयोक्ती इति प्राञ्चः। तत्तज्जन्योपभोग्यानन्दसुखदुःखानां तत्तज्जन्मरूपकारणाभावे कार्यानुभवोक्तेरतिशय इत्यन्ये। मधुमतीकृत्तु मुख्यातिशयोक्तेरत्राभावात्तत्पदयोगेनविशेषोक्तिरूपालङ्कारपरम्। अत्र च वियोगजदुःखोपभोगेन सर्वपापजदुःखोपभोगेन सर्वपापजदुःखोपभोगोक्तेर्विस्मद्धेतुयोगजदुःखहेतुपापनाशेन च सर्वपापनाशोक्ते विशेषालङ्कारद्वयं तद्ध्यानजसुखभोगेन समस्तपुण्यजसुखोपभोगोक्तेर्ध्यानसुखहेतुपुण्यनाशेन च सर्वपुण्यनाशोक्तेश्च विशेषोक्तिद्वयमित्याह। अत एवाशेषचयपदद्योत्ये इत्युक्तम्।

[ सरि० ] पदप्राधान्येन वस्तुनोऽलङ्कारव्यङ्ग्यमुदाहरति— तदप्राप्तीत्यादि। पद्यमिदं विष्णुपुराणीयमिति। अन्या गोपकन्यका तदप्राप्तिमहादुःखविलीनाशेषपातका तथा तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया परब्रह्मस्वरूपिणं जगत्सूतिं चिन्तयन्ती निरुच्छ्वासतया मुक्तिं गता इत्यन्वयः। अन्या पूर्वोक्ताभ्यो भिन्ना अपरा। गोपकन्यका गोपसुता। तदप्राप्तीति तस्य कृष्णस्य अप्राप्तिः अलाभो वियोगस्तया यन्महद् दुस्सहं दुःखं पीडा तेन विलीनानि प्रणष्टानि अशेषाणि समस्तानि पातकानि

पापानि यस्याः सा। तथाभूता। तथा एवमेव। तच्चिन्तेति तस्य कृष्णस्य चिन्तया ध्यानेन यो विपुलो महानाह्लाद आनन्दस्तेन क्षीणः समाप्तः पुण्यचयः सुकृत-फलसमूहो यस्याः सा। पुण्यपापयोरुभयोरेव फलनाश्यत्वात्। परब्रह्मरूपिणं सच्चिदानन्दस्वरूपम्। जगत्सूतिं जगतो विश्वस्य सूतिरुत्पत्तिर्यस्मादिति तादृशं श्रीकृष्णम्। चिन्तयन्ती भावयन्ती। निरुच्छ्वासतया निर्गतोऽसम्पन्नः उच्छ्वासः प्राणोत्क्रमणं यस्यास्तस्या भावस्तत्ता तया। प्राणोत्क्रमणं विनैव। मुक्तिं मोक्षं भावनया तद्रूपता। गताः प्राप्ता इति। 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' इति श्रुतेः। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। जन्मसहस्रैः अनेकजन्मभिः। उपभोक्तव्यानि यातनीयानि—'नाभुक्तं क्षीयते कर्म कल्पकोटि-शतैरपि' इत्युक्तेः। दुष्कृतसुकृतफलानि दुष्कृतस्य पापस्य सुकृतस्य पुण्यस्य च फलानि विपाकाः। वियोगदुःखचिन्तनाह्लादाभ्याम् वियोगेन कृष्णविरहेण यद् दुःखं दैन्यं चिन्तनेन तद्ध्यानेन य आह्लाद आनन्दातिशयस्ताभ्याम्। अनुभूतानि अनुभवविषयीकृतानि। इति इत्थम्। उक्तं कथितम्। व्यङ्ग्यत्वेनेति। एवम् इत्थं व्यङ्ग्यार्थप्रतीतिः। च तु। अशेषचयपदद्योत्ये तदप्राप्तीत्यत्र यदशेषपदं तच्चिन्तेत्यत्रयच्चयपदं तयोः पृथक्पृथक्त्वेन द्योत्ये प्रकाश्ये। अतिशयोक्ती दुष्कृत-सुकृतराशिफलतादात्म्येनाध्यवसितौ कृष्णवियोगदुःखचिन्ताह्लादौ प्रतीयेते इति निगीर्णाध्यवसानरूपातिशयोक्तिद्वयमिति। नात्र वियोगदुःखचिन्तासुखाभ्यां स्वस्वफल-भोगनाश्याशेषपापपुण्यनाशानुपपत्तेरशेषदुष्कृतसुकृतफलराशितादात्म्याध्यवसायेनैव परि-हार इति व्यङ्ग्यार्थस्य वाच्यसिद्ध्यङ्गत्वं शङ्क्य भगवन्माहात्म्यातिशयमादायापि तदुपपत्तेरित्युद्द्योते।

[ वृत्तिः ] क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम्।
बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥८२॥

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन 'विधिरपि त्वामनुवर्तते' इति सर्वपदद्योत्यं वस्तु।

[ कमला० ] अर्थशक्तिमूलस्वतःसम्भव्यलङ्कारेण पदेन वस्तुव्यङ्ग्यमाह क्षणदेति। तव द्विषतां त्वां द्विषतां द्वेषे कर्मणि षष्ठी। त्वयि विमुखं सर्वं विपरीतमित्याह। असौ प्रसिद्धा क्षणदा रात्रिरक्षणदाऽनुत्सवदा। वनमरण्यमवन-मवीनां मेषाणामसनं क्षेपणं चारणमेव। व्यसनं व्यापारः। अक्षणदाऽवनमव्यसन-मिति नञा तदभावोक्तेर्विरोधः। तत्परिहारस्तूक्त एव। अत्रेति। विरोधोऽङ्ग-मुत्थापकमुपायो यस्य तेनार्थान्तरन्यासेन सर्वं विपरीतमित्येतद्गम्येन ब्रह्माऽपि

त्वामनुसरतीति वस्तुव्यङ्ग्यम् । ननु विरोधस्य शब्दशक्तिमूलत्वात्कथमर्थशक्तिमूलतोच्यते तत्राह शब्दशक्तीति । शब्दशक्तिमूलोऽपि विरोधोऽर्थान्तरन्यासस्यैवोत्थापकः । तेन तु वस्तुव्यङ्ग्यमिति युक्तमर्थशक्तिमूलत्वमित्यर्थः ।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे स्वतःसम्भविनालङ्कारेण वस्तुनो व्यक्तिमुदाहरति क्षणदेत्यादि । हे वीर तव द्विषताम् असौ क्षणदा अक्षणदा वनम् अवनम् व्यसनम् अव्यसनम् बत त्वयि पराङ्मुखे सर्वम् पराङ्मुखम् इत्यन्वयः । हे वीर ! हे स्तुत्यपराक्रम ! तव त्वां द्विषकर्मणि षष्ठी । द्विषता शत्रूणाम् । असौ तथात्वेन सर्वत्र प्रसिद्धा । क्षणदा रात्रिः । अक्षणदा रात्रिभिन्ना अर्थात् दिनमेव भीत्या शयनाभावात् । वनं काननम् । अवनं वनभिन्नमर्थात् ग्राम एव तत्र नियतत्वेन स्थितत्वात् । व्यसनं क्रीडनादि । अव्यसनं व्यसनभिन्नं भयाधिक्येन । बतेति विस्मये । त्वयि भवति । पराङ्मुखे प्रतिकूले सति । सर्वं निखिलमेव । पराङ्मुखं विपरीतमिति प्राकरणिकोऽर्थः । क्षणदायारक्षणदात्वं वनस्यावनत्वं व्यसनस्याव्यसनत्वमिति शब्दशक्तिमूलव्यञ्जनागम्यविरोधालङ्कारेण सर्वपराङ्मुखत्वोपपत्तिः । विरोधपरिहारस्तु यथा क्षणदा उत्सवप्रदा अपि अक्षणदा तद्भिन्ना रात्रिः । वनं काननम् । अवनं रक्षकम् । व्यसन क्रीडादि । अव्यसनम् अवीनां मेषाणामसन चारणं खेटनं वा व्यस्यति बहुलं भवतीति व्यसनं तद्विपरीतं संक्षिप्तञ्चेति । तत्र कथनीयमाह अत्रेति । शब्दशक्तिमूलविरोधाङ्गेन शब्दशक्तिमूलः क्षणदाप्रभृतिशब्दानां परिवृत्त्यसहत्वेन तन्मूलो यो विरोधालङ्कारः क्षणदाया अक्षणदात्वेत्यादिरूपस्तस्य अङ्गेन उपपादकेन अर्थान्तरन्यासेन पराङ्मुखे 'त्वयि सर्वं पराङ्मुखम्' इति सामान्येन विशेषसमर्थनाज्जातेन तदाख्यालङ्कारेण त्रिधिः दैवम् । अपि च । त्वां भवन्तम् । अनुवर्तते पक्षं पोषयति । इति इत्थम् । सर्वपदद्योत्य 'सर्वं पराङ्मुखम्' इत्यत्र यत्सर्वपदं तेन द्योत्यं प्रकाश्यम् । वस्तु वस्तुरूपव्यङ्ग्यमिति । अर्थान्तरन्यासश्च लोके दृष्टचरत्वात्स्वतःसम्भव्येव । अर्थान्तरन्यासगतसर्वपदस्य प्रकृतपरस्थत्वेन पर्यवसितस्याऽपि व्यञ्जनायामनङ्गीचेन विधेरव्याक्षेप इति । व्यञ्जकत्वेन सम्मतस्य सर्वपदस्य नानार्थत्वाभावात् वस्तुनोऽर्थशक्तिमूलालङ्कारव्यङ्ग्यत्वं बोध्यम् । वनं रक्षकमित्यादेर्वाच्यार्थस्यानुपपादकत्वान्नायमर्थान्तरन्यास इति । न वाच्यं शब्दशक्त्या व्यङ्ग्यस्य क्षणदा क्षणदाभिन्नेति विरोधस्योपपादकत्वेन तत्त्वात् । तेन हि न शब्दशक्तिमूलस्य विरोधस्य वस्तुव्यञ्जकत्वमत्रापित्वर्थान्तरन्यासस्यैवेति ।

[ वृत्तिः ] तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण कुणइ वअणं महिसंमुहं ॥८३॥

( तव वल्लभस्य गोसर्गे आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥ )

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् । एषु स्वतःसम्भवी व्यञ्जकः ।

[ कमला० ] पदे स्वतःसम्भविनाऽलङ्कारेणालङ्कारव्यङ्ग्यमाह—तुहेति । तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलः । इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् । गोसम्मीति देशीयभाषायां प्रातर्वाची । अत्रेति । अधरस्य म्लानदलत्वेन रूपकेण म्लानत्वे चुम्बनं हेतुरिति काव्यलिङ्गव्यङ्ग्यमित्यर्थः ।

[ सरि० ] अलङ्कारेणालङ्कारस्य पदप्राधान्येन व्यक्तिमुदाहरति तुह इत्यादि । गोसम्मि ( गोसर्गे ) तुह ( तव ) वल्लहस्स ( वल्लभस्य ) अहरो ( अधरः ) मिलाणकमलदलो ( म्लानकमलदलम् ) आसि ( आसीत् ) इअ ( इति ) सोऊण ( श्रुत्वा ) णववहुआ ( नववधूः ) वअणं ( वदनम् ) महिसंमुहम् ( महीसम्मुखम् ) कुणइ ( करोति ) इत्यन्वयः । गोसर्गे प्रभाते । तव ते । वल्लभस्य प्रियस्य । अधरः निम्नोष्ठः । म्लानकमलदलं म्लानं मलिनञ्च तत्कमलस्य पद्मस्य दलं पत्रमिव तद्रूपमिति । आसीत् अविद्यत । इति इत्थम् । श्रुत्वा आकर्ण्य । वदनं मुखम् । महीसम्मुखम् नितान्तानतम् । करोति विदधाति । इति । तत्र कथनीयमाह अत्रेति । अत्र काव्येऽस्मिन् । रूपकेण तद्रूपकमभेदो य उपमानोपमेययोः' इति लक्षणेन अधरे कमलदलत्वारोपेण सञ्जातेन तदाख्यालङ्कारेण । त्वया भवत्या । अस्य प्रियस्य । मुहुर्मुहुः पुनः पुनरनेकवारम् । परिचुम्बनं निक्षणम् । तथा तेन प्रकारेण । कृत विहितम् । येन यद्धेतोः । तस्याधरस्य । म्लानत्वं मलिनत्वम् । इति इत्थम् । मिलाणादिपदद्योत्यं 'मिलाणकमलदलो' इति पदप्रकाश्यम् । काव्यलिङ्गम् 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम्' इति लक्षणोऽलङ्कारः मुहुर्मुहुः परिचुम्बनस्य म्लानत्वहेतुत्वेनोपन्यासात् । मूले दलस्य पुंस्त्वं प्राकृते लिङ्गानियमादिति । प्रकरणमुपसंहरति एष्विति । एषु पूर्वोदाहृतेषु । चतुर्षु । स्वतःसम्भवी बहिरपि सिद्धोऽर्थो वस्त्वलङ्काररूपः । व्यञ्जकः व्यङ्ग्यप्रकाशक इति ।

[ वृत्तिः ] राईसु चंदधवलासु ललिअमप्फालिऊण जो चावं ।
एकच्छत्तं विअ कुणइ भुअणरज्जं विजंभंतो ॥८४॥

( रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥ )

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यते इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ।

[ कमला० ] पदे कविप्रौढोक्तिजेन वस्तुना वस्तुव्यङ्ग्यमाह राईसु इति ।

रात्रिषु चन्द्रधवलासु सुललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥

यः कामो रात्रिषु चापमास्फाल्य भुवनराज्यमेवाच्छत्रं स्वशासनादद्वैतं राज्यं करोतीति चापास्फालनं कविप्रौढोक्तिजमित्यर्थः । अत्रेति । वस्तुना भुवनराज्य-पदार्थेन तेभ्यस्तेषां मध्ये इत्यर्थः ।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे कविप्रौढोक्तिमात्रसिद्धेन वस्तुना वस्तुव्यङ्ग्यमुदाहरति 'राईसु' इति । जो ( यः ) चंदधवलासु ( चन्द्रधवलासु ) राईसु ( रात्रीषु ) ललिअं ( ललितम् ) चावं (चापम्) ललिअं (ललितम्) अप्फालिऊण ( आस्फाल्य ) विजंभंतो ( विजृम्भमाणः ) भुअणरज्जं (भुवनराज्यम्) एकच्छत्तं ( एकच्छत्रम् ) विअ ( इव ) कुणइ ( करोति ) इत्यन्वयः । यः प्रकरणादत्र कामदेवः । चन्द्रधवलासु चन्द्रेण शशिना उपलक्षणाज्ज्योत्स्नया धवलासु श्वेतासु । रात्रिषु निशासु । ललितं कमनीयम् । चापं धनुः । ललितं सुकुमारमनोहरं न तु जरठं यथा स्यात्तथा । आस्फाल्य उद्धूय । न तु बाणादिकंसन्धायापि । विजृम्भमाणः विस्फुरमाणः । भुवनराज्यं भुवनस्य जगतो राज्यं शासनम् । एकच्छत्रम् एकमेवाद्वितीयं छत्रं श्वेतातपत्रं यत्र तथाभूतम् । इव यथा । करोति विदधाति इति । लक्ष्ये लक्षणमाह अत्रेति । अत्र काव्येऽस्मिन् । वस्तुना भुवनराज्यपदार्थेन । येषां येषां येषां हि । कामिनां विलासिजनानाम् । असौ प्रसिद्धः । स्मरः कामः । राजा सम्राट् । तेभ्यः तेषां मध्ये यद्वा अपायार्थे पञ्चमी तेन तदपेतः सन् । न नैव । कश्चिदपि कोऽपि । तदादेशपराङ्मुखः तस्य राज्ञः आदेश आज्ञा ततः पराङ्मुखो विमुखः न कश्चित्तत्प्रतिगामीति । इति हेतोः । जाग्रद्भिः प्रबोधद्भिरस्वपद्भिरेव । उपभोगपरैः भोगासक्तैः । एव इत्यवधारणे । न तत्प्रतिकूलमाचरद्भिः । तैः जनैः कामिभिरिति । निशा रात्रिः । अतिवाह्यते व्यत्याय्यते । इति इत्थम् । भुअणरज्जपदद्योत्यं भुअणरज्जं इति पदेन प्रकाश्यम् । वस्तु वस्तुरूपव्यङ्ग्योऽर्थः । प्रकाश्यते द्योत्यते इति । अयम्भावः—अत्र हि चापास्फालनमात्रेण भुवनराज्यस्यैकच्छत्रीकरणं लोकेऽप्यदृष्टं तेन तत्कविप्रौढोक्तिमात्रसिद्धम् । तथाविधेन वस्तुना न केनापि तस्यादेशोऽन्यथाक्रियते किन्तु सर्वैरेव

जाग्रद्भिरुपभोगैरात्रिर्नीयते इति वस्तु व्यज्यते, तच्च भुवनराज्यपदप्राधान्येनेति ध्वनेः पदद्योत्यस्योदाहरणमिदम् ।

[ वृत्तिः ] निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्था ॥८५॥

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकर-पदद्योत्यो विरोधः ।

[ कमला० ] पदे कविप्रौढोक्तिजेन वस्तुनाऽलङ्कारव्यङ्ग्यमाह निशितेति । अनङ्गः अराले कुटिले कामिहिंस्रे वयसि यौवने सति सुदृशः कामिन्याः दृष्टौ तीक्ष्ण-बाणानां धिया बुद्धया स्वबलमर्पयति क्षिपति सा दृष्टिर्यस्य यस्यां दिशि निपतति तत्रावस्था रुदितमूर्च्छादयः व्यतिकरं सङ्घर्षं प्राप्योद्भवन्तीत्यर्थः । अत्रेति वस्तुना दृष्टौ स्वबलार्पणं कविप्रौढोक्तिजेनेत्यर्थः ।

[ सरि० ] कविप्रौढोक्तिसिद्धेन वस्तुनाऽलङ्कारव्यङ्ग्यस्य पदद्योत्यत्वमुदाहरति निशितेति । अनङ्गः अराले वयसि सुदृशः दृशि निशितशरधिया स्वबलम् अर्पयति सा च यत्र दिशि निपतति तत्र व्यतिकरम् एत्य अवस्थाः समुन्मिषन्ति इत्यन्वयः । अनङ्गः कामदेवः । अराले वक्रे कामिहिंस्रत्वात्कुटिले वयसि तारुण्ये । सुदृशः सुलोचनायाः । दृशि विलोकने कटाक्षे । निशितशरधिया तीक्ष्णबाणबुद्धया । स्वबलम् स्वोजः । अर्पयति न्यस्यति । सा तथाविधा दृष्टिः । च अपि । यत्र यस्यां दिशि हरिति उपलक्षणात्तत्रत्यकामिजने । निपतति क्षिप्ता भवति । तत्र तस्मिन् जने वा विषये । व्यतिकरं संयुक्तत्वम् । एत्य प्राप्य । अवस्था हसित-रुदितप्रलपितमूर्च्छिताद्याः समुन्मिषन्ति सञ्जायन्त इति । लक्ष्ये लक्षणमाह अत्रेति । अत्र काव्येऽस्मिन् । वस्तुना कविप्रौढोक्तिसिद्धेन सुदृशोर्दृशोः कामस्य स्वबलार्पणेन । परस्परविरुद्धाः अन्योन्यप्रतिकूलप्रकृतिका हसितरुदितादिकाः । अपि । अवस्था दशाः । युगपत् समकालमेव । प्रभवन्ति सञ्जायन्ते । इति हेतुना । व्यतिरेक-पदद्योत्यः व्यतिकरमेत्य इत्यत्र यद् व्यतिकरपदं तेन द्योत्यः प्रकाश्यः विरोधः विरोधालङ्कारो व्यङ्ग्य इति । अवस्था व्यतिकरं परस्परसम्बन्धं तस्या स्वाभा-विकत्वेऽपि प्राप्य अवस्थाः तमुन्मिषन्तीति वस्तुना परस्परविरुद्धा अपि हसित-रुदिताद्या अवस्था भवन्तीति विरोधालङ्कारो व्यतिकरपदप्राधान्येन व्यज्यते इति कविप्रौढोक्तिसिद्धवस्तुना पदप्राधान्येनालङ्कारव्यङ्ग्यस्योदाहरणमिदम् ।

[ वृत्तिः ] वारिज्जंतो वि पुणो संदावकदत्थिएण हिअएण ।
थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥८६॥

( वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥ )

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति 'ण चलइ'पदद्योऽयं वस्तु ।

[ कमला० [ प्रौढोक्तिजेनालङ्कारेण पदे वस्तुव्यङ्ग्यमाह वारिज्जन्तो वीति । वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन । स्तनभरवयस्येन विशुद्धजातिर्न चलति तस्याः हारः । गाढालिङ्गनेन स्तनयोः पीडनात्सन्तापदुःखितेन अत एव स्तनभरस्य वयस्येन । सहवासान्मित्रभूतेन हृदयेन वार्यमाण इवेत्युत्प्रेक्षा । अपरिवार्थे । त्वमितो मा गच्छ येन स्तनयोः पीडनमपि तावन्न स्यादिति वार्यमाण इव न चलतीत्यर्थः । विशुद्धोऽयं स्वाश्रयं न जहातीति । चलनाभावे शुद्धजातित्वं हेतुः । तेनालङ्कारेणेत्यर्थः ।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे कविप्रौढोक्तिजेनालङ्कारेण वस्तुव्यङ्ग्यमुदाहरति वारिज्जंतो वि इत्यादि । संदावकअत्थिएण ( सन्तापकदर्थितेन ) हिअएण ( हृदयेन ) पुणो ( पुनः ) वारिज्जंतो ( वार्यमाणः ) वि ( अपि ) से ( अस्याः ) विसुद्धजाई ( विशुद्धजातिः ) हारो ( हारः ) थणहरवअस्सएण ( तए ) ( स्तनभरवयस्यकेन ( तया ) ) ण ( न ) चलइ ( चलति ) यद्वा स्तनभरवयस्येन सन्तापकदर्थितेन हृदयेन पुनः वायमाणः अपि अस्याः विशुद्धजातिः हारः न चलति अथवा सन्तापकदर्थितेन हृदयेन·········हारः स्तनभरवयस्येन ( स्यतया ) न मुञ्चति इत्यन्वयः । प्रथमपक्षे विप्रलम्भो द्वितीयतृतीययोः सम्भोगः । विप्रलम्भो यथा सन्तापकदर्थितेन सन्तापेन विरहजनिततापेन कदर्थितः पीडितः खिन्न इति । हृदयेन हृदा । पुनः वारंवारम् । वार्यमाणः त्वदुपस्थितिरपि मे भारायैव । तेन मा विण्ठेत्वन्नेति निषिध्यमानः । अपि इत्यवधारणे । अस्याः प्रकृतनायिकायाः । विशुद्धजातिः निर्दुष्टमुक्ताजातिमान् विशुद्धजन्मा वा । हारः माला । स्तनेति स्तनभारस्य कुचभरस्य वयस्येन सख्येन वयस्यतयेति पाठे मैत्र्यादिति । न । चलति स्वस्थानं नैव विमुञ्चति इति । विरहे स्वशरीरमपि भारायते किमुत हारस्तेन विरहसन्तप्तेन हृदयेन निषिद्धोऽपि हारः स्तनमैत्र्या कुचयुगलं त्यक्त्वाऽन्यत्र गन्तुं नेच्छतीति । विशुद्धजन्मानो हि न कदापि स्वस्थानाच्चलन्ति यद्वा विघ्नैर्विहन्यमानोऽपि शुद्धजन्मा आपद्यपि स्वाश्रयं न जहातीति । सम्भोगपक्षे स्तनभरवयस्येन कुचयुगलमित्रेण उभयोः सततसहवासान्मैत्री

स्वाभाविकी। **सन्तापकदर्थितेन** गाढालिङ्गने स्तनयोः समधिका पीडा मा भूदिति मित्रकष्टखिन्नेन। हारोपस्थितौ तत्सम्भवात् यद्वा हारस्य गाढालिङ्ग-नान्तरायतया तेन सन्तापेन कदर्थितेन। हृदयेन। वार्यमाणः। अपि। विशुद्ध-जातिः। हारः। न चलति न स्वाश्रयं मुञ्चति इति। अथवा स्तनभरवयस्यकेन स्तनभरस्य सख्येन। भावप्रधानो निर्देशः। स्तनभरस्य वयस्यत्वेन हेतुनेत्याशयः। न मुञ्चतीति। गाढालिङ्गने हारो हि अन्तरायतया सन्तिष्ठते यद्वा हारेण सहालिङ्गने स्तनयोः पीडा सम्भवति इति। लक्ष्ये लक्षणमाह **अत्रेति**। अत्र काव्येऽस्मिन्। **विशुद्धजातित्वलक्षणहेत्वलङ्कारेण** सन्तप्तेन हृदयेन वार्यमाणस्य हारस्य स्वाश्रयामोचने तस्य शुद्धजातिमत्त्वमेव हेतुरिति विशुद्धजातिलक्षणेन यो हेत्वलङ्कारो हेतुगर्भः काव्यलिङ्गालङ्कारो हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमिति लक्षणस्तेन वाक्यार्थी-भूतेन हारः। अनवरतमजस्रम्। कम्पमानः दोलायमानः। एवेत्यवधारणे। आस्ते वर्तते। इति इत्थम्। 'ण चलइ' न चलति इति यत्पदं तेन द्योत्यं प्रकाश्यम्। वस्तु वस्तुरूपोऽर्थः। व्यङ्ग्यमिति। सम्भोगे सहायकोऽपि हारो विरहे खेदायैव भवतीति विरहसन्तप्तेन हृदयेन पुनःपुनस्तत्रानवस्थानाय कथितोऽपि हारः स्तनभरसख्येन स्वस्थानं न मुञ्चति शुद्धजातिमत्त्वादिति हारस्य यथास्थितिमत्त्वे तस्य विशुद्धजातिमत्त्वस्य हेतुत्वात्काव्यलिङ्गमलङ्कारो वाच्यः। तेन च हारो हि तथा वार्यमाणोऽपि यथापूर्वं कम्पमान एवास्ते इति वस्तु व्यज्यते यच्च 'न चलति' इति पदप्राधान्येनेवेति अलङ्कारेण पदे वस्तुव्यङ्ग्यस्योदाहरणमिदम्। काव्यलिङ्गस्यात्र कविप्रौढोक्तिमात्रसिद्धत्वमेव हारस्य विशुद्धत्वेनाचलनहेतुताया लोकेऽसिद्धत्वात्। हारस्य कम्पमानत्वं विप्रलम्भपक्षे निःश्वासाधिक्येन सम्भोगपक्षे श्वासोच्छ्वासाधिक्येन पुरुषायिताया नायिकायाः। वस्तुतस्तु वृत्तिकाराशयस्तु विपरीतरतिपरक एव विप्रलम्भापेक्षया तत्रैव हारस्य समधिककम्पनसम्भवात्। चन्द्रिकाकारोऽपि मतमेवामुं समर्थयति। तत्र विरहजनितेन सन्तापेनेत्यत्र विरहो हारोपस्थित्या गाढालिङ्गनासम्भवजनित इति बोध्यम्।

[ वृत्तिः ] सो मुद्धसामलंगो धम्मिल्लो कलिअललिअणिअदेहो।
तीए खंधाहि बलं गहिअ सरो सुरअसगरे जअइ ॥८७॥

[ स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः।
तस्याः स्कन्धाद् बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥ ]

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंध-पदद्योत्या विभावना। एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः।

[ कमला० ] प्रौढोक्तिजालङ्कारेणालङ्कारं पदे व्यङ्ग्यमाह सो शुद्धेति ।

स शुद्धः श्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।
तस्याः स्कन्धाद् बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥

धम्मिल्लः केशपाश एव स्मरः इति प्रौढोक्तिजं रूपकं तस्याः स्कन्धादंसात्सेनानिवेशाच्च बलं सामर्थ्यं सैन्यञ्च । रताभावो ह्यभिलाषहेतुः । रताभावरूपकारणाभावेऽपि अभिलाष इति विभावना । सा च स्कन्धपदेन तत्सम्बन्धात् केशानां शोभातिशयादित्यर्थः ।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे कविप्रौढोक्तिजेनालङ्कारेणालङ्कारव्यङ्ग्यमुदाहरति सो शुद्ध इति । सो ( सः ) मुद्धसामलगो ( मुग्धश्यामलाङ्गः ) धंमिल्लो ( धम्मिल्लः ) कलिअल्ललिअणिअदेहो ( कलितललितनिजदेहः ) सरो ( स्मरः ) तीए ( तस्याः ) खन्धाहि ( स्कन्धात् ) बलं ( बलम् ) गहिअ ( गृहीत्वा ) सुरअसंगरे ( सुरतसङ्गरे ) जअइ ( जयति ) इत्यन्वयः । सः प्रसिद्धः । मुग्धश्यामलाङ्गः मुग्धां सुगन्धतैलादिसंस्कारेणातिमनोहरं श्यामलं कृष्णवर्णम् अङ्गं वपुर्यस्य सः । तादृशः । धम्मिल्लः केशपाशः । स एव कलितललितनिजदेहः कलितः पुनरासादितो ललितो मनोहरो निजस्य स्वस्य देहः शरीरं धम्मिल्लरूपं येन तादृशः । स्मरः कामः । तस्याः प्रकृतनायिकायाः । स्कन्धात् अंसात् सेनानिवेशाद्वा । बलं सामर्थ्यं सैन्यं वा । गृहीत्वा आदाय । सुरतसङ्गरे सुरतरूपे सङ्ग्रामे । जयति सर्वोत्कृष्टत्वेन वर्तते इति । पूर्वसुरते विकर्षणेन स्कन्धपतितः केशपाशः स्कन्धाद्बलं गृहीत्वा पुनः सम्भोगाय प्रवर्तयतीति सः स्मर एवेति रूपकम् । सुरत एव सङ्गर इति रूपकमेव । तयोर्वाक्यार्थत्वेनोपस्थितयोर्व्यञ्जकत्वम् । स्कन्धादिति बलमिति च द्वे श्लिष्टरूपके । लक्ष्ये लक्षणमाह अत्रेति । अत्र काव्येऽस्मिन् । रूपकेण धम्मिल्ल एव स्मरः इति सुरत एव सङ्गरः इति च रूपकाभ्याम् । जातावेकवचनम् । वाक्यार्थीभूताभ्याम् । मुहुर्मुहुः पुनः पुनः पूर्वसुरतावसरे इति । आकर्षणेन ग्रहणेन । केशपाशः धम्मिल्लः । तथा तेन प्रकारेण । स्कन्धयोरंसयोः । प्राप्तः संलग्नः । यथा येन हि । कामुकः विलासी । रतिविरतौ सुरतनिवृत्तौ । अपि । अनिवृत्ताभिलाषः अनिवृत्ताऽतृप्ता अभिलाषा स्पृहा यस्य तादृशः । पुनः सम्भोगायोत्कण्ठितः । अभूत् समपद्यत । इति इत्थम् । स्कन्धपदद्योत्या 'खधाहि' इति पदेन द्योत्या प्रकाश्या । विभावना 'विनापि स्यात्कारणं कार्यजन्म चेत्' इति लक्षणोऽलङ्कारः सुरतलाभेन औत्कण्ठ्यस्य कारणाभावेऽपि तदुत्पत्तेः । व्यज्यत इति शेषः । धम्मिल एव स्मर इति रूपकं कवि-

प्रौढोक्तिमात्रसिद्धं न तु स्वतःसम्भवि। धम्मिल्लस्य स्कन्धसम्बन्धेन शोभातिशय-लाभात्तत्पदप्राधान्यमिति।

प्रकरणमुपसंहरति एष्विति। एषु पूर्वोक्तेषु चतुर्षूदाहरणेषु। कवीति कवे-प्रौढोक्तिश्चमत्कृतोक्तिस्तन्मात्रेण निष्पन्नं समुद्भूतं शरीरं वपुर्यस्य स तादृशोऽर्थो व्यञ्जक इति।

[ वृत्तिः ] णवपुण्णिमामिअंकस्स सुहअ को तं सि भणसु मह सच्चं।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥८८॥
( नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भणस्व मम सत्यम्।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥ )

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादि-पओसेत्यादिपदद्योत्यं वस्तु व्यज्यते।

[ कमला० ] कविनिबद्धवक्तृप्रौढोक्तिजं पदे वस्तुना वस्तुव्यङ्ग्य-माह णवेति।

नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भणस्व मम सत्यम्।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥

नवः प्रथमोदितः पूर्णिमापदे नायिका मृगाङ्कपदे सदोषत्वञ्च व्यङ्ग्यम्। प्रदोषो रजनीमुखम्। यथा चन्द्रः क्षणमात्ररक्तो नोर्ध्वम् तथा त्वं प्रथमं तस्या-मनुरक्तः न ततः पश्चादिति शेषः। न च रजनीवेत्युपमात्वात्कथं वस्तुव्यञ्जकमिति वाच्यम्, तदनुपादानेऽपि व्यङ्ग्यधीसत्त्वात्।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे कविनिबद्धवक्तृप्रौढोक्तिजेन वस्तुना वस्तुव्यङ्ग्यमुदाहरति णव इति। खण्डितायाः परकीयानुरक्तं प्रियं प्रत्युक्तिरियम्। हे सुभग! त्वम् नवपूर्णिमामृगाङ्कस्य कः असि मम सत्यम् भण (स्व)। अद्य का प्रदोषरजनी इव सौभाग्यसमग्रा तव इत्यन्वयः। हे सुभग! हे सुन्दर! त्वम् भवान्। नवपूर्णिमामृगाङ्कस्य नवः प्रथमोदितो यो हि पूर्णिमायाः पौर्णमास्याः मृगाङ्कश्चन्द्रमास्तस्य। कः कतमः सम्बन्धी सखा वा भ्राता। असि इति शेषः। मम मे। सत्यम् निर्व्यलीकम्। भण कथय। अद्य सम्प्रति। का कतमा नायिका। प्रदोषरजनी प्रदोषे निशामुखे या रजनी क्षपा सा। इव यथा। सौभाग्यसमग्रा सौभाग्येन प्रियतमानुरागादिना समग्रा पूर्णा यद्वा सौभाग्यं समग्रं परिपूर्णं यस्याः सा तादृशी। तव भवतः अस्तीति शेषः। चन्द्रमसीव त्वय्यपि क्षणिकानुरागित्वस्वभावो दृश्यते, तेन त्वमवश्यमेव तस्य सम्बन्ध्यसि सुभगत्वेन च। सम्प्रति या हि तवानुरागभाक् साऽपि प्रदोषनिशेव यतो

निशा हि प्रदोषे प्रारम्भे एव चन्द्रमसोऽनुरागं प्राप्नोति पश्चात्तु विरागमेव। तथैव साऽपि क्षणमेव सौभाग्यसमग्रा न तु सदेति। लक्ष्ये लक्षणमाह —अत्रेति। अत्र काव्येऽस्मिन्। वस्तुना क्षणिकानुरागित्वरूपेण वाक्यार्थेन मयि वक्त्र्यां नायिकायाम्। इव यथा। अन्यस्याम् अपरस्याम्। अपि च। प्रथमम् प्रारम्भे। एव इत्यवधारणे। न नैव। ततः तदनन्तरमपि। इति इत्थम्। णवेत्यादीति णवगुणिणसामिअङ्कस्स इति पओसरअणि इति ये पदे ताभ्यां द्योत्य प्रकाश्यम्। वस्तु वस्तुरूपोऽर्थः। व्यज्यते ध्वन्यते इति। यथा नवोदितः पूर्णिमाचन्द्रस्तथा त्वमपि चञ्चलः सदोषश्च त्वत्प्रेयसी च प्रदोषरजनीव क्षणिकसौभाग्या। तेन त्वामहं नाभिनन्दामीति प्रतीयमानोऽर्थः। अत्र हि नवपदेन चञ्चलत्वं पूर्णिमापदेन तिथ्यन्तरवन्नायिकान्तरसम्पर्कः मृगाङ्कपदेन ख्यातकलङ्कत्वं प्रदोषपदेन दृष्टदोषत्वं रजनीपदेन मलिनत्वञ्च व्यज्यते। नवोदितेन्दोः रजनीमुखस्य च सम्बन्धक्षणिको यथा तथैव तव च तस्याश्च। तेन त्वं नाभिनन्द्य इति कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन वस्तुना वस्तुव्यङ्ग्यस्योदाहरणमिदम्। अत्र प्रदोषरजनीवेत्युपमा। तन्नैरपेक्ष्येण कथं वस्तुनो व्यञ्जकत्वमिति न शङ्क्यम्। इवादानुपादानेऽपि रजनी तव का इत्येतावताऽपि व्यञ्जनासिद्धेरिति। चन्द्रनायकयोः सम्बन्धस्य लोकेऽदृष्टत्वेन नात्र वस्तुनः स्वतःसम्भवित्वमपितु प्रौढोक्तिमात्रसिद्धत्वमिति।

[ वृत्तिः ] सहि णवणिहुवणसमरम्मि अकवालीसहिए णिविडाए।
हारो णिवारिओ विअ उच्छेरतो तदो कह रमिअं॥८१॥

( सखि! नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया।
हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितम्॥ )

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत् तत्कथय कीदृगिति व्यतिरेकः 'कहं'पदगम्यः।

[ कमला० ] अत्रैव वस्तुनाऽलङ्कारव्यङ्ग्यमाह सहीति। सखि! नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया। हारो निवारित एव उद्धार्यमाणः कथं ततो रमितम्। अङ्कपाली आलिङ्गनं सैव सखी सुखहेतुत्वात्। अङ्कपालिः परीरम्भ इति मेदिनीकारः। उद्धार्यमाणोऽपसार्यमाणो रतिकाले ह्यन्यो निवार्यते। हारोऽपि विघ्नहेतुत्वान्निवारितः गाढालिङ्गनेन त्रोटित इत्यर्थः। परमानन्दस्तु उच्चेरंतो उद्धृण्वन् ह्रियते इति हारः इत्यन्वर्थ इत्यर्थमाह। एतावन्मया दृष्टं ततः ऊर्ध्वं कथं रमितम्। अत्रेति हारच्छेदादिवस्तुना सर्वरतेभ्योऽधिकत्वाद् व्यतिरेकः कथं पदे व्यज्यते इत्यर्थः।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे कविनिबद्धवक्तृप्रौढोक्तिमात्र-सिद्धेन वस्तुनाऽलङ्कारव्यङ्ग्यमुदाहरति सहि इति। कस्याश्चित्प्रियसख्या नवोढां प्रत्युक्तिरियम्। सहि! (सखि) णवणिहुवणसमरम्मि (नवनिधुवनसमरे) निविडाए (निविडया) अंकवालीसहिए (अङ्कपालीसख्या) उच्छेरंतो (उच्छ्रियमाणः) हारो (हारः) णिवारिओ (निवारितः) विअ (एव) तदो (ततः) कहं (कथम्) रमिअं (रमितम्) इत्यन्वयः। सखि! हे प्रियवयस्ये! नवनिधुवन-समरे नवं प्रथमं यन्निधुवनं सुरतं तदेव समरः सङ्ग्रामस्तस्मिन् तत्रापि मल्लयुद्ध-भावात्। निविडया घनया प्रौढया। अङ्कपालीसख्या अङ्कपाली आलिङ्गनं सैव सखी आली सैव सुखहेतुत्वात्तया। उच्छ्रियमाणः उच्छलन् द्वयोस्तृतीयत्वेनाधिको भवन्। उच्चलन् इति पाठे चलनेन सुरतान्तराय कुर्वन्। हारः मौक्तिकमाला। निवारितः दूरेऽपसारितः भग्नः। एव। ततः हारापसारणानन्तरम्। कथं केन प्रकारेण। रमितम् क्रीडितम् इति। रमेरुदितत्वविकल्पेन वेट्कत्वम्। किन्त्व-प्रसिद्धत्वात्स त्याज्य इत्याचार्याः। दृढालिङ्गनेन सुरतान्तरायरूपो हारस्त्रोटित एव ततः कथं हि रतमिति। तत्राभीष्टमाह अत्रेति। अत्र काव्येऽस्मिन्। वस्तुना हारच्छेदानन्तरप्रवृत्तसुरतजिज्ञासारूपेण कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन लोके प्रथम-समागमे तथाविधदृढालिङ्गनस्यासम्भवात्। हारच्छेदानन्तरं मालात्रोटनानन्तरम्। अन्यत् विलक्षणं प्रौढारमितोऽपि विचित्रम् प्रथमसमागमे एव तथाविधहारत्रोटन-परिणामिपरिरम्भात्ते सुरतस्य इतरप्रौढाङ्गनासुरतापेक्षया वैलक्षण्यमस्त्येवेति। रतं सुरतक्रीडा। अभूत् समपद्यत। तत् सुरतम्। कीदृक् किम्प्रकारकम्। इति। कथय भण। इति इत्थम्। कथंपदगम्यः कहमिति विस्मयार्थकनवोढास्वभाव-विरुद्धगाढालिङ्गनादनुमितं यत्पदं तेन गम्यः प्रत्याय्यः। व्यतिरेकः उपमाना-दुपमेयस्याधिकोत्कर्षलक्षणोऽलङ्कारो व्यङ्ग्यः उपमानभूतप्रौढाङ्गनासुरतापेक्षया उपमेयभूतस्य नवोढासुरतस्योत्कर्षव्यञ्जनात्तस्य चाशाब्दत्वादिति।

[वृत्तिः] पविसंती घरवारं विवलिअवअणा विलोइऊण पहं।
खंधे घेत्तूण घडं हा हा णट्ठोत्ति रुअसि सहि किंति ॥९०॥

[प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।
स्कन्धे गृहीत्वा घटं हा हा णष्ट इति रोदिषि सखि किमिति॥]

अत्र हेत्वलङ्कारेण सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तु-मिच्छसि तदाऽपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योत्यम्।

[ कमला० ] पदे कविनिबद्धवक्तृजेनालङ्कारेण वस्तुव्यङ्ग्यमाह पविसन्तीति। प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्। स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति। नष्टत्वं रोदने हेतुः।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वं यदुक्तं तस्योदाहरणोपस्थापनप्रसङ्गे कवि-निबद्धवक्तृप्रौढोक्तिमात्रसिद्धेनालङ्कारेण वस्तुव्यङ्ग्यमुदाहरति पविसंती इत्यादि। कस्याश्चिदत्यन्तविदग्धायाः सङ्गमार्थिनीं काञ्चित्प्रति हेतुगर्भवचनमिदम्। सहि ( सखि ! ) घरवारं ( गृहद्वारम् ) पविसंती ( प्रविशन्ती ) विवलिअवअणा ( विव-लितवदना ) पहं ( पन्थानम् ) विलोइऊण ( विलोक्य ) खंधे ( स्कन्धे ) घडं ( घटम् ) घेत्तूण ( गृहीत्वा ) हा हा ( हा ! हा ! ) णट्ठ ( नष्टः ) त्ति ( इति ) किंत्ति ( किमिति ) रुअसि ( रोदिषि ) इत्यन्वयः। हे सखि ! आलि ! गृहद्वारं भवनप्रवेशस्थानम्। प्रविशन्ती अतिक्राम्यन्ती। विवलितवदना विवलितं परावृत्तं वदनं यस्यास्तथाभूता सती। पन्थानम् अतिक्रम्यागतं वर्त्म। विलोक्य निरीक्ष्य। स्कन्धे अंसे। घटं जलकुम्भम्। गृहीत्वा धृत्वा। हा हा ! इति खेदे। सम्भ्रमे द्वित्वम्। नष्टः त्रुटितः। इति इत्थम्। किमिति किमर्थम्। रोदिषि आक्रन्द-यसि इति। घटभङ्गस्य बुद्धिपूर्वकत्वे रोदनहेतुत्वाभावादिति भाव इति चन्द्रिका-काराः। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। हेत्वलङ्कारेण हेतोर्वाक्य-पदार्थत्वलक्षणेन हेतुगर्भेण काव्यलिङ्गालङ्कारेण रोदने नष्टत्वस्य हेतुत्वान्नाशे स्कन्धग्रहणस्य हेतुत्वाच्च। सङ्केतनिकेतनम् अभिसरणनिश्चितस्थलम्। गच्छन्तं यान्तं कान्तमिति शेषः। दृष्ट्वाऽवलोक्य। यदि। तत्र सङ्केतस्थले। गन्तुं यातुम्। इच्छसि उत्कण्ठिताऽसि। तदा। अपरमन्यमेव। घटं कुम्भम्। गृहीत्वा आदाय। गच्छ याहि। इति इत्थम्। वस्तु वस्तुरूपव्यङ्ग्योऽर्थः। किंत्तिपदद्योत्यम् किमिति इति पदेन प्रकाश्यमिति। रोदनवैयर्थ्यबोधनद्वारा समीहितसाधनानुमितिसूचनात् किंत्तिपदस्य प्राधान्यम्। अत्र गृहद्वारप्रवेशनादेः स्वतःसम्भवित्वेऽपि एतादृशव्यवहारस्य दुर्घटत्वाद् दुरूहत्वाच्च कविनिबद्धवक्तृप्रौढोक्ति-मात्रसिद्धत्वमस्य।

[ वृत्तिः ] यथा वा—

> विहलंखलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठि।
> वारप्फंसमिसेण अ अप्पा गुरुओत्ति पाडिअ विहिण्णो ॥९१॥

( विशृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलदृष्टिम्।
द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभिन्नः ॥ )

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलतया त्वया घटः स्फोटित इति मया चिन्तितम् तत्किमिति नाश्वसिषि। तत्समीहितसिद्धये व्रज। अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु।

[ कमला० ] नन्वत्र स्वतःसम्भवित्वमेवेत्यस्वरसादाह यथा वेति। विशृङ्खलां त्वां सखि दृष्ट्वा कुण्डेन तरलतरदृष्टिम्।

द्वारस्पर्शमिषेण आत्मा गुरुरिति पातयित्वा विभिन्नः। कुण्डो घटः केचित्तु कुट इति घटमाहुः। तेनोपलक्षितां विह्वलां त्वां दृष्ट्वा घटेनात्मा स्वस्वरूपं गुरुरिति पातयित्वा विभेदितः द्वाराघातमिषेणेत्यपह्नुतिः। तथा तव श्वश्रूं बोधयिष्ये इति वस्तुमिषेणेति पदे व्यङ्ग्यम्।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेनालङ्कारेणालङ्कारव्यङ्ग्यस्योदाहरणान्तरं प्रस्तौति स्पष्टार्थम्। यत्तु मधुमतीकारेण पूर्वोदाहरणे प्रकृतार्थस्य स्वतःसम्भवित्वात्प्रौढोक्तिमात्रनिष्पन्नत्वाभावेनोदाहरणान्तरमाहेत्युक्तं तन्नादेयम्। न हि खलु वृत्तिकृत्सर्वथा लोकसिद्धमर्थं प्रौढोक्तिसिद्धत्वेन गृह्णाति किन्तु लोकप्रसिद्धे ईदृशलोकोत्तरोक्तिप्रतिपादितेऽर्थेऽपि प्रौढोक्तिमात्रनिष्पन्नत्वं सम्भवतीति समाज्ञापयति सः। अत एव प्रमादशङ्कानुदयायोदाहरणान्तरमाहेति सुधासागरे स्पष्टम्। सहि! ( हे सखि! ) तुमं ( त्वाम् ) विहलंखलं ( विशृङ्खलाम् ) तरलतरदिट्ठिं ( तरलतरदृष्टिम् ) अ ( च ) दट्ठूण ( दृष्ट्वा ) कुडेण ( कुटेन ) वारप्फंसमिसेण ( द्वारस्पर्शमिषेण ) अप्पा ( आत्मा ) गुरुओत्ति ( गुरुक इति ) पाडिअ ( पातयित्वा ) विहिण्णो ( विभिन्नः ) इत्यन्वयः। हे सखि! हे वयस्ये! त्वाम् भवतीम्। विशृङ्खलां व्याकुलाम्। अत एव तरलतरदृष्टिम् तरलतरा अतिशयेन तरला चञ्चला दृष्टिर्विलोकनं यस्याः सा। तथाभूताम्। चकारः समुच्चये। कुटेन घटेन। द्वारस्पर्शमिषेण द्वाःसम्पर्कव्याजेन। आत्मा स्वस्वरूपम्। गुरुकः गरीयानिति। इति हेतोः। पातयित्वा निपात्य। विभिन्नः विभेदित इति। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। लतागहने लताभिर्व्रततिभिर्गहने घने निकुञ्जे। नदीकूले नदीतटे। कृतसङ्केतम् निश्चिताभिसरणम्। अपि। अप्राप्त तदाऽनागतम्। गृहप्रवेशावसरे यदा ततः प्रत्यागत्य गृहं प्रवेष्टुमुद्यता तस्मिन्नेव समये। पश्चात् पृष्ठतः। आगतम् आयातं तत्र गमनायेति। दृष्ट्वा विलोक्य कान्तमिति शेषः। पुनः द्वितीयवारमपि। नदीगमनाय जलानयनव्याजेन नदीकूलं गन्तुम्। द्वारोपघातव्याजेन द्वारि द्वाःस्थकपाटे

उपघातः संस्पर्शस्तस्य व्याजेन मिषेण । कपाटसम्पर्केणायं भिन्ना इति । बुद्धिपूर्वं सज्ञानमेव जानन्त्या एव । तन्वया भवत्या । व्याकुलतया मिलनाय व्यग्रतया । घटः कुम्भः । स्फोटितः विभेदितः । इति इत्थम् । मया । चिन्तितं विचारितम् । तत तेन । किमिति किमर्थम् । न । आश्वसिषि आश्वस्ता भवसि । तत् ततः । समीहितसिद्धये अभीप्सितवस्तुप्राप्तये सङ्गमाय कान्तेन सहेति । व्रज याहि । अहम् । ते तव । श्वश्रूनिकटे श्वश्रूः पत्युर्माता तस्याः निकटे सविधे । सर्वम् निखिलमेव वृत्तम् । समर्थयिष्ये त्वदानुकूल्येन साधयिष्ये । इति इत्थम् । द्वारस्पर्शनव्याजेन कपाटसङ्घातमिषेण । इति इत्थम् । अपह्नुत्या तदाख्यालङ्कारेण । वस्तु । व्यज्यत इति । नायं द्वारस्पर्शाद् घटनाशः । किन्तु गुप्ततया परपीडकत्वाद् घटेनैव स्वात्मा विभेदित इत्यपह्नुतिः । तथा च पूर्ववद् वस्तुध्वनिरित्युदाहरणचन्द्रिकायाम् । वस्त्वत्र वारप्फंसमिसेनेति पदद्योत्यमिति प्रदीपकाराः सहीति पदद्योत्यमिति महेश्वराः । अत्राचेतने घटे स्वात्मविभेदनरूपचेतनधर्मारोप इति तन्मूलकतयाऽपह्नुतेः प्रौढोक्तिसिद्धत्वम् ।

[ वृत्तिः ] जोह्णाइ महुरसेण अ विइण्ण तारुण्णउस्सुअमणा सा ।
बुड्ढावि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअं ॥
( ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥ )

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहूपदप्रकाश्यः । एष कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः ।

वाक्यप्रकाश्ये तु पूर्वमुदाहृतम् । शब्दार्थोभयशक्त्युद्भववस्तु पदप्रकाश्यो न भवति इति पश्चान्निर्दक्ष्यते ।

[ कमला० ] पदे कविनिबद्धवक्तृजेनालङ्कारेणालङ्कारव्यङ्ग्यमाह जोह्णाए इति । ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा । वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् । हृदयहरणे परवधूत्व हेतुरतः काव्यलिङ्गम् । त्वच्चरितस्य वक्तुमशक्यत्वेन निषेधरूप आक्षेपालङ्कारो व्यङ्ग्य इत्यर्थः ।

उदाहृतमिति उल्लास्यकालकरवालेति निःशेषे वेत्यर्थः ।

[ सरि० ] व्यङ्ग्यस्य पदद्योत्यत्वोदाहरणप्रसङ्गे कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारव्यङ्ग्यमुदाहरति जोह्णाइ इति । कस्याश्चित्प्रौढायाः परासक्तं पतिं प्रत्युक्तिरियमिति सुधासागरकाराः । अहह ( अहह ) वड्ढा ( वृद्धा )

वि ( अपि ) जोह्लाइं ( ज्योत्स्नया ) महुरसेण ( मधुरसेन ) अ ( च ) विइण्ण-तारुण्णउत्सुअमणा ( विस्तीर्णतारुण्योत्सुकमनाः ) सा ( सा ) परबहुआ ( परवधूः ) णवोढ व्विअ ( नवोढा इव ) तुह ( तव ) हिअअं ( हृदयम् ) हरइ ( हरति ) इत्यन्वयः। अहह इति खेदे। वृद्धा गतयौवना। अपि इत्यवधारणे। ज्योत्स्नया चन्द्रिकया इत्युद्दीपनम्। मधुरसेन मधोर्मद्यस्य वसन्तस्य च रसेन आस्वादेन मदेन च। वितीर्णेति वितीर्णं उच्छालितं यत्तारुण्यं यौवनं तेन उत्सुकं सुरतायोद्यतं मनो मानसं यस्याः सा तथाभूता। सा त्वन्मनोगता। परवधूः अन्यस्त्री। नवोढा नवपरिणीता वधूः। इव यथा। तव ते। हृदय स्वान्तम्। हरति आकर्षयति इति। यतः सा परवधूरतएव वृद्धाऽपि ते मनो हरतीति न तु सौन्दर्यतारुण्या-दिनेति भावः। तत्राभीष्टमाह अत्रेति। अत्र काव्येऽस्मिन्। काव्यलिङ्गेन वाक्यार्थभूतेन हेतोर्वाक्यपदार्थत्वलक्षणेन चित्तहरणे परवधूत्वेन हेतुभूतेन सिद्धेन। वृद्धां गतयौवनाम्। परवधूम् अन्यस्त्रियम्। त्वम्। अस्मान् नवयौवनानपि स्वकीयान्। उज्झित्वा त्यक्त्वाऽनादृत्य। अभिलषसि काङ्क्षसि। इति हेतोः। त्वदीयम् भावत्कम्। आचरणम् चरितम्। वक्तुं वर्णयितुम्। न नैव। शक्यं पार्यम्। इति इत्थम्। आक्षेपः त्वयैवं कर्तुमयोग्यमिति निषेधरूप आक्षेपालङ्कारः। परवधूपदप्रकाश्यः परवधूरिति पदेन प्रकाश्यः द्योत्य इति। परकीययाऽपि वृद्धया चित्ताहरणस्य लोकेऽसिद्धत्वात्कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धत्वं काव्यलिङ्गस्य तद्बलेनोपस्थितस्य। परवधूपदस्य प्राधान्यादाक्षेपस्य पदप्रकाश्यता।

प्रकरणमुपसंहरति एष्विति। एषु हि पूर्वोक्तेषु चतुर्ष्वेवोदाहरणेषु। कवीति कविना निबद्ध उपस्थापितो यो वक्ता तस्य प्रौढोक्तिमात्रेण चमत्कृतोक्तिमात्रेण निष्पन्नमुद्भूतं शरीरं वपुर्यस्य स तादृशः वस्त्वलङ्काररूपोऽर्थः। व्यञ्जक इति शेषः। वाक्यप्रकाश्ये ध्वनेर्वाक्येन यत्प्रकाश्यत्वं तद्विषये। तु इति व्यवच्छेदे। पूर्वं प्रागेव। उदाहृतम् उल्लासस्य कालकरवालमित्यादौ निःशेष इत्यादौ च। शब्दार्थोभय-शक्त्युद्भवः शब्दस्य परिवृत्तिसहत्वासहत्वोभयस्थितिजनितशब्दशात्यर्थशक्तिभ्यां सम्भूयैकत्र यः प्रत्याय्यते सः। पदप्रकाश्यः पदमात्रद्योत्यः। न। भवति। अर्थस्य वाक्याश्रयत्वादिति। इति इत्थम्। ध्वनेः। पञ्चत्रिंशद् भेदाः प्रकाराः भवन्तीति। सप्तदशपदप्रकाश्यभेदा अष्टादशवाक्यप्रकाश्यभेदा इति मिलित्वा ध्वनेः पञ्चत्रिंशद्विधत्वमिति।

[ वि० वृ० ] पदेऽप्यन्ये।

द्व्युत्थं विनाऽन्येऽर्थान्तरसङ्क्रमितवाच्याद्याः सप्तदशध्वनयः पदे वाक्ये च स्युः। व्यञ्जकत्वं पदस्य प्राधान्यात्तन्मूलको ध्वनिव्यपदेशः। यदुक्तम्—

"एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥"

तत्र पदगतानां दिङ्मात्रेणोदाहरणम्—

"पार्षदाः पार्षदा यस्य लक्ष्मीर्लक्ष्मीः कृपा कृपा ।
अवतारोऽवतारश्च स देवः कैर्न सेव्यते ॥"

अत्र द्वितीयपार्षदादिपदानि नित्यसाहित्यनिरपायत्वनिर्हेतुकत्वजन्मराहित्य-रूपेष्वर्थान्तरेषु सङ्क्रान्तानि ।

तवानुकम्पा तु तवैव शोभते ममापि दौर्जन्यमहो ममापि हि ।
रतिर्न दीर्घा मम दीर्घमेव ते प्रेम प्रियाहं तव कृष्ण किं ब्रुवे ॥

अत्रानुकम्पादिपदानि विरुद्धलक्षणया ननु कम्पाद्यर्थानीति पदगतोऽविवक्षितवाच्यो द्विधा ।

तत्कैशोरं तच्च वक्त्रारविन्दं तत्कारुण्यं ते च लीलाकटाक्षाः ।
तत्सौन्दर्यं सा च सान्द्रस्मिता श्रीः सत्यं सत्यं दुर्लभं दैवतेऽपि ॥

अत्र तदादिपदानि कैशोरादीनामनुभवैकगोचरतां व्यञ्जयन्ति । तादृशानाञ्च तेषामगोचरत्वाद्विप्रलम्भः प्रकृष्यतीति रसध्वनिश्च तथा । भावादीनां तद्गतत्वे न काचिच्चमत्कृतिरिति नोदाह्रियते । एवमन्येऽपि लक्ष्यव्यङ्ग्यक्रमाः ध्वनयोऽनुसन्धेयाः । तदेवं पञ्चत्रिंशद्भेदाः ।

[ कारिका ] ………………प्रबन्धेऽप्यर्थशक्तिभूः ॥१९॥

[ वृत्तिः ] यथा गृध्रगोमायुसंवादादौ—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहले घोरे सर्वप्राणिभयङ्करे ॥९३॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥९४॥

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥९५॥

अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥९६॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते। अन्ये त्वेकादश भेदाः ग्रन्थविस्तरभयान्नोदाहृताः। स्वयं तु लक्षणतोऽनुसर्तव्याः। अपिशब्दात्पदवाक्ययोः॥ १९॥

[ कमला० ] प्रबन्धेऽपीति। प्रबन्धो महावाक्यं प्रकरणं वा। अपिशब्दात्पदे वाक्ये च। महाभारते हि शान्तिपर्वणि गृध्रगोमायुसंवादे मृतं बालं श्मशाने नीतं दृष्ट्वा गृध्रस्य रात्रावन्धस्य दिने जनविसर्जनार्थं मांसं स्वयं भक्षयितुं जनान् प्रति गृध्रोक्तिः अलं स्थित्वेति। कङ्कालानि शवास्थीनि स्याच्छरीरास्थिकङ्कालमित्यर्थः। इह प्रियो द्वेष्यो वा कालधर्मं मरणं प्राप्तः कोऽपि जीवितो नेत्यर्थः। एवं गृध्रेणोक्ते दिवान्धस्य गोमायोः क्रोष्टुः गृध्र एव सर्वं मा भक्षयत्विति जनस्थिरीकरणार्थमुक्तिः। आदित्य इति। अनिष्टमिति दिने इति शेषः। अयम् अयमेव सन्ध्यारूपो मुहूर्तो बहुविघ्नस्तेनाऽस्मिन् मुहूर्ते गते जीवेदपीत्यर्थः। अत्रार्थरूपेण वस्तुना बालमांसभक्षणरूपं वस्तु व्यज्यत इत्यर्थः। प्रबन्धे एवेदृशोऽर्थः प्रथते इत्यर्थः। अर्थशक्तिमूलस्य द्वादशभेदेषु प्रबन्धे वाच्येऽवेको भेद उक्तः। अन्ये तु वस्तुनालङ्कारस्तेन वा वस्तुव्यङ्ग्यमित्याद्येकादशभेदाः स्वयं ज्ञेया इत्याह अन्ये त्विति। प्रबन्धेऽपीत्यपिशब्दार्थमाह अपिशब्दादिति।

[ सरि० ] एवं ध्वनेः पञ्चत्रिंशद्विधत्वं सोदाहरणं निरूप्य सम्प्रति अर्थशक्त्युद्भवध्वनेर्भेदान्तरनिरूपककारिकांशमवतारयति प्रबन्ध इति। अर्थशक्तिभूः प्रबन्धे अपि भवति इत्यन्वयः। अर्थशक्तिभूः अर्थस्य शब्दस्य परिवृत्तिसहत्वेन या शक्तिस्तस्या भवति तच्छील इति। ध्वनिरिति शेषः। प्रबन्ध सङ्घटितनानावाक्यसमुदायः वृत्तप्रत्यायकवाक्यं वा प्रबन्धस्तस्मिन्। अपि इति पूर्वोक्तपदवाक्यसमुच्चये। भवतीति शेषः। पदे वाक्ये यथा प्रबन्धेऽपि अर्थशक्त्युद्भवो ध्वनिर्भवतीत्याशयः। प्रबन्धश्च ग्रन्थरूपतदवान्तरप्रकरणरूपश्चेति द्विविधः। यथोक्तं ध्वनिकारिकायाम्—

अनुस्वानोपमात्माऽपि प्रभेदो य उदाहृतः।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित्॥ इति।

तत्र पदवाक्ययोरुदाहृतमेव। प्रबन्धे तूदाहरति ग्रन्थावान्तरप्रकरणरूपे यथेत्यादि। यथेति निदर्शने। गृध्रेति महाभारतान्तर्गते शान्तिपर्वणि गृध्रगोमायुसंवादादिप्रकरणे। गृध्रो वज्रतुण्डः कश्चिन्मांसादपक्षिविशेषो दिवा समर्थः। गोमायुः क्रोष्टा मांसादपशुविशेषो रात्रौ समर्थस्तयोर्जनैस्सह संवादस्तत्रेति। गृध्रसंवादं प्रस्तौति अलमित्यादि। गृध्रगोमायुसङ्कुले कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे अस्मिन् श्मशाने स्थित्वा अलम्। इह कालधर्मम् उपागतः प्रियः वा यदि वा द्वेष्यः

कश्चित् न जीवितः च प्राणिनाम् गतिः ईदृशी एवेत्यन्वयः। गृध्रेति गृध्रैर्वज्रतुण्ड-प्रभृति मांसादपक्षिभिः गोमायुभिः क्रोष्टृप्रभृतिहिंस्रकपशुभिश्च सङ्कुले व्याप्तेऽत एवामङ्गले। कङ्कालबहुले कङ्काला शवास्थीनि बहुलाः प्रभूताः यत्र एवम्भूते। घोरे दारुणे। सर्वेति सर्वेषां निखिलानामेव प्राणिनां जन्तूनां भयङ्करे त्रासनके। अस्मिन् पुरोगते। श्मशाने पितृसद्मनि। स्थित्वा निष्प्रयोजनं चिरसम्पृष्य। अलं न कोऽपि लाभः। न च मृतो बालकः पुनरुज्जीवेदित्यपि सम्भावनीयं यतः इह जगत्यस्मिन्। कालधर्मः मरणम्। उपागतः प्राप्तः। प्रियः दयितः। वा अथवा। द्वेष्यः शत्रुः। कश्चित् कोऽपि। जीवितः पुनरनेनैव देहेन जीवनमागतः। च। न नैव। न च मृतस्य पुनरुज्जीवनसम्भावनेति। समाधत्ते प्राणिनां संसारिणाम्। गतिः स्वभावः। ईदृशी मरणानन्तरमपुनरावर्तनरूपा एव न साऽन्यथा भवितुमर्हतीत्याशयः। न चेदं रमणीयं स्थलं यत्र जनाश्चिरमभ्युष्य मङ्गलं पश्येयुः न च मृतस्य पुनरुज्जीवनसम्भावनैव। अतोऽत्र भवद्भिर्न निष्प्रयोजनं चिरं स्थातव्यमिति इत्थम्। दिवा दिवसकाले। प्रभवतः समर्थस्य रात्रावन्धत्वात्। गृध्रस्य वज्रतुण्डस्य। पुरुषविसर्जनपरं पुरुषाणां शवावेक्षकजनानां विसर्जनमप-सारणं गृहं प्रति निवर्तनं तत्परं तन्निमित्तकम्। इदम् एतत्। वचनं वाक्यमिति। जनाः शवं त्यक्त्वा निवर्तयेयुरित्युद्दिश्य जनान् प्रति रात्रावन्धत्वाद्दिवसकाले एव समर्थस्य गृध्रस्य कथनमिदं शवमांसभक्षणं लक्ष्यीकृत्य। अत्र हि स्वतःसम्भविना श्मशाने न चिरं स्थातव्यमिति वाक्यार्थेन वस्तुना शवावेक्षकजनविसर्जनरूपं वस्तु व्यज्यते। तच्च प्रबन्धान्तर्गतप्रकरणरूपपद्यद्वयेनेति तस्य प्रबन्धप्रकाश्यता। शब्दानां परिवृत्तिसहिष्णुत्वेनाऽनार्थशक्त्युद्भवो ध्वनिः। गोमायुसंवादं प्रस्तौति।

आदित्येत्यादि। हे मूढाः अयम् आदित्यः स्थितः साम्प्रतम् स्नेहम् कुरुत। अयम् कदाचन जीवेत् अपि अयम् बहुविघ्नः मुहूर्तः। यूयं मूढाः कनकवर्णाभम् अप्राप्तयौवनम् बालम् गृध्रवाक्यात् कथम् अविशङ्किताः त्यजध्वम् इत्यन्वयः। हे मूढाः विवेकहीना मूर्खाः। अयम् देदीप्यमानः। आदित्यः सूर्यः। स्थितः सम्प्रत्यपि भास्वानस्ति। न हि सोऽस्तङ्गत एव यतो यूयं निराशाः प्रतिनिवर्तध्वम्। साम्प्रतम् अधुना। स्नेहं प्रेम कुरुत विधत्त। मृते कः स्नेह इति न वाच्यम्, यतः अयम् बालः। कदाचन कदाचित् सर्वत्र सर्वमेव सम्भवति। जीवेत् पुनर्जीवनं प्राप्नुयात्। अपि। अयमेषः निकटप्रदोषः। मुहूर्तः कालः। बहुविघ्नः राक्षसवेलत्वाद् बह्वन्तरायः। तदा एकाकी स पुनर्जीवेदपि न जीवितुं प्रभविष्यति। यूयं बालसम्बन्धिभूताः। मूढाः मूर्खाः। कनकवर्णाम् स्वर्ण-तुल्यकान्तिमत एव कमनीयम्। अप्राप्तयौवनमनासादिततारुण्यमत एवाप्राप्त-

मृत्युसमयम् । कनकाभत्वेन मृत्युसूचकत्वैवर्ण्याद्यभावः अप्राप्तयौवनत्वेनापमृत्यु-सम्भावनारहितत्वम् च व्यज्यते । **गृध्रवाक्यात्** गृध्रसदृशमांसादपक्षिवचनात् । **अविशङ्किताः** स्नेहरहिता जनापवादशङ्काहीनाश्च । कथम् । **त्यजध्वं** विहाय गच्छेत न गन्तव्यमपि तु यावत्सूर्यो द्योतते तावत्स्यातव्यमेवात्रेति । **इति** इत्थम् । **निशि** रात्रावेव । **विजृम्भमाणस्य** समर्थस्य सम्पूर्णशक्तेरिति । **गोमायोः** क्रोष्टुः । **जनव्यावर्तननिष्ठम्** जनानां शवावेक्षकानां व्यावर्तनं गमनान्निरोधनं तन्निष्ठं तत्तात्पर्यकम् । **चकारः** समुच्चयार्थकः । **वचनं** वाक्यम् । अत्रापि सूर्यास्तं यावच्छवात्यागरूप स्वतःसम्भविवाक्यार्थेन जनव्यावर्तनरूपं वस्तु व्यज्यते इति । तदुभावधिकृत्योपसंहरति **इतीति** इति इत्थम् । **प्रबन्धे** वृत्तव्यावर्तके महावाक्ये । एवेत्यवधारणे न तु वाक्ये पदे वा । **प्रथते** समर्थो भवतीति । तेन हि प्रबन्धाक्षिप्तार्थ-शक्त्युद्भवध्वनेरुदाहरणमिदम् । **अन्ये** इति । अन्ये इतरे अवशिष्टाः । **एकादश** । **भेदाः** प्रकाराः । **तु** । **ग्रन्थविस्तरभयात्** ग्रन्थस्यानावश्यकविस्तृतिर्मा भूदिति । **न** नैव । **उदाहृताः** निदर्शिताः इति । यथेदं प्रबन्धगतस्वतःसम्भविवस्तुना वस्तुव्यङ्ग्यस्योदाहरणं तथैव प्रबन्धेऽर्थशक्त्युद्भवध्वनेरन्येऽप्येकादश भेदा अपि भवन्ति, येऽत्र ग्रन्थकलेवरवृद्धिभिया नोदाहृता इति । तर्हि कथं ज्ञातव्यास्ते इत्याह **स्वयमिति** । **स्वयं** स्वयमेव । **लक्ष्यतः** लक्ष्यमनुसृत्य । **अनुसर्तव्याः** अनु-सन्धातव्याः । यत्र यत्र तल्लक्षणं दृश्यते तत्र तत्र ज्ञेया इति । कारिकांशगतस्यापि-शब्दस्य प्रयोजनमाह **अपीति** । अपिशब्दात् । कारिकांशे अपि इति यः शब्दस्तस्मात् । **पदवाक्ययोः** पदे वाक्ये चेति ज्ञेयमिति । तेन हि अथशक्त्युद्भवध्वनेर्द्वादश-विधस्य प्रबन्धवाक्यपदगतत्वेन **षट्त्रिंशद्भेदा मता** इति शब्दशक्त्युद्भवस्य द्विविधस्य पदवाक्यगतत्वेन चत्वारो भेदाः लक्षणमूलस्य द्विविधस्यापि पदवाक्य-गतत्वेन तथैव चत्वारो भेदाः असंलक्ष्यक्रमव्यङ्ग्यस्यापि पदवाक्यगतत्वेन द्वौ भेदौ । शब्दार्थोभयभूरेक इति सम्भूय सप्तचत्वारिंशद्भेदा ध्वनेरुक्ताः ।

[ वि० वृ० ] प्रबन्धे इति ।

प्रबन्धो वाक्यसमूहस्तत्रार्थशक्त्युत्थो द्वादशविधः । अपिना पदवाक्ययोः । उदाहरणम्—

किमत्र विश्राम्यसि कृष्णभोगिनिवासभूमौ वटपादपान्ते ।
प्रयाति तिग्मद्युतिरस्तशैलं भ्रातर्निशाप्यद्य घनान्धकारा ॥
चकास्ति सौधोऽयमुदीक्षमाणो नन्दस्य गोष्ठाधिपतेः पुरस्तात् ।
अभ्यागतान् पाद्यमुखोपचारैर्यस्मिन् सभार्योऽर्चयते स मोदात् ॥

अत्र वल्लवीकृष्णयोर्निशाभिसारिणोर्नानाविधविनोदभूरियं न्यग्रोधमण्डलीति वस्तुना वस्तु व्यज्यते। एवमन्येऽप्येकादशभेदाः मृग्याः। तदेवं सप्तचत्वारिंशद्भेदाः।

**[ कारिका ] पदैकदेशरचनावर्णेष्वपि रसादयः।**

[ कमला० ] **पदैकदेशे** इति। पदं सुबन्तं तिङन्तञ्चेति द्वेधा। एकदेशाः नामधातुनिपातोपसर्गसर्वनामपूर्वनिपातप्रकृतितद्धितसुप्तिङ्प्रत्ययतद्विशेषात्मनेपदपरस्मैपदरूपाः रचनाल्पमध्यमदीर्घसमासाः वर्णाः मृदुरुक्षादयः।

[ सरि० ] अलक्ष्यक्रमव्यङ्ग्यस्यासङ्ख्येयत्वाद्भेदानामेकभेदवत्त्वेन सम्मतस्य 'पदेऽप्यन्ये' इत्यनेन पदवाक्यभेदेन व्यञ्जकस्य द्वैविध्यं प्रागुक्तम्। सम्प्रति तस्यान्यानपि कांश्चिद् व्यञ्जकान्निर्दिदिक्षुः सम्बद्धकारिकांशमवतारयति पदेत्यादि। रसादयः पदैकदेशरचना वर्णेषु अपि ( व्यक्ताः भवन्ति ) इत्यन्वयः। रसादयः रसाः शृङ्गारादयः आदिपदाद्भावरसाभासभावाभासभावशान्तिभावसन्धिभावोदयभावशबलत्वादीनां ग्रहणम्। ते। पदैकदेशरचनावर्णेषु पदस्य प्रयोगार्हान्निन्दितैकार्थबोधकवर्णसमूहस्य एकदेशः कश्चिदप्येकभागोऽवयवाः रचनाः पदसङ्घटना वर्णान्यक्षराणि च तेषु। अपि इति प्रबन्धपदवाक्यानां ग्रहणम्। तदित्थं रसादिध्वनिरलक्ष्यक्रमव्यङ्ग्यः पद-पदावयव-रचना-वर्ण-वाक्य-प्रबन्धेतिषड्विधव्यञ्जकविषय इति फलितोऽर्थः। यथाह ध्वनिकारिकाकृत्—

सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्॥ इति।

प्रथमं तु प्रकृतिप्रत्ययभेदेन पदस्य द्वाववयवौ। तत्र प्रत्ययात्पूर्वमुपादीयमाना प्रकृतिः प्रकृतेः परमुपयुज्यमानः प्रत्ययः। पदावयवौ पुनर्द्विविधौ शब्दो विभक्तिश्च। तत्र शब्दः प्रकृतिप्रत्ययात्मकोऽव्युत्पन्नेऽपि तत्सत्त्वात् तत्र शक्तिसङ्ख्याविभागकृत्प्रत्ययविशेषो विभक्तिः। सा च द्विविधा सुप्तिङ्भेदात्। स्वादीनां प्रत्याहारः सुप्तिङादीनां सः तिङ्। सुप्तिङन्तशब्द एव पदपदवाच्यः। सुबादिषु कारकाणि तिङादिषु क्रिया। कारकाणि षट्। तत्र स्वतन्त्रो हेतुः कर्ता। क्रियया वाच्यं कर्म। साधकतमं करणम्। सम्यगस्मै प्रदीयत इति सम्प्रदानम्। अपायावधिरपादानम्। आधारोऽधिकरणम्। व्यतिरिक्तः शेषः। कारकाणां प्रवृत्तिविशेषः क्रिया। सैव धात्वर्थः। क्रियैव क्रियापरिच्छेदहेतुः कालः। वचनमेकत्वादि प्रथममध्यमोत्तमाः पुरुषाः। पृथगर्थानामेकार्थीभावः समासः। समाससूत्रे प्रथमया विभक्त्या निर्दिष्टमुपसर्जनं यत्पूर्वं निपात्यते। भावकारकाभिधायिनो धातुप्रत्ययाः कृतः। भाव-

कारकाभिसम्बन्धाभिधायित्वे सति अधातुप्रत्ययास्तद्धिताः। अलिङ्गसङ्ख्याशक्तीन्यव्ययानि। जात्यादिप्रवृत्तिनिमित्तानुपग्राहिणोऽसत्त्वभूतार्थाभिधायिनो लिङ्गसङ्ख्याशक्तिशून्याः उच्चावचार्थनिपातिनो निपाताः। कतिपये समासयोग्या निपाता एव गतयः। गतिविशेषा एव प्रादय उपसर्गाः। क्रियाजन्यसम्बन्धावच्छेदहेतवः कर्मप्रवचनीयाः। सुप्तिङन्तानुसारीत्यव्ययान्येव विभक्तिप्रतिरूपकाणि। प्रकृतिप्रत्ययसमुदायस्य प्रकृत्यर्थविभागमुखेन भेदकं क्रियाविशेषणम्। शब्दस्य ताद्रूप्येणाभिधानमनुकरणम्। चादिनिपातद्योत्यः समुच्चयादिविशेषः इति पदावयवप्रपञ्च इति साहित्यचूडामणौ। स्वातन्त्र्येणार्थप्रत्ययनादेषां पदैकदेशतेति परमानन्दमहाभागाः। पदैकदेशः प्रकृत्यादि। तस्यापि केवलस्य न वाचकत्वम्। तथापि वाचकत्वसमुदायप्रविष्टस्य रसादिषु तत्तदतिशयाधायकत्वम्। यथोक्तं ध्वन्यालोककारिकायाम्—

सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्॥

व्याख्यातं यथा ध्वन्यालोके 'अलक्ष्यक्रमो ध्वनेरात्मा रसादिभिः सुब्विशेषैस्तिङ्विशेषैः वचनविशेषैः सम्बन्धविशेषैः कारकशक्तिभिः कृद्विशेषैस्तद्धितविशेषैः समासैश्चेति। चशब्दान्निपातोपसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते।' इति निपाता अपि वाचकवैलक्षण्याद् द्योतका इति लोचने स्पष्टम्। एवमेव प्रकृत्यंश-प्रत्ययांश-सर्वनामादीनामपि व्यञ्जकत्वमिष्टम्। अर्थमादाय निपातानां द्योतकत्वे प्रादीनां वाचकत्वे मतेऽपि रसादेस्तु सर्वेषामपि व्यञ्जकत्वमेव।

[ वृत्तिः ] तत्र प्रकृत्या यथा –

रइकेलिहिअणिवसणकरकिसलअरुद्धणअणजुअलस्स।
रुद्दस्स तइअणअणं पव्वईपरिचुम्बिअं जअइ॥९७॥

( रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति॥ )

अत्र जयतीति न तु शोभते इत्यादि। समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम्।

[ कमला० ] पदस्योदाहृतत्वात्तदेकदेशधातुरूपप्रकृतेराह रइकेलीति।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति॥

रतिकेलौ हृतं वस्त्रं येन न चासौ कररुद्धेन नयनयुगलस्य द्वन्द्वश्चेति कर्मधारयः कृतनिवसनेति पाठे गौर्या नग्नतायै तद्वस्त्रम्। स्वयं परिहृतं येनेत्यर्थः। अत्र न प्रकृत्यन्तरं व्यञ्जकमित्याह न तु शोभते इति। तत्र हेतुः। समानेऽपीति स्थगनमाच्छादनं हस्तादिनाच्छादनं तु लोके दृष्टं चुम्बनेन तत्कारणं क्वाऽप्यदृष्टमिति लोकोत्तरत्वम्। तदेवेति चुम्बनविधानमेवोत्कृष्टम्। लज्जाहर्षरागातिशयद्वारा सम्भोगरसपोषणात्तदुत्कृष्टत्वं जयतिगम्यं न तु शोभत इत्यादिपदगम्यमित्यर्थः।

[ वृ० ] पदैकदेशव्यञ्जकत्वोदाहरणप्रसङ्गे प्रकृतिव्यञ्जकत्वोदाहरणायोपक्रमते तत्रेति। तत्र तेषु व्यञ्जकेषु। प्रकृत्या प्रत्ययात्पूर्वमुपादीयमाना प्रकृतिस्तया रसादिद्योतनम्। यथेति निदर्शने। प्रस्तौति रइकेलि इति। रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ( रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ) रुद्दस्स ( रुद्रस्य ) पव्वईपरिचुंबिअं ( पार्वतीपरिचुम्बितम् ) तइअणअणं ( तृतीयनयनम् ) जअइ ( जयति ) इत्यन्वयः। रतिः सुरतमेव केलिः क्रीडा तत्र हृतमपसारितं निवसनं वस्त्रं शाटिकादि पार्वत्याः येन स रतिकेलिहृतनिवसनः करौ हस्तावेव पार्वत्या इति किसलयौ पल्लवे ताभ्यां रुद्धमाच्छादितं नयनयोर्नेत्रयोर्युगलं द्वन्द्वं यस्य स करकिसलयरुद्धनयनयुगलः रतिकेलिहृतनिवसनश्चासौ करकिसलयरुद्धनयनयुगलस्तस्य। इति बहुव्रीहिद्वयानन्तरं कर्मधारयः। गमकत्वात्समासः। यच्च चण्डीदासभट्टाचार्यैः रतिकेलौ हृतनिवसनं यस्यास्तस्याः करकिसलयाभ्यां रुद्धं नयनयोर्युगलं यस्येति विग्रहः कृतः सोऽर्थानुकुलोऽपि निवसनेत्यत्र ह्रस्वानुपपत्तेरग्राह्य इत्युदाहरणचन्द्रिकायाम्। सङ्केतकारास्तु रतिकेलौ हृते निवसने सति करकिसलयाभ्यां रुद्धं नयनयोर्युगलं यस्येति विकल्पमपि ददति। वस्तुतस्तु करकिसलययोर्हृतवसनया सह सम्बन्धनाय हृतवसनया वा हृतवसनायाः इत्येव विग्रहो युक्तः। ह्रस्वविधानञ्च अजक्षीरवत्। ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ( ६।३।६३ पा० सू० ) इत्यनुवृत्य 'असंज्ञायाञ्च' इति वार्तिकेन कलायाः ज्ञः कलज्ञ इत्यादाविव भाषायामपि। तेन हि रतिकेलौ हृतं निवसनं यस्याः सा तस्याः करकिसलयौ ताभ्यां रुद्धं नयनयुगलं यस्येति। रुद्रस्य शम्भोः। पार्वतीपरिचुम्बितं पार्वत्या गौर्या परिचुम्बितनिक्षितम्। तृतीयनयनम् तृतीयञ्च तन्नयनम् भालगतनेत्रम्। जयति सर्वोत्कृष्टत्वेन वतत इति। तत्र कथनीयमाह अत्रेति। अत्र काव्येऽस्मिन्। जयति इति न तु शोभते इत्यादि। रतिव्यक्तौ जिधातुरूपप्रकृतेः प्राधान्यं यद्धि शोभादिधातुरूपप्रकृतेर्न सम्भवेदित्याशयः। तत्र हेतुमाह समाने इति। स्थानव्यापारे आच्छादनक्रियायाम्। समाने तुल्यायाम्। अपि।

अस्य तृतीयनेत्रस्य। पिधानमाच्छादनम्। लोकोत्तरेण अलौकिकेन। व्यापारेण क्रियया। चुम्बनेनेति। एव इत्यवधारणे। इति हेतोः। तत् तृतीयनेत्रम्। एव इत्यवधारणे। उत्कृष्टं सर्वातिशायि। इति। अयमाशयः— त्रयाणामेव नेत्राणां स्थगनं तु समानमेव। किन्तु अन्यनेत्रयोः कराभ्यामेव पिधानमस्य तृतीयस्य तु चुम्बनेन पिधानमिति। करादिना स्थगनमात्रं चुम्बनेन तु स्थगनं क्रीडा चेति। तस्येतरापेक्षयोत्कृष्टत्वे हेतुः। उत्कृष्टत्वञ्च जिघातुरूपप्रकृत्या सम्भोगशृङ्गारो व्यज्यते इति प्रकृतेर्व्यञ्जकत्वस्योदाहरणमिदम्। नात्र प्रकृतिरेव रसाभिव्यञ्जने हेतुः किन्तु तस्यास्तत्रातिशयाधायकत्वमेव।

[ वृत्तिः ] यथा वा—

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः।
तावत्प्रत्युत पाणिसम्पुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥९८॥

अत्र पदानीति न तु द्वाराणि।

[ कमला० ] नाम्नो व्यञ्जकत्वमाह तथेति। सोऽयं प्रेमास्पदत्वेन प्रसिद्धः सायमिति पाठे सन्ध्याकाले। प्रेयान् प्रियः। सशपथं पादानतः कान्तया सशपथमपाकृतश्च सन्निवासगृहात्। रासेति पाठे रास क्रीडा। द्वित्राणि पदानि यावन्नैव याति गच्छति। प्रत्युत विपरीतम्। पाणिः सम्पुटेन प्रणामार्थं बद्धाञ्जलिना गलन्नीविबन्धो यथा तथा धावित्वैव धृतः। अत्रेति द्वारपर्यन्तगमनेऽप्यधैर्यमित्युत्कण्ठातिशयो व्यङ्ग्यः सम्भोगपोषकः।

[ सरि० ] पदावयवस्य रसादिव्यञ्जकत्वोदाहरणप्रसङ्गे प्रातिपदिकरूपप्रकृतेर्व्यञ्जकत्वमुदाहर्तुमुपक्रमते यथेति। यथेति निदर्शने। वेति पक्षान्तरे। प्रातिपदिकरूपप्रकृतेर्व्यञ्जकत्वं यथेति। उदाहरणं प्रस्तौति प्रेयानित्यादि। सशपथम् पादानतः कान्तया सशपथम् अपाकृतः सः अयम् प्रेयान् उन्मनाः वासभवनात् यावत् द्वित्राणि एव पदानि न याति तावत् पाणिसम्पुटलसन्नीवीनिबन्धम् धावित्वा प्रत्युत कृतप्रणामकम् धृत एव अहो प्रेम्णः गतिः विचित्रा इत्यन्वयः। सशपथं न मयाऽपराद्धं वा भूयो नेदृशमाचरामीति शपथपूर्वकं यथा स्यात्तथा। पादानतः पादयोश्चरणयोरानतः प्रणतः। कान्तया प्रेयस्या। सशपथं शपथपूर्वकम्। अपाकृतः निराकृतः। सोऽयं परमप्रेमास्पदत्वेन प्रसिद्धः। प्रेयान् दयितः। उन्मनाः उद्विग्नमानसः। यत्तु उत्सुकमना इति व्याख्यातं तच्चिन्त्यमेव। तिरस्कारे औत्सुक्याभावात्। अनादरे विमनायमानत्वमेवोचितम्। सन्। वासभवनात्

शयनकक्षतः। यावत् यदा। द्वित्राणि द्वे वा त्रीणि वा तानि। पदानि पादनिक्षेपाः। न। याति अग्रे सरति। तावत्तदैवाविलम्बेनेति। पाणिसम्पुटगलन्नीवीनिबन्धम् पाण्योः करतलयोः सम्पुटेऽञ्जलौ लसन्नवलम्बितो नीव्याः कटिवस्त्रबन्धनस्य बन्धः ग्रन्थिर्यस्मिन् कर्मणि यथा स्यात्तथा। गलदिति पाठे आलम्बमान इत्यर्थः। धावित्वा द्रुत गत्वा। इव इत्युत्प्रेक्षा। प्रत्युत विपरीतमेव। कृतप्रणामकम् कृतो विहितः प्रणामः प्रणतिर्यस्मिन् कर्मणि यथा स्यात्तथा। धृतः गृहीतः। अर्थान्तरं न्यस्यति। अहो इति विस्मये। प्रेम्णः स्नेहस्य। गतिः सरणिः स्वभावो वा। विचित्रा विलक्षणा। भवतीति शेषः। पूर्वं प्रणतस्यापाकरणं सम्प्रति प्रणामपूर्वकं धरणमिति वैपरीत्यम्। प्रथमं स न जानाति पश्चात्सा मनुते न हि। स कर्षत्यथ तां सा तु विक्रोशति मुहुर्मुहुरितिवत्। लक्ष्येऽभीष्टमाह अत्रेति अत्र श्लोकेऽस्मिन्। पदानि इति पदरूपप्रातिपदिकेनैव कालाक्षमत्वस्य द्योतनात्। द्वाराणि तु न। द्वारोपादाने तु कालाक्षमत्वलक्षणमौत्सुक्यमनुद्धुरीकृतं स्यादिति। पदग्रहणेनात्र द्वारपर्यन्तगमनेऽप्यसहिष्णुतया उत्कण्ठातिशयो व्यज्यते येन सम्भोगशृङ्गारः परां पुष्टिमाप्नोतीति प्रातिपदिकरूपप्रकृतेः रसादिव्यञ्जकत्वस्योदाहरणमिदम्।

[ वृत्तिः ] तिङ्सुपोर्यथा –

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥९९॥

अत्र किरतीति किरणस्य साध्यमानत्वम्। निवृत्तेति। निवर्तनस्य सिद्धत्वं तिङा सुपा च। तत्रापि क्तप्रत्ययेनाऽतीतत्वं द्योत्यते।

[ कमला० ] पथि पथीति शुकचञ्चूवच्चारुणां रम्भाकदलीतदङ्कुराणां लासक उद्बोधकश्चारुराभाङ्कुराणामिति पाठेऽङ्कुराणामाभा कान्तिः प्रतिमार्गं शुकचञ्चूवच्चारुरस्तीति शेषः। पवमानो वायुर्वीरुधां लतानां लासको नर्तकश्चास्ति चर्चा वार्ता। अत्रेति। औणादिकक्युप्रत्ययात्किरणपदस्य साधुत्वम्। अयम्भावः—माननिवृत्तौ शरकिरणं कारणं तस्य सिद्धत्वे वाच्ये किरतीति तिङा साध्यावस्थोक्तेः। साध्यत्वोक्तिः। माननिवृत्तौ च कार्यभूतायां साध्यत्वे वाच्ये सुपा सिद्धत्वोक्तिः। तेन कार्यकारणयोः पौर्वापर्यविपर्ययादतिशयोक्तिस्तेन माननिवृत्तेः शैघ्र्याद् वसन्तस्योः द्दीपकत्वप्रकर्षो व्यङ्ग्यः सुपा च द्योत्यत इत्यन्वयः। तत्रापीति माननिवृत्तेकार्यस्यातीतत्वं व्यङ्ग्यम्। ननूक्तप्रत्ययस्यातीतत्वं वाच्यमेव। अथ कथं व्यङ्ग्योक्ति-

रिति चेदुच्यते निवृत्तेति । एतेन निवृत्तेरतीतत्वं नोच्यते बाधात् । निवृत्ते-रतीतरूपाया अतीतत्वाभावात् । न च मानचर्चागतमतीतत्वं तस्याः प्रकृतित्वा-भावात् प्रत्ययार्थानां प्रकृत्यर्थान्वितत्वात् । तेनाप्रकृत्यर्थचर्चागतमतीतत्वम् । एतेन व्यञ्जनयैव बोध्यत इति । न च प्रकृत्या उक्तप्रत्ययेन वा अतीतत्वोक्तावेकतरवैयर्थ्यं सम्भेदेऽन्यतरवैयर्थ्याभावात् । यद्वाऽतिशयेनेतरत्वमतीतत्वम् । तेन प्रकृत्योक्तस्या-प्यतीतत्वस्य पुनः क्तप्रत्ययेनोक्तिरतिशयार्था । शुक्लः शुक्ल इति द्वितीयशुक्ल-पदस्येव चर्चातीतत्वेऽतिशयश्च चर्चान्तरासमानकालीनत्वमिति परमानन्दः ।

[ सरि० ] पदावयवस्य रसादिध्वनिद्योतकत्वोदाहरणप्रसङ्गे सुप्तिङोस्तदु-दाहरणायोपक्रमते सुप्तिङोरिति । सुप् स्वौजसादिः प्रातिपदिकानुवर्तिप्रत्ययविशेषः तिप्तसादिः धात्वनुवर्तिप्रत्ययविशेषस्तिङ् च तयोः प्रसङ्गात् भावकारकाभिधायि-धातुप्रत्ययः कृच्च तस्य च । व्यञ्जकत्वमिति शेषः । यथेति निदर्शने । प्रस्तौति पथीत्यादि । पथि पथि अङ्कुराणाम् शुकचञ्चूचारुः आभा दिशि दिशि पवमानः च वीरुधाम् लासकः पुष्पधन्वा नरि नरि सायकान् द्राक् किरति पुरि पुरि मानिनी-मानचर्चा विनिवृत्ता इत्यन्वयः । वसन्तवर्णनमेतत् । पथि पथि मार्गे मार्गे अङ्कुराणां नूतनप्ररोहाणाम् । शुकचञ्चूचारुः शुकस्य कीरस्य चञ्चूस्तुण्डं तस्येव चारुर्मनोहरा । आभा कान्तिः हरितवर्णा इति अस्तीति शेषः । दिशि दिशि प्रतिदिशम् । पवमानः अनिलः । वीरुधां वल्लीनाम् । लासकः नर्तकः । अस्तीति शेषः । नरि नरि प्रतिनरम् पुष्पधन्वा कामः । सायकान् बाणान् । द्राक् झटिति अप्रतीक्ष्यैव । किरति क्षिपति । पुरि पुरि प्रतिनगरम् । मानिनी-मानचर्चा मानिनीनां मनस्विनीनां मानस्य प्रणयकोपस्य चर्चा वार्ता । विनिवृत्ता समाप्ता इति । लक्ष्ये कथनीयमाह अत्रेति । अत्र काव्येऽस्मिन् । किरति इति यत्पदम् । किरणस्य क्षेपणरूपसिद्धक्रियायाः । साध्यमानत्वम् साध्यावस्थारूपम् निवृत्ता इति निवर्तनस्य समापनरूपसाध्यक्रियायाः सिद्धत्वं समाप्तत्वम् । तिङा किरतीत्यत्र तिपा । सुपा विनिवृत्तेत्यत्र सुना । चकारः उभयसमुच्चये । द्योत्यते व्यज्यते । तत्रापि सिद्धत्वेऽपि । क्तप्रत्ययेन निवृत्तेत्यत्र यो निष्ठारूपः क्तप्रत्ययस्तेन । अतीतत्वम् सिद्धत्वम् । द्योत्यते व्यज्यते न तु उच्यते तस्य भावाद्यर्थकत्वादिति । इत्थमुक्तं भवति । शरविकिरणरूपसिद्धक्रियाया मानिनीमान-भङ्गरूपसाध्यक्रियां प्रति हेतुत्वम् । किन्तु तत्पौर्वापर्यविपर्ययेणोक्तमत्र । यथा विकिरणक्रियासाध्यत्वेन मानभङ्गक्रिया च सिद्धत्वेन । अत्रेदमवधेयं यत्साध्यत्वेन या क्रिया सा धातुरूपनिबन्धना भवति यस्त्वस्याः सिद्धभावः स घञादिनिबन्धनः । साध्यत्वमेवासत्यभूतत्वं सिद्धत्वं तद्विपरीतम् । कारकान्वयितावच्छेदकरूपवत्त्वं वा क्रियान्तरानुत्थापकतावच्छेदकं रूपवत्त्वं साध्यत्वम् । तद्विपरीतं सिद्धत्वम् ।

किरतीत्यत्र कर्तरि प्रत्ययविधानात् कर्ता वा फलव्यापारयोर्धातुतापत्वाद् व्यापाराश्रयस्तिङ् वाच्यः साध्यत्वं यत्तद् व्यङ्ग्यमेव तिङा प्रकाशितम्। निवृत्तेत्यत्र प्रातिपदिकार्थादिसुपो वाच्यत्वं सिद्धत्वं तु व्यङ्ग्यमेव सुपा प्रकाशितम्। एवं क्तस्य भावादिर्वाच्योऽर्थः अतीतत्वं तु व्यङ्ग्यमेवेति सुधासागरकाराः। तिङ्सुपोः सिद्धत्वं साध्यत्वञ्च नैव वाच्यमपितु व्यङ्ग्यमेव। तेनात्र विकिरणविनिवृत्त्योः सिद्धत्वसाध्यत्ववैपरीत्येन-कारणकार्य पौर्वापर्यविपर्ययमूलातिशयोक्तिव्यञ्जनद्वारा वसन्तकालस्योद्दीपकत्वप्रकर्षः प्रत्याय्यते। न च क्तेन वाच्यस्यातीतत्वस्य कथं व्यङ्ग्यत्वमिति वाच्यम्। तदुपस्थितेः शक्यत्वेऽपि अनुभवस्य व्यञ्जनैकसाध्यत्वात् इति विस्तारिकाकाराः। तेनेदं पर्यवसितं यत् किरति इत्यत्र कर्तरि प्रत्ययविधानात् लकारवाच्यः कर्ता साध्यमानत्वं व्यङ्ग्यम्। एवं निवृत्ता इत्यत्र प्रातिपदिकार्थादि सुपो वाच्यं सिद्धत्वं तु व्यङ्ग्यमेव। क्तस्य च भावादिरर्थः अतीतत्वं तु व्यङ्ग्यमेव। केषाञ्चिन्मते तु मानचर्चानिवृत्तेरतीतोत्पत्तिकत्वस्य क्तप्रत्ययवाच्यत्वेऽपि निवृत्तिगतमात्यन्तिकत्वं स्वसमानाधिकरणमानचर्चाऽसमानकालिकस्वरूपं क्तप्रत्ययव्यङ्ग्यमिति।

[ वृत्तिः ] यथा वा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥१००॥

अत्र लिखन्निति न तु लिखतीति तथा आस्ते इति न तु आसित इति अपितु प्रसादपर्यन्तमास्ते इति भूमिमिति न तु भूमाविति। न हि बुद्धिपूर्वकमपरं किञ्चिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम्।

[ कमला० ] अत्रैव लक्ष्यान्तरमाह लिखन्निति। सख्याः नायिकां प्रत्युक्तिः। अत्रेति। लिखन्निति शत्रा लिखनस्याबुद्धिपूर्वकत्वादप्राधान्यं प्रसादस्योद्देश्यत्वात्। न त्वासीदिति प्रसादपर्यन्तस्थितिरुद्देश्या। तेन स्थितेरतीतताव्यवच्छेदो व्यङ्ग्यः। भूमिमित्यस्य कर्मणो लिखनमुद्देश्यं नेत्यर्थः। शुकैर्हसितार्थं पठितं यत्तदपि व्यक्तम्। यथा मुञ्च मुञ्च बहु मा किल कार्षीर्देहि चुम्बनमहो सुखमद्य। आस्ते से सुखमितः खलु पश्ये कश्चिदाशु विसृजेति रते गीः। नन्वस्य शिक्षोत्तरं सर्वं मया समाधेयमत आह तवेति। तदुत्तरं कः करिष्यतीति भावः। तेन धर्मिबाधाद्वरं मानबाधः। न चात्यन्तं तद्बाधः। सुरतोत्तरपुनर्मानस्वीकारादित्याह अधुनेति। न च तदा

तद्वैयर्थ्यम् । न च भगसौन्दर्येण तस्य पुनः सुरतेच्छात्वादित्याह सुभगे इति । कठिने इति पाठे भर्तुः प्राणात्ययेऽपि निर्दयत्वात्काठिन्यम् ।

[ सरि० ] तिङ्सुपोरेव व्यञ्जकत्वोदाहरणप्रसङ्गे लक्ष्यान्तरमाह । यथेति । यथेति निदर्शने । वेति इदमपि च । प्रस्तौति लिखन्नित्यादि । पद्यमिदममरुशतकगतम् । कस्याश्चित् प्रियसख्याः नायिकां प्रत्युक्तिरियम् । हे कठिने ! प्राणदयितः अवनतः भूमिम् लिखन् बहिः आस्ते सख्यः निराहाराः सततरुदितोच्छूननयनाः पञ्जरशुकैः सर्वं हसितपठितम् परित्यक्तम् तव अवस्था च इयम् अधुना मानम् मुञ्च इत्यन्वयः । हे कठिने ! हे निर्दये ! प्राणदयितः प्राणा असव इव दयितो वल्लभः । अवनतः नम्रः । भूमिम् पृथिवीम् । लिखन् शून्यहृदयतया विलिखन् । बहिः बाह्यदेशे । आस्ते उपविष्टोऽस्ति । सख्यः वयस्याः । निराहाराः निर्गत आहारो भोजनादिकं यासां तास्तथाभूताः सख्यः । सततेति सततं निरन्तरं यद्रुदितं रोदनं तेनोच्छूने जातशोथे नयने लोचने यासां तास्तथाभूताः । सन्तीति शेषः । पञ्जरशुकैः पञ्जरस्था ये शुकाः कीरास्तैः । सर्वं निखिलमेव । हसितपठितं हसितयुक्तं पठनं वा हसनपठनम् । परित्यक्तमुज्झितम् । तव भवत्या । अवस्था दशा । च अपि । इयमेतादृशी दयनीया । तेन हि । अधुना सम्प्रति । मानं कोपम् । मुञ्च विसृज इति । लक्ष्ये व्यञ्जकत्वमाह अत्रेति । अत्र पद्येऽस्मिन् । लिखन् इति शत्रन्तं रूपं न तु लिखति इति तिङो रूपम् । तेन लिखनस्याप्राधान्यं लेखनमनूद्य प्रधानभूतमासनं विधत्ते इति । आस्ते इति लटि रूपं न तु आसित इति सिद्धरूपम् । तेन प्रसादपर्यन्तमाप्रसादं ते । आस्ते तथैव तिष्ठतीति व्यज्यते । भूमिमिति कर्मणः प्रयोगः न तु भूमौ इति सप्तम्यन्तस्य । तेन बुद्धिपूर्वकं समनोयोगम् । किञ्चित् यत्किञ्चिदपि । अपरमन्यत् । न लिखति इति चिन्ताकुलतया यत्किञ्चन रेखामात्रमालिखन्नास्ते इति । तिङिति तिङ्विभक्तीनां तशदादीनां शतृप्रत्ययस्य सुप्प्रकृतिकत्वेऽपि तिङादेशिलड्विकृतितया तिङ्त्वेनैव ग्रहणमत्र । सुब्विभक्तिश्चात्र भूमिमित्यत्र अम् । तेषाम् व्यङ्ग्यम् व्यङ्ग्योऽर्थः । अयमाशयः—लिखन्नित्यत्र तिङः स्थाने शतुः आस्ते इत्यत्र लुङः स्थाने लटः भूमिमित्यत्र ङेः स्थाने अमः प्रयोगः सहेतुकः । भूमिं लिखन्नास्ते इति न हि बुद्धिपूर्वकं किञ्चिदावश्यकं लिखति अपितु लेखनमनूद्य प्रधानभूतमासनं विधत्ते तच्च प्रसादपर्यन्तमेव चलतीति तिङ्सुब्विभक्तिबलाद् व्यज्यते । लिखति इति प्रयोगे प्रसादपर्यन्तं तस्या लाभः स्यात् । आसित इति प्रयोगे गतो न वेति सन्देहः स्यात् । भूमौ इति प्रयोगे भूमेरधिकरणतया उपलक्षिताया लेखनक्रियायाः कर्मावश्यम्भाव्याच्च बुद्धिपूर्वकं किमप्यावश्यकमाकारं लिखन्नित्यर्थः स्याद्येन तस्य नैश्चिन्त्यत्वं प्रतीयेत ।

तेन हि स बहिरास्ते तत्र स प्रसादपर्यन्तं तिष्ठति तथैव। तत्र न नैव समनोयोगं किञ्चित्करोति। केवलं लेखनमनूद्य त्वत्प्रसादं प्रतीक्षत इति शतृ-त-अम्विभक्तीनां व्यङ्ग्योऽर्थं इति। तेन च नायकस्य मोहातिशयो व्यज्यते तेन च विप्रलम्भोत्कर्षो व्यङ्ग्य इति भावः।

यथोक्तं चन्द्रिकाकारेण --

'अत्र लिखन्निति शतृप्रत्ययेन लिखनस्य यावदुपवेशनकालिकत्वं व्यज्यते। आस्ते इति वर्तमानत्वार्थकात्मनेपदरूपतङा उपवेशनस्य प्रसादरूपकालपर्यन्तत्वम्। आसित इत्युक्तौ तदभावात्। भूमिमिति द्वितीययातस्या एव लिखनकर्मत्वावगमाद् बुद्धिपूर्वक-लिखनाभावव्यक्ति तिङ्सुपोः प्रस्तावे शत्रन्तमपि रूपं प्रासङ्गिकत्वेन न दोषायेति विवरणे।

[ वृत्तिः ] सम्बन्धस्य यथा—

गामारुहम्मि गामे वसामि णअर ठ्ठिइं ण जाणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥१०१॥

( ग्रामरुहास्मि ग्रामे वसामि नगरस्थितिं न जानामि।
नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥

अत्र नागरिकाणामिति षष्ठया।

[ कमला० ] प्रत्ययार्थस्य षष्ठ्यर्थस्य व्यञ्जकतामाह गामेति। ग्रामार्हास्मि ग्रामे वसामि नगरस्थितिं न जानामि। नागरिकाणां पतीन् हरामि या भवामि सा भवामि। अत्रेति षष्ठ्या व्यञ्जकत्वमित्यनुषङ्गः। षष्ठ्या नगरभावानामपि स्त्रीणां पतिहारकत्वात्तादृशकलाभिज्ञातृरूप उत्कर्षो व्यङ्ग्य इत्यर्थः। यत्तु परमानन्देन षष्ठ्या नादरो व्यङ्ग्यः। यद्यपि षष्ठी चानादरे इति अनादरो वाच्य एव न व्यङ्ग्यस्तथापि तेन रसव्यञ्जनैवेत्युक्तं तद्भ्रान्तिकृतमेव।

[ सरि० ] सम्बन्धस्य रसाभिव्यञ्जकत्वोदाहरणायोपक्रमते सम्बन्धस्येति। सम्बन्धस्य सम्बन्धप्रत्यायकषष्ठ्याः। रसादिव्यञ्जकत्वम्। यथेति निदर्शने। उदाहरणं प्रस्तौति गामेति। गामारुहम्मि ( ग्रामारुहा अस्मि ) गामे ( ग्रामे ) वसामि ( वसामि ) णअरट्ठिअं ( नगरस्थितिम् ) ण ( न ) जाणामि ( जानामि ) णाअरिआणं ( नागरिकाणाम् ) पइणो ( पतीन् ) हरामि ( हरामि ) जा ( या ) होमि ( भवामि ) सा ( सा ) होमि ( भवामि ) इत्यन्वयः। ग्रामरुहा ग्रामे उत्पन्ना। अस्मि अहमिति। ग्रामे यत्र जाता तत्रैव। वसामि तिष्ठामि। नाहं स्थानरण्डेति। नगरस्थितिं पुरस्य वैदग्धरूपमर्यादाम्। न जानामि। न

ज्ञात्रस्मि। **नागरिकाणां** नगरवधूनाम्। **पतीन्** प्रियतमान्। **हरामि** वशीकरोमि। ते ता अनादृत्य मामागच्छन्तीति मद्वशीभूता इति। **या** यैव। **भवामि**। **सा** सैव। **भवामि** इति। का त्वमसीति साक्षेपं कयाचिन्नगरवध्वा स्पृष्टायाः कस्याश्चिद्ग्रामवध्वाः प्रत्युक्तिरियमिति परम्परा। सुधासागरकारास्तु नागरीभिर्ग्रामीणेत्युपहसिताया वृषभारूढायाः कस्याश्चित्कुलटाया उक्तिरियमिति मन्यन्ते। स्यादपि तथा। ग्रामजाता ग्रामवासिनी याऽस्मि साऽस्मि। नागरी चातुरीं त्वहं न जानामि किन्तु तासां पतींस्तु तास्तैरेवानादरय्य ताः पश्यन्तीरनादृत्यैव च वशीकरोमीति भावः। लक्ष्ये कथनीयमाह अत्रेति अत्र काव्येऽस्मिन्। **नागरिकाणाम्** इत्यत्र षष्ठ्या षष्ठीरूपप्रत्ययात्मकपदैकदेशेन शृङ्गारव्यक्तिरिति। अयमाशयः—अत्र हि नागरिकान् हरामि इत्युक्तेऽपि वाच्यस्य सिद्धे 'नागरिकाणां पतीन् हरामि' इति षष्ठीरूपप्रत्ययान्तप्रयोगः सहेतुकः। स च नागरिकाः पश्यन्तीरनादृत्य यद्वा तैरेव ता अनादरय्य तान् हरामि इति अथवा तादृशविदग्धानपि हरामीति स्वोत्कर्षप्रकाशनरूपव्यङ्ग्यरूपः। न च 'षष्ठी चानादरे' इत्युक्तेः षष्ठीरूपप्रत्ययान्तस्यानादरो वाच्य एवेति वाच्यम्, तद्बोधनद्वारा गर्वरूपव्यभिचारिभावव्यञ्जकत्वस्य विवक्षितत्वात्। शैषिकषष्ठ्या एव वक्त्रादिवैशिष्ट्यसहकारेणानादरव्यञ्जकत्वाच्चेति। षष्ठ्या अनादरो व्यङ्ग्यः पर्यन्ते तु सर्वव्यङ्ग्यो रस इति व्यञ्जकत्वमक्षतमिति।

**[ वृत्तिः ]** 'रमणीयः क्षत्रियकुमार आसीत्' इति कालस्य।

एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः।

[ कमला० ] कालस्येति। अतीतकालार्थस्य लुङो व्यञ्जकत्वमित्यनुषङ्गः। मत्क्रोधग्रस्तोऽयं न स्थायी न वा भविष्यन्निति व्यङ्ग्यमित्यर्थः।

[ सरि० ] कालो हि क्रियापरिच्छेदहेतुः क्रियैव। तस्य रसादिव्यञ्जकत्वमुदाहरति **रमणीय** इति। **रमणीयः** कमनीयः। **क्षत्रियकुमारः** राजन्यसुतः। **आसीत्**। अविद्यत इति। तद्व्याख्याति एषेति। **एषा** इयमुक्तिः। **हि** इत्यवधारणे। **भग्नमहेश्वरकार्मुकं** भग्नं त्रोटितं महेश्वरस्य शङ्करस्य कार्मुकं धनुर्येन तम्। **दाशरथिं** दशरथतनयं राममिति। **कुपितस्य** क्षत्रियस्योदयेन क्रुद्धस्य। **भार्गवस्य** परशुरामस्य। **उक्तिः** कथनमिति। अयमाशयः—तिङन्तेन हि षडर्थाः प्रकाश्यन्ते—क्रिया काल उपग्रहः साधनं सङ्ख्या पुरुषश्चेति, येषु आदिमत्रयं प्रकृतिरभिधत्तेऽपरत्रयं तु प्रत्ययविषय इति। प्रकृते आसीदिति अतीतकालविहितलङ्-प्रत्ययेन तस्य इत उपरि जीवनासम्भवत्वं वक्तुः क्रोधातिशयश्च व्यज्यत इति। तर्हि

किं नोक्तं वृत्तौ लङिति चेदुच्यते प्रत्ययान्तरस्याप्यतीतकाले विधानात्। तर्हि प्रत्ययस्यैवेति कथं नोक्तम् तथा सति प्रकृतप्रत्ययस्यैव व्यञ्जकत्वं सम्भाव्येत। कालस्येत्युक्तौ तु सर्वस्यैवातीतकालविहितप्रत्ययस्य व्यञ्जकत्वं सिध्येदिति।

[ वृत्तिः ] वचनस्य यथा—

ताणं गुणग्गहणाणं ताणुक्कंठाणं तस्स पेम्मस्स।
ताण भणिआणं सुंदर एरिसिअं जाअमवसाणं ॥१०२॥

( तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।
तासां भणितीनां सुन्दर ईदृशं जातमवसानम् ॥ )

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते।

[ कमला० ] ताणमिति।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।
तेषां भणितीनां सुन्दर ईदृशं जातमवसानम् ॥

प्रेमहेतूनां गुणादीनामानन्त्येऽपि प्रेमैकरूपमेवेति व्यङ्ग्यं प्रेम्ण इत्येकत्वस्य शक्यत्वेऽपि प्रकारैक्यं व्यङ्ग्यमित्यर्थः।

[ सरि० ] वचनमेकत्वद्वित्वबहुत्वादि। तस्य रसादिव्यञ्जकत्वोदाहरणायोपक्रमते वचनस्येति। वचनस्य एकत्वादेः। यथेति निदर्शने। प्रस्तौति ताणमिति। हे सुंदर ( हे सुन्दर ! ) ताणं ( तेषाम् ) गुणग्गहणाणं ( गुणग्रहणानाम् ) ताणुक्कंठाणं ( तेषाम् उत्कण्ठानाम् ) तस्स ( तस्य पेमस्स ( प्रेम्णः ) ताणं ( तेषाम् ) भणिआणं ( भणितीनाम् ) एरिसिअं ( ईदृशम् ) अवसाणं ( अवसानम् जाअं ( जातम् ) इत्यन्वयः। अन्यासक्ते नायके कस्याश्चिदुक्तिः। हे सुन्दर ! हे सुभग ! तेषां तथाविधानां तच्छब्दा अत्र विशिष्यनिर्वचनीयार्थका इति। गुणग्रहणानां गुणवर्णनानाम्। तासां तथाविधानाम्। उत्कण्ठानामौत्सुक्यानाम्। तस्य तथाविधस्य। प्रेम्णः स्नेहस्य। तासां तथाविधानाम्। भणितीनां वचनानाम्। ईदृशमेतद्विधं कृतघ्नताकलुषितम्। अवसानं परिपाकः। जातः सम्पन्नमिति। तत्र फलितमाह अत्रेति। अत्र पद्येऽस्मिन्। गुणग्रहणादीनां गुणकथनौत्सुक्यस्निग्धभणितीनाम्। बहुत्वं बहुवचनयोगेनानेकविधत्वम्। प्रेम्णः स्नेहस्य। च तु। एकत्वमेकवचनसम्बन्धादिति। द्योत्यते व्यज्यते। अयमाशयः – गुणग्रहणादीनां प्रेमहेतूनां नानाप्रकारकत्वेऽपि प्रेम कार्यं तु एकजातीयमेव न कदाचिदन्यथाभावं प्राप्तमिति बहुवचनैकवचनाभ्यां व्यज्यते इति।

[ वृत्तिः ] पुरुषव्यत्ययस्य यथा—

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेण नयनामालोक्य किं नृत्यसि।
किं मन्ये विहरिष्यसे वत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतले कृता खलु शिला संसारवारांनिधौ ॥१०३॥

अत्र प्रहासः।

[ कमला० ] पुरुषेति। पुरुषः प्रथममध्यमोत्तमरूपः। रे रे इति कस्यचित्कान्ताभिलाषुकस्य तदप्राप्त्या नेत्रमनसी प्रत्याक्षेपोक्तिः। चञ्चलनयना स्त्री तस्यामञ्चिताऽऽविष्कृता रुचिरभिलाषो येनेति चेतोविशेषणम्। यद्वा रे लोचन हे चेत इति द्वे सम्बुद्धौ। स्थिरं प्रेम यत्र तं महिमानं प्रमुच्य मृगाक्षीं दृष्ट्वा किमिति नृत्यसि स्फुरसि हृष्यसि चेति नेत्रचेतसोर्यथायोगं किमन्यसे विहरिष्यामि त्वं मन्ये इति पाठे त्वं मन्यसे इत्यर्थः। उत्तममध्यमयोर्मध्यमोत्तमौ ज्ञेयौ। प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्चेति स्मृतेः। हतां निन्दितामन्तर्मनस्याशा बहिस्तद्गोपनमिमां मुञ्च खलु यत एषामाशा स्त्री वा संसारसमुद्रे मज्जनार्थं कण्ठतटे शिलारूपा कृता। अनया दुःखप्राप्त्या मज्जनमेव न तु कदाचिदपि सुखलेश इत्यर्थः। अत्र हासो व्यङ्ग्य इति शेषमाहुः। तत्त्वं तु हासे एव। पुरुषव्यत्ययस्मृतेः हासो न व्यङ्ग्यः किन्तु निवृत्तिरूपशान्तरसस्य व्यञ्जक इति योज्यमिति। परमानन्दस्तु पदवाक्याभ्यां हासाप्रतीतेर्व्यञ्जनैवेत्याह। तत्रानुशासनं किमर्थमिति चिन्त्यम्।

[ सरि० ] प्रथममध्यमोत्तमाः पुरुषाः। तत्र अस्मद्युत्तमः युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः। शेषे प्रथमः। पदैकदेशव्यञ्जकप्रसङ्गे पुरुषव्यञ्जकत्वोदाहरणायोपक्रमते पुरुषेति। पुरुषव्यत्ययस्य पुरुषाणां प्रथममध्यमोत्तमानां व्यत्ययो व्यतिक्रमः एकस्य स्थानेऽपरस्य प्रयोगस्तस्य रसादिव्यञ्जकत्वम्। यथेति निदर्शने। प्रस्तौति रे रे इत्यादि। रे रे चञ्चललोचनाञ्चितरुचे ! चेतः ! एणनयनाम् आलोक्य स्थिरप्रेमाणम् महिमानम् प्रमुच्य किम् नृत्यसि किम् मन्ये विहरिष्यसे वत इमाम् हताम् अन्तराशाम् मुञ्च एषा खलु संसारवारांनिधौ कण्ठतटे कृता शिला खलु इत्यन्वयः। विषयासक्तं स्वान्तमेवोपहसतः कस्यचिद्विरक्तस्य स्वोक्तिरियम्। रे रे इत्यधिक्षेपसम्बुद्धिः। चञ्चलेति चञ्चलाभ्यां लोचनाभ्यां कटाक्षेणेति अञ्चिताऽऽविष्कृता रुचिरभिलाषो यस्य यद्वा चञ्चले लोचने यस्याः सा तस्यामञ्चिता गमिता रुचिरभिलाषो येन तत्सम्बुद्धौ। चेतः चित्तम्। सम्बोधनमिदम्। अथवा रे चञ्चललोचन ! रे अञ्चितरुचे चेतः। इति द्वे सम्बुद्धी इति

कमलाकर्याम् । अथवा चञ्चलयोर्लोचनयोरञ्चिताऽपविता रुचिर्यस्य यद्वा चञ्चले लोचनेऽञ्चिता गमिता रुचिरभिलाषो यस्येति सङ्केते। चञ्चलेन लोचनेनाञ्चिता रुचिर्यस्येति गोकुलनाथाः। वस्तुतस्तु चञ्चलेत्यादि चेतोविशेषणमेव। तद्विग्रहश्च चञ्चललोचनायामञ्चिता रुचिरित्येव साधुः। यत्तु द्विसम्बुद्धिकल्पनं तन्न, प्रकरणानुसारि क्रियर्यैकवचनस्यैव विवक्षणात्। **एणनयनाम्** हरिणाक्षीम्। **आलोक्य** दृष्ट्वा। **स्थिरप्रेमाणं** स्थिरं निश्चलं प्रेम यत्र तादृशम्। महिमानं गौरवम्। प्रमुच्य त्यक्त्वा। किं कस्मात्। **नृत्यसि** नर्तकवद्दर्पादुल्लोलं भवसीति। हेतुमाशङ्क्य तन्निराकर्तुमाह किं मन्ये मन्यसे। **विहरिष्यसे** विहरिष्यामीति। अत्र मन्ये इत्यत्रोत्तमपुरुषस्य विहरिष्यसे इत्यत्र मध्यमपुरुषस्य च परस्परव्यत्ययेन प्रयोगः 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' (पा० सू० १/४/१०६) इत्यनुशासनेन। वत इति खेदे। इमाम् एतादृशीं विहरिष्यास्यनयेति। **हतां** निन्दितामनर्थदायिनीम्। **अन्तराशामन्तर्मनसि** विद्यमानामाशाम्। **मुञ्च** त्यज। तथाकरणे हेतुमाह—**एषा** कामिनी तद्विहरणेच्छा वा। **संसारेति** संसारो विषयप्रपञ्च एव वारां निधिः समुद्रस्तस्मिन्। 'तत्पुरुषे कृति वहुलम्' इति बाहुलकात् षष्ठ्या अलुक् सज्जनायेति। **कण्ठतटे** गलरूपतटे। **कृता** वद्धा। **शिला** दृषदेव। यद्वा शिला कृता विधात्रेति। परिणामविरसत्वान्न युक्तं तत्रात्मानं संयोजयितुमिति। तत्र कथनीयमाह **अत्रेति**। **अत्र** काव्येऽस्मिन्। **प्रहासः** मन्ये इति मन्यतौ विहरिष्यसे इति मन्योपपदे पुरुषव्यत्ययेन प्रहासः व्यज्यते येन शान्तरसः प्रकृष्यत इति। पुरुषव्यत्ययश्च पदैकदेशधर्मत्वात्पदैकदेशे एव गण्यते। तेनात्र नाप्रासङ्गिकप्रसङ्गः। न च मन्यतेर्मध्यमपुरुषस्थाने उत्तमपुरुषस्य प्रहासे शक्तिरिति प्रहासस्य वाच्यत्वं शङ्क्यं प्रहासे द्योत्ये इति व्याख्यानात्। तस्माद् व्यञ्जकानुशासनमेव तत्। यथोक्तं सुधासागरे—अभिधा हि पदशक्तिरेव। तेन प्रहासे नोत्तमपुरुषस्याभिधा ततस्तदप्रतीतेः। न वोत्तमपुरुषमात्रं पदम्। न वा नैयायिकरीत्या प्रहासो वाक्यार्थ एव पदार्थसंसर्गरूपताविरहात्। किन्तु प्रहासे विवक्षितेऽनुशिष्टेन पुरुषव्यत्ययेन स प्रतीयते। तद्धर्मवत्त्वात्तस्य पदैकदेशत्वम्। इति।

[ वृत्तिः ] पूर्वनिपातस्य यथा—

> येषां दौर्वलमेव दुर्बलतया ते सम्मतास्तैरपि
> प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः।
> ये क्ष्माशक्र ! पुनः पराक्रमनयस्वीकारकान्तक्रमाः
> ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥१०४॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते।

[ कमला० ] येषामिति। येषां राज्ञां केवलं दोर्बलमेव न तु नीतिस्ते दुर्बलतया सम्मताः दुर्बला ज्ञातव्याः। तैरप्युर्वीश्वरैः केवलनीतिमार्गरतैः किं कार्यं न किमपीत्यर्थः। हे क्ष्माशक्र भूमीन्द्र! ये तु पराक्रमनीतिमार्गयोः स्वीकारेण कान्तक्रियारम्यगतयस्तेन स्युरेव यदि स्युस्तदा भवादृशा द्वित्रा एव। येऽपि द्वित्राः पवित्रास्तेऽपि भवादृशा न स्युरित्यन्वयो वा। अत्र नयशब्दस्याल्पाच्तरत्वेन पूर्वनिपातार्हत्वेऽपि पराक्रमस्य पूर्वनिपातोऽभ्यर्हितत्वार्थः। अभ्यर्हितं पूर्वं निपततीति स्मृतेः।

[ सरि० ] पदावयवस्य रसादिव्यञ्जकत्वोदाहरणप्रसङ्गे पूर्वनिपातस्य तदुदाहरणायोपक्रमते। पूर्वेति। पूर्वनिपातः पूर्वं प्राग्वर्तित्वेन निपातः प्रयोगस्तस्य। रसादिव्यञ्जकत्वम्। यथेति निदर्शने। पृथगर्थानामेकार्थीभावः समासः। यद्वा पृथक्पदानामेकपदीभाव एव समासः। तत्र तथैकपदीभावसम्बद्धेषु पदेषु यस्य प्राक्प्रयोगोऽभीष्टः स एव प्रागुपन्यस्यते। स एव पूर्वनिपातसंज्ञकः। समासेषूपसर्जनं ( समाससूत्रे प्रथमानिर्दिष्टम् ) द्वन्द्वे ह्यन्तमजाद्यदन्तमल्पाच्तरमभ्यर्हितं लघ्वक्षरं सङ्ख्याल्पीयसी बहुव्रीहौ सप्तमीविशेषणं सर्वनाम सङ्ख्या निष्ठान्तं च पूर्वं निपात्यन्ते। उदाहरणं प्रस्तौति येषामित्यादि। येषाम् दौर्बलम् एव ते दुर्बलतया सम्मताः तैः प्रायः केवलरीतिनीतिशरणैः उर्वीश्वरैः अपि किम् कार्यम्। क्ष्माशक्र! पुनः ये पराक्रमनयस्वीकारकान्तक्रमाः ते त्रिजगति द्वित्राः स्युः परम् भवादृशाः पवित्रा नैव इत्यन्वयः। विरुदावल्येषा। येषां राज्ञाम्। दोर्बलं भुजबलम्। एव इत्यवधारणे न तु नयबलमपि। ते तादृशा राजानः। दुर्बलतया हीनबलत्वेन वा न्यूनबलत्वेन। सम्मताः गृहीताः। तैः तथाविधैः दुर्बलैः। प्रायः भूयसा। केवलेति केवलं नीतेर्नयस्य रीतिः वर्तनं सैव शरणं वर्त्म येषान्ते तैः तादृशैः नीतिमात्रपरायणैरपितु हीनबलैः। उर्वीश्वरैः भूमिपतिभिः। अपि च। किम् किम्प्रयोजनमिति। न बलदर्पिता नयशून्या न च बलहीना नयपरा एव कार्यं साधयितुं प्रभवन्ति। तर्हि कीदृशा अपेक्ष्या इत्याह हे क्ष्माशक्र! हे धरेन्द्र! ये। पुनः इति त्वर्थेऽव्ययानामनेकार्थत्वात्। पराक्रमेति पराक्रमश्च नयश्च तौ पराक्रमनयौ तयोः स्वीकारे प्रयोगे कान्तः उपयुक्तः क्रमः पौर्वापर्यं येषान्ते। पराक्रमनययोर्यत्र यस्य प्राबल्यं तस्य तत्र प्राधान्येन प्रयोग इति। सामान्यतस्तु नयपूर्वं एव पराक्रमः फलति किन्तु प्रोद्दीप्ते भवने तु पराक्रम एव प्राथम्येन प्रयोज्य इति येषान्तथा क्रमः। ते तादृशाः तु। त्रिजगति भुवनत्रये। द्वित्राः द्वौ वा त्रयो वा। एव इत्यवधारणे न कथमपि ततोऽधिका इति। परम् किन्तु। भवादृशाः युष्मत्समानकक्षाः। पवित्राः प्रशस्ताः पूतात्मानः। तु। न नैव सन्तीति। तत्र

कथनीयमाह अत्रेति। अत्र काव्येऽस्मिन्। **पराक्रमस्य** नयापेक्षया विक्रमस्य। प्राधान्यं अल्पाच्तरत्वेन नयस्य पूर्वनिपाते कर्तव्ये सत्यपि अभ्यर्हितत्वेन पराक्रमस्य पूर्वनिपातात्प्राबल्यम्। अवगम्यते द्योत्यत इति। तेन च राजोत्कर्षद्वारा राजविषयकरतिः पुष्यते यतो भावव्यञ्जकत्वं रतिर्देवादिविषया इत्युक्तत्वात्। अविहितस्यापि पूर्वनिपातोऽभ्यर्हितत्वद्योतनायैव। न तु तत्र तद्विधानमित्युद्द्योते स्पष्टम्।

[ वृत्तिः ] विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम्॥१०५॥

अत्र दिवसेनेत्यपवर्गतृतीया फलप्राप्तिं द्योतयति।

[ कमला० ] प्रधनेति। हे वीर! चापशब्दवति युद्धमार्गे तव विधुरैः शत्रुभिर्दिवसं व्याप्यायोधि। हे नरप भवांस्तु विधिसिद्धं दैवसिद्धं साधुवादस्य पदं यस्यां क्रियायां तथा दिवसेनायुद्धयुद्धफलमाप्तवान्। अत्रेति। अपवर्गे तृतीयेति स्मृतेरपवर्गस्य युद्धफलस्य विजयस्य प्राप्तिर्व्यङ्ग्येत्यर्थः। यद्यप्यवर्गस्तृतीयायाः शक्य एव तथापि समाप्तिवाचिया फलप्राप्तिर्व्यङ्ग्या इत्यर्थः।

[ सरि० ] पदावयवस्य रसादिव्यञ्जकत्वोदाहरणप्रसङ्गे उपपदविभक्तेः रसादिव्यञ्जकत्वोदाहरणायोपक्रमते विभक्तीत्यादि। विभक्तिविशेषस्य विभक्तिविशेष उपपदविभक्ति सा च विशेषलक्षणयोगेन व्यस्तसामान्यलक्षणा। यथा कालाध्वनोरत्यन्तसंयोगे द्वितीया भवति अत्यन्तसंयोगाभावे तु सामान्यतः षष्ठ्येव। किन्तु अपवर्गे फलप्राप्तौ क्रियात्यागोऽपवर्गस्तत्र गम्ये तु कालाध्वनोस्तृतीयैव भवति अत्यन्तसंयोगेऽपि। इति। तस्य। व्यञ्जकत्वम्। यथेति निदर्शने। उदाहरणं प्रस्तौति अधनेत्यादि। हे धीर! नरप!. तव विधुरैः धनुर्ध्वनिभृति प्रधनाध्वनि दिवसम् अयोधि भवान् तु दिवसेन विधिसिद्धसाधुवादपदम् अयुद्ध इत्यन्वयः। हे धीर! हे नरप! हे जनाधिप! तव भवतः। विधुरैः शत्रुभिः। धनुर्ध्वनिभृति धनुषश्चापस्य ध्वनिष्टङ्कारस्तं विभर्तीति तादृशे। प्रधनाध्वनि प्रधनं युद्धमेव प्रवेशनिःसरणहेतुत्वादध्वा मार्गस्तस्मिन्। दिवसं दिनं व्याप्य। अयोधि युद्धमकारि। भवान्। तु इति व्यवच्छेदे तद्विपरीतमेव। दिवसेन दिनेन विजयप्राप्त्या युद्धत्याग इति अपवर्गे तृतीया। विधीति विधिना विधानेनैव सिद्धस्य सम्पन्नस्य न तु कृत्रिमस्य साधुवादस्य यशसः पदं स्थानं यथा स्यात्तथा। अयुद्ध युद्धं कृतवानिति। लक्ष्येऽभीष्टमाह अत्रेति अत्र काव्येऽस्मिन्। दिवसेन इति इत्यत्र **अपवर्गतृतीया** फलप्राप्तौ क्रियात्यागोपवर्गस्तत्र तृतीयाविभक्तिः। **फलप्राप्तिं** विजय-

लाभानन्तरमेव युद्धत्यागम्। द्योतयति व्यनक्ति इति। अयम्भावः – शत्रुभिस्तु दिवसं व्याप्य अयोधि किन्तु नैव किञ्चिदपि फलमवाप्तं यदा भवता दिवसेनायोधि इति अपवर्गार्थे या तृतीया तया युद्धे विजयप्राप्तिर्व्यज्यत इति। न चापवर्गे य तृतीया भवति तस्य 'अपवर्गे तृतीया' इत्यनेन वाच्यत्वमेव शङ्क्यम् अपवर्गे गम्ये इति व्याख्यानात् समाप्तेरेव वाच्यत्वात् फलप्राप्तेस्तु व्यङ्ग्यत्वात् 'मासेनाधीतो ग्रन्थः' इत्यादाविव। अत्रापि अध्ययनसमाप्तिर्वाच्या ज्ञानं तु व्यङ्ग्यमेव। तथैव प्रकृतेऽपि युद्धसमाप्तिर्वाच्या विजयप्राप्तिस्तु व्यङ्ग्या या तृतीयान्तेन दिवसपदेन वा दिवसशब्दगततृतीयाविभक्त्या व्यज्यत इति।

[ वृत्तिः ] भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।
साक्षात्कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥१०६॥

अत्रानुकम्पावृत्तेः करूपतद्धितस्य।

[ कमला० ] भूयो भूय इति। भवने प्रासादे वलभी कलशयुतं स्थलम् तत्र तुङ्गमुच्चं वातायनं गवाक्षस्तत्रस्था मालती सविधे समीपे नगर्या रथ्या राजमार्गस्तेन पुनः पुनर्गच्छन्तं नवं युवानं माधवं रतिः काममिव साक्षाद् दृष्ट्वा न त्विन्द्रजालवत् ज्ञात्वा यत्किल ललितलुलितैरत्यन्तपरिवर्तनशीलैः ललितेति पाठेऽतिमनोहरैः ललितं लुण्ठनं येषामिति वा अङ्गकैरनुकम्प्यैः कृशैरङ्गैस्ताम्यति ग्लायति इति मालतीधात्र्यभिकथितमिति कामन्दकीवचनम्। अत्रेति अत्र अल्पार्थे विहितस्य कन्प्रत्ययस्य तद्धितस्य कृशत्वेनानुकम्पा तया विरहोत्कर्षव्यञ्जकत्वमित्यर्थः।

[ सरि० ] पदावयवस्य रसादिव्यञ्जकत्वोदाहरणप्रसङ्गे तद्धितस्य व्यञ्जकत्वमुदाहरति भूयो भूय इत्यादि। पद्यमिदं मालतीमाधवप्रकरणे कामन्दकीवचनम्। भवनवलभीतुङ्गवातायनस्था मालती भूयः भूयः सविधनगरीरथ्यया पर्यटन्तम् नवम् माधवम् रतिः नवम् कामम् इव साक्षात् दृष्ट्वा दृष्ट्वा गाढोत्कण्ठालुलितलुलितैः अङ्गकैः ताम्यती इति यत् ( कथितमेव नो मालतीधात्रेय्या लवङ्गिकया इति ) चूर्णिकावाक्येनान्वयः। भवनवलभीतुङ्गवातायनस्था भवनस्य हर्म्यस्य या वलभी उपरितनमण्डपस्तदीयं यत्तुङ्गमुच्चं वातायनं गवाक्षस्तत्र तिष्ठतीति तथाभूता। मालती तदाख्या नायिका। भूयो भूयः वारंवारम्। सविधेति सविधा निकटस्था या नगर्याः पुर्याः रथ्या मार्गस्तया। पर्यटन्तं भ्रमन्तं गच्छन्तमागच्छन्तञ्च। नवं युवानम्। माधवं तदाख्यं नायकम्। रतिः कामस्त्री। नवं दाहानन्तरमुत्पन्नम्। कामं कामदेवम्। इव यथा। रतिरिव मालती काममिव माधव-

मित्युपमा। साक्षात् प्रत्यक्षमेव न तु चित्रादौ स्वप्ने वा। दृष्ट्वा दृष्ट्वा पुनः पुनरवलोक्य। गाढोत्कण्ठाललितलुलितैः गाढा दृढा या उत्कण्ठा औत्सुक्यं तया लुलितलुलितैरतिखिन्नैरत्यन्तम्लानैर्वा ललितलुलितैरिति पाठे ललितं यथा स्यात्तथा लुलितैः। लुलितलुलितैरित्येव पाठो युक्तः खिन्नताधिक्यप्रकर्षात्। अङ्गकैः अङ्गैरेव अङ्गकैः। ताम्यति ग्लायति। इति इत्थम्। यत्। यदेवोक्तं तदित्यादि चूर्णिकावाक्येन कथितमेव नो मालतीधात्रेय्या लवङ्गिकया इत्यनेनान्वयः। अत्रत्यं भवनवलभीतुङ्गवातायनस्थेति पदं 'तां कस्यांश्चिद्भवनवलभौ सुप्तपारावतायाम्' इति कथयन्तं कालिदासं स्मारयति। लक्ष्ये व्यङ्ग्यमाह अत्रेति। अत्र काव्येऽस्मिन्। अनुकम्पावृत्तेः अनुकम्पा दया वृत्तिरवस्थानं यस्य तस्य अनुकम्पार्थे कृतविधानस्य 'अनुकम्पायाम्' ( पा० सू० ५/३/७६ ) इति सूत्रेण निर्दिष्टस्य। करूपतद्धितस्य कप्रत्ययस्वरूपस्य तद्धितप्रत्ययस्य भावकारकाभिधायित्वे सत्यधातुप्रत्ययस्तद्धितस्तस्येति। अयम्भावः—अङ्गकैरित्यत्र विहितेन कप्रत्ययेनानुकम्पातिशयद्योतनेन सौकुमार्यातिशयत्वं तेन च दुःखासहिष्णुत्वाभिव्यक्तिद्वारा विप्रलम्भोत्कर्षो व्यज्यत इति। यच्च मधुमतीकारैरल्पार्थे कन् न तु अनुकम्पायां व्यङ्ग्यत्वाभिधानविरोधादिति यदुक्तं यच्च प्रदीपकारैरङ्गकैरिति कस्वरूपतद्धितेन अल्पार्थकेन अनुकम्पातिशयो व्यज्यते इत्यनूदितं यच्चोद्द्योतकारैः अल्पार्थकेति तस्यैव झटिति प्रतीतेरिति भाव इति व्याख्यातं तत्सर्वं वृत्तिस्वरसभङ्गादुपेक्ष्यमिति सुधासागरे स्पष्टम्। यत्त्वल्पार्थेन झटिति व्यङ्ग्यं प्रत्याय्यते इत्युक्तं तस्यौचित्ये सत्यपि वृत्तिस्वरसविरोधाद्वृत्तौ स्पष्टमेवानुकम्पार्थककप्रत्ययस्योक्तत्वादनादेयमेव।

[ वृत्तिः ] परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापञ्च कुरुते ॥१०७॥

अत्र प्रशब्दस्योपसर्गस्य।

[ कमला० ] उपसर्गस्य व्यञ्जकत्वमाह परिच्छेदेति। मकरन्दं प्रति माधवस्योक्तिः। परिच्छेदो विरतिरियत्ता वा तद्रहितः। सकलानि वचनानि निर्वचनानि तेषामगोचरो निर्वक्तुमशक्यः। तेन सकलानि शक्तलाक्षणिकादीनि वचनानि तेषामगोचर इत्यपव्याख्या। अस्मिन् जन्मनि यः कदापि पुनर्द्वितीयवारं नानुभूतः यद्वा पुनर्जन्मनि जन्मान्तरेऽस्मिन् वा जन्मनि नानुभूतः उपचितो वृद्धो मोहोऽज्ञानं तेन गहनो निविडः कोऽप्यन्तर्मनसि विकारो विवेकस्तत्त्वज्ञानं-तस्य नाशाज्जडयति प्रवृत्तीः प्रतिबध्नाति तापं विरहसन्तापञ्च करोतीत्यर्थः। अत्रेति।

प्रध्वंसादिति प्रशब्दे पदैकदेशे प्रकर्षो व्यङ्ग्यः। ध्वंसे प्रकर्षश्च प्रतियोगिजातीयतत्प्रागभावासामानाधिकरण्यम्। उपसर्गाणां द्योतकत्वाद् व्यञ्जकत्वम्।

[ सरि० ] पदावयवस्य रसादिव्यञ्जकत्वोदाहरणप्रसङ्गे प्रकृत्येकदेशस्योपसर्गस्य विप्रलम्भव्यञ्जकत्वमुदाहरति परिच्छेदेत्यादि। मालतीमाधवे मकरन्दं प्रति माधवस्य स्वावस्थाकथनपरकवचनमिदम्। यः परिच्छेदातीतः सकलवचनानाम् अविषयः अस्मिन् पुनर्जन्मनि अनुभवपथम् न गतवान् विवेकप्रध्वंसात् उपचितमहामोहगहनः कः अपि विकारः अन्तः जडयति तापम् च कुरुते इत्यन्वयः। यः। परिच्छेदातीतः परिच्छेद इयत्ता विरतिर्वा तमतीतोऽतिक्रान्तः असीम इत्यर्थः। सकलवचसां सकलानि समग्राणि च तानि वचांसि वचनानि तेषां वाचकलाक्षणिकव्यञ्जकानां शब्दानाम्। अविषयः अगोचरः शब्दैर्निर्वक्तुमशक्यः। अस्मिन् वर्तमाने। पुनर्जन्मनि द्वितीयजनुषि। यद्वा पुनः अन्यदा कालान्तरे। अस्मिन् वर्तमाने एव। जन्मनि जनुषि। अनुभवपथम् अनुभवविषयत्वम्। न नैव। गतवान् प्राप्तः। नैवेत पूर्वं कदाऽप्यनुभूत इत्याशयः। विवेकप्रध्वंसात् विवेकस्य दोषगुणविभागस्य प्रध्वंसः प्रकर्षेणात्यन्तमेव ध्वंसो नाशो नितान्ताभावस्तस्मात्। उपचितमहामोहगहनः उपचितः प्रवृद्धो यो महान् दुश्छेद्यो मोहो विपरीतज्ञानमज्ञानं वा तेन गहनो व्याप्तो घन इति। कः अपि तादृशोऽनिर्वचनीयः। विकारः चेतोवृत्त्यनवस्थानरूपः कामजो भावः। अन्तः चित्तम्। जडयति स्तम्भयति व्यापारान्तरशून्यं करोति। तापं दाहम्। चकारः समुच्चये। कुरुते विदधातीति। पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवानिति तूलनीयं शाकुन्तलीयेन तच्चेतसा स्मरति नूनमबोधपूर्वम् इत्यनेन कथनेन। लक्ष्येऽभीष्टमाह अत्रेति। अत्र पद्येऽस्मिन्। प्रशब्दस्य। प्रध्वंस इत्यत्रत्यस्य 'प्र'इत्येतस्य। उपसर्गस्य उपसर्गप्रतिरूपकनिपातस्य। प्रादीनां निपातानामुपसर्गत्वं क्रियायोगे एव भवति नान्यत्र। क्रिया च तिङर्थ एव। तेन प्रनायको देश इत्यत्र दुर्नीतमित्यत्र न णत्वं न च अवदत्तमित्यत्र तत्त्वमेवेति भाषावृत्तौ। विप्रलम्भशृङ्गारव्यञ्जकत्वमिति भावः। अयमाशयः— अत्र प्रध्वंसादिति प्रकृत्येकदेशेन उपसर्गप्रतिरूपकेण प्रशब्देन विवेकसमूलोन्मूलनरूपो ध्वंसप्रकर्षो द्योत्यते उपसर्गाणां तत्प्रतिरूपकाणामप्यवाचकत्वात्। तेन मोहप्रकर्षस्तेन रागातिशयस्तेन च विप्रलम्भशृङ्गारप्रकर्षो व्यङ्ग्य इति। प्रादीनां स्वतः प्रयोगानर्हतया पदैकदेशत्वम्।

[ वृत्तिः ] कृतञ्च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम् ॥१०८॥

अत्र तुल्ययोगिताद्योतकस्य चेतिनिपातस्य।

[ कमला० ] निपातस्याह कृतञ्चेति । त्वया गर्वाभिमुखं न तु गर्वितं मनः कृतम् । एवं शस्त्रादिकं विना नोऽस्माकं नोऽस्माकं द्विषः शत्रवो निहताश्च । अन्यच्छ- स्त्रादिकं किं किमु वक्तव्यमित्यर्थः । यावत्सूर्योदय उदयाचलशेखरं नारोहति तावत्त- मांसि तिष्ठन्ति । अत्रेति चकारद्वये तुल्यकालता व्यङ्ग्या । तेन वीरोत्कर्ष इत्यर्थः । अत्र मुख्यतुल्ययोगिताभावात्तच्छब्देन समुच्चयोऽभिधीयत इति केचित् । चादीनां पदनात्तदेकदेशाभावोऽपि केवलस्याप्रयोगात्पदैकदेशत्वोपचार इति काव्य- प्रदीपः ।

[ सरि० ] पदावयवस्य रसादिध्वनिव्यञ्जकत्वोदाहरणप्रसङ्गे निपातस्य तदु- दाहरति कृतञ्चेति । निपातानामपि स्वतः प्रयोगानर्हतया पदैकदेशत्वम् । राजानं प्रति मन्त्रिण उक्तिरियम् । हे राजन् ! त्वया भवता ! मनः मानसम् । गर्वाभिमुखं गर्वस्याभिमानस्याभिमुखं सम्मुखमेव न तु गर्वितमेव । कृतं विहितम् । च एव । अन्यत् तद्व्यतिरिक्तम् । किम् किमेव अवशिष्यते इति । सर्वं सम्पद्यते इत्याशयः । एवं शस्त्रादिप्रयोगं विनैव । नोऽस्माकम् । द्विषः शत्रवः । निहताः नाशिताः एव न तु निहनिष्यन्ते इति । दृष्टान्तमाह हि यतः । तमांसि अन्धकाराः । तावत् तावत्पर्यन्तमेव । तिष्ठन्ति दृश्या भवन्ति यावत् यावत्पर्यन्तम् । अंशुमान् सूर्यः । उदयाद्रिमौलिताम् उदयाद्रेरुदयपर्वतस्य मौलितामलङ्कारताम् । न नैव । आयाति प्राप्नोति । इति । यदैव भवन्मनो गर्वं प्रति चलितं तदैवास्माकं शत्रवो हताः । सूर्योदये तमः स्वयमेव प्रणश्यतीति । लक्ष्ये व्यङ्ग्यमाह अत्रेति । अत्र काव्येऽस्मिन् । तुल्ययोगिताद्योतकस्य तुल्यः समानो योगो घटनमस्त्यस्मिन्निति तस्य भावस्तत्ता समकालमेवावस्थानं मनोगर्वाभिमुखीकरणारिहननयोः प्राकरणिक- योरेककालघटनं तस्य द्योतकस्य प्रकाशकस्य निपातानां वाचकत्वासिद्धेः । चेतिनि- पातस्य 'च' इत्येतस्य निपातस्येति । जात्यादिप्रवृत्तानुपग्राही सत्त्वभूतार्थाभिधायी लिङ्गसङ्ख्याशक्तिशून्यः उच्चावचार्थनिपाती निपातः । तस्य च पदैकदेशत्वं भिन्न- पदत्वेऽपि केवलस्य तस्यासाधुत्वात्पदैकदेशत्वोपचारेण ग्रहणाच्च । सत्यपि केषाञ्चि- त्सार्थकत्वे न हि तेषां पृथक्पदत्वं केवलानां तेषामसाधुत्वात् । प्रकृते तु चकारद्वयेन मनोगर्वाभिमुखीकरणशत्रुहननयोरेककालतारूपः समुच्चयो द्योत्यते । तेन वीररस- प्रकर्षो व्यज्यते । वस्तुतस्त्वत्र न मुख्यतुल्ययोगिता निपातानां सकृद्धर्म इति तल्लक्षणा- दत्रोभयोस्तदभावात् । किन्तु युगपद्गुणक्रियालक्षणः समुच्चय एव तेन तुल्य- योगितेत्यस्य तुल्यकालं योगितेति व्युत्पत्तिमाहुः । न चात्र समुच्चयस्य वाच्यत्वेऽपि काचित्क्षतिः तद्व्यङ्ग्यवीरप्रकर्षमादाय ध्वनित्वात् । वीरप्रकर्षोऽपि समुच्चयव्यङ्ग्य- तुल्ययोगिताद्वारा पौर्वापर्यविपर्ययरूपातिशयोक्तिद्वारा वा । अयमाशयोऽत्र—चकार- द्वयेनात्र मनोगर्वाभिमुखीकरणशत्रुहननयोरेककालतारूपसमुच्चयः प्रकाश्यते । तेन च

समुच्चयेन तुल्ययोगिता व्यज्यते तया च वीररसप्रकर्षो ध्वन्यते । तथैव शत्रुहननेन मनोगर्वाभिमुखत्वसम्भवे मनोगर्वाभिमुखीकरणमात्रशत्रुहननवर्णनात्कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिर्यया वीरप्रकर्षो व्यज्यते इत्यपि ।

[ वृत्तिः ] रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥१०९॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां न त्वदिति न मदिति अपितु अस्मदिति अस्य सर्वाक्षेपिणः भाग्यविपर्यया-दित्यन्यथासम्पत्तिमुखेन न त्वभावमुखेनाभिधानस्य ।

[ कमला० ] रामोऽसाविति । रावणं प्रति कुम्भकर्णोक्तिः । असौ खरवधसेतुबन्धादिपराक्रमवत्तया त्वयैव दृश्यमानो रामः भुवनेषु न तु ग्रामेषु भुवने वा विक्रमस्य गुणैर्धैर्यादिभिर्बहुत्वेन दोषाभावः । तदेतद् वक्ष्यति सर्वनामेत्यादिना । परां प्रसिद्धिं प्राप्तः । यदि शब्दोऽवधारणे । परं केवलमस्माकं कुलस्थानां भाग्यस्य विपर्ययादन्यथा परिणामात् । अभाग्योक्तौ प्रभुक्रोधापत्तेः । तस्माद् देव एव परं केवलं तं न जानाति अन्ये तु जानन्त्यनु भवन्ति च । एकबाणाहतौ श्रेणीभूतानां विस्तृतशालानां विवरैरुद्गीर्णैः प्रकटितैः सप्तभिः स्वरैः षड्वाद्यैरेव मरुद्वायुर्वन्दी वैतालिक इव यस्य यशांसि गायन्तीत्यर्थः । तदेतत्सर्वमाह अत्रेति । असाविति सर्वनाम्नः भुवनेषु गुणैरिति प्रातिपदिकबहुवचनानां व्यञ्जकत्वमिति शेषः । न त्वदितीति न त्वद्भाग्येत्युक्तम् न वा मद्भाग्येत्युक्तम् । अपित्वस्मद्भाग्येत्यात्मगतबहुत्वेन सर्वकुलाक्षेपिणोऽस्मदित्यस्य व्यञ्जकत्वमिति शेषः । भाग्यविपर्ययादित्यन्यथा सम्पत्तिः परिणामः । अन्यथा वम्पत्तिमुखेन सम्पत्तेरन्यथात्वमुखेनेति वा त्वन्मुखेन त्वभावमुखेन भाग्यक्षित्येवमभिधानस्य व्यञ्जकत्वमिति शेषः ।

[ सरि० ] पदैकदेशस्य रसादिव्यञ्जकत्वोदाहरणप्रसङ्गे सर्वनामप्रातिपदिकवचनानां तदुदाहरति रामोऽसाविति । राघवानन्दे रावणं प्रति कुम्भकर्णोक्तिरियमिति । असौ रामः विक्रमगुणैः पराम् प्रसिद्धिम् प्राप्तः यदि देवः परम् तम् परम् न जानाति तत् अस्मद्भाग्यविपर्ययात् एष मरुत् वन्दी इव यस्य यशांसि एकबाणाहतिश्रेणीभूतविशालतालविवरोद्गीर्णैः सप्तभिः स्वरैः गायति इत्यन्वयः । असौ प्रकृतो रामः दाशरथिः । विक्रमगुणैः विक्रमः पराक्रमः गुणा धैर्यदाक्षिण्यादयः सन्धिविग्रहादयश्च तैरशेषैः न तु दोषैः । भुवनेषु न तु यत्र कुत्रचिदेवापितु जगत्त्रये एव । परामुत्कृष्टाम् । प्रसिद्धिं ख्यातिम् । प्राप्तः आपन्नः । यदि चेत् । परं

परात्परम् । तं तादृशं रामम् । देवः प्रभुर्भवान् । परम् नितान्तमेका न जानाति नाववुध्यसे । तत् पर केवलम् । अस्मद्भाग्यविपर्ययात् अस्माकं न तव न वा मम किन्त्वस्माकमेवास्मत्पक्षधराणां सर्वेषामेव यद् भाग्यं नियतिस्तस्य विपर्ययः प्रातिकूल्यं तस्मादेवेति । यद्वा यदि पुनः । अस्मद्भाग्यविपर्ययात् परं तं देवः न जानाति अन्ये तु जानन्त्येव । एषः प्रसिद्धः । मरुद्वायुः वायुत्वेन सर्वत्रगत्वम् । वन्दी वैतालिकः । इव यथा । यस्य रामस्य । यशांसि कीर्तयः विक्रमस्य गुणानाञ्च प्रसिद्धयः । एकेति । एकस्याद्वितीयस्य बाणस्य शरस्य आहतिः प्रहारस्तया जातानि सम्पन्नानि यानि श्रेणीभूताः पङ्क्तिबद्धतया एकमनु एकं स्थिता ये विशाला विस्तृतास्तालास्तालवृक्षास्तेषां विवराणि रन्ध्राणि तैरुद्गीर्णैः । सप्तभिः सप्तसङ्ख्याकैः । स्वरैः निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाख्यैः स्वरैः । गायति उपश्लोकयति । इवेत्युत्प्रेक्षा । यस्य सर्वत्रगो वायुरपि एकबाण-हतपङ्क्तिबद्धतालरन्ध्रोद्गीर्णैः सप्तभिरेव स्वरैः यस्य यशांसि गायति स रामो भुवने एव विक्रमेण गुणैश्च परां ख्यातिमुपागतः । यदि तं भवान् न जानाति तदस्माकं नियतिप्रातिकूल्यादेवेति । न जानातीति ज्ञात्वाऽपि अज्ञात इव व्यवहर-सीति । तत्राभीष्टपक्षमाह अत्रेत्यादि । अत्र काव्येऽस्मिन् । असौ इति सर्वनाम्नः एकवचनस्य, 'भुवनेषु' इति 'गुणैः' इति च प्रातिपदिकबहुवचनयोः न त्वत् इति न तव इति न मत् मम इति अपि तु अस्मत् इति अस्य अस्मच्छब्दस्य । सर्वाक्षेपिणः समस्तराक्षसकुलोपस्थापकस्य । भाग्यविपर्ययात् इति अन्यथा सम्पत्तिमुखेन भाग्यविपर्ययरूपेण दुर्भाग्यावबोधकेन । न तु अभावमुखेन भाग्या-भावरूपेण । अभिधानस्य कथनस्य च व्यञ्जकत्वमिति । व्यङ्ग्यञ्च सकल रक्षः-कुलं क्षयस्यावश्यम्भावित्वम् । इदमुक्तं भवति । असाविति एकवीरत्वम् भुवनेष्विति जगत्त्रये विक्रमगुणैरिति न तु दोषैः अस्मदिति सर्वेषामेवास्माकमिति भाग्यविपर्यया-दिति न तु भाग्याभावेनापितु सत एव भाग्यस्य तादृशत्वेन परिणतत्वम् इति व्यङ्ग्यं व्यञ्जकत्वन्तु तेषां तेषाम् । सर्वैरपि व्यङ्ग्यैः रामस्य वीरत्वप्रकर्षो व्यज्यते इति । तत्रापि असाविति निरन्तरभावनावशेन प्रत्यक्षायमाणत्वं तेन भुवनेष्वेकवीरत्वं मुख्यं व्यङ्ग्यम् ।

[ वृत्तिः ]—

तरुणिमनि कलयति कलामनु मदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥११०॥

अत्रेमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य तरुणत्वे इति धनुषः समीपे इति मौलौ वसतीति त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित्

स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति। एवमन्येषामपि बोद्धव्यम्। वर्णरचनानां व्यञ्जकत्वं गुणप्रकरणे उदाहरिष्यते। अपिशब्दात् प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः।

[ कमला० ] तरुणिमनीति। तरुणिमनि तारुण्ये कलामुपचयं कलयति प्राप्ते सति भ्रुवोरग्रे शिष्यभूते कामधनुषः गुरोः समीपे पठति सति इत्यन्वयः। इयं भीतमृगचलनेत्रा सर्वस्त्रीणां मौलिमधितिष्ठतीत्यर्थः। अत्रेति। तरुणिमनि इमनिच् अनुमदनेत्यव्ययीभावः। मौलिमिति कर्मभूताधारस्तेषां स्वरूपस्य व्यञ्जकत्वमिति शेषः। तदेवाह तरुणत्वमितीति। एषामिमनिजादीनां भावाद्यर्थत्वादत्र धनुः समीपे मौलावित्यादिभिः पदैस्तुल्येऽपि वाचकत्वे स्वरूपस्य वाचकत्वे इति वान्वयः। एषामेव रूपस्य कश्चिद्विशेषोऽस्ति व्यञ्जकत्वे इति शेषः। इमनिचा वर्णमाधुर्येण सौकुमार्यान्नवं वयः प्रतीयते। त्वप्रत्ययेन तु श्रुतिकटुत्वात्प्रौढं वयः। एवमव्ययीभावे पूर्वपदार्थप्रधाने धनुः सामीप्यमहिम्ना भ्रुवोऽग्रे जयित्वम्। मौलिमिति कर्मत्वाद् व्याप्तिः सूच्यते। आधारत्वे ह्येकदेशेऽपि वृत्तिः स्यादिति स्वसाक्षिकोऽत्र चमत्कार एव मानमिति भावः। एवमिति। अन्येषामपि पदैकदेशादीनां व्यञ्जकत्वं बोद्धव्यमित्यर्थः। क्रमेण वर्णानां रचनानाञ्च व्यञ्जकत्वं कुतो नोक्तं तत्राह वर्णेति। वर्णादेर्माधुर्यादिव्यञ्जकत्वात्तस्य च रसव्यञ्जकत्वान्न साक्षात्तत्त्वम्। अतोऽष्टमोल्लासे गुणेषु वक्ष्यत इत्यर्थः। मूले वर्णेष्वपीति अपिशब्दार्थमाह नाटकादिषु प्रबन्धेषु रसोदयो व्यङ्ग्य इत्यर्थ। आदिपदात्प्रकरणे पूर्वगणितेति पदवाक्यगतौ द्वौ द्वौ प्रबन्धपदैकदेशरचनावर्णगताश्चत्वारः ( ४ ) इति षडित्यर्थः।

[ सरि० ] प्रकरणोपसंहाराय बहूनामेकत्र रसव्यञ्जकत्वमुदाहरति तरुणिमनीति। तरुणिमनि कलाम् कलयति भ्रुवोः अग्रे अनुमदनधनुः पठति इयम् चकितहरिणचलनयना सकलललनामौलिम् अधिवसति इत्यन्वयः। तरुणिमनि तारुण्ये। कलाम् कटाक्षविक्षेपादिकौशलम्। कलयति शिक्षयति। यद्वा कलाम् वृद्धिम्। कलयति प्राप्तवति। भ्रुवोः नेत्ररोमावल्याः अग्रे अग्रभागे। अनुमदनधनुः कामबाणस्य समीपे। पठति प्रहरणकलां विदितवति। इत्थम्भूते सति। इयमेषा प्रकृता। चकितहरिणचलनयना चकितस्य विस्मितस्य भीतस्य वा हरिणस्य मृगस्य इव चले चञ्चले नयने लोचने यस्याः सा तादृशी बाला। सकलेति सकलाः सम्पूर्णा या ललनाः प्रमदास्तासां मौलिं शिरः। अधिवसति तिष्ठतीति। 'उपान्वध्याङ्वसः' इति आधारे कर्मत्वम्। प्राप्ते यौवने, विकसिते च भ्रुलताग्रे एषा मृगलोचना कामिनीमात्रचूडामणित्वं प्राप्नोतीति भावः। लक्ष्ये व्यङ्ग्यमाह अत्रेति।

अत्र काव्येऽस्मिन्। **इमनिजिति** इमनिचा तरुणिमनि इत्यत्र इमनिच्प्रत्ययेन अव्ययीभावेन अनुमदनधनुरित्यत्राव्ययीभावसमासेन मदनस्य धनुषः समीपमनुमदन-धनुरिति विग्रहात् कर्मभूताधारः मौलिमित्यत्र आधारे विवक्षिते प्राप्तायाः सप्तम्या बाधकत्वेन अधिपूर्वकत्वाद्वसधातो कर्मत्वेन द्वितीया 'उपान्वध्याङ्वसः' पा० १/४/४८) इति तेषाम् स्वरूपस्य विग्रहस्य तरुणत्वे धनुषः समीपे मौलौ वसति इति **त्वादिभिः** त्वप्रत्ययादिभिः। एषा तरुणिमनि इत्येतेषाम्। **वाचकत्वे** अर्थावबोधकत्वे। **तुल्ये** समाने अपि। तरुणिमतरुणत्वयोः अनुमदनधनुर्धनुः समीपे चेत्यनयोः मौलि-मधिवसति मौलौ वसति चेत्यनयोश्च वाचकत्वे समानेऽपि। स्वरूपस्य इमनिजन्ता-व्ययीभावकर्मभूताधारविग्रहस्य। **यः चमत्कारकारी** चमत्कृतार्थोपस्थापकः। **कश्चित्** अव्याख्येयः त्ववच्छ्रुतिकटुत्वहीनो माधुर्यसक्तः। **विशेषः** वैशिष्ट्यम्। **अस्ति** विद्यते। **सः** तादृशविशेषः। **एव** इत्यवधारणे। **व्यञ्जकत्वं** व्यङ्ग्यार्थ-प्रत्यायकत्वम्। **प्राप्नोति** अधिगच्छतीति। यथा त्वप्रत्ययस्थाने प्रयुक्तेनेमनिचा तद्धितेन सुकुमाराक्षरेण तादृशमेव नवं वय इति तरुणत्वे तु त्वप्रत्ययस्य प्रौढा-क्षरत्वाद् वयसोऽपि तथैव प्रौढत्वं प्रतीयेत अनुमदनधनुरित्यत्राव्ययीभावेन पूर्वपदार्थ-प्रधानेन उत्तरपदार्थीभूतधनुषोऽप्राधान्यं प्रकटय्य तन्निरपेक्ष्यवशीकरणसामर्थ्यं भ्रुवोः इति धनुषः समीपे इति कथने तत्सापेक्ष्यत्वेन भ्रुवोर्गौणत्वमेव प्रतीयेत तथैव मौलिमिति कर्मत्वेन व्याप्तिद्वारा सकलप्रमदाचूडामणित्वमिति आधारे तु तस्यैकदेश-वृत्तितया न तथा सर्वश्रेष्ठत्वं प्रतीयेत इति सर्वैर्मिलित्वा शृङ्गाररसोत्कर्षो व्यज्यते। अत्र सर्वत्र सहृदयतासहकृतशब्दस्वभावो बीजमिति। प्रकरणमुपसंहरति **एवमिति**। **एवम्** इत्थम्। **अन्येषाम्** एतद्व्यतिरिक्तानामपि पदैकदेशानाम्। **अपि च**। व्यञ्जकत्वम्। **बोद्धव्यं** ज्ञातव्यमिति। अन्येषामिति द्वित्राणामुपसर्गाणां निपातानां वैकत्र प्रयोगो यथा 'मनुष्यवृत्त्या समुपाचरन्तम्' इत्यादौ 'अहो बतासि स्पृहणीय-वीर्यः' इत्यादौ च पदपौनरुक्त्यस्य यथा 'तत्साधवो न न विदन्ति विदन्ति किन्तु' इत्यादौ 'आधायाधाय राधाध्वव तव चरणौ' इत्यादौ च। वर्णरचनयोरुदाहरणा-प्रस्तावे हेतुमाह **वर्णेति**। **वर्णेति** वर्णानामक्षराणां तद्विन्यासक्रमस्य च रचनानां रीतीनां पदसङ्घटनास्वरूपाणाम्। **व्यञ्जकत्वं** रसादिध्वनिप्रत्याययकत्वम्। **गुणस्वरूपनिरूपणे** यत्र गुणानां स्वरूपं निरूप्यते तत्रैव। **उदाहरिष्यते** उदा-हरणानि प्रस्तोष्यन्ते। तेषां रसनिष्ठमाधुर्यादिगुणव्यञ्जकत्वेन गुणज्ञाने सत्येव तद्व्यञ्जकत्वज्ञानसम्भवात् तदन्यथा तस्य व्यर्थत्वादिति। येषां हि स्वबोध्यनिष्ठ-तत्तद्विशेषव्यञ्जकत्वं तेषामेवात्रोदाहरणानि प्रस्तुतानीति। अवशिष्टकारिकांशं व्याख्याति **अपीति**। अपिशब्दात् कारिकायां वर्णेष्वपि इत्यत्र योऽपिशब्दस्तस्मात्। **प्रबन्धेषु** प्रबन्धरूपेषु वाक्यसमूहात्मकेषु। **नाटकादिषु** दृश्यश्रव्यकाव्येषु **अपीति**।

प्रबन्धस्य रसाभिव्यञ्जकत्वं यथा रामायण-महाभारतादीनां क्रमशः करुणशान्तयोः। प्रकरणमुपसंहरति एवमिति। एवं पूर्वोक्तरीत्या। रसादीनां रसभावादीनाम्। पूर्वेति पूर्वं प्रागेव गणितौ कथितौ यौ भेदौ प्रकारौ पदवाक्यसिद्धौ ताभ्यां सह सम्भूय। षड्भेदाः षट्प्रकारविभागा इति पदवाक्यगतौ द्वौ भेदौ पदैकदेशवर्ण-रचना-प्रबन्धगताश्चत्वारो भेदा इति भेदानां षाड्विध्यमिति।

प्रकृतिप्रत्ययोपसर्गवचनविभक्तिविशेषविशेषणसर्वनामनिपाताव्ययीभावकर्मभूताधारकालसम्बन्धादयः पदांशास्तेषु असंलक्ष्यक्रमा रसादयो व्यज्यन्ते। उदाहरणम्—

"मा कुरु मानिनि मानं सुहृदां वचनं प्रवेशय श्रवणे।
गोकुलमहेन्द्रतनयो भवतु स नाथः प्रसादमासाद्य॥"

अत्र मा कुर्विति कृतेरैच्छिकत्वेन त्वन्मानस्तदधीन एव, तेन निर्हेतुकोऽयमिति कृञ्प्रकृतेर्व्यङ्ग्यम्। त्वमेव हठं विहाय चेत् सुहृद्वचनं स्वीकरोषि तदैव तत सफलमिति णिच्प्रत्ययस्य, सादरतया हृदयान्तस्तद्विधारय तेनैव तव हितमिति प्रोपसर्गस्य, सर्वोक्त्यनादरे तव नाभीष्टसिद्धिरिति सुहृदामिति बहुवचनस्य च।

"आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि॥"

अत्र तवाहारविषयकरागाभाव एव न तु योगिनीवदनिष्टसाधनताज्ञानाद्योगप्रतिकूलाहारान्निवृत्तिरिति तस्याः प्राणधारणार्थमाहारोऽस्त्येव तव तु सोऽपि नेति च विषयसप्तम्याः, योगसाधने यदृच्छोपागते च विषये तस्याः प्रवृत्तिस्तव सर्वथैव विषयान्निवृत्तिरिति समस्तेति विशेषणस्य, ध्यानसमय एव तस्या नासाग्रनेत्रत्वं चित्तैकाग्र्यं च तव तु सर्वदैव तदुभयं तथेङ्गितादिनाप्यर्थबोधरहितं मौनं चेति तदेतद्यदिदमिति क्रमात् सर्वनाम्नः, त्वं वियोगिन्येव न तु योगिनीत्युत्तरपक्षदार्ढ्यसूचकस्य वेति निपातस्य च।

अनुपिकोक्ति गिरस्तव चेदनु स्मरशरं तु कटाक्षपरम्पराः।
परिपठन्ति तदाखिलसुभ्रुवामधिवसस्यमलाङ्घ्रि शिखामणीन्॥

अत्र पिकोक्तीनां स्मरशराणां च गौण्यम् गिरां कटाक्षाणां च ततः प्राधान्यं तेनायत्नादेव जगद्वशीकारादित्यव्ययीभावस्य, समस्तसुन्दरीवृन्दगर्वसर्वस्वहारी तव सौन्दर्यराशिरिति व्याप्तिसूचकस्य कर्मभूताधारस्य च। अत्र स्वरूपमहिम्नैव व्यङ्ग्यावगतिः विग्रहादौ वाचकत्वतौल्येऽपि तदभावात्।

"जयति जननिवासो देवकीजन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन्कामदेवम्" ॥

अत्र तत्तत्परिकरवैशिष्ट्येन तास्ता लीला नित्याश्चकासतीत्यस्यन् वर्धयन् जयतीति वर्तमानकालस्य, यथा वा—

"श्रीकृष्णपदाब्जं यः सेवितुमिच्छेत्।
तस्यान्तरविद्यां जानीहि विनष्टाम्॥"

अत्र पादसेवनेच्छायाः प्रागेव विद्याविनाशोऽभवदिति विनष्टामिति भूतकालस्य च। काले विहितस्य कालत्वमुपचारात्।

"गोप्यः किमाचरदयं कुशलं स्म वेणु-
र्दामोदराधरसुधामपि गोपिकानाम्।
भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो,
हृष्यत्वचोश्रु मुमुचुस्तरवो यथार्याः" ॥

अत्र कृष्णाधरसुधा गोपीभिरेव पातुं युज्यते, न तु धूर्तेन वेणुनेति गोपिकानामिति स्वस्वामिभावसम्बन्धस्य।

"श्रीराधिकामाधवयोर्विचित्रैः क्रीडानुषङ्गैः श्रमबिन्दुभाजो।
तयोस्तदालीततिरङ्गकानि संवीजयन्ती व्यजनैर्विरेजे॥"

अत्र श्रीराधिकाशब्दस्य पूर्वनिपातस्तस्याश्चातुर्यातिशयं क्रीडासु द्योतयति। अङ्गकानीत्यनुकम्पार्थकः करूपतद्धितस्तु दौर्बल्यं व्यञ्जयन्सम्भोगप्रकर्षम्। एवमन्येषामपि बोध्यम्। एषु पदांशेषु क्वचिद्वाच्येन रसादयो व्यज्यन्ते, क्वचित्तु व्यङ्ग्येनेति विभावनीयम्। रचनावर्णयोर्व्यञ्जकतागुणग्रन्थे वक्ष्यते। अपिशब्दात्प्रबन्धेषु नाटकादिषु। यथा विदग्धमाधवादौ शृङ्गारः, भारते शान्तः, रामायणे करुण इति। एवं रसादिध्वनयः षड्विधा। रसादिव्यङ्ग्यस्य वाक्यपदाभ्यां पदांशवर्णरचनाप्रबन्धैश्च प्रकाश्यत्वात्।

लक्षणामूलः अविवक्षितवाच्यः चतुर्विधः ।
- अर्थान्तरसंक्रमितवाच्यः—२
  - पदगतः·········१
  - वाक्यगतः·········१
- अत्यन्ततिरस्कृतवाच्यः—२
  - पदगतः··········१
  - वाक्यगतः·······१

अभिधामूलः विवक्षितान्यपरवाच्यः प्रधानतो द्विविधः
- असंलक्ष्यक्रमव्यङ्ग्यः
- संलक्ष्यक्रमव्यङ्ग्यः

तत्र रसभावादिरूप एकविधोऽपि असंलक्ष्यक्रमव्यङ्ग्यः अवान्तरभेदात् षड्विधः ।
- पदगतः·······१
- पदांशगतः······१
- वाक्यगतः······१
- महाकाव्यगतः·····१
- वर्णगतः·········१
- रचनागतः······१

संलक्ष्यक्रमव्यङ्ग्य एकचत्वारिंशद्विधः
- शब्दशक्त्युत्थेषु
  - वस्तुरूपयोः···
    - पदगतः··· १
    - वाक्यगतः·· १
  - अलङ्काररूपयोः
    - पदगतः··· १
    - वाक्यगतः·· १
- अर्थशक्त्युत्थेषु ( प्रागुक्तनामसु )
  - पदगतः····· १२
  - वाक्यगतः · १२
  - महावाक्यगतः···१२
- शब्दार्थोभयशक्त्युत्थे·························१

—

शुद्धाः ५१

सङ्करः
- अङ्गाङ्गिभावसङ्कराः
  - साजात्ये — उक्तानामेकपञ्चाशत्प्रकाराणां शुद्धानां ध्वनीनां मध्ये एकैकस्य सजातीयेनापरेणैकेन सह सङ्करेषु एकपञ्चाशत्प्रकाराः —५१
  - वैजात्ये — द्वितीयस्य शुद्धस्य प्रथमेन शुद्धेन सह सङ्करे एकः; तृतीयस्य शुद्धस्य प्रथमेन द्वितीयेन वा शुद्धेन सह सङ्करयोर्द्वौ; चतुर्थस्य शुद्धस्य प्रथमेन द्वितीयेन तृतीयेन वा शुद्धेन सह सङ्करेषु त्रयः; इत्यादिरूपेण पञ्चसप्तत्यधिकएकद्वादशशतप्रकाराः। १२७५
- एकाश्रयस्थितिसङ्कराः
  - साजात्ये उक्तक्रमेण··············५१
  - वैजात्ये उक्तक्रमेण··············१२७५

| | | |
|---|---|---|
| सन्दिग्धभावसङ्कराः | साजात्ये उक्तक्रमेण | ५१ |
| | वैजात्ये उक्तक्रमेण | १२७५ |
| संसृष्टयः | साजात्ये उक्तक्रमेण | ५१ |
| | वैजात्ये उक्तक्रमेण | १२७५ |
| | शुद्धाः | ५१ |
| | समुदायाः | ५३५५ |

[ कारिका ] भेदास्तदेकपञ्चाशत् ...................।

[ वृत्तिः ] व्याख्याताः ।

[ कमला० ] एकपञ्चाशदिति । अविवक्षितवाच्यस्यार्थान्तरसङ्क्रमितात्यन्ततिरस्कृतश्चेति द्वौ भेदौ तौ पदवाक्यगताविति चत्वारः विवक्षितान्यपरेषु अलक्ष्यक्रमव्यङ्ग्यः षोढा पदवाक्यप्रबन्धपदैकदेशरचनावर्णभेदात् । लक्ष्यक्रमव्यङ्ग्येषु शब्दशक्तिमूलौ द्वौ तौ च पदवाक्यगतत्वेन प्रत्येकं द्विधेति चत्वारः । अर्थशक्तिमूलस्य द्वादश भेदाः । तत्रैकैकः पदवाक्यप्रबन्धगतत्वात् त्रिधेत्यस्य षट्त्रिंशद्भेदाः ३६ उभयशक्तिमूलो वाक्य एवेति एवं वाक्येऽष्टादशपदे सप्तदशेति पूर्वोक्ताः पञ्चत्रिंशत् अर्थशक्त्युत्थाः प्रबन्धे द्वादश लक्ष्यक्रमस्य पदैकदेशरचनावर्णप्रबन्धगाश्चत्वारो भेदा इत्येकपञ्चाशदित्यर्थः । तदाह व्याख्याता इति । पूर्वगणनेनेत्यर्थः ।

[ सरि० ] एवं व्यञ्जकमुखेन व्यङ्ग्यभेदानुक्त्वा सुखबोधार्थं तान् परिगणयितुं सम्बद्धकारिकांशमवतारयति भेदा इति । तत् एकपञ्चाशत् भेदा इत्यन्वयः । तत् तस्मात् । ध्वनेः । एकपञ्चाशत् । भेदाः प्रकाराः । भवन्तीति । तदेवाऽऽह व्याख्याता इति पूर्वगणनेन व्याख्यातप्राया इत्यर्थः । तथा हि अविवक्षितवाच्यस्य अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यश्चेति द्विरूपस्य पदवाक्यगतत्वेन चत्वारो भेदा । विवक्षितान्यपरवाच्यस्य अलक्ष्यक्रमव्यङ्ग्यस्य पदवाक्यप्रबन्धपदांशवर्णरचनागतत्वेन षड्भेदाः संलक्ष्यक्रमव्यङ्ग्यस्य शब्दशक्त्युद्भवस्य वस्त्वलङ्काररूपस्य पदवाक्यगतत्वेन चत्वारो भेदाः अर्थशक्त्युद्भवस्य द्वादशविधस्य प्रत्येकं पदवाक्यप्रबन्धगतत्वेन षट्त्रिंशद्भेदाः उभयशक्तिमूलो वाक्यगतत्वेन एक एव भेद इत्येकपञ्चाशद्भेदा इति ।

[ वि० वृ० ] भेदा इति ।

पूर्वगणिताः पञ्चत्रिंशत् अर्थशक्त्युत्थाः प्रबन्धगता द्वादश रसादिध्वनयस्तु पदांशादिगताश्चत्वारः इत्येकपञ्चाशदुत्तमकाव्यभेदाः । एते शुद्धाः ।

[ कारिका ] ...................तेषाञ्चान्योन्ययोजने ॥४३॥

सङ्करेण त्रिरूपेण संसृष्टया चैकरूपया ।

[ वृत्तिः ] न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदैरेकपञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिरपेक्ष्यरूपया एकप्रकारया संसृष्टचा चेति चतुर्भिर्गुणने।

[ कारिका ] वेदखाब्धिवियच्चन्द्राः............ ।

[ वृत्तिः ] शुद्धभेदैः सह।

[ कारिका ] ...............शरेषुयुगखेन्दवः ॥४४॥

[ कमला० ] शुद्धभेदानुक्त्वा सङ्कीर्णभेदानाह तेषामिति। तेषामेकपञ्चाशतां व्यक्तिभेदमादाय सजातीयेन विजातीयेन च योजने एकाधिकानि षड्विंशतिशतानि ( २६०१ ) भवन्ति। यथा अर्थान्तरसङ्क्रमितवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन योगः। एवं तस्यात्यन्ततिरस्कृतवाच्येनेत्येवमन्यैर्योगः। एवमेकैकस्यैकपञ्चाशद्भेदैः सङ्ख्या सेयं स्वप्रभेदैरेकपञ्चाशतेत्यनेन सूचिता। स्पष्टत्वात्तु नोक्ता। तेषां त्रिरूपेण सङ्करेण एकरूपया संसृष्ट्या चेति चतुर्भिः प्रकारैर्योजनमित्यर्थः। त्रिरूपं सङ्करं व्याचष्टे संशयेति। को मुख्यः को वा गौणः अयं व्यङ्ग्योऽयं नेति च संशयः। अनुग्राह्यप्रधानमनुग्राहकमङ्गमङ्गप्रधानभावेनेत्यर्थः। एको व्यञ्जकः शब्दस्तदनुप्रवेशः एकपदाद्युगपदुभयप्रतीत्या च त्रिविधः सङ्करः। एकरूपां संसृष्टिमाह परस्परेति। पृथक्पदैर्निश्चितानां स्वातन्त्र्येणोपस्थितिः संसृष्टिरित्यर्थः। एवं पूर्वोक्तानामेकाधिक-षड्विंशतिशतानां चतुर्भिर्गुणने एकमयुतं चतुरधिका चतुःशती चेत्याह वेदेति। वेदाश्चत्वारः एवं शून्यमब्धयश्चत्वारो वियच्छून्यं चन्द्र एकः। एषां प्रातिलोम्येन पाते एकमयुतं चतुरधिका चतुःशती १०४०४ चेत्यर्थः। एषां शुद्धभेदमेलने आह शुद्धेति। शराः पञ्चेषवः पञ्च युगं चत्वारि खं शून्यमिन्दुरेकः। एकमयुतं पञ्च-पञ्चाशदधिका चतुःशती चेत्यर्थः। यद्यपि पदैकदेशानां सुप्तिङादीनां चानन्त्यादनन्ता सङ्ख्या युक्ता। तथापि पदैकदेशोत्थत्वेन एकीकारान्न दोषः। न चार्थशक्त्युत्थत्वे-नैक्यान्यूनत्वापत्तिः। स्वतन्त्रेच्छानियोगानर्हत्वात्। अत्र परमानन्दादयः 'नेयं गणना युक्ता'। परस्य पूर्वापूर्वयोजने एकैकभेदह्रासात्। य एवार्थान्तरसङ्क्रमितवाच्यस्या-त्यन्ततिरस्कृतवाच्येन योगे भेदः स एवात्यन्ततिरस्कृतस्यार्थान्तरसङ्क्रमितेन योगः सम्बन्धस्य द्विष्ठत्वात्। तेन —

"एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु।
समर्द्धिना समो गुण्य एतत्सङ्कलितं लघु"॥

इत्युक्तदिशा द्विपञ्चाशदर्द्धेन षड्विंशत्या एकपञ्चाशतां गुणने त्रयोदशशतानि षड्विंशतिश्च योगश्चतुःप्रकार इति चतुर्भिर्गुणने वेदाभ्रदहनेषव इति पञ्चसहस्राणि

चतुरधिका शतत्रयी चेत्येव युक्तमित्याहुः। मधुमतीकाव्यप्रदीपादयस्तु यत्र यस्य चमत्कारकारित्वं तत्र तस्य प्राधान्यादितरेण योग इत्युच्यते। एवमितरस्य प्राधान्ये पूर्वेण योगः प्राधान्येन व्यपदेशाः भवन्तीति न्यायेन योगस्य भेदे गणनाया साधुत्वात्। यद्यपि त्रिरूपे सङ्करे प्राधान्यमन्तर्भूतमेवेति न्यूनतैव युक्ता तथापि प्राधान्यभेदे सङ्ख्यातिरेको युक्त एव। एतेन यत्तैरुक्तम्—अत एव विरोधालङ्कारे—

जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धः स्याद् गुणस्त्रिभिः।

क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश॥ इति।

जातिगुणादीनां विरोधे दशत्वमुक्तम्। अन्यथा जातिगुणयोर्गुणजात्योश्च विरोधौ द्वाविति प्रत्येकं चतुष्ट्वे षोडशत्वापत्तेः। तयोरनन्यत्वे त्वत्रापि न्यूनत्वमेवार्हमिति तत्परास्तम्। अत्र तथाविवक्षणात् तत्र च तदभावात्।

[ सरि० ] एवं ध्वनेरेकपञ्चाशच्छुद्धप्रभेदानुक्त्वा सप्रपञ्चं सम्प्रति तस्य सङ्कीर्णभेदानां निरूपणाय सम्बद्धकारिकांशमवतारयति तेषामिति। तेषाम् च अन्योन्ययोजने निरूपेण सङ्करेण एकरूपया संसृष्ट्या च वेदखाब्धिवियच्चन्द्राः शरेषुयुगखेन्दवः ( भवन्ति ) इत्यन्वयः। **तेषाम्** ध्वनेरेकपञ्चाशद्भेदानाम्। **च** पुनः। **अन्योन्ययोजने** परस्परयोगे एकपञ्चाशतामेकपञ्चाशद्भिरेव गुणने या सङ्ख्या भवति एकाधिकषट्शतोत्तरद्विसहस्रमिता ( ५१ × ५१ = २६०१ ) तस्याः। त्रिरूपेण त्रिप्रकारेण संशयानुग्राहैकव्यञ्जकानुप्रवेशरूपेण। **सङ्करेण** मिश्रणेन। **एकरूपया** एकमात्रभेदया। संसृष्ट्या मिथोऽनपेक्ष्य स्थितिलक्षणया मिश्रणरूपया चेति चतुर्भिर्गुणने **वेदखाब्धिवियच्चन्द्राः** वेदाश्चत्वारः खं शून्यं अब्धयश्चत्वारो वियच्छून्यं चन्द्र एक इति अङ्कशास्त्रे तथैव सङ्केतनात्। अङ्कानां व्युत्क्रमेण गतिरिति तन्निर्देशाच्च चतुरधिकचतुःशत्युत्तरदशसहस्र( १०४०४ )मिताः भेदा भवन्तीति शेषः। ते च शुद्धभेदैः सह **शरेषुयुगखेन्दवः** शराः पञ्च इषवः पञ्च युगाश्चत्वारः खं विन्दुः इन्दुरेकः इति। अङ्कानां वामतो गतिरिति पञ्चपञ्चाशदधिकचतुःशत्युत्तरदशसहस्र( १०४५५ )मिताः ध्वनेर्भेदा भवन्तीति। ( ५१ × ५१ = २६०१ × ४ = १०४०४ + ५१ = १०४५५ )। कारिकां विवृणोति न केवलमित्यादि। ध्वनेः केवलम् शुद्धा अमिश्रिताः। **एकपञ्चाशद्भेदाः** प्रबन्धगतास्त्रयोदश वाक्यगता अष्टादश पदगताः सप्तदश पदावयवगतस्त्वेको वर्णगतोऽप्येक एक एव रचनागतश्चेति। **एव** इत्यवधारणे। **न भवन्ति। यावत्** किन्तु। **तेषाम्** एकपञ्चाशद्भेदानाम्। **स्वप्रभेदैः** स्वप्रकारैः। **एकपञ्चाशता** एकपञ्चाशद्भेदैरेव। **गुणने** गुणितानामिति। सहस्रद्वयमेकाधिका षट्शती च भेदानामिति। यथा अर्थान्तरसङ्क्रमितवाच्येन इतरेषां भेदानां योजने तस्यैवैक-

पञ्चाशद्भेदाः भवन्ति व्यक्तिभेदमादाय सजातीयेन विजातीयेन च योजनमत्राभीष्टम्। अर्थान्तरसङ्क्रमितवाच्यस्य तेनैव सह योग इत्येकः अत्यन्ततिरस्कृतवाच्येन सह योगेन द्वितीयः इत्येवमेकैकस्यैकपञ्चाशदेव भेदा भवन्तीति। एवमेकपञ्चाशतामेवैकपञ्चाशद्भेदैर्ध्वनेरेकाधिकषड्विंशतिशतमितभेदाः भवन्तीत्याशयः। अत्रोच्यते। भेदानां पूर्वपूर्वमिश्रणेन गतार्थतया परस्परमिश्राणामेकादिसङ्ख्याह्रासात्तावती सङ्ख्या न पूर्णा भवति किन्तु तन्न्यूनैव। अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योगे य एव भेदः स एव अत्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन सह योगेऽपि। सम्बन्धस्य द्विष्ठत्वात्। एवं हि अत्यन्ततिरस्कृतवाच्यस्य पञ्चाशदेव भेदा भवन्ति। एवमेव सङ्ख्याह्रासेन षड्विंशत्यधिकत्रयोदशशतसङ्ख्याका एव भेदाः सिध्यन्तीति। यथोक्तं विरोधालङ्कारे

जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धः स्याद् गुणैस्त्रिभिः।
क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश॥ इति।

तथा पूर्वपूर्वमिश्रणेन गतार्थतया परस्परमिश्राणामेकादिसङ्ख्या ह्रासे एव दशत्वाभिधानस्य मानता अन्यथा प्रत्येकं चतुष्ट्वे विरोधस्य षोडशत्वं स्यात्। गुणजात्योर्विरोधस्य जातिगुणविरोधानन्यत्वेन गुणविरोधानां त्रित्वमेव क्रियाविरोधस्य तथैवा द्वित्वं द्रव्यविरोधस्यैकत्वमेव। तथैवात्र पूर्वेण सह परस्य यन्मिश्रणं तदेव परेण सह पूर्वस्यापीति दिशा उत्तरेषु सङ्ख्याह्रासः स्पष्ट एव। यथोक्तं—'द्विपञ्चाशदर्द्धेन षड्विंशत्या एकपञ्चाशतां गुणने त्रयोदशशतानि षड्विंशतिश्च योगः' इति यद्वा अभीष्टसङ्ख्याया एकाधिकसङ्ख्यया गुणनफलस्य द्विसङ्ख्यया हरणे (विभाजने) तावत्पर्यन्ता सङ्ख्या सङ्कलिता भवतीति नियमेन द्विपञ्चाशत्सङ्ख्यया गुणिताया एकपञ्चाशत्सङ्ख्याया द्विसङ्ख्यया हरणे स एव योगो लभ्यते। एवमर्थान्तरसङ्क्रमितवाच्यस्य यदा एकपञ्चाशदेव भेदा भवन्ति तदाऽत्यन्ततिरस्कृतवाच्यस्य पञ्चाशदेव। एवंक्रमेण एकपञ्चाशत्तमभेदस्य स्वेन सह योगोऽवशिष्यते शेषाणां पूर्वैः सह योगे गतार्थत्वादिति। तर्हि कथं वेदखाब्धिवियच्चन्द्रा इत्यपेक्षायमुच्यते प्राधान्यादिति। यत्र यस्य चमत्कारकारित्वं तत्र तस्य प्राधान्यादितरेण योग इति। तथोत्तरस्य योगस्य भेदात्सङ्ख्यायाः साधुत्वमिति। ननु तथापि सङ्करे प्राधान्यस्य समावेशात्कथं तथोच्यते इत्यपेक्षायामुच्यते सत्यमेव। तथापि प्राधान्यभेदे सङ्ख्यातिरेको युक्त एवेति। सङ्करस्य त्रैविध्यमाह, संशयेति। संशयास्पदत्वेन को मुख्यः कः गौणः अयं व्यङ्ग्योऽयं न वेति अनिश्चयः संशयस्तस्य आस्पदत्वेन स्थानत्वेन। अनुग्राह्यानुग्राहकतया अङ्गप्रधानभावेन अनुग्राह्यं प्रधानमनुग्राहकमङ्गमिति तेन। एकव्यञ्जकानुप्रवेशेन एकस्मिन्नेव व्यञ्जके

शब्देऽनुप्रवेश आधारग्रहणम् तेन। एकपदाद् युगपदुभयप्रतीतिरिति । चकारः समुच्चयार्थः। **इति** इत्थम्। **त्रिविधेन** त्रिप्रकारेण। **सङ्करेण** नीरक्षीरन्यायेन यन्मिथो मिश्रणं तल्लक्षणेन। **परस्परनिरपेक्षया** मिथोऽनपेक्ष्य या स्थितिः तद्रूपया। **एकप्रकारया** एकविधया। **संसृष्टया** तिलतण्डुलन्यायेन यन्मिश्रणं तल्लक्षणया। **चकारः** समुच्चये। **इति** इत्थमादाय। **चतुर्भिः** चतुःसङ्ख्यया त्रिविधेन सङ्करेण एकया संसृष्ट्या चेति। **गुणने** हनने। **वेदखाब्धिवियच्चन्द्रमिता** (१०४०४) भेदा भवन्तीति। पूर्वपूर्वमिश्रणे गतार्थतया परस्परमिश्राणामेकादि-सङ्ख्याह्रासपक्षे तु वेदखाग्निशराः (५३०४) एव भेदा भवन्ति। (१३२६ × ४ = ५३०४)। **शुद्धभेदैः** मूलप्रकारैः एकपञ्चाशत्सङ्ख्यकैः सह योजने तु शरेषुयुगखेन्दवः (१०४५५) तावन्मिता भेदा भवन्ति। एकादि-सङ्ख्याह्रासपक्षे तु शरेषुगुणेषुमिता (५३५५) एव भेदा भवन्तीति। प्राधान्यस्य सङ्करेऽन्तर्भावादियमेव सङ्ख्या समीचीना दृश्यते। यत्र कारिकाकारेण ध्वनेरेक-पञ्चाशद्भेदा उक्तास्तत्र जरत्तरेणानन्दवर्धनेन चतुर्दश एव भेदाः प्रतीहारेन्दुराजेन विंशति भेदा एव अभिनवगुप्तपादैः पञ्चत्रिंशदेव भेदा उक्ता उदाहृताश्च। यथा संगृहीतम् —

> प्रबन्धमर्थशक्त्युत्थे शब्दोत्थे वस्त्वलङ्कृती।
> पदांशप्रक्रमे नैव नैव चोभयशक्तितः।
> एवं षोडशभेदानां हानौ त्रिंशच्च पञ्च च॥ इति।

साहित्यदर्पणकारास्तु अपि —

> तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः।
> सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।
> वेदखाग्निशराः शुद्धैरिषुबाणाग्निसायकाः॥

इत्याहुः। केचित्तु वर्णरचनादीनां रसाभिव्यञ्जकत्वं नैव स्वीकुर्वन्ति। तन्मते वर्णरचनाविशेषाणां माधुर्यादिगुणाभिव्यञ्जकत्वमेव न रसाभिव्यञ्जकत्वम् गौरवा-न्मानाभावाच्च। न हि गुण्यभिव्यञ्जनं विना गुणाभिव्यञ्जकं नास्तीति नियमः इन्द्रियत्रये घ्राणरसनश्रोत्रेषु व्यभिचारात्। तानि हि गुणिनां पृथिवीजलवियतां विनैव गन्धरसशब्दान् प्रत्यक्षीकुर्वन्ति। तेषां मते ध्वनिभेदा अवश्यमेव न्यूना एव भवन्ति व्यञ्जकसङ्ख्याह्रासात्। पदैकदेशस्यानन्त्यादसङ्ख्येयतया एक एव भेद उक्तः कारिकायाम्। तेन ध्वनिव्यञ्जकभेदा अपि असङ्ख्येया एव रसादिवत्। तेन तेषां परिगणनं प्रायोवृत्त्यैव। एतावदेव सुनिश्चितं यद्रसादिध्वनिः प्रबन्धवाक्यपद-पदैकदेशादिभिर्व्यज्यते। तेषां यावन्तो भेदा ध्वनेरपि तावन्त एव। न च पदैकदेश-

समूह एवं पदं पदसमूहो वाक्यं वाक्यसमूहः प्रबन्धः इति तेषामेकैव सङ्ख्या वाच्या प्राधान्येन व्यञ्जनात्। न हि सर्वेऽपि सर्वत्र व्यञ्जका भवन्ति। तेन यत्र यस्य व्यञ्जकत्वं तत्र तस्यैव तथाभिधानमिति तेषां भेदा ग्राह्या एवेति दिक्।

यत्र च ध्वन्योर्वा ध्वनीनां संशयेनाङ्गाङ्गीभावेन एकव्यञ्जकानुप्रवेशेन च मिश्रणं तत्र सङ्करस्तदन्यथासंयोगः संसृष्टिः। संशयस्तु को मुख्यः को वा गौणो यद्वाऽयं ध्वनिर्वा न वेति। अङ्गाङ्गिभावश्च उपकारकोपकार्यत्वेन। एकेनैव व्यञ्जकेन व्यञ्जनमेकव्यञ्जकानुप्रवेशः। अङ्गाङ्गिभावेऽङ्गस्य गुणीभावेन ध्वनिसाङ्कर्यं न वाच्यं तत्र स्वतश्चमत्कारिण एव तस्य किञ्चित्परोपकारकतामात्रं न तु शेषशेषिभाव एवेति। न च स्वस्य स्वेन कथं साङ्कर्यमिति वाच्यं व्यक्तिभेदमादाय विजातीयवत्स-जातीयेनाऽपि साङ्कर्यकथनात्।

[ वृत्तिः ] तत्र दिङ्मात्रमुदाह्रियते—

खणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई॥१११॥

(क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।
रोदिति पश्चाद्भागवलभीगृहेऽनुनीयतां वराकी॥)

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे सङ्क्रमितः किमनुरणनन्यायेनोप-भोगे एव व्यङ्ग्ये व्यञ्जकः, इति सन्देहः।

[ कमला० ] संशयास्पदं ध्वनिद्वयसङ्करमाह खणेति।

क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।
रोदिति पश्चाद्भागवलभीगृहेऽनुनीयतां वराकी॥

पडोहरशब्दो देशीयभाषायां गृहपश्चाद्भागवाची। हे देवर क्षणे उत्सवे प्राघुणिकी अतिथिः काचित्स्त्री ते तव जायया किमपि भणिता सती गृहपश्चाद्भागे रोदिति वराकी दीना उपनीयतामुपभुज्यतां रोदनान्निवर्तनाच्च। अत्रेति। अनुनयो मुख्यार्थबाधात्किमुपभोगं लक्षयति। किं वा रोदननिवृत्तिमात्रेणोपभोगं व्यनक्तीति अविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः सन्देहः।

[ सरि० ] ध्वनिसङ्करमुदाजिहीर्षुरुपक्रमते तत्रेत्यादि। तत्र तेषु मध्ये। दिङ्मात्रं मार्गमात्रम्। उदाह्रियते लक्ष्ये स्पष्टीक्रियते। इति। संशयास्पदं ध्वनिसङ्करद्वयमुदाहरति खणेति। सुहअ! (सुभग!) देअर! (देवर!) दे (ते) जाआए (जायया) किं पि (किमपि) भणिआ (भणिता) खणपाहुणिआ (क्षणप्राघुणिका) पडोहरवलहीघरम्मि (पश्चाद्भागवलभीगृहे) रुअइ (रोदिति)

वराई ( वराकी ) अणुणिज्जउ ( अनुनीयताम् ) इत्यन्वयः। हे सुभग ! हे सुन्दर ! देवर ! देवते इति देवृ ( देवने ) धातोररच्। ते तव। जायया पत्न्या। किमपि अवाच्यमेव। भणिता उक्ता। क्षणप्राघुणिका क्षणे उत्सवे या यद्वा क्षणमात्रं प्राघुणिका अतिथिः। पडोहरवलभीघरम्मि पश्चाद्भागवलभीगृहे पश्चाद्भागे गृहस्य यद् वलभीगृहमुपरितनभागस्थकक्षम् तस्मिन्। रोदिति परिदेवते। वराकी दीना उत्तराशक्तत्वात्तव्यासक्तत्वाच्च। अनुनीयतां समाधीयतामिति। लक्ष्ये लक्षणमाह अत्रेति। अत्र काव्येऽस्मिन्। अनुनयः रोदननिवर्तकव्यापारः। किम् उपभोगलक्षणे सम्भोगलक्षणे। अर्थान्तरे अन्यस्मिन्नर्थे। सङ्क्रमितः स्थानान्तरितः। किमथवा। अनुरणनन्यायेन अनुस्वाननियमेन। उपभोगे सम्भोगरूपे। एव इत्यवधारणे। व्यङ्ग्ये प्रतीयमानेऽर्थे। व्यञ्जकः प्रत्यायकः। इति इत्थम्। सन्देहः संशयः। अयमाशयः—अत्रानुनयतेर्वाच्योऽनुनयः उपभोगलक्षणे लक्ष्ये सङ्क्रमित उताहो विवक्षित एवोपभोगस्य व्यञ्जक इत्यनिश्चयादुभयोरेव समप्राधान्येनाविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः सन्देहसङ्करः।

[ वृत्तिः ] स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना,
वाताः सीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥११२॥

अत्र लिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह रामोऽस्मीति अर्थान्तरसङ्क्रमितवाच्यस्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसङ्क्रमितवाच्यरसध्वन्योः सङ्करः। एवमन्यदप्युदाहार्यम्।

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम
चतुर्थ उल्लासः

[ कमला० ] परयोः सङ्करयोः संसृष्टेश्चैकमुदाहरणमाह स्निग्धेति। स्निग्धा श्लक्ष्णा श्यामा या कान्तिस्तया लिप्तं व्याप्तं वियद्व्योम यैस्तथा वेल्लन्त्यः खेलन्त्यो बलाका येषु ते घनाः कामं निश्चितं सन्तु तथा वाताः शीतलाः पयोदसुहृदो मयूराणां कलाऽव्यक्ता मधुरा वा आनन्देन केका वाण्यश्च कामं निश्चितं सन्तु। एषु सत्स्वपि दुःखिनो मे मृत्युर्नेत्यर्थः। यतः दृढं गाढं कठोरहृदयो रामोऽस्मि। अतः सर्वमहं सहे सहामीत्यर्थः। सहेऽयुत्तमपुरुषः। यद्वा रामोऽस्मीति। अतः किमपि मे न भविष्यति। वैदेही विदेहराजपुत्री सुकुमारा तु कथं भविष्यति जीविष्यतीत्यर्थः।

सीतामरणं सम्भाव्य पृथ्वीं प्रत्याह हहहा इति खेदे हे सर्वंसहे वसुधे देवि ! धीरा भव। 'सर्वंसहा वसुमती' इत्यमरः। मम हृदयकठोरत्वान्न विदीर्यते। दुहितुः शोकेन त्वं मा विदीर्णा भूदित्यर्थो मदीयः। परमानन्दश्रीवत्सादयस्तु हा देवीत्यादि सङ्कल्पोपनीतां सीतां प्रत्याहेत्यर्थमाहुः। तदज्ञानकृतम्। अत्रेति। व्योम्नः कान्तेश्च निःस्पर्शत्वेनामूर्तत्वेन लेपायोगान्निविडत्वम्। मेघे चाचेतने सुहृदभावान्मुख्यार्थबाधात्तज्जत्वात्केकानां मनोहरत्वं लक्ष्य तेन दुःखं व्यङ्ग्यम्। तेन लिप्तसुहृच्छब्दावत्यन्ततिरस्कृतवाच्यौ। द्वयोश्च प्राधान्येन परस्परनैरपेक्ष्यात्संसृष्टिरित्यर्थः। ताभ्यामिति रामस्य वक्तृत्वाद् रामोऽस्मीति अयुक्तं दुःखसहिष्णुत्वं लक्षयद् विप्रलम्भं व्यनक्तीत्यर्थान्तरसङ्क्रमितवाच्योऽयं ध्वनिः। अस्य ध्वनेस्ताभ्यां लिप्तसुहृत्पदगम्याभ्यामत्यन्ततिरस्कृतवाच्याभ्यामनुग्राहकाभ्यां सह अनुग्राह्यत्वेनोपकार्यत्वे कः सङ्करः पूर्वयोरुद्दीपकत्वात्। एवं व्यञ्जकानुप्रवेशेन सङ्करमाह रामेति रामपदं राज्यभ्रंशवनवासस्त्रीवियोगपितृशोकादिदुःखपात्रतावगमाद् अन्यशोकधैर्यनिर्वेदैर्विप्रलम्भः प्रकाश इति दुःखसहिष्णुत्वम्। वस्तुध्वनिरसध्वन्योरेकरामपदेऽनुप्रवेशात्सङ्कर इत्यर्थः। वस्तुनश्च वाच्यात्प्राधान्याद् ध्वनित्वम्। विप्रलम्भेनास्वादे तु गुणत्वमेव।

इति श्रीकाव्यप्रकाशव्याख्याने चतुर्थोल्लासः समाप्तः।

[ सरि० ] अपरसङ्करयोरनुग्राह्यानुग्राहकैकव्यञ्जकानुप्रवेशरूपयोः संसृष्टेश्चैकमुदाहरणमाह स्निग्धेत्यादि। सीताविरहिणो रामस्योक्तिरियम्। स्निग्धश्यामलकान्तिलिप्तवियतः वेल्लद्बलाकाः घनाः वाताः सीकरिणः पयोदसुहृदाम् कलाः आनन्दकेकाः कामम् सन्तु दृढम् कठोरहृदयः रामः अस्मि सर्वम् सहे वैदेही तु कथम् भविष्यति हहा हा देवि ! धीरा भव यद्वा हे सर्वंसहे देवि ! धीरा भव इत्यन्वयः। स्निग्धा जलनिर्भरेण मसृणा अत एव श्यामलाऽत्यन्तकृष्णा या कान्तिस्तया लिप्तं सम्यगाच्छादितं वियद्गगनं यैस्ते तथाभूताः। वेल्लन्ती क्रीडन्ती गर्भाधानक्षणपरिचयाद्विलसन्ती बलाका बकपङ्क्तिर्येषु ते। तादृशाः। घनाः मेघाः सन्ति। कामं सन्तु न ह्युपूर्वमवलोक्यतामिति चेत् वाताः वायवः। सीकरिणः जलकणपूरिताः सन्ति। कामं सन्तु तथा चेद् गुहामाश्रित्य स्थीयतामिति चेत् पयोदसुहृदां मेघमित्राणाम् मयूराणाम् कलाः मधुराव्यक्ताः। आनन्दकेकाः प्रमोदातिशयस्य केकाः वाण्यः सम्मदोत्पन्नगिरः च। कामं यथेच्छम्। सन्तु भवन्तु नाम सुतराम्। नाऽहं तेभ्यो बिभेमि। दृढं बलवत्। कठोरहृदयः कठोरं निष्ठुरं कर्कशं हृदयं स्वान्तम् यस्य स तादृशः। रामः। अस्मि। सर्वं निखिलमेव। सहे सोढुं शक्नोमि। यद्वा सर्वंसहे इति पृथिव्याः सम्बोधनमिति केचित्। वैदेही

विदेहराजपुत्री सुकुमारी। तु इति व्यवच्छेदे। कथं केन प्रकारेण। भविष्यति जीविष्यति। हहा हा इति खेदातिशये निपातत्रयम्। देवि! सीते! स्मृति-सङ्कल्पोपनीतां सीतां प्रति वचनम्। धीरा धैर्यशालिनी। भव कथञ्चिदपि जीवनं धारयेति। यद्वा हे सर्वंसहे देवि! पृथ्वि! धीरा भव कथमपि धैर्यं कुरु इति। वैदेही तु कथं भविष्यति इत्यवश्यमेव नेत्याशयेन। वयं तु प्रथमपक्षमेव साधु विचिन्तयामः। लक्ष्ये कथनीयमाह अत्रेति। अत्र काव्येऽस्मिन्। लिप्तेति। स्निग्धश्यामलकान्तिलिप्तवियतः इत्यत्र यल्लिप्तपदं निःस्पर्शस्य गगनस्य लेपनासम्भवेन वाक्येऽनन्वयान्मुख्यार्थबाधेन सम्पर्कं लक्षयत्तदतिशयं व्यनक्ति। पयोदसुहृदामिति पयोदेऽचेतने सौहृदाभावात्सुहृत्पदमत्यन्ततिरस्कृतवाच्यं सत्परस्परोपकारित्वं लक्षय-त्परस्परातिशयं द्योतयति। परस्परोपकारत्वञ्च मेघस्य केकाप्रेरकत्वान्मयूराणाञ्च मेघशोभाधायकत्वात्। इति हेतोः। चकारः समुच्चये। अत्यन्तेति लेपसुहृत्त्वयो-र्वाक्येऽन्वयाभावादत्यन्ततिरस्कृतवाच्ययोः सम्पर्कपरस्परोपकारित्वलक्षकयो तत्तदति-शयताव्यञ्जकयोः लक्षणामूलाविवक्षितवाच्यान्तर्गतात्यन्ततिरस्कृतवाच्यव्यङ्ग्यो-ध्वनिभेदयोः। संसृष्टिः स्वेन सह स्वस्यैव परस्परनैरपेक्ष्येणावस्थानात्संसृष्टिरिति। ताभ्याम् अत्यन्ततिरस्कृतवाच्यध्वनिभ्याम्। सह। रामोऽस्मीति रामोऽस्मीत्यत्र रामपदञ्च सर्वसहत्वानुपयुक्तवाच्यार्थतया सकलदुःखपात्रत्वेन प्रसिद्ध इत्यर्थं लक्षयद् रामस्य स्वावधीरणं व्यनक्ति इति तस्य अर्थान्तरसङ्क्रमितवाच्यध्वनेः। अनुग्राह्यानुग्राहकभावेन अनुग्राह्यत्वमत्र रामपदद्योत्यार्थान्तरितवाच्यध्वनेः अनुग्राहकत्वञ्च लिप्तपयोदसुहृत्पदद्योत्यात्यन्ततिरस्कृतवाच्यध्वन्योस्तयोरुद्दीपकत्वात्तद-भावे सहिष्णुत्वातिशयलक्षणस्य हृदयकाठिन्यस्य वक्तुमशक्यत्वात्। परं विना पूर्वस्य चारुत्वालाभात्पूर्वं विना परस्य स्वरूपासिद्धेश्चोभयोरनुग्राह्यानुग्राहकता। तेन च सङ्कर इति। अयम्भावः—रामोऽस्मीत्यत्र रामस्य वक्तृत्वादयुक्तदाशरथिरूप-वाच्यार्थं सद्दुःखसहिष्णुत्वं लक्षयद्विप्रलम्भं व्यनक्तीत्यत्रार्थान्तरसङ्क्रमितवाच्य-ध्वनिः। तस्य च पूर्वोक्तात्यन्तातिरस्कृतवाच्यध्वनी अनुग्राहकौ तयोरुद्दीपकत्वादनु-ग्राह्यश्चायमिति ताभ्यां सहास्याङ्गाङ्गभावसङ्करः। रामेति रामपदलक्षणो रामोऽस्मीत्यत्र रामपदस्वरूपो यः एकः व्यञ्जकः द्योतकस्तत्रानुप्रवेशः द्योत्यत्वेन प्रवेशस्तेन। चकारः पूर्वोक्तसमुच्चये। अर्थान्तरेति यः अर्थान्तरसङ्क्रमितवाच्य-ध्वनिः स्वावधीरणव्यङ्ग्यात्मा रामपदद्योत्यः रसध्वनिः रामपदेनैव विवक्षितान्य-परवाच्यत्वेनालक्ष्यक्रमभेदविप्रलम्भस्य व्यञ्जनाद्यो ध्वनिस्तयोः। सङ्करः एकव्यञ्जकानुप्रवेशसङ्करः इति। अयमाशयः - अत्र लिप्तपदेन निःस्पर्शस्य लेपना-सम्भवाद्बाधितार्थेन द्योतितोऽत्यन्ततिरस्कृतवाच्यो यो हि सम्पर्कातिशयव्यङ्ग्यो ध्वनिस्तस्य पयोदसुहृत्पदेन अचेतनस्य सुहृत्त्वासम्भवात् मुख्यार्थबाधेन द्योतितो

योऽत्यन्ततिरस्कृतवाच्यः परस्परोपकारातिशयव्यङ्ग्यो ध्वनिस्तस्य च परस्परनैरपेक्षेणावस्थानात् संसृष्टिः ।

रामोऽस्मीत्यत्र रामस्य वक्तृत्वादयुक्तदाशरथिरूपार्थं रामपदमर्थान्तरसङ्क्रमितवाच्यं सद्दुःखसहिष्णुत्वस्वावधीरणरूपव्यङ्ग्यमर्थं द्योतयति । अस्य च पूर्वोक्तौ ध्वनिप्रकारौ उपकारकौ । ताभ्यां विनाऽस्य रूपासिद्धेः । अयञ्चोपकार्यस्तं विना पूर्वयोश्चारुत्वासिद्धेः । तेन ताभ्यां सहास्य मिश्रणादङ्गाङ्गिभावसङ्करः ।

तथैव रामपदेन द्योतितस्य वाच्यस्यार्थान्तरसङ्क्रमितत्वेन सिद्धस्य स्वावधीरणव्यङ्ग्यध्वनेः वाच्यस्य विवक्षितान्यपरत्वेन तेनैव पदेन द्योतितस्य विप्रलम्भातिशयव्यङ्ग्यध्वनेश्च एकव्यञ्जकानुप्रवेशेन तदाख्य एव सङ्कर इति ।

न च विप्रलम्भास्वादे वस्तुनो गुणभावेनाध्वनित्वं शङ्क्यमत्र आस्वादे सर्वेषामेव गुणीभावाव्यभिचारादिति ।

प्रकरणमुपसंहरति **एवमिति** । एवम् अनेन प्रकारेण । अन्यत् एतद्व्यतिरिक्तम् । अपि च । **उदाहार्यम्** । येऽत्रोदाहृतास्तद्व्यतिरिक्तं ग्रन्थान्तराज्ज्ञेयं वा स्वयमूह्यमिति । संसृष्टिरुदाहृता । सङ्करस्य च संशयाङ्गाङ्गिभावैकव्यञ्जकानुप्रवेशैर्ये भेदा भवन्ति ते च उदाहृताः मार्गमात्रमेवेति ।

इति श्रीमद्वत्सगोत्रोत्पन्नरविलालात्मजपरशुरामसूनुविष्णुमायागर्भजकात्यायनपथानुयायिमाध्यन्दिनीयशाखान्तर्गतशुक्लयजुर्वेदाध्यायि परमशैवलोकमणिदाहालप्रणीतायाः काव्यप्रकाशस्य सरिताऽऽख्यविवृत्यां ध्वनिनिर्णयो नाम चतुर्थ उल्लासः समाप्तः ।

यथाऽऽस्ते देवसरिता नित्यं हृत्पटले मम ।
तथैवैषा पाठकानां चित्ते नित्यं विराजताम् ॥

[ वि० वृ० ] अथ सङ्कीर्णमाह । **तेषामिति** ।

तेषामेकपञ्चाशतः प्रत्येकमेकापञ्चाशता गुणनं चेदेकोत्तरषट्सप्त्यधिकद्विसहस्री ( २६०१ ) संख्याका भेदाः स्युः । संशयास्पदत्वमनुग्राह्यानुग्राहकत्वैकव्यञ्जनानुप्रवेशश्चेति त्रिविधः सङ्करः । मिथो निरपेक्षरूपैकविधा संसृष्टिश्च । तेन तया च गुणनं चेत् वेदखाब्धिवियच्चन्द्राः ( १०४०४ ) शुद्धभेदैः सह शरेषुयुगखेन्दवः ( १०४५५ ) ।

तत्र त्रिरूपः सङ्करो यथा—

'पद्मिन्यहं कुमुदिनी किल सैव सत्यं
सत्यं भवांश्च मधुसूदन एव मत्तः।
वामेन तामसुखयन्निशि दक्षिणेन
प्रातः प्रबोधयति मामपि लोचनेन ॥'

अत्र पद्मिन्यादिशब्दार्थयोः शब्दार्थशक्त्युत्थानुध्वनेः सङ्करत्रयम्। तथाहि मयि तवानुरागो महान् यन्मां दक्षिणेनोदारेण लोचनेन दर्शनेन प्रातः प्रबोधयसि। तस्यां न तथा। यद्वामेनानुदारेण दर्शनेन निशि तामसुखयः। अत्र हेत्वलङ्कारो व्यङ्ग्यः। यदहं पद्मिनी सा तु कुमुदिनी। पद्मिन्यपेक्षया कुमुदिनी निकृष्टेति। अथ वाहं नाम्नैव कुमुदिनी न तु वस्तुतः इति सत्यम्, कथमन्यथा तस्यां तेऽनुरागः इति संशयः।

अथ पद्मिन्यहं कुमुदिनी सैवेति रूपकेण तद्धेतूपन्यासद्वारा प्रातर्मां प्रबोधयसि निशि तामसुखय इति हेत्वलङ्कारो व्यङ्ग्यः। भवान्मधुसूदन एवेति भृङ्गस्य तवोभयत्र रागसाम्यान्न दोषः। किन्तु ममैव सः यदहं पद्मिनी प्रातरेव सह भृङ्गेण पद्मिन्याः सन्दर्शनमिति मधुसूदनपदद्योत्येन वस्तुना पुनरपि रूपकं ध्वनितमित्यनयोर्मिथोऽनुग्राह्यानुग्राहकता।

एवं मधुसूदन एव भवान्मत्तः स्वतस्तृप्तस्तव कुत्रापि नापेक्षेति स्वभावोक्त्या तव दक्षिणं नेत्रं सूर्यात्मकं येन पद्मिनीं मां प्रबोधयसि। वामं तु चन्द्रात्मकं येन कुमुदिनीं तामसुखय इत्येकस्मिन्नेव व्यञ्जके मधुसूदनशब्दे व्यञ्जनानुप्रवेशश्चेति त्रिरूपः सङ्करः। अथ दक्षिणेन सरलेन लोचनेन मां प्रबोधयसि तेन ते मयि नानुरागः। वामेन कुटिलेन तामसुखयस्तेन तस्यामेव स इति वस्तुना स्वभावतो मधुसूदनो भृङ्गोऽज्ञस्तत्रापि मत्त इति स्वभावोक्तिस्तादृशस्य तव विवेकाभावादविदग्धस्त्वमिति स्वभावाख्यानाक्षेपयोः संसृष्टिश्च। एवं पदवाक्यव्यङ्ग्यैर्गर्वधैर्यदैन्यग्लानिनिर्वेदावहित्थादिभिर्भावैश्च सा ॥

इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां ध्वनिभेदनिर्णयो नाम चतुर्थः परिच्छेदः ॥

—:०:—

# अथ पञ्चम उल्लासः

[ वृत्तिः ] एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह—

[ कारिका ] अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्वाऽऽक्षिप्तमसुन्दरम् ॥१॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥

[ वृत्तिः ] कामिनीकुचकलशवद् गूढं चमत्करोति । अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।

[ कमला० ] मध्यमकाव्यनिरूपणस्य सङ्गतिमाह एवमिति । एवं गुणीभूतव्यङ्ग्यस्याष्टौ भेदा इत्यन्वयः । व्यङ्ग्यस्य गुणत्वे च वाच्यनिरूपितप्रकर्षानाश्रयत्वं बीजम् । अगूढपदे गूढत्वं विवृणोति कामिनीति । तदुक्तम्—

नान्ध्री पयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ।
अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः ॥ इति ।

अत्यन्तगूढं त्वस्फुटमेव ।

[ सरि० ] यत्र वाच्यानुगो व्यङ्ग्यस्तात्पर्याद् ध्वनिरूपताम् ।
धत्ते पुनर्नमस्तस्मै काव्यविग्रहधारिणे ॥

अथ प्रसङ्गप्राप्तं गुणीभूतव्यङ्ग्यं निरूपयिषुस्तन्निरूपककारिकावतारणायोपक्रमते उल्लाससङ्गतिप्रदर्शनपूर्वकमेवमिति । एवम् पूर्वोक्तप्रकारेण भेदप्रभेददर्शनाय । ध्वनौ । निर्णीते निश्चायिते । गुणीति गुणीभूतोऽप्राधान्येन स्थितो व्यङ्ग्यः प्रतीयमानार्थो यत्र तथाविधस्य काव्यस्य प्रभेदान् प्रतिनियतभेदान् । अन्यूनाननतिरिक्तांश्च । यद्वा गुणीभूतमप्राधान्याच्चारुत्वपर्यवसायित्वाभावेन गुणभावेन स्थितं यद्व्यङ्ग्यं व्यङ्ग्यार्थस्तस्य प्रभेदान् । आह निरूपयतीति । कारिकामवतारयति अगूढमिति । गुणीभूतव्यङ्ग्यस्य गुणीभूतं चारुत्वापर्यवसायित्वेनाप्राधान्येन स्थित व्यङ्ग्यं व्यङ्ग्यार्थो यत्र तस्य तथाविधस्य काव्यस्य यद्वा गुणीभूतमप्राधान्येन स्थितं यद्व्यङ्ग्यं तस्य व्यङ्ग्यं प्रतीयमानार्थः । अगूढं झटिति संवेद्यं येन केनापि । अपरस्य स्वभिन्नस्य व्यङ्ग्यस्य वाच्यस्य वा अङ्गमुत्कर्षाधायकम् । वाच्यसिद्ध्यङ्गम् वाच्यस्य वाक्यार्थस्य कुतोऽपि वैगुण्याद-

विश्रान्तस्य सिद्धेर्विश्रान्तेरङ्गं निदानम्। अस्फुटम् सहृदयैरपि झटित्यसंवेद्यम्। सन्दिग्धतुल्यप्राधान्ये सन्दिग्धं वाच्यकृतं वा व्यङ्ग्यकृतमिति न निश्चेतुमर्हम् तुल्यं चमत्कारे वाच्यस्य व्यङ्ग्यस्य च द्वयोरपि अङ्गत्वात्समं वा प्राधान्यं चमत्कारिता यत्र ते। सन्दिग्धप्राधान्यं तुल्यप्राधान्यञ्चेति। काक्वाक्षिप्तं काकुर्ध्वनिविकारो भिन्नकण्ठध्वनिर्वा तया आक्षिप्तं झटिति प्रकाशितम्। काक्वा विना यथा वाक्यार्थं आत्मानमेव न लभते तथा प्रकाश्यम् हठेनोपस्थापितं वा। असुन्दरं स्वभावादेव वाच्यापेक्षयाऽचारु। इति। एवमित्थम्। अष्टौ अष्टसङ्ख्याकाः। भिदाः प्रकाराः। स्मृताः मता इति। व्यङ्ग्यस्य चारुत्वापर्यवसायित्वेन यो गुणीभावः स मध्यमकाव्यत्वेन गृह्यते। व्यङ्ग्यस्य तादृशगुणीभावश्च अगूढत्वेन अपराङ्गत्वेन वाच्यसिद्ध्यङ्गत्वेन अस्फुटत्वेन सन्दिग्धप्राधान्यत्वेन तुल्यप्राधान्यत्वेन काक्वाक्षिप्तत्वेन स्वयमेवासुन्दरत्वेन च भवति। तत्रागूढत्वं वाच्यसाधारणगूढत्वादपराङ्गत्वमपरस्य स्वनैरपेक्ष्येण लब्धसिद्धेरुपस्करणात् वाच्यसिद्ध्यङ्गत्वं वाच्योपसर्जनतया अस्फुटत्वं सन्दिग्धप्राधान्यत्वं तुल्यप्राधान्यत्वं काक्वाक्षिप्तत्वञ्च वाच्यसमतया असुन्दरत्वं च व्यङ्ग्यप्रकर्षानाश्रयाद् भवति। एतैरन्योन्यविलक्षणैर्धर्मैर्मध्यमकाव्यस्याष्टौ प्रकारा न तु वैजात्यानि। एकस्यैव काव्यस्यावच्छेदकभेदेन ध्वनित्वाद् गुणीभूतव्यङ्ग्यत्वाच्च। भेदकथनेनैव तथाबोधने पुनरष्टाविति न्यूनाधिकसङ्ख्याव्यवच्छेदाय। व्यङ्ग्यस्य वाच्यापेक्षयाऽचमत्कारित्वमेव गुणीभावे हेतुर्यद्धि स्वत एवासुन्दरत्वेऽगूढत्वाविशेषण-सप्तकेन भवति। तत्रागूढत्वं ह्यसहृदयैरपि वेद्यत्वमेव। तेन तस्य वाच्यत्वा-भावात्प्राधान्यं तु भवत्येव। तत्कथं तस्य गुणभाव इत्यपेक्षायामाह कामिनीति। कामिनीकुचकलशवत् कामिन्याः प्रमदायाः कुचौ स्तनावेव कलशौ तद्वत्। गूढं सहृदयमात्रसंवेद्य व्यङ्ग्यम्। चमत्करोति चमत्कारमावहति। अगूढं सहृदयेतरेणाऽपि वेद्यम्। तु इति व्यवच्छेदे गूढव्यतिरिक्तम्। स्फुटतया स्पष्टतया। वाच्यायमानं रसाद्यनुपकारकत्वेन। वाच्यवदाचरत्। इति हेतोः। गुणीभूतम-प्राधान्येन स्थितम्। एव इत्यवधारणे इति। अयम्भावः—यथा कामिनीकुचयो-र्गूढतानिबन्धनमेव चारुत्वं तथा व्यङ्ग्यस्यापि। तेनातिगूढनिबन्धनमतिप्रकाश-निबन्धनमस्फुटनिबन्धनमत्यन्तस्फुटनिबन्धनञ्च व्यङ्ग्यस्य न चारुत्वे हेतुः। यथोक्तम्—

> नान्ध्रीपयोधर इवातितरां प्रकाशो
> नो गुर्जरीस्तन इवातितरां निगूढः।
> अर्थो गिरामपिहितः पिहितश्च कश्चित्
> सौभाग्यमेति मरहट्टवधूकुचाभः ॥ इति।

यथा हि कञ्चुकादिपिहितो प्रमदाकुचो भावुकैरुन्नेतुं शक्यते न तु चक्षुषा गृह्यते तथैव व्यङ्ग्यार्थोऽपि सहृदयैरुन्नेय एव रसत्वे हेतुर्न तु नितान्तमुत्तानः। उक्तमेव ध्वनिकृता—

संवृत्याऽभिहितं वस्तु यत्रालङ्कार एव वा।
काव्याध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः॥ इति।

तेनागूढस्य व्यङ्ग्यस्य वाच्यत्वाभावेऽपि गुणीभाव एव। एवमेवास्फुटमपि सहृदयैरपि उन्नेतुमशक्यत्वात्।

[ वृत्तिः ] अगूढं यथा—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न सम्प्रति भवामि किमावहामि॥११३॥

अत्र जीवन्नित्यर्थान्तरसङ्क्रमितवाच्यस्य।

[ कमला० ] यस्येति। बृहन्नलादशायामुत्तरगोग्रहे दुर्योधनेन स्त्रीत्वाद् धिक्कृतार्जुनोक्तिरियम्। असुहृच्छत्रुर्। ते कृते कृतपराजयोऽप्यतप्तसूचीवेधस्य व्यतिकरः। पर्यायं तेन वचोरूपेण कर्णौ युनक्ति योजयति कर्णकटुवचसा तुदतीत्यर्थः। काञ्चीगुणबन्धनपात्रं स्त्रीरूपः। स एषोऽहं जीवन्नास्मि किमावहामि किङ्करोमि। अत्रेति जीवतस्तदभावोक्तौ बाध इति श्लाघ्यजीवित्वं लक्ष्यं तच्चात्र तदभावोक्तौ मरणमेव युक्तमित्यनुतापो व्यङ्ग्यः। स च स्पष्ट इत्यर्थः। वाच्यस्य ध्वनेरुदाहरणमिति शेषः। एवमग्रेऽपि ज्ञेयम्।

[ सरि० ] व्यङ्ग्यस्यागूढत्वेन गुणीभावोदाहरणायोपक्रमते अगूढमिति। अगूढं सर्वसंवेद्यम्। यथेति निदर्शने। उदाहरणं प्रस्तौति यस्येत्यादि। बृहन्नला-रूपस्यार्जुनस्य कीचकपराभवं निवेदयन्तीं द्रौपदीं प्रत्युक्तिरियम्। यच्चोत्तरगोग्रहे स्त्रीत्वाद् दुर्योधनेन धिक्कृतस्यार्जुनस्योक्तिरियमिति। कमलाकर्यां स्वाभ्युदयाय किमपि न चेष्टसे इति केनाऽपि पृष्टस्यार्जुनस्य वाक्यमिदमित्युद्द्योते तन्न समीचीनम्। दुर्योधन-समक्षमर्जुनस्य तादृशदीनवचनस्य नितान्तासम्भवाद् गुप्तवासावसरे तादृशप्रश्नोत्तर-योरप्यसम्भवात्। यस्य असुहृत्कृततिरस्कृतिः एत्य तप्तसूचीव्यधव्यतिकरेण कर्णौ युनक्ति सः एषः काञ्चीगुणग्रथनभाजनम् अस्मि सम्प्रति जीवन् न भवामि किम् आवहामि इत्यन्वयः। यस्य मम। असुहृदिति असुहृच्छत्रुस्तेन कृता विहिता या तिरस्कृतिरनादरोऽत्र शत्रुर्दुर्योधनस्तत्कृतं निकारवचनं षण्डतिलाः पाण्डवा इति।

एतत् सततं स्मरणविषयीभूय । तप्तसूचीव्यधसम्बन्धेन तप्ता उष्णीभूता या सूची लोहशलाका तया यो व्यधो वेधस्तस्य व्यतिकरसम्बन्धस्तेन । कर्णौ श्रोत्रे । युनक्ति योजयति सम्बध्नाति वा । सः तादृशः । काञ्चीगुणग्रथनभाजनम् काञ्च्या मेखलायाः गुणः सूत्रं तस्य ग्रथनं बन्धनं तस्य भाजनं पात्रं तत्र नियुक्तो यद्वा काञ्च्या गुणेन यद्ग्रथनं तद्रूपकर्मणो भाजनम् । एषः तव पुरतः स्थितः । अस्मीत्यहमर्थेऽव्ययम् । अर्जुन इति । सम्प्रति अधुना गुप्तवासावधि यावत् । जीवन् श्वसन्नपि प्राणन् । न । भयाभि विद्ये । अकाव्यजीवनोऽस्मीति । अतः । किं किमेव । आवहामि करोमि । किमपि साधयितुमसमर्थोऽस्मीति । कतिपये व्याख्यातारस्तु पद्यमिदमन्यथाऽपि व्याख्यान्ति । यथा असुहृदिति असुहृदा शत्रुणा कृता तिरस्कृतिर्यस्य तथाभूतो नृपो यस्य मम शरणमेत्य तप्तसूच्या यो व्यधस्तस्य व्यतिकरेण स्वयमेव कर्णौ युनक्ति सम्बध्नाति । शरणागतस्य तप्तलोहशलाकया कर्णवेधो देशाचार इति स्वयमेव शरणागतत्वसूचनाय तथा करोति स एष इति चन्द्रिकाकाराः । यस्य प्रागीदृशः प्रभाव आसीद्यन्नामश्रवणमात्रेण शत्रवः स्वमुखेनैवात्मानं धिक्कुर्वन्तः स्वहस्तेनैव कर्णांकृततप्तलोहशलाकावेधा यं शरणमायान्ति स सम्प्रति-इति उद्योतकाराः । शरणागतस्य शत्रोस्तप्तलोहशलाकया कर्णवेध इति देशाचार इति चण्डीदासः । एवमेव श्रीवत्सलाञ्छनभट्टाचार्या अपि । शरणागतस्य तप्तशलाकया कर्णवेधनमिति पाश्चात्यचार इति चक्रवर्तिमहोदयाः । वयन्तु तन्न साधु मन्यामहे तत्पक्षे सति कविः कर्णवेधं हि भूतकालिकक्रियया सूचयेन्न तु वर्तमानकालिकया । तेन हि शत्रुणा कृततिरस्कृतिर्यस्य मे कर्णौ तप्तसूची-व्यधव्यतिकरेण युनक्ति एव सोऽहमिति बालचित्तानुरञ्जनासम्मतव्याख्यैव स्वीकृताऽस्माभिरपि । चन्द्रिकाकारा अपि पक्षेऽस्मत्सम्मता व्याख्यामपि स्वीकुर्वन्ति । या काऽपि व्याख्या साध्वी भवेत्प्रयोजनं त्वस्य व्यङ्ग्यस्यागूढत्वप्रदर्शनमेवेति लक्ष्योन्मुखा वयम् । लक्ष्येऽभीष्टमाह अत्रेति । अत्र काव्येऽस्मिन् । जीवन्निति जीवन्निति यत्पदं तेन द्योतितस्य । अर्थान्तरसङ्क्रमितवाच्यस्य अर्थान्तरे वाच्यस्य सङ्क्रमणेन यद्व्यङ्ग्यं भवति तस्य सर्ववेद्यतया गुणीभाव इति । जीवन्न भवामीति जीवत एव जीवने जीवनाभावबोधने वाधेन क्रियापदस्थजीवपदं प्रकृष्ट-जीवनं लक्षयति । तदभावबोधे चानुतापादेव जीवनं निन्दतीति अनुतापातिशयो व्यङ्ग्यः । स च सर्वजनसंवेद्यत्वादगूढ इत्युद्योतकाराः । जीवन्नेति अभिमत-कार्याशक्तत्वे सङ्क्रमितवाच्यं तस्य मरणमेव श्रेय इति व्यङ्ग्यमसहृदयैरपि वाच्यवत्प्रतीयत इति गुणीभूतमिति काव्यप्रदीपकाराः । अत्र जीवन्निति शब्दोऽर्थान्तरे प्रकृष्टजीवपकर्तरि सङ्क्रमितवाच्यकः । तस्य व्यङ्ग्यं जीवनस्य मरणादप्यकर्ष-स्वरूपं पामरवेद्यत्वादगूढम् । तस्य निर्वेदभावस्योपस्कारकत्वेऽपि अत्र निर्वेद एव

वाच्यायमानतया न भावत्वं भजते इति गोकुलनाथीयविवरणे। जीवतो जीवनाभावबोधने बाधः श्लाघ्यजीवितत्वं लक्ष्यतावच्छेदकम्। तदभावेन कष्टजीवित्वावगमः। अनुतापादेव जीवनं निन्दतीति अनुतापातिशयः सर्वजनसंवेद्यत्वादगूढः। न तु कष्टजीवित्वं लक्ष्यतावच्छेदकं नञः सम्बन्धे श्लाघ्यजीवित्वावगमप्रसङ्गात्। न च नञस्तात्पर्यग्राहकत्वं सार्थकत्वे सम्भवात निरर्थकत्वव्याकल्पनीयत्वात्। शक्यस्तश्लाघ्यजीवितस्यैव लक्ष्यत्वे नार्थान्तरसङ्क्रम इति विस्तारिकाकारा। अत्र जीवन् न भवामीति जीवत इति वचनात् बाधितश्चार्थः अश्लाघ्यजीवनत्वं लक्षयति। तदतिशयश्च वाच्यवत्सर्वजनगोचर इत्यगूढः। अस्य च व्यङ्ग्यस्य वाच्याधिकारत्वाभावाद् गुणीभूतम् इति विश्वनाथकविराजाः। वयं तु जीवन्निति पदं श्लाघ्यजीवित्वरूपे एवार्थे सङ्क्रमितवाच्यं नञः सम्बन्धेन तदभावबोधनात्तस्य मरणमेव श्रेय इति व्यङ्ग्यं सर्वसंवेद्यत्वादगूढमिति मन्यामहे। कष्टजीवितत्वस्य लक्ष्यतावच्छेदकत्वे नञा तदभावबोधने श्लाघ्यजीवित्वमेव व्यङ्ग्यं स्यात्। कष्टजीवित्वमत्र व्यङ्ग्यमेव भवितुमर्हति प्रकरणाशयेनेति। तेन जीवन् वीरोचितश्लाघ्यजीवनः न भवामीति कष्टजीवनोऽहं यद्धि मरणादतिरिच्यत इति व्यङ्ग्यमगूढमिति व्यङ्ग्यस्यागूढत्वेन गुणीभूतव्यङ्ग्यकाव्यस्योदाहरणमिदम्।

[ वृत्तिः ] उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥११४॥

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य।

[ कमला० ] अगूढस्योदाहरणान्तरमाह उन्निद्रेति। छटासमूहश्छदेति पाठे पत्रम्। अत्रेति। मुखसंयोगस्य चुम्बनस्य बाधात्संयोगो लक्ष्यः। रविबिम्बे तस्याप्यभावात्तेनोदयाद्रिसंयोगविशेषप्रतीतिरिति वाच्यस्यात्यन्ततिरस्कृतत्वम्। प्रभातञ्च व्यङ्ग्यमगूढमित्यर्थः।

[ सरि० ] इत्थमर्थान्तरसङ्क्रमितवाच्यस्यागूढत्वं प्रदर्श्य सम्प्रति अत्यन्ततिरस्कृतवाच्यस्य तदुदाहरति उन्निद्रेत्यादि। चिररतिपरिखेदनालसतयाऽज्ञानप्रबोधसमयां काञ्चित्तत्संसूचनाय कस्याश्चिदुक्तिरियमिति व्याख्यातारः। उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः मधुपाः गृहदीर्घिकासु मञ्जु गायन्ति रवेः नवबन्धुजीवपुष्पच्छदाभम् उदयाचलचुम्बि एतत् बिम्बम् च चकास्ति इत्यन्वयः। उन्निद्रेति उन्निद्रं विकसितं यत्कोकनदं रक्तकमलं तस्य रेणुना परागेण पिशङ्गितानि पिशङ्ग-

वर्णानि रेणो रक्तत्वस्य भ्रमराणां कृष्णत्वस्य च मिश्रणात् अङ्गानि शरीराणि येषान्ते तादृशाः । मधुपाः भ्रमराः । गृहदीर्घिकासु भवनवापीषु । मञ्जु मधुरम् । गायन्ति गुञ्जन्ति । रवेः सूर्यस्य । नवबन्धुजीवपुष्पच्छदाभम् नवो नूतनो यो बन्धुजीवपुष्पस्य तदाख्यकुसुमस्य च्छदः पत्रं तस्य आभेवाभा शोभा कान्तिर्वा यस्य तत्तादृशम् । उदयाचलचुम्बि उदयाचलं पूर्वगिरिं चुम्बति निक्षति तच्छीलमिति । एतत् प्रसिद्धम् । विम्बं मण्डलम् । चकारः समुच्चयार्थे । चकास्ति द्योतते इति । लक्ष्ये प्रकृतोपयोगमाह अत्रेति । अत्र पद्येऽस्मिन् । चुम्बनस्य चुम्बनपदसम्बद्धस्य । अत्यन्तेति अत्यन्तमेव वाक्येऽनुपयोगितया नितान्तमेव तिरस्कृतमनादृतं वाच्यं शक्यार्थो यस्मिन्निति । तस्य व्यङ्ग्यस्य अगूढत्वमिति । अयमाशयः — चुम्बनं हि वक्त्राङ्गसंयोगसाध्यत्वाच्चेतनधर्म एव । तस्य वक्त्रसंयोगरूपस्य शक्यार्थस्य रविविम्बेऽचेतनं तेन रूपेणानन्वयात्तद्बाधेन सामान्यविशेषभावसम्बन्धेन तेन संयोगमात्रं लक्ष्यते येन प्रभातारम्भो व्यज्यते । स च वाच्यायमान इवेति गुणीभावोऽस्य व्यङ्ग्यस्य । न चात्र लक्ष्यतावच्छेदकस्य संयोगस्य वक्त्रसंयोगेऽपि सत्त्वान्न वाच्यस्यात्यन्ततिरस्कार इति वाच्यं सत्त्वेऽपि लक्ष्यतावच्छेदकस्य वाच्यस्य सयोगविशेषस्य अन्वयप्रवेशाभावात् । अत एवोक्तम् वक्त्रसयोगस्य बाधितत्वात्संयोगे लक्षणा संयोगत्वेनापि तद्व्यक्तेरनन्वयादत्यन्ततिरस्कृतवाच्यत्वम् । व्यङ्ग्यश्च प्रातःकालारम्भो वाच्यवत्प्रतीयत इत्यगूढ इति ।

[ वृत्तिः ] अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिराहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाऽप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥११५॥

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य । 'तस्याऽप्यत्र' इति युक्तः पाठः ।

[ कमला० ] शब्दशक्तिमूले व्यङ्ग्यस्य वाच्यसमत्वादगूढत्वं स्पष्टम् आराद्यो दहनेन गतार्थञ्चेति तदुपेक्ष्यार्थशक्तिमूले आह अत्रासीदिति । रावणं हत्वा स्वपुरीमागच्छत पुष्पकस्थरामस्य रणभूमौ सीतां प्रत्युक्तिरियम् । भवद्देवर इति सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । अत्रेति । सामान्यविशेषं विनाऽपर्यवसानात्सर्वनाम्नः किमः प्रकृते शक्तेश्च मयेति किं व्यङ्ग्यमर्थशक्तिमूलानुरणनगम्यमगूढम् । तस्यापीति तस्य तत्तत्प्रभाववत्त्वेन ख्यातत्वादित्यर्थः । केनापीति पाठे उक्तदिशा मयेति व्यङ्ग्यस्यागूढता । तस्येति पाठे त्वर्थान्मयेति गूढत्वान्मुख्यध्वनित्वम् । तज्ज-

यान्नायकोत्कर्ष इति रीत्या फणिपाशबन्धादिस्वापमानलज्जापह्नुतिश्च । लक्ष्मणेऽपि तथेत्यर्थः ।

[ सरि० ] व्यङ्ग्यस्यागूढत्वेन मध्यमकाव्यत्वोदाहरणप्रसङ्गे शब्दशक्तिमूलव्यङ्ग्यस्य प्रायो वाच्यसमत्वेनागूढत्वात्तदुपेक्ष्यार्थशक्तिमूलस्य व्यङ्ग्यस्यागूढत्वमुदाहरति अत्रेत्यादि । हे मृगाक्षि ! अत्र फणिपाशबन्धनविधिः आसीत् अत्र शक्त्या भवद्देवरे वक्षसि गाढम् ताडिते हनुमता द्रोणाद्रिः आहृतः, अत्र इन्द्रजित् दिव्यैः लक्ष्मणशरैः लोकान्तरम् प्रापितः, अत्र केन अपि राक्षसपतेः कण्ठाटवी कृत्ता च इत्यन्वयः । पद्यमिदं बालरामायणगतम् । युद्धानन्तरं पुष्पकमारुह्यायोध्यां प्रत्यागच्छतो रामस्य सीतां प्रत्युक्तिरियम् । हे मृगाक्षि ! मृगस्य हरिणस्येवाक्षिणी यस्यास्तत्सम्बुद्धौ । अत्र अस्यां रणभूमौ । फणिपाशबन्धनविधिः फणिपाशो नागपाशस्तेन यद्बन्धनं निरोधस्तस्य विधिः प्रयोगः । आवयोरिति शेषः । आसीत् समपद्यत । अत्र अस्मिन् स्थले । शक्त्या इन्द्रजित्प्रयुक्ततदाख्यास्त्रेण । भवद्देवरे भवत्याः देवरः पत्यनुजो लक्ष्मणस्तस्मिन् । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । प्रयोगश्च सम्बन्धप्रदर्शनपूर्वकं वात्सल्योत्पादनेन पराभवज्ञानापसारणाय । वक्षसि उरसि । भृश दृढम् । ताडिते प्रतिघातिते । हनुमता तदाख्येन वीरेण साहतिना । द्रोणाद्रिः द्रोणाऽऽख्यो दिव्यौषधिविलसितः पर्वतः । आहृतः आनीतो हिमालयगिरिशिखरादिति । अत्र स्थलेऽस्मिन् । इन्द्रजित् मेघनादः । दिव्यैरलौकिकैः । लक्ष्मणशरैः लक्ष्मणस्य शरैर्बाणैः । लोकान्तरं परलोकम् । प्रापितः प्रेषितः हत इति । अत्र स्थलेऽस्मिन् । केनापि केनचित्पुरुषेण । राक्षसपतेः रावणस्य । कण्ठाटवी कण्ठा एव अटवी काननं तस्य दशग्रीवत्वात् । कृत्ता छिन्ना । चकारः पूर्वोक्तसमुच्चये । इति । लक्ष्ये प्रकृतोपयोगमाह । अत्रेति । अत्र काव्येऽस्मिन् । केनापि अत्र केनापीति स्थले । अर्थेति अर्थशक्तिमूलानुस्वानोपमव्यङ्ग्यस्य अगूढत्वमिति । अयमाशयः अत्र केनापीति स्थले मयेति कथने यद्रदात्मप्रशंसा एवं केनेत्याक्षिप्तव्यङ्ग्येऽपीति तस्यागूढत्वमिति । केनापीति पदेन कर्त्रपेक्षया प्रकरणवशान्मयेति अर्थशक्त्या प्रतीयते किन्तु तस्यापि वाच्यायमानतयाऽर्थशक्तिमूलानुस्वानोपमव्यङ्ग्यस्यागूढत्वेन मध्यमकाव्योदाहरणमिदम् । उचितं पाठमाह तस्येति केनापीति स्थले तस्यापि इति पाठः कथनम् । युक्तः । युक्तत्वञ्च व्यङ्ग्यस्य गूढत्वेन । तस्य तत्तत्प्रभाववत्त्वेन ख्यातस्य राक्षसपतेः अपि इति कथने तदाक्षिप्तं मयेति यद्व्यङ्ग्यं तस्य तु गूढत्वाद् ध्वनित्वमेवेति । तज्जयान्नायकोत्कर्षेण वीरोत्कर्षो व्यङ्ग्य इति ।

[ वृत्तिः ] अपरस्य रसादेर्वाच्यस्य वा ( वाक्यार्थीभूतस्य ) अङ्गं रसादि अनुरणनरूपं वा । यथा---

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरूजघनस्पर्शी नीवीविस्रंसनः करः ॥११६॥

अत्र शृङ्गारः करुणस्य ।

[ कमला० ] द्वितीयं भेदं विवृणोति अपरस्येति । वाक्यार्थीभूतस्य रसादेरङ्गं रसादि । आदिशब्दाद् भावतदाभासभावशान्तिभावोदयभावसन्धिभावशवलता । वाच्यस्य रसादिरङ्गमनुरणनं वा तेन विना वाच्यार्थपर्यवसानादित्यन्वयः । रसस्य रसाङ्गतामाह अयं स इति । युद्धभूपतितं भूरिश्रवसो हस्तं दृष्ट्वा तत्स्त्रिया उक्तिरियम् । अत्रेति । अङ्गमित्यनुषङ्गः । एवमग्रेऽपि । रसनाकर्षादिना प्रतीतोऽपि शृङ्गारः शोकमेव पुष्णातीत्यर्थः ।

[ सरि० ] कारिकागतम् 'अपरस्याङ्गम्' इति पदं व्याख्याति अपरस्येत्यादि । अपरस्य इति वाक्यार्थीभूतस्य चारुत्वपर्यवसायितया वाक्यार्थत्वेन स्थितस्य स्वभिन्नस्य रसादेः रसभावादीनाम् । वाच्यस्य वाक्यतात्पर्यविषयतया प्रधानभूतस्यार्थस्य । वा इति पक्षान्तरे । अङ्गमुपस्कारकत्वेनावयवीभूतम् । रसादि रसभावादि वा । अनुरणनरूपम् अनुस्वानोपमं शब्दार्थोभयशक्त्युत्थम् व्यङ्ग्यमिति । अत्रापरस्येति स्वनैरपेक्ष्येण लब्धसिद्धेरिति ज्ञेयम् । अङ्गत्वञ्चोपकारकत्वेनैव । व्यङ्ग्यं ह्यपरस्याङ्गं तदैव भवति यदा तत्स्वनैरपेक्ष्येण लब्धसिद्धः स्वभिन्नस्य वाक्यतात्पर्यविषयतया प्रधानस्य रसादेर्वाच्यस्य वोपकारत्वेन व्यवहरति । तच्च रसादिरूपव्यङ्ग्यं वा शब्दार्थशक्त्युत्थानुस्वानोपमव्यङ्ग्यं वा भवति । तत्र रसव्यङ्ग्यस्य रसध्वन्यङ्गतामुदाहरति यथेति । प्रस्तौति अयमिति । श्लोकोऽयं महाभारतस्त्रीपर्वगतम् । युद्धे छिन्नतया भूमौ पतितं भूरिश्रवसो हस्तं दृष्ट्वा तत्पत्न्या उक्तिरियम् । अयम् सः रशनोत्कर्षी पीनस्तनविमर्दनः नाभ्यूरूजघनस्पर्शी नीवीविस्रंसनः करः इत्यन्वयः । अयमेष दृश्यमानदुरवस्थः । सः चिरपरिचितः । रशनोत्कर्षी रशनायाः काञ्च्या उत्कर्षी आकर्षकः । पीनेति पीनयोः पुष्टयोः स्तनयोः कुचयोर्विमर्दनो मर्दनकारी । नाभ्यूरूजघनस्पर्शी नाभिः कटिमध्यभागः ऊरूः सक्थि जघनं नितम्बपुरोभागः तानि स्पृशति इति तत्तदङ्गपरामर्शकः । नीवीविस्रंसनः नीवी कटिवस्त्रग्रन्थिस्तस्याः विस्रंसनो मोचकः । करः हस्तः । इति ।

लक्ष्यस्य प्रकृतोपयोगित्वमाह अत्रेति । अत्र काव्येऽस्मिन् । करुणस्य वाक्यार्थत्वेन प्रधानभूतस्य करुणरसस्य । शृङ्गारः रशनोत्कर्षित्वादि यद्योतितो हि

शृङ्गाररसः। अङ्गमिति। अङ्गत्वञ्च शृङ्गारस्य करुणपोषकत्वादेव। अर्थात् शृङ्गारो ह्यत्र करुणस्यैव प्रकर्षाधायको न तु चारुत्वपर्यवसायित्वेन प्रधानभूत इति।

[ वृत्तिः ] कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते॥१७॥

अत्र भावस्य रसः।

[ कमला० ] रसस्य भावाङ्गतामाह कैलासेति कैलासालयः शिवस्तस्य भाललोचनकान्त्या कृतोऽलक्तकस्य व्यक्तिर्यस्याः सा। गिरिभुवो गौर्याः पादनखस्य द्युतिर्युष्मान् सदा रक्षतु। यथा नेत्रयोः कान्तिः रक्तता सद्यः अपनीयतेऽस्य प्रणामेन शान्तेत्यर्थः। अत्रेति। त्रायतामित्यतः प्रतीतस्य गौरीविषयकरत्याख्यभावस्य नतिबोध्यः सम्भोगरूपः शृङ्गारोऽङ्गमित्यर्थः।

[ सरि० ] रसस्य वाक्यार्थीभूतस्य भावाङ्गतामुदाहरति कैलासेत्यादि। गिरिभुवः सा कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः वः सदा त्रायताम् स्पर्द्धाबन्धसमृद्धया इव यया नेत्रयोः सुदृढम् रूढा कोकनदानुकारसरसा कान्तिः सद्यः समुत्सार्यते इत्यन्वयः। गिरिभुवः शैलजायाः। सा सर्वातिशायिनी। कैलासेति कैलासस्तदाख्यगिरिरालयं निवासभूमिर्यस्य तस्य शिवस्य प्रसादनाय पादपतनपरस्येति भाले ललाटे यल्लोचनं नयनं तृतीयनेत्रं तस्य रुचा अरुणकान्त्या। निर्वर्तितेति निर्वर्तिता सम्पादिता अलक्तकस्य लाक्षारसस्य यावकस्य व्यक्तिः प्रकटता यस्यास्तादृशी। पादनखद्युतिः पादयोश्चरणयोर्नखानामङ्गुलिरुहाणां द्युतिश्छविः। वः युष्मान् उपलक्षणादस्मांश्च। सदा नित्यमेव। त्रायतां भवतु। स्पर्धाबन्धसमृद्धया स्पर्धाया विजिगीषायाः बन्धः सातत्यं तेन समृद्धयाऽतिदीप्तया। इव इत्युत्प्रेक्षा। यया द्युत्या। नेत्रयोर्नयनयोः। सुदृढं भृशं यथा स्यात्तथा। रूढा प्रवृद्धा। कोकेति कोकनदस्य रक्तोत्पलस्यानुकारेणानुकरणेन सरसाऽतिशयिता। कान्तिः छविः। सद्यस्तत्कालमेव। समुत्सार्यते दूरीक्रियत इति। पार्वती हि प्रणयकोपेनारुणलोचना तिष्ठति। तत्प्रसादनाय प्रणमतो भगवतो भाललोचनारुणकान्त्या प्रवृद्धया तस्याः पादनखद्युत्या सद्य एव तस्या नयनयोररुणता दूरीक्रियते इति। पद्ये प्रकृतोपयोगमाह अत्रेति। अत्र पद्येऽस्मिन्। रसः शृङ्गाररसः। भावस्य पार्वतीविषयकरतिभावस्य। अङ्गमिति शेषः। अयमाशयः—पार्वत्या भगवदपेक्षयाऽप्युत्कर्षवर्णनेन कविनिष्ठे पार्वतीविषयकरतिभावे (देवविषयत्वेनात्र

रतेर्भावत्वमेव ) गिरिसुतामहेशयोः शृङ्गारोऽङ्गमिति । शृङ्गारश्चात्रेर्ष्याविप्रलम्भरूपः । न चेर्ष्याविप्रलम्भस्य प्राधान्यमत्र वाक्यार्थत्वेन पार्वतीविषयकप्रीतेरेव ग्रहणात् तत्रैव तात्पर्यपर्यवसानाच्च ।

[वृत्तिः] अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥११८॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

[कमला०] आदिशब्दोपात्तस्य भावस्य भावाङ्गतामाह । राजानं प्रति कवेरुक्तिः । एवं श्लोकपञ्चकेऽपि ।

[सरि०] व्यङ्ग्यस्यापराङ्गत्वोदाहरणप्रसङ्गे रसादिरित्यत्र गृहीतादिपदोपात्तस्य भावस्य भावाङ्गतामुदाहरति अत्युच्चा इति । कविः कश्चिद्राजानं कञ्चित्स्तौति । अत्युच्चाः गिरयः तथा स्फाराः अम्भोधयः परितः स्फुरन्ति तान् एतान् अपि बिभ्रती किमपि न क्लान्ता असि तुभ्यम् नमः इति भुवः स्तुतिम् आश्चर्येण मुहुर्मुहुः यावत् प्रस्तौमि तावत् इमाम् बिभ्रत् तव भुजः स्मृतः ततो वाचः मुद्रिता इत्यन्वयः । अत्युच्चाः परमोन्नता विशालाश्च । गिरयः पर्वताः । तथा एवमेव । स्फाराः विशालाः अम्भोधयः समुद्राः च परितः सर्वतः । स्फुरन्ति विलसन्ति यद्वा गिरयः सन्ति समुद्रास्तु न केवलं सन्त्यपितु स्फुरन्त्यपि । तान् तथाविधान् । एतान् पर्वतसमुद्रप्रभृतीनन्यानपि त्वदाश्रितान् । अपि च । बिभ्रती धारयति । किमपि स्वल्पमपि । न नैव । क्लान्ता परिश्रान्ता । असि वर्तसे । अतः तुभ्य तथाविधायै ते । नमः प्रणामाः यद्वा करोमीति । इति इत्थम् । भुवः सर्वाधारायाः पृथ्व्याः । स्तुतिं स्तवनम् । आश्चर्येण परमविस्मयेन । यावत् यदा । मुहुर्मुहुः वारंवारम् । प्रस्तौमि उपस्थापयामि । तावत् तदैव । इमां धृतगिरिसमुद्रादिसकलचराचरपदार्थाम् भुवम् । बिभ्रत् धारयन् । तव भवतः । भुजः बाहुः । स्मृतः स्मृतिपथमायातः । ततः तत्स्मृत्या चकितोऽहम् तेन । वाचः भुवः स्तुतिवचनानि । मुद्रिताः कुण्ठिता इति । लक्ष्ये प्रकृतोपयोगमाह अत्रेति । अत्र पद्येऽस्मिन् भूविषयः पृथिवीसम्बद्धः । रत्याख्यः प्रीतिसंज्ञितः । भावः रतेर्भूविषयत्वेन भावत्वमेव । राजविषयस्य नृपसम्बद्धस्य । रतिभावस्य भक्तेः । अङ्गत्वमायातीति । अयम्भावः गिरिसमुद्रादिलोकानां सततधारणेनाप्यखिलायाः भुवःस्तुतिरूपस्तद्विषयरत्याख्यभावः तस्या अपि धारणेनाऽप्यखिलराजभुजविषयरतिभावस्याङ्गतां याति तत्रैव वाक्यार्थपर्यवसानादिति ।

[वृत्तिः] बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥११९॥

अत्र भावस्य रसाभासभावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ।

[ कमला० ] रसाभासभावाभासयोर्भावाङ्गतामाह वन्दीकृत्येति । हे नृप ! तव सैनिकाः द्विषां वधूर्वन्दीकृत्य पश्यतां प्रेयसां पश्यतः प्रियाननादृत्य अनादरे षष्ठी । ताः श्लिष्यन्तीत्यर्थः । आलिङ्गन्ति लान्ति गृह्णन्ति । तैः प्रत्यर्थिभिः शत्रुभिस्त्वमिति स्तूयसे इति किमस्माकमित्यादि । अत्रेति परस्त्रीष्वालिङ्गनादेरनौचित्यात् पूर्वार्द्धे तद् गम्यः शृङ्गाररसाभासः । शत्रूणां राज्ञि वस्तुतो रतेरभावेनाहार्यत्वादुत्तरार्धे भावाभासः । तौ राजविषयरत्याख्यभावाङ्गमित्यर्थः ।

[ सरि० ] व्यङ्ग्यस्यापराङ्गत्वोदाहरणप्रयङ्गे रसभावाभासयोर्भावाङ्गत्वमुदाहरति वन्दीकृत्येत्यादि । हे नृप ! ते सैनिकाः ते द्विषाम् मृगदृशः बन्दीकृत्य पश्यताम् प्रेयसाम् ताः श्लिष्यन्ति प्रणमन्ति परितः लान्ति परितः चुम्बन्ति तत् औचित्यवारांनिधे अस्माकम् सुकृतैः अस्माकम् दृशोः निपतितः असि अस्माकम् अखिलाः विपदः विध्वस्ताः इति तैः प्रत्यर्थिभिः स्तूयसे इत्यन्वयः । हे नृप हे राजन् ! ते तव भवतः । सैनिकाः भटाः । ते भवतः । द्विषां शत्रूणाम् । मृगदृशः हरिणाक्ष्यः प्रमदा इति । वन्दीकृत्य बलादाहृत्य । पश्यतां विलोकयताम् । प्रेयसां प्रियतमानाम् । पश्यतस्ताननादृत्येति भावः षष्ठी चानादरे इति ज्ञापनात् । ताः द्विषत्प्रमदाः श्लिष्यन्ति सुरतायालिङ्गन्ति । प्रणयन्ति प्रसादनाय हठाश्लेषजनितकोपशान्त्यर्थमिति नमस्कुर्वन्ति । परितः इतस्ततः । लान्ति गृह्णन्ति सुरतायेतस्ततो नयन्ति निर्जनदेशान्वेषणाय । परितः इतस्ततः यत्र लब्धं तत्र तत्र कामशास्त्रनियमविपरीतमपि यत्तत्वात्त्वरावेशाच्च । चुम्बन्ति निक्षन्ति । च । तत् तथापि तथाविधानौचित्यप्रवर्तनेऽपि । भवान् । औचित्यवारांनिधे ! औचित्यस्य उचितनिर्वाहस्य वारां निधेः समुद्रस्ततसम्बुद्धौ । 'तत्पुरुषे कृति बहुलम्' इति बाहुलकात् षष्ठ्या अलुक् । अस्माकं नः। सुकृतैः पूर्वार्जितपुण्यैः । अस्माक नः । दृशोः नयनयोः । निपतितः समागतः । असि विद्यसे । अस्माकं नः । अखिलाः समग्राः । विपदः आपत्तयः । विध्वस्ताः प्रणष्टाः । इति इत्थम् । तैः तादृशैः । प्रत्यर्थिभिः द्विषद्भिः । स्तूयसे प्रार्थ्यसे । इति । अनुचिताचरणेऽपि उचितकारित्वेन त्वं स्तूयसे इति । लक्ष्ये प्रकृतोपयोगमाह अत्रेति । अत्र काव्येऽस्मिन् । प्रथमार्धद्वितीयार्धद्योत्यौ पद्यस्य प्रथमार्धेन द्योत्यो यो हि शृङ्गाररसाभासः

अननुरक्तविषयतया परस्त्रीविषयतया च श्रृङ्गारस्य तत्राभासत्वमनौचित्यप्रवर्तितास्तदाभासा इति कथनात् । द्वितीयार्द्धेन प्रकाशितो रतिभावाभासस्तस्य शत्रुविषयकतयाऽस्वाभाविकत्वेनाहार्यत्वात् च । तौ । रसाभासभावाभासौ श्रृङ्गाराभासरत्याभासौ । भावस्य प्रकृतराजविषयकरतिभावस्य कविनिष्ठस्य । अङ्गमिति । अयमाशयः—अत्र हि कविनिष्ठो राजविषयकरतिभावश्चारुत्वपर्यवसायित्वाद्वाक्यार्थस्तस्य च अननुरक्तपरस्त्रीविषयत्वेनौचित्यप्रवर्तितः पद्य-पूर्वार्द्धद्योत्यः श्रृङ्गारः शत्रुविषयकत्वेनौचित्यप्रवर्तिता हि पद्यापरार्धद्योत्यो रतिभावाभासश्चाङ्गमिति रसभावाभासयोर्भावाङ्गत्वेन मध्यमकाव्यस्योदाहरणमिदम् । न चाऽत्र कविनिष्ठराजविषयकरतिभावस्य प्राधान्याद् ध्वनित्वं शङ्क्यं तस्य केवलमनुभावगम्यत्वाद्रसभावाभासयोस्तु वाच्यद्योत्यत्वात् तर्हि कथं तस्याङ्गित्वमित्यपेक्षायामुच्यते सर्वस्यापि अन्ते ध्वनावेव पर्यवसानात् तात्पर्यपर्यालोचनयेति । रसाभासभावाभासयोरङ्गत्वादत्र ऊर्जस्विनामालङ्कारः । यथोक्तम् 'रसभावौ तदाभासौ भावस्य प्रशमस्तथा । गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ॥ रसवत्प्रेय ऊर्जस्वी समाहितमिति क्रमात्' इति ।

[ वृत्तिः ] अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
दद‍ृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥१२०॥

अत्र भावस्य भावप्रशमः ।

[ कमला० ] मदाऽऽख्यभावप्रशमो राजगोचरभावस्याङ्गमिति शेषः ।

[ सरि० ] व्यङ्ग्यस्यापराङ्गत्वेन मध्यमकाव्यस्योदाहरणप्रसङ्गे भावप्रशमस्य भावाङ्गतामुदाहरति अविरलेत्यादि । कस्यचित्कवेः राजानमुद्दिश्य कथनमिदम् । तव वैरिणाम् अविरलकरवालकम्पनैः मुहुः भ्रुकुटीतर्जनगर्जनैः मदः ददृशे सः तव ईक्षणे क्षणात् क्व अपि गतः इत्यन्वयः । तव भवतः । वैरिणां शत्रूणाम् । अविरलकरवालकम्पनैः अविरलमनवरतं करवालस्य खड्गस्य कम्पनैश्चालनैः । मुहुः शश्वत् । भ्रुकुटीतर्जनगर्जनैः भ्रुकुटीभिः भ्रून्नयनैः तर्जनैश्छिन्धि भिन्धीत्यादिकथनैः गर्जनैः हुङ्कारसिंहनादरूपैः । मदः अभिमानः । ददृशे दृष्टिपथमायातः अस्माभिरिति शेषः । अविरलेत्यत्र प्रकृत्यादिभ्य उपसङ्ख्यानमिति तृतीया धान्येन धनमितिवत् । सः ताद‍ृशः करवालकम्पनादिभिर्व्यक्तो मदः । तव भवतः । ईक्षणे दर्शने । क्षणात् निमेषमात्रेण । क्वापि अज्ञातप्रदेशम् । गतः पलायित इति । तव वैरिणां प्रवृद्धो गर्वस्तव दर्शनमात्रेण तिरोभूत इत्याशयः । लक्ष्ये प्रकृतोपयोगमाह अत्रेति । अत्र काव्येऽस्मिन् । भावस्य राजविषयकरतिभावस्य कविनिष्ठस्य । भावप्रशमः वैरिगतगर्वाख्यसञ्चारिभावस्य शान्तिः । अङ्गमित्याशयः । न च मदो

गत इत्यनेन भावस्य स्वशब्दवाच्यत्वं शङ्क्यं तस्य तु न मदो गत इत्यनेनापितु करवालकम्पनभ्रूलयनतर्जनगर्जनादिगताभेदार्थकतृतीयाभ्यां द्योतनात्। यत्तु कैश्चित् मदेऽचेतने गमनकार्यासम्भवान्मुख्यार्थबाधेन नाशो लक्ष्यते तदतिशयश्च व्यङ्ग्य-स्तस्यैव प्रशमः इत्युक्तं यच्चापरैर्गमनस्य मुख्यार्थस्य बाधाच्छान्त इत्यर्थो लक्ष्यते तेन प्रशमातिशयो व्यज्यत इति तदुभयमप्यनादरणीयं वृत्तौ भावप्रशम इत्यत्र प्रशब्दस्या-तिशयार्थकत्वेन अतिशयस्य च व्यङ्ग्यत्वेनाविवक्षितत्वादिति बालबोधिन्यां स्पष्टम्। अत्र भावप्रशमस्य भावाङ्गत्वेन समाहितालङ्कारः।

[ वृत्तिः ] साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते।
अन्याभिधायि तव नाम विभो गृहीतं
केनाऽपि तत्र विषमामकरोदवस्थाम् ॥१२१॥

अत्र त्रासोदयः।

[ कमला० ] साकमिति। कुरङ्गकदृशा सुहृद्भिरपि साकमित्यन्वयः। नाम संज्ञा। विषमां कठिनाम्। अत्रेति त्रासाख्यभावोदयो भावाङ्ग-मित्यर्थः।

[ सरि० ] व्यङ्ग्यस्य गुणीभावेन मध्यमकाव्योदाहरणप्रसङ्गे भावोदयस्य भावाङ्गत्वमुदाहरति साकमित्यादि। हे विभो! ते वैरिणि कुरङ्गदृशा सुहृद्भिः अपि साकम् मधुपानलीलाम् कर्तुम् प्रवृत्ते तव केनापि गृहीतम् अन्यभिधायि नाम तत्र विषमाम् अवस्थाम् अकरोत् इत्यन्वयः। हे विभो! हे प्रभो! ते तव। वैरिणि शत्रौ। कुरङ्गदृशा हरिणाक्ष्या। सुहृद्भिः मित्रैः। अपि च। साकम् सह। मधुपानलीलाम् मद्यपानरूपक्रीडाम्। कर्तुं विहर्तुम्। प्रवृत्ते संलग्ने। सति। तव भवतः। केनाऽपि केनचित्। गृहीतमुच्चरितम्। अन्याभिधायि अने-कार्थकतया त्वद्भिन्नस्यापि बोधकम्। नाम संज्ञा। तत्र तस्मिन्नवसरे। विषमाम् विपरीतामेव कातरेक्षणस्वरकम्पादिरूपाम्। अवस्थाम् दशाम्। अकरोत् व्यदधादिति। लक्ष्ये प्रकृताभियोगमाह अत्रेति। अत्र काव्येऽस्मिन्। त्रासोदयः विषमावस्थाद्योत्यत्रासभावोदयः। कविनिष्ठराजरतिभावस्याङ्गमिति। क्रीडापरे प्रमुदितचेतसि वैरिणि नाम वाचकपदमात्रग्रहणेन या विषमावस्था तद्द्योतितो यस्त्रासभावस्तस्य कविनिष्ठराजविषयकरतिभावस्याङ्गं तत्प्रकर्षाभिधायित्वादिति भावोदयस्य भावाङ्गत्वेन मध्यमकाव्यस्योदाहरणमिदम्।

[ वृत्तिः ] असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् पटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥१२२॥

अत्रावेगधैर्ययोः सन्धिः ।

[ कमला० ] असोढेति शैलदुहितुर्गौर्यास्तपसोऽसोढा । तपोजन्यक्लेशासहिष्णुरित्यर्थः । कपटवटुश्छद्मब्रह्मचारी । अत्रेति । त्वरया आवेगः शैथिल्येन धैर्यम् ।

[ सरि० ] व्यङ्ग्यस्य गुणीभावेन मध्यमकाव्योदाहरणप्रसङ्गे भावसन्धेर्भावाङ्गत्वमुदाहरति असोढेत्यादि । तत्कालोल्लसदसहभावस्य तपसः असोढा अथ च शैलदुहितुः कथानां विस्रम्भेषु रसिकः कपटवटुवेषापनयने त्वराशैथिल्याभ्याम् युगपत् अभियुक्तः स्मरहरः वः प्रमोदम् दिश्यात् इत्यन्वयः । तत्कालोल्लसदसहभावस्य तत्काले तत्क्षणे उल्लसन्नुदयन् असहभावः कालापेक्षासहिष्णुता गौर्या इति यत्र तथाभूतस्य । तपसः तपश्चर्यायाः । असोढा सोढुमशक्तः । अथ च अपरतः । शैलदुहितुः पार्वत्याः । कथानां स्वानुरागव्यञ्जकालापानाम् । विस्रम्भेषु प्रणयेषु । रसिकः सतृष्णः । अत एव कपटवटुवेषापनयने कपटवटोः व्याजब्रह्मचारिणो वेषस्य कृत्रिमाकारस्यापनयने परित्यागे । त्वराशैथिल्याभ्यां त्वरयाऽऽवेगेन शैथिल्येनानौत्सुक्येन च ताभ्याम् । युगपत् समकालमेव । अभियुक्त आविष्टः । स्मरहरः शिवः । वः युष्मभ्यमुपलक्षणेनास्मभ्यमपि । प्रमोदम्मुदम् । दिश्यात् दद्यादिति । लक्ष्ये प्रकृतोपयोगमाह अत्रेति । अत्र काव्येऽस्मिन् । आवेगधैर्ययोः त्वरागम्य आवेगः शैथिल्यगम्यं धैर्यम् । गौर्याः साक्षाल्लाभाय कपटवटुवेषापसरणे त्वरा तत्कृतस्वानुरागविषयककथाश्रवणाय तदपनयने शैथिल्यं साक्षाद् दर्शने तदभावादिति तयोर्भावयोः । सन्धिः सम्भूयावस्थितिः । अङ्गमिति । कविनिष्ठशिवविषयकरतिभावस्येति शेषः । तेन मध्यमकाव्यस्योदाहरणमिदम् ।

[ वृत्तिः ] पश्येत्कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर ह ह हा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते ॥१२३॥

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता। एते च रसवदाद्यलङ्काराः। यद्यपि भावोदयभावसन्धिभावशबलत्वानि नालङ्कारतयोक्तानि तथापि कश्चिद् ब्रूयादित्येवमुक्तम्।

यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद् व्यवहारः।

[ कमला० ] अत्र शङ्केति पश्येत्कश्चिदिति शङ्का। चल चपलेत्यसूया का त्वरेति धृतिः। अहं कुमारी तेनेदं नोचितमिति स्मृतिः। हस्तावलम्बं वितरेति श्रमः। हहहेति दैन्ये। व्युत्क्रम इति विबोधः। क्वासीत्यौत्सुक्यम्। फलकिसलयानि परेण वञ्चनार्थं दत्तानि गृह्णीतेत्यर्थः। एषां शबलताभावस्याङ्गमित्यर्थः। पूर्वं यदुक्तं रसवदादयो गुणीभूतव्यङ्ग्ये उदाहरिष्यन्त इति तदाह एते चेति। रसस्य गुणत्वे रसवदलङ्कारः भावस्य गुणत्वे प्रेयोऽलङ्कारः रसाभासस्य गुणत्वे ऊर्जस्विदलङ्कारः भावाभासस्य गुणत्वे समाहितालङ्कारः। एवम्भावशान्त्यादेरङ्गत्वे रसवदादित्वमूह्यम्। य एते पूर्वमुक्तास्तेऽयं सरसनेत्यादिभिरुदाहृता इत्यर्थः। कश्चिदिति। इतरोत्कर्षकत्वमलङ्कारत्वम्। तेन यद्यपि जीर्णैर्भावोदयादिष्वलङ्कारत्वं नोक्तं तथापि वक्तुमर्हमित्यस्माभिरुक्तमित्यर्थः। नन्वयं सरसनेत्यादौ करुणस्य प्राधान्याद् गुणीभूतव्यङ्ग्यत्वाभावात्कथं मध्यमकाव्यत्वमत आह यद्यपीति। स्वभेदैर्गुणीभूतव्यङ्ग्यभेदैरादिपदाद्विजातीयभेदैरङ्गाङ्गित्वे सङ्करो द्वयोः प्राधान्ये संसृष्टिः। प्राधान्यञ्च चमत्कारित्वं तात्पर्यविषयत्वं वा कवेः शृङ्गारे तात्पर्ये तस्य गुणत्वान्मध्यमत्वं करुणे तात्पर्ये तु मुख्यध्वनित्वमेवेत्याशयः।

[ सरि० ] व्यङ्ग्यस्य गुणीभावेन मध्यमकाव्योदाहरणप्रसङ्गे भावशबलताया भावाङ्गत्वमुदाहरति पश्येदित्यादि। हे पृथ्वीपरिवृढ! अरण्यवृत्तेः भवद्विद्विषः फलकिसलयानि आददाना कन्या कश्चित् पश्येत् कश्चित् रे चपल चल का त्वरा अहम् कुमारी हस्तालम्बम् वितर हहहा व्युत्क्रमः असि क्व यासि इति अभिधत्ते इत्यन्वयः। हे पृथ्वीपरिवृढ! पृथ्व्याः भूम्याः परिवृढोऽधिपस्तत्सम्बुद्धौ। अरण्यवृत्तेः अरण्यं काननं वृत्तिराजीविका निवासो वा यस्य तथाविधस्य त्वद्भयेन काननमाश्रितस्य। भवद्विद्विषः भवतस्तव विद्विट् शत्रुस्तस्य। फलकिसलयानि फलं सस्यादिकं भक्षणार्थं किसलयं पल्लवं आभूषणार्थञ्च तानि। आददाना गृह्णन्ती। कन्या अजातपरिणया सुता। कश्चित् फलादिसमर्पणव्याजेन तत्रागतं प्रच्छन्नकामुकम्। जातानुरागा सतीति शेषः। यदा स सुरताशयेन हस्ते तां गृह्णाति तदा कश्चित् अपरो जनः। पश्येत् विलोकयेत्। आलिङ्गनपरं तं रे चपल

उद्दण्ड ! चल दूरमपसर । चुचुम्बिषन्तं तं का । त्वरा सम्भ्रमः । बलाच्चुम्बन्तं तम् । अहं कुमारी अस्मि नेदृशं स्वतन्त्राचरणं मयि युक्तमिति । सुरतश्रमखिन्ना सति उत्थानाय हस्तालम्बं करावलम्बनम् । वितर देहि । सुरतान्ते पश्चात्तापेन हहहा इति दैन्ये । व्युत्क्रमः विपरीताचरणं कन्यागमनरूपम् । असि इति त्वमर्थे विभक्तिप्रतिरूपकमव्ययम् । त्वम् । क्व कुत्र । यासि गच्छसि मां विहायेति । अभिमत्ते वदति इति प्रचलिता व्याख्या । केचित् हहहा व्युत्क्रमः क्वासि इति क्रमेणापि व्याख्यान्ति । केचिन्नव्यास्तु पद्यमिदमन्यथाऽपि व्याख्यान्ति । यथा—रे चपल सश्रृङ्गारचेष्ट त्वां कश्चित्समर्यादो जनः पश्येत् अत इतोऽपसर इति । अथ तस्मिन्नपसर्पति किमुक्तिमात्रे एव गच्छसि का वा भवतस्तादृशी त्वरा । अथ तस्मिन्नागते सत्याह रे अहं कन्या पितृपराधीना । त्वया सह स्वेच्छया रन्तुं नाहं सिद्धा इति । तथेति तस्मिन्नपयाते आगच्छ हस्तावलम्बनं देहि श्रान्ताऽस्मीति । उपसर्पति तस्मिन् हहहा कोऽयं व्युत्क्रम इति । स च यदा भीतः अपसर्पति प्रिय ! मां परित्यज्य क्व वा यासि त्वमिति । लक्ष्ये प्रकृतप्रयोजनसिद्धिमाह अत्रेति । अत्र पद्येऽस्मिन् शङ्केति शङ्का 'पश्येत्कश्चिदि'त्यनेन द्योतिता । असूया 'चल चपल रे' इत्यनेन द्योतिता काकुविशेषसहकाराद्रागानुविद्धा धृतिः का त्वरेति द्योतिता सम्भ्रमवारणरूपा स्मृतिः अहं कुमारीति द्योतिता स्वातन्त्र्यमनुचितमितिरूपा श्रमः हस्तालम्बं वितरेति द्योतितः सम्भोगस्य प्राथमिकत्वेन दैन्यं हहहेति द्योतितं श्रमसंवलितम् विबोधः व्युत्क्रम इति द्योत्यः विपरीताचारगमकः औत्सुक्यं क्वासि यासीति द्योतितं प्रियविरहवारणरूपमिति तेषां पूर्वपूर्वोपमर्देन उत्तरोत्तरोदयरूपा तिलतण्डुलन्यायेन समप्राधान्येन चर्व्यमाणतारूपा वा । शवलता । शवलतायाश्च राजविषयप्रकर्षवर्द्धनत्वेन तद्विषयककविनिष्ठरतिभावस्याङ्गत्वमिति । प्रच्छन्न-कामुकं युवानं प्रत्यासक्ता कन्या हस्ते गृह्णन्तं तं पश्येत्कश्चित् तेन मुञ्चेति समाश्लिषन्तं चल चपल रे दूरमिति सुरताय प्रार्थयन्तं का त्वरेति बाहुभ्यामाददानं मुञ्चाऽहं कुमारी पित्रधीनेति मुञ्चति तस्मिन् तत्स्पर्शजन्यानन्दमोहिता हस्तालम्बं वितरेति विलम्बिते तस्मिन् हहहेति व्युत्क्रमेति क्व यासीति च कथयतीति क्रमेण तैस्तैः कथनैर्द्योतितानां शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यभावानां पूर्वपूर्वोप-मर्देनोत्तरोत्तरोदयात्समप्राधान्येन एकमन्वेकस्योदयाद्वा या शवलता सा च कवि-निष्ठराजविषयकरतिभावस्य व्यक्तौ साहाय्यमृच्छतीति भावशवलताया भावा-ङ्गत्वस्योदाहरणमिदम् ।

पूर्वोक्तस्ववचनेन सह प्रकृतं सङ्गमयति एते इति । एते अनन्तरोदाहृता रसस्य रसाङ्गत्वमित्यादिरूपा रसवदाद्यलङ्कारा: रसवदादयः रसवत्प्रेय ऊर्जस्वि-समाहिताख्या अलङ्कारा इति । यच्च 'ते च गुणीभूतव्यङ्ग्यभिधाने उदाहरिष्यन्ते'

इति प्रागुक्तं तद्गतार्थमनेनेति भावः। यथा हि रसस्य रसाङ्गत्वे रसवदलङ्कारो यथा 'अयं स रशनोत्कर्षीत्यत्र।' एवमेव रसस्य भावाङ्गत्वेऽपि। यथा कैलास-लयेत्यत्र। भावस्य रसाङ्गत्वे वा भावस्य भावाङ्गत्वेऽपि प्रेयोऽलङ्कारो यथा अत्युच्चाः परित इत्यत्र। रसाभासभावाभासयोः रसभावाङ्गत्वे ऊर्जस्विनामा-लङ्कारो यथा वन्दीकृत्य नृपेत्यत्र। भावशान्तेः रसभावाङ्गत्वे समाहितालङ्कारो यथा अविरलकरवालेत्यत्र। तर्हि भावोदयादीनामङ्गत्वं कथमुदाहृतमित्यपेक्षा मा भूदित्याह यद्यपीति। यद्यपि सामान्यतस्तु। भावोदयेति भावोदय एकस्य प्रसङ्गे सति तदनाहत्यापरस्य भावस्योत्पत्तिः यथा साकं कुरङ्गदृशामित्यत्र हर्षावसरे त्रासस्योदयस्तस्य च रतिभावाङ्गत्वम् भावसन्धिः एकस्मिन्नवसरे द्वयोर्भावयोः समप्राधान्येनोपस्थितिर्यथा अरुोढा तत्कालोल्लसदित्यत्र आवेगधैर्ययोस्तयोश्च रतिभावाङ्गत्वं भावशवलत्वम् एकस्मिन्नवसरे बहूनां भावानां पूर्वपूर्वोपमर्दनेनोत्त-रोत्तरोदयो वा तिलतण्डुलन्यायेन समप्राधान्येन चर्वणीयता यथा पश्येत्कश्चिदित्यादौ शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शवलता तस्याश्च रतिभावाङ्गत्वञ्च तानि। अलङ्कारतया गुणीभावेऽप्यलङ्कारत्वेन। पूर्वाचार्यैः न। उक्तानि निर्दिष्टानि। तथापि तथास्थितावपि। कश्चित् कोऽप्यपरः पश्चाद्वर्ती वा। ब्रूयात् तान्यलङ्कारत्वेन गृह्णीयाद्यतस्तेषां तदभिधानयोग्यता स्वस्त्येवातः कश्चिदपि तथाऽभिधातुं शक्नोति। इति हेतोः। एवं तेषामलङ्कारत्वं गुणीभावे। भवतं कथितमुदाहृतञ्च। अयमाशयः—किञ्चालङ्कारत्वं नामेतरोत्कर्षकत्वमेव। तच्च गुणीभूते भावोदयादावपि अस्त्येवेति तेषामलङ्कृतित्वं गुणीभावे नापेक्षितुं शक्यते। यद्यपि तत्प्राचीनैर्नोक्त तथापि तथासम्भवादस्माभिरुक्त-मुदाहृतञ्चेति।

ननु 'अयं स रशनोत्कर्षी' इत्यादौ अस्त्येव करुणस्य प्राधान्यं तेन कथं तत्र गुणीभूतव्यङ्ग्यविषयतेत्याकाङ्क्षायामाह 'यद्यपीति। यद्यपि सामान्यतः। सः तादृशः। कश्चित् कोऽपि। विषयः वस्तु। नास्ति न विद्यते न सम्भवति। यत्र यस्मिन् विषये। ध्वनिगुणीभूतव्यङ्ग्ययोः व्यङ्ग्यस्य प्राधान्ये यो ध्वनिस्तस्य तस्य प्राधान्येन गुणीभावाद्यद्गुणीभूतव्यङ्ग्यं च तयोः। स्वप्रभेदादिभिः स्वस्वभेदप्रभेदैः। सह। सङ्करः परस्परापेक्ष्यत्वेन मिश्रणं सन्देहाङ्गाङ्गिभावैकव्यञ्जकानुप्रवेशरूपम्। वेति पक्षान्तरे। संसृष्टिः मिथोऽन-पेक्ष्य स्थितिः। नास्ति न भवति अपितु सर्वत्र सा स्थितिस्तु निरपवादरूपेण भवत्येव। तथाऽपि तथा सत्यपि। प्राधान्येन मुख्यभावेन। व्यपदेशाः संज्ञाः। भवन्ति सम्पद्यन्ते। सत्स्वपि बहुषु व्यपदेशस्तु प्रधानमाश्रित्यैव भवति यथा राजनि तदनुचरेषु च बहुषु गच्छत्सु राजाऽसौ गच्छतीतिवत्। इति हेतोः इति न्याय-

माश्रित्य। क्वचित् कुत्रचित्। केनाचत् केनाऽपि यत्र यस्य चारुत्वपर्यवसायित्वेन प्राधान्य वा तात्पर्यविषयत्वेन ग्रहणं तत्र तस्य तद्व्यपदेशेन। व्यवहारः अभियोजनेति। यत्र यस्य चमत्कारस्तत्र तेनैव व्यवहार इति। तेन अयं स रशनोत्कर्षी इत्यादौ करुणस्य गुणीभूतव्यङ्ग्यशृङ्गारमुखेनैव चमत्कारित्वात्तेनैव व्यवहारो न ध्वनित्वेन। प्राधान्यं तु चमत्कारप्रयोजकत्वमेव। अत एव क्वचित्तात्पर्यस्य ध्वनौ पर्यवसाने ध्वनित्वव्यवहारोऽपि। न हि स्वरूपेण ध्वनिर्वा गुणीभूतव्यङ्ग्यमेव तत्तु यत्र यस्य प्राधान्येन विवक्षा तत्र तस्य प्राधान्यात्तद्-व्यपदेश एवेति।

[ वृत्तिः ] जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥१२४॥

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः।

[ कमला० ] अनुरणनरूपस्योपमालङ्कारस्य वाच्याङ्गत्वमाह जनस्थाने इति। मया कनके मृगतृष्णा मरीचिकाभ्रान्तिस्तद्वदन्धया बुद्ध्या जनस्थाने लोकगृहे भ्रान्तं रामपक्षे कनकमृगो मारीचस्तस्य तृष्णा जनस्थानं पञ्चवटी तथा वै निश्चितं देहीति वचः उदश्रुयथा प्रलपितं प्रलापोऽनर्थकं वचः वृथैवोक्तमित्यर्थः, पक्षे वैदेही सीतेति वचः। भर्तुर्भरणकर्तुः परिपाटीषु सेवारचनासु का घटनाप्रकारो न कृता वद किन्तु सर्वोऽपि कृता यद्वा कामर्तुः कुत्सितप्रभोर्वदनपरिपाटीषु वचोभङ्गीषु घटनाऽलङ्कृता, पक्षे लङ्काभर्तुः रावणस्य वदनपरिपाट्यां वक्त्रपङ्क्तौ इषुघटना शरसन्धानं कृतं कुशलं वसु यस्य तत्ता, पक्षे कुशलवौ सुतौ यस्याः सा सीता। अत्रेति मयाप्तं रामत्वमिति कवौ रामत्वारोपरूपस्यातिशयोक्त्यलङ्कारस्य जन-स्थानादिपदगम्यो रामेण सहोपमानोपमेयभावः साम्यमङ्गतां पोषकतां नीतः। वाच्यतामिति पाठे कवौ रामत्वबाधाद्रामसदृश इत्यर्थो वाच्यवत्प्रतीयते तदङ्गजन-स्थानादिपदगम्यं साम्यमित्यर्थः।

[ सरि० ] व्यङ्ग्यस्य गुणीभावेन यन्मध्यमकाव्यं तदुदाहरणप्रसङ्गेऽनुस्वानो-पमालङ्कारव्यङ्ग्यस्य गुणभावमुदाहरति जनेत्यादि। मया कनकमृगतृष्णान्धितधिया जनस्थाने भ्रान्तं वैदेहि पक्षे वैदेहि इति वचः प्रतिपदम् उदश्रु प्रलपितम् का भर्तुः वदनपरिपाटीषु घटना अलम् कृता यद्वा भर्तुः परिपाटीषु का घटना न अलङ्कृता, पक्षे लङ्काभर्तुः वदनपरिपाटीषु घटना कृता कनकमृगतृष्णान्धितधिया जनस्थाने

भ्रान्तम् वैदेही इति वचः प्रतिपदम् उदश्रु प्रलपितम् लङ्काभर्तुः वदनपरिपाटीषु घटना कृता । आप्तम् कुशलवसुता तु न अधिगताः इत्यन्वयः । मया वक्त्रा । कनकेति कविपक्षे कनके स्वर्णे या मृगतृष्णा मरीचिका तयाऽन्धिता भ्रमिता या धीर्बुद्धिस्तया यद्वा कनके मृगतृष्णया अन्धिता धीर्यस्य तथाविधेन मया । रामपक्षे कनकमृगे स्वर्णहरिणे तृष्णा भ्रान्तिस्तया अन्धितधिया । जनस्थाने कविपक्षे लोकगृहे रामपक्षे तदाख्यदाक्षिणात्यप्रदेशे पञ्चवटीसन्निधौ । भ्रान्तं पर्यटितं वृथैव परिक्रान्तम् । वैदेहीति कविपक्षे वै निश्चयेन देहि घत्स्व । रामपक्षे वैदेहि सीते ! इति इत्थम् । प्रतिपदमनुपादविक्षेपम् । उदश्रु उद्गतानि अश्रूणि वाष्पाः-यस्मिन् कर्मणि यथा स्यात्तथा । प्रलपितं निरर्थकमालपितम् । कृतेत्यादि कविपक्षे काभर्तुः कुत्सितस्वामिनः वदनपरिपाटीषु सेवादिषु । घटना विधानम् । अलङ्कृता आनुकूल्यं विहिता : यद्वा भर्तुः स्वामिनः । परिपाटीषु वचोभङ्गीषु । का । घटना । न अलङ्कृता । वद कथय । रामपक्षे लङ्काभर्तुः रावणस्य । वदनपरिपाटीषुघटना वदनानां मुखानां परिपाट्यां पङ्क्तौ इषूणां बाणानां घटना सन्धानम् । कृता विहिता । अत एव रामत्वं तत्तत्कार्यसाधनेन राघवत्वम् । आप्तमासादितम् । कुशलवसुता कविपक्षे कुशलं पर्याप्तं यद्वसु तस्य भावस्तत्ता । रामपक्षे कुशश्च लवश्च तौ सुतौ यस्याः सा सीतेति । न नैव । प्राप्ता उपलब्धेति । अलं पूर्णं कृत्वा काभर्तुः कुत्सितप्रभोः वदनं ध्यक्ता वाक् स्तोत्ररूपा तस्य परिपाटीषु परम्परासु घटना उद्योग इत्यपि व्याख्या सम्मता । अलमत्यर्थं व्यर्थ-मित्यपि । यथा रामेण कनकमृगतृष्णान्धितधिया जनस्थाने भ्रान्तं तथा मयाऽपि धनलाभमरीचिकया जनस्थाने राजभवनादौ भ्रान्तमेव । रामेण प्रतिपदं वैदेहीति वच उक्तं मयाऽपि वै देहि इति उक्तमेव । रामेण लङ्काभर्तुर्वदनपरिपाटीषुघटना कृता मयाऽपि काभर्तुर्वदनपरिपाटीषु घटना अलम् कृता यद्वा भर्तुः परि-पाटीषु(का)घटना न अलङ्कृता वद इत्थं मयाऽपि रामेण यद्यद्विहितं तत्तदाचरणेन रामत्वं तु प्राप्तं किन्तु आवयोरिदमवान्तरं यद्रामेण कुशलवसुता सीता प्राप्ता मया कुशल-वसुता तु न प्राप्तेति । लक्ष्ये प्रकृतोपयोगमाह अत्रेति । अत्र काव्येऽस्मिन् । शब्दशक्तिमूलानुरणनरूपः शब्दशक्त्युत्थोऽनुस्वानोपमः । रामेण । सह । उपमानोपमेयभावः कवेरिति शेषः । वाच्याङ्गतां वाच्यस्य कुशलवसुतां विनाऽपि रामत्वप्राप्तेर्वाक्यार्थस्य अङ्गतामुपस्कारकत्वेन पोषकताम् । नीतः प्रापित इति । यथोक्तं कमलाकर्यां मयाप्तं रामत्वमिति कवौ रामत्वारोपरूपस्य अतिशयोक्त्यलङ्कारस्य वाच्यस्य जनस्थानादिपदद्योत्यौ रामेण सहोपमानोपमेय-भावोऽङ्गम् । यद्वा कवौ रामत्वबाधाद्रामसदृश इत्यर्थो व्यङ्ग्योऽपि वाच्यवत्प्रतीयते तदङ्गं जनस्थानादिपदगम्यं साम्यमिति ।

शब्दशक्तिमूलत्वञ्चास्य जनस्थानकनकमृगवैदेहीलङ्काप्रभृतिशब्दानां परिवृत्य-सहत्वेन । पादत्रयद्योत्याऽपि रामेण सहोपमा मयाऽऽप्तं रामत्वमित्यनेन वाच्यतां नीतस्तदङ्गञ्च शब्दशक्तिमूलानुरणनरूपो सम्प्रति वियोग विसंष्ठुलाङ्गी ।

[ वृत्तिः ] आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एनां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥१२५॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनी-वृत्तान्ताध्यारोपेणैव स्थितः ।

[ कमला० ] अनुरणनरूपस्य वस्तुनो वाच्याङ्गत्वमाह आगत्येति । सूर्यः सम्प्रति प्रभाते आगत्य पादपतनेन रश्मिपातेन चरणपातेन चैनामम्भोजिनीं प्रसादयति विकासयति अनुनयति वेत्यर्थः । वियोगो विरहः पक्षियोगश्च तेन च विसंष्ठुलाङ्गीं कृशाङ्गीम् । अत्रेति । व्यङ्ग्यस्य नायकनायिकावृत्तान्तस्य वाच्ये रविकमलिनीवृत्तान्तेऽध्यारोपात्तत्पोषकत्वम् । व्यङ्ग्यं विनाऽपि वाच्यार्थोपपत्तेर्न तत्साकाङ्क्षत्वम् येन भ्रमिमरतिमितिवद् वाच्यसिद्ध्यङ्गत्वं स्यादिति वक्तुं निरपेक्षेत्युक्तम् । नायकयोश्च वृत्तान्तोपसर्जनत्वात्प्राधान्येन तदनुपस्थितेर्नोपमा-रूपकञ्चेत्याह वस्तुरूप इति । रसस्य वाच्याङ्गत्वेऽप्येतदेवोदाहरणम् । पादपतनावगतस्य सम्भोगस्य वाच्यरविकमलिनीवृत्तान्तपोषकत्वात् ।

[ सरि० ] व्यङ्ग्यस्य गुणीभावेन मध्यमकाव्यत्वोदाहरणप्रसङ्गेऽर्थशक्तिमूल-वस्तुरूपव्यङ्ग्यस्यापराङ्गत्वेन गुणभावमुदाहरति आगत्येत्यादि । हे तन्वङ्गि ! पश्य क्वचित् अपि क्षपितत्रियामः सहस्ररश्मिः सम्प्रति प्रभाते शनैः आगत्य एनाम् वियोगविसंष्ठुलाङ्गीम् अम्भोजिनीम् पादपतनेन प्रसादयति इत्यन्वयः । हे तन्वङ्गि ! हे कृशोदरि ! पश्य विलोकय । क्वचिदपि कुत्रचिदन्यस्थले एव द्वीपान्तरे नायिकान्तरे वा । क्षपितत्रियामः क्षपिताऽतिवाहिता त्रियामा रात्रिर्येन सः तथाविधः । सहस्ररश्मिः सहस्राणि रश्मयः किरणा यस्य । सूर्यः । सम्प्रति अधुना । प्रभाते उषःकाले । जाते सति । शनैः मन्दं मन्दं रहस्यभङ्गभियेति । आगत्य प्राप्य । एनाम् पुरोगताम् । तदनुरक्ताम् किन्तु वियोगविसंष्ठुलाङ्गीम् वियोगेन विरहेण विसंष्ठुलं सङ्कुचितं मुकुलितमिति यद्वा कृशतादिना पूर्वावस्थातो विसंवादि अङ्गं यस्यास्तथाभूताम् । अम्भोजिनीं कमलिनीम् । नायिकाविशेषञ्च ।

पादपातनेन किरणपातेन प्रणामेन। प्रसादयति विकासयति अनुनयति चेति। लक्ष्ये प्रकृतोपयोगमाह अत्रेति। अत्र काव्येऽस्मिन्। अर्थशक्तिमूलः शब्दस्य परिवृत्तिसहत्वेनार्थशक्त्युत्थः। वस्तुरूपः वस्तुव्यङ्ग्यस्वरूपः। नायकवृत्तान्तः नायकश्च नायिका च तयोर्वृत्तान्तः प्रसादनरूपवार्ता। अत्रैकशेषः 'पुमान् स्त्रिया' इति। निरपेक्षेति निरपेक्षस्तदसम्बद्धो यः रवेः सूर्यस्य कमलिन्याः पद्मिन्याश्च वृत्तान्तो वार्ता वाच्यरूपः तस्मिन् अध्यारोपेण समारोपितत्वेन। एव इत्यवधारणे न तु तद्व्यक्तमात्रत्वेन। स्थितः लब्धसत्ताक इति तस्य वाच्यरूपस्यापरस्यार्थस्याङ्गत्वमिति। न चास्य वाच्यसिद्ध्यङ्गत्वं सिद्धस्य वाच्यस्य पश्चादन्वयवशात्तदुपलब्धेः। तेनैवोक्तं स्वसिद्धिं प्रति निरपेक्षे रविकमलिनीवृत्तान्तेऽध्यारोपेण स्थित इति। न चात्रोपमा व्यङ्ग्याश्लेषाभावात्।

[ वृत्तिः ] वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥१२६॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत्।

[ कमला० ] तृतीयं भेदमाह भ्रमिमिति। जलदा एव भुजङ्गाः सर्पाः तज्जं विषं जलं गरलञ्च। वियोगिनीनां भ्रम्यादि कुरुते इत्यर्थः। भ्रमिर्भ्रान्तिररतिरप्रीतिः प्रलयो नष्टचेष्टत्वं ज्ञानशून्यत्वं वा मूर्च्छा इन्द्रियनिरोधो निष्क्रियत्वं वा तम आन्ध्यं मूर्च्छारूपं तम इत्यभेदो वा। अत्रेति। यद्यपि विषपदे गरलं वाच्यं न व्यङ्ग्यं तथापि जलदे भुजगत्वबाधादारोपितस्य च गरलजनकत्वायोगाद् दुःखजनकत्वेन जले गरलत्वे व्यङ्ग्ये सति जलदे भुजगत्वारोपः। न चान्योन्याश्रयः भ्रम्याद्यष्टविधकार्यस्य गरलत्वादेवोत्पत्तेः भुजगत्वोपपादकस्यान्यस्याभावात्। अतो गरलत्वमेव भुजगत्वसाधकमित्यर्थः।

[ सरि० ] व्यङ्ग्यस्य गुणभावेन मध्यमकाव्यत्वोदाहरणप्रसङ्गे वाच्यसिद्ध्यङ्गत्वेन व्यङ्ग्यस्य गुणभावेन यो हि तृतीयो भेदस्तन्निरूपणायोपक्रमते वाच्येति। वाच्यसिद्ध्यङ्गम् वाच्यस्य वाच्यार्थस्य सिद्धेः स्वविग्रहप्राप्ते रङ्गं पोषकमनिवार्यत्वेन। यथेति निदर्शने। अयमाशयः—यदा हि व्यङ्ग्यं स्वसिद्धये तन्निरपेक्षस्य वाच्यस्याङ्गतामायाति तदा तदपराङ्गत्वेन व्यवह्रियते यदा च तत्स्वसिद्धये व्यङ्ग्यमुखापेक्षिणो वाच्यस्याङ्गतां याति तदा तद्वाच्यसिद्ध्यङ्गत्वेन गृह्यते। अथवा स्वयमेव सिद्धस्य वाच्यस्य यदङ्गं तदपराङ्गं व्यङ्ग्यसाहाय्येन सिध्यतो वाच्यस्य यदङ्गं तद्वाच्यसिद्ध्यङ्गमिति। वाच्यसिद्ध्यङ्गं द्विविधमेकवक्तृपदवाच्याङ्गमन्यवक्तृपदवाच्याङ्गञ्च। तत्राद्यमुदाहरति भ्रमिमित्यादि।

जलदभुजगजम् विषम् प्रसह्य वियोगिनीनाम् भ्रमिम् अरतिम् अलसहृदयताम् प्रलयम् मूर्च्छाम् तमः शरीरसादम् मरणम् च कुरुते इत्यन्वयः। जलदो मेघ एव भुजगः सर्पस्तस्माज्जातमुद्भूतम्। विषं गरलम् पानीयमिति कर्तृ। प्रसह्य बलादेव। वियोगिनीनां विरहिणीनाम्। भ्रमिं चेतसोऽनवस्थाम्। अरतिं विषयेष्वरुचिम्। अलसहृदयतामनौत्सुक्यमौदासीन्यं वा। प्रलयमिन्द्रियव्यापाराभावम्। मूर्च्छां चित्तवैक्लव्यम्। तमः तमोगुणोद्रेकेणान्ध्यम्। शरीरसादम् देहकार्श्यम्। मरणं जीवोद्गमनारम्भो न तु मुख्यमरणमेव। चकारः पूर्वोक्तसमुच्चयार्थः। करोति विदधाति इति। लक्ष्ये प्रकृतोपयोगमाह अत्रेति। अत्र काव्येऽस्मिन्। हालाहलं गरलम्। यद् व्यङ्ग्यं जलेऽभिधानियमनेन विषपदेन द्योत्यम्। तद्। भुजगरूपस्य। वाच्यस्य वाच्यार्थस्य। सिद्धिकृत् साधयिता। हालाहलरूपव्यङ्ग्याभावे भुजगरूपवाच्यार्थस्यासिद्धेरिति। अयमाशयः—अत्र हालाहलरूपो विषपदार्थो व्यङ्ग्यः जलेऽभिधानियमात्। स च जलदभुजगेति रूपणस्य वाच्यस्य सिद्धिं करोति अन्यथा उपमासन्देहसम्भवात्। वृष्टिप्रकरणे प्रसिद्धिवशादभिधया विषपदेन गरलोपस्थितेः प्रकरणापेक्षया प्रसिद्धेरपि बलीयस्त्वादिति न वाच्यं प्रसिद्धाया गरलोपस्थितिस्तु जलाभिन्ने गरले जलदाभिन्नभुजगजत्वावगमादेव सर्वथा गरलप्रत्यायनन्तु व्यञ्जनाविषय एव अभिधाया तावतैव विरहात्। न च जलगरलयोर्जलदभुजगयोरुपमैव भ्रम्यादिकार्यस्य गरलादेवोत्पत्तेर्न तु तत्सदृशादिति। तेन स्थितमेतद्यत् जलदभुजगजं विषमित्यत्र विषशब्देन जलमभिधीयते गरलं तु व्यज्यत इति। तच्च व्यङ्ग्यं जलदं प्रति भुजगरूपणस्य वाच्यस्य सिद्धिं करोतीत्यस्य वाच्यसिद्ध्यङ्गत्वेन व्यङ्ग्यस्य गुणीभूतव्यङ्ग्यत्वमिति। विषपदस्य गरलार्थस्य वाच्यत्वे जलदभुजगयोः रूपणमेव न सिध्येदुपमाप्रसङ्गादुपमाप्रसङ्गे तु भ्रम्यादीनां जलादसम्भवाद् वाच्यार्थ एव बाधमाप्नुयादिति।

[ वृत्तिः ] यथा वा—

> गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
> किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा।
> इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
> माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥१२७॥

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिपदवाच्यस्य। एतच्चैकत्रैकवक्तृगतत्वेनापरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः।

[ कमला ] गच्छामीति। हे अच्युताहं गच्छामि च्युतं रेतः स्खलनं त्वद्रहित क्लीबेति न्यक्कारो ध्वन्यः फलञ्च नेति अनुतापो व्यङ्ग्यः। भवतो दर्शनेन

किं प्रीतिरुत्पद्यतेऽपितु नैव किन्तु सुरतेनेति भावः। किन्तु किञ्चेत्यर्थः। एवं सति हतजनः सपत्नीजनो विजनमेकान्तस्तत्स्थयोरावयोः सम्बन्धेऽन्यथाऽन्यत्सम्भोगादि सम्भावयति। अकीर्तिर्जातैव सा वरा फलोपधानेनैव जातेत्यर्थः। आमन्त्रणं सम्बोधनं तस्य भङ्गि स्वनः सा चाच्युत स्थिर! अद्यापि निरुद्योगोऽसीत्येवंरूपतया यद्वा भङ्गिश्चेष्टा ताभ्यां सूचितो यो वृथावस्थानखेदस्तेनालसामित्यर्थः। अत्रेति अच्युतपदे 'व्यङ्‌ग्य' निरुद्योगेत्यादि तद् वृथावस्थानादेर्वाच्यस्य सिद्धिकृदिति शेषः। तदाहरणद्वये भेदकमाह एतत्त्विति। एकत्राद्ये श्लोके एको वक्ता कविः अपरत्रान्त्ये पूर्वार्द्धे गोप्या उत्तरार्द्धे कवेरिति भिन्नवक्तृगतत्वेन वाच्यस्य सिद्धिकृदित्यनुषङ्‌गः।

[ सरि० ] व्यङ्‌ग्यस्य गुणभावेन मध्यमकाव्यत्वोदाहरणप्रसङ्‌गे भिन्नवक्तृगतत्वेन यो व्यङ्‌ग्यस्य वाच्यसिद्ध्यङ्‌गत्वेन गुणभावस्तमुदाहरति गच्छामीति। पूर्वार्धे गोप्या उत्तरार्धे कवेरिति भिन्नवक्तृगतत्वमस्य। हे अच्युत! गच्छामि भवतः दर्शनेन तृप्तिः उत्पद्यते किम् किन्तु हतजनः एवम् विजनस्थयोः अन्यथा सम्भावयति इति आमन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम् गोपीम् आश्लिष्यन् पुलकोत्कराञ्चिततनुः हरिः वः पातु इत्यन्वयः। हे अच्युत! न विद्यते च्युतं रेतःस्खलनं यस्येति हे क्लीब सम्भोगाक्षम! गच्छामि अन्यत्र गृहं वा यामि। भवतः तव। **दर्शनेन** विलोकनमात्रेण। **तृप्तिः** अभिलाषापूर्तिः। उत्पद्यते सम्पद्यते। किम् इति प्रश्ने क्षेपे च। अपितु नैवेत्याशयः। किन्तु प्रत्युत वृथैवेति। हतजनः दुष्टजनः सपत्नीप्रभृतिलोकः। एवमित्थमतृतीयत्वेन। **विजनस्थयोः** जनशून्यस्थानगतयोरावयोः। सम्बन्धे। अन्यथा अन्यदेव। सम्भावयति कल्पयति। त्वं निर्वीर्योऽसि। न तु ते दर्शनमात्रेण मे कामसन्तप्तायास्तृप्तिः सम्भवति। वृथैव जनोऽपवादं प्रचारयिष्यति इति। इति इत्थम्। आमन्त्रणेति आमन्त्रणस्य अच्युत इति सम्बोधनस्य भङ्गिः स्वनश्चेष्टा शैली वा तया सूचितं सङ्केतितं यद् वृथावस्थानं निष्प्रयोजनावस्थितिस्तेन यः खेदो दैन्यं तेनालसामुद्वीग्नाम्। गोपी गोपकन्यां गोपस्त्रियं वा। आश्लिष्यन् सुरताशयेन बाहुभ्यां गृह्णन्। **पुलकोत्कराञ्चिततनुः** पुलकस्य रोमोद्गमस्य उत्करः आविर्भावस्तेन अञ्चिता व्याप्ता तनुः शरीरं यस्य तादृशः। हरिः माधवः। वः युष्मान्। पायात् अपायादव्यादिति। लक्ष्ये प्रकृतोपयोगमाह अत्रेति। अत्र पद्येऽस्मिन्। अच्युतेति अच्युत-तृप्ति-अन्यथापदद्योत्यं यत्सुरताभावरूपव्यङ्‌ग्यम् तस्य। आमन्त्रणेति आमन्त्रणभङ्गिसूचितवृथावस्थानखेदालसामित्येतद्वाच्यस्य। अङ्‌गम्। तद् व्यक्ति विना एतद्विशेषणपदार्थस्य शरीरालाभादिति व्यङ्‌ग्यस्य वाच्यसिद्ध्यङ्‌गत्वेन गुणभाव इति। उक्तमेव ध्वनिकारेण—

"शब्दार्थशक्त्याऽऽक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः॥" इति।

उदाहरणद्वयस्य मिथो वैषम्यमुन्मेषयति एतदित्यादिना। एतत् व्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वञ्च एकत्र पूर्वोदाहरणे भ्रमिमित्यादौ। एकवक्तृगतत्वेन कविरूपैक-वक्त्राश्रयेण। अपरत्र द्वितीयोदाहरणे। भिन्नवक्तृगतत्वेन भिन्नः पूर्वार्धे गोपी उत्तरार्द्धे कविरिति पृथगेव वक्तारौ तयोर्गतत्वेनाश्रयणेन एकाधिकाभिधातृवर्तितया च। इति इत्थम्। अनयोः पूर्वापरोदाहरणयोस्तद्गतव्यङ्ग्ययोश्च। भेदः पार्थक्यमिति।

[ वृत्तिः ] अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥१२८॥

अत्रादृष्टो यथा न भवसि वियोगभयञ्च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम।

[ कमला० ] अदृष्टे इति। त्वयीति शेषः। क्लिष्टमस्पष्टम्।

[ सरि० ] व्यङ्ग्यस्य गुणीभावेन मध्यमकाव्यत्वोदाहरणप्रसङ्गे व्यङ्ग्यस्या-स्फुटत्वेन यद्भवति तदुदाहर्तुमुपक्रमते अस्फुटमिति। अस्फुटम् अस्पष्टम् सहृदयैरप्य-संवेद्यम्। यथेति निदर्शने। उदाहरणं प्रस्तौति अदृष्टे इति। अदृष्टे दृष्टि-पथमनायाते त्वयि। दर्शनोत्कण्ठा दर्शनस्य विलोकनस्य उत्कण्ठा औत्सुक्यं कदा पश्येयमिति। दृष्टे लोचनपथं प्राप्ते। विच्छेदभीरुता विच्छेदस्य वियोगस्य भीरुता भीतिः न। अदृष्टेन अनवलोकितेन। न। दृष्टेन विलोकनेन वा। भवता त्वया। हेतौ तृतीया। कृत्वेति शेषः। सुखं शर्म। न नैव। लभ्यते प्राप्यते इति। लक्ष्ये प्रकृतोपयोगमाह अत्रेति। अत्र काव्येऽस्मिन्। यथा येन विधिना। अदृष्टः अनवलोकितः। न भवसि सञ्जायसे। यथा येनोपायेन। वियोगभयम् विरहभीतिः। चकारः समुच्चये। न उत्पद्यते सञ्जायते। तथा तथैव। कुर्याः विदध्याः। इति व्यङ्ग्यम्। क्लिष्टमस्पष्टम्। दर्शनोत्कण्ठा-हेतुदर्शनेन प्रतियोगित्वेन भयहेतुविच्छेदप्रतियोगित्वेन च सम्बोध्यस्य प्रेमास्पदत्वं वाक्यार्थः। तदपेक्षया चोक्तव्यङ्ग्यं न चारु। तेन च सामान्यलक्षणासमन्वयः। चारुत्वाचारुत्वयोस्तु झटिति संवेदनासंवेदने सहृदयस्यैव बीजे इति तन्मूलको योगः। इति विस्तारिकायां स्पष्टम्।

**[ वृत्तिः ] सन्दिग्धप्राधान्यं यथा—**

**हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।**
**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥१२९॥**

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः।

[ कमला० ] प्रतीयमानमिति बिम्बफलेत्यत्र व्यङ्ग्यम्। चुम्बनं प्रधानमित्यग्रेतनेनान्वयः। किञ्चेति उभयोश्चमत्काराधायकत्वादित्यर्थः।

[ सरि० ] व्यङ्ग्यस्य गुणभावेन मध्यमकाव्यत्वोदाहरणप्रसङ्गे वाच्यव्यङ्ग्ययोः प्राधान्यसन्देहेन व्यङ्ग्यस्य यो गुणीभावस्तदुदाहरणायोपक्रमते सन्दिग्धेत्यादि। सन्दिग्धमिदमित्थन्तया परिच्छेत्तुमशक्यं प्राधान्यं मुख्यत्वं यस्येति। वाच्यस्य व्यङ्ग्यं वा व्यङ्ग्यस्य वाच्यमङ्गमिति झटिति निर्णेतुमशक्यं सन्दिग्धप्राधान्यम्। यथेति निदर्शने। उदाहरणं प्रस्तौति **हर** इति। हरः तु चन्द्रोदयारम्भे अम्बुराशिः इव किञ्चित्परिलुप्तधैर्यः सन् फलाधरोष्ठे उमामुखे विलोचनानि व्यापारयामास इत्यन्वयः। **हरः** शङ्करः। **तु** इति तदार्थेऽव्ययानामनेकार्थत्वात्। कामबाणलक्ष्यीभूत इति पूर्वेण सम्बन्धः। **चन्द्रोदयारम्भे** चन्द्रस्य शशिनः उदयः उत्पत्तिस्तस्य आरम्भे उत्पत्तिकाले। **अम्बुराशिः** समुद्र इव। **किञ्चिदिति** किञ्चित् ईषन्मात्रं परिलुप्तं च्युतं धैर्यं निग्रहसामर्थ्यं यस्य स तादृशः। सन्। **बिम्बफलाधरोष्ठे** बिम्बफलवदधरोष्ठो यत्र तथाविधे। **उमामुखे** पार्वतीवदने। **विलोचनानि** नयनानि। **व्यापारयामास** सञ्चारयामास इति। चुम्बितुमैच्छदित्याशयः। लक्ष्ये प्रकृतोपयोगमाह अत्रेति। अत्र काव्येऽस्मिन्। **किम्** यद्वा **परिचुम्बितुं** निक्षितुम्। ऐच्छत् स्पृहयाञ्चक्रे। इति इत्थम्। **प्रतीयमानम्** व्यङ्ग्यम्। किं वा पक्षान्तरे। **वाच्यं** वाच्यार्थरूपम्। **विलोचनव्यापारणं** नेत्रसञ्चारणम्। **प्रधानं** मुख्यम्। **इति** इत्यत्र। **सन्देहः** अनिर्णयः इति। लोचनव्यापारणं वाच्यमत्र चुम्बनेच्छा तस्य व्यङ्ग्यम्। वस्तुतस्तु प्रतीयमानमधरसौन्दर्यावगतलौल्यत्वं गम्यं प्रधानं चमत्कारप्रयोजकत्वात्किन्तु वाच्यस्याऽपि न तथा हीनबलत्वं येन व्यङ्ग्यस्य प्राधान्यं स्पष्टतया प्रतीयेत। उक्तमेव—न च चुम्बनेच्छायाः सम्भोगसामग्र्याः दर्शनाऽऽस्यसंयोगापेक्षया हीनबलत्वेन न प्राधान्यसन्देह इति वाच्यमन्तरङ्गसामग्रीत्वेन तस्या अपि बलवत्त्वात् चुम्बनापेक्षया दर्शनस्यासन्निकृष्टत्वेन बहिरङ्गत्वादिति विस्तारिकायाम्। व्यापारयामास विलोचनानि इत्यत्र बिम्बफलाधरोष्ठमुमामुखमुद्दिश्याभिधीयमानत्वादथशक्तिमूलं परिचुम्बितुमैच्छदिति प्रतीयमानं प्रधानमुताहो अन्यवैलक्षण्येन त्रयाणामेव विलोचनानां व्यापारणं वाच्यं प्रधानमित्यत्र सन्देहः।

उभयोरेकतरस्य प्राधान्ये साधकबाधकमानाभावात् वाच्यस्यापि अलौकिकत्वेन चमत्कारकारित्वात् उत्कण्ठातिशयव्यञ्जकत्वाच्चेति साहित्यचूडामणिसुधासागरयोराशयः। चुम्बितुमैच्छदिति व्यङ्ग्यस्य लोचनव्यापाररूपवाच्यस्य च सन्दिग्धं प्राधान्यं युगपल्लोचनसञ्चारणस्योत्कण्ठातिशयपर्यवसानतया सौन्दर्यादिति चन्द्रिकाकाराः।

[ वृत्तिः ] तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥१३०॥

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

[ कमला० ] ब्राह्मणेति। रावणं प्रति परशुरामशिष्योक्तिरियम्। अत्रेति पूर्वार्द्धे भूत्युपदेशात्सामवाच्यम्। उत्तरार्द्धे च दण्डो व्यङ्ग्यः। तयोश्चानर्थनिवारकत्वेन तुल्यता।

[ सरि० ] व्यङ्ग्यस्य गुणभावेन मध्यमकाव्यत्वोदाहरणप्रसङ्गे वाच्यव्यङ्ग्ययोस्तुल्यप्राधान्येन व्यङ्ग्यस्य गुणभावोदाहरणायोपक्रमते तुल्येति। तुल्यप्राधान्यं तुल्यं समानञ्च तत् प्राधान्यं मुख्यभावः। यथेति निदर्शने। प्राधान्यस्य तुल्यता वाच्यस्य व्यङ्ग्यस्य चोभयोरेव। यत्र चोभयोः कस्य प्राधान्यमिति तत्साधकबाधकमानाभावेन निश्चेतुं न शक्यते तत्र सन्दिग्धप्राधान्यं यत्र चोभयोरेव प्राधान्यं स्पष्टतया प्रतीयते तत्र तुल्यप्राधान्यमिति। उदाहरणं प्रस्तौति ब्राह्मणेत्यादि। रावणं प्रति परशुरामस्य सन्देशोऽयं तच्छिष्येण श्रावितः। ब्राह्मणातिक्रमत्यागः भवताम् एव भूतये भवति अन्यथा तथा मित्रम् जामदग्न्यः दुर्मनायते इत्यन्वयः। ब्राह्मणेति ब्राह्मणानां ब्रह्मकर्मपरायणानां द्विजानाम् अतिक्रम उल्लङ्घनं कष्टसाधनं कर्मविघातनं तत्र विघ्नोत्पादनं वा तस्य त्याग उत्सर्गः तस्मान्निवृत्तिरिति। भवतां युष्माकं सर्वेषाम्। एव इत्यवधारणे न तु ब्राह्मणानामिति तेषां तु जीवति जामदग्न्येऽनिष्टस्यासम्भवात्। अन्यथा तदत्यागे तु। भवतां युष्माकम्। तथा चिरपरिचितं ज्ञातरहस्यञ्च सदोपकारकम्। मित्रं सुहृत्। जामदग्न्यः परशुरामः। दुर्मनायते क्षुब्धो भवतीति। सामीप्याभिप्रायेण वर्तमाननिर्देशः। तत्र प्रकृतोपयोगित्वमाह अत्रेति। अत्र पद्येऽस्मिन्। जामदग्न्यः सर्वेषां क्षत्रियाणामिव क्षणात् क्षयं करिष्यति यथा हि कुपितेन परशुरामेण क्षणादेव सर्वे एव क्षत्रियाः प्रणाशिताः तथैव ब्राह्मणातिक्रमात्यागे क्षुब्धो हि स

युष्मानपि समूलं नाशयति इति दुर्मनायते इति द्योतितस्य व्यङ्ग्यस्य दुर्मनायते इति वाच्यस्य समं तुल्यमेव। प्राधान्यम् मुख्यत्वमिति। वाच्यस्यापि प्राधान्यञ्च दुर्मनायते इति वाच्यस्य गम्भीरोक्त्या चमत्कारित्वाद् विग्रहवत्सन्धेरपि विवक्षितत्वाच्चेति। चमत्कारकारितायामविशेषादत्रोभयोरेव प्राधान्य तुलाधृतवत्सममवतिष्ठते। यद्यपि प्राधान्यस्य सन्देहसादृश्ययोः सहृदया एव प्रमाणं तथापि तत्र वक्तुस्तात्पर्यं यद्वा कवेरभिप्रेतत्वमपि साधकं भवति। अत्र ब्राह्मणपरिभवपरिवर्जनं युष्माकमेव कल्याणाय न तु ब्राह्मणानां यतो हि जीवति जामदग्न्ये न कोऽपि तेषामनिष्टं कर्तुं प्रभवति। यदि तादृशातिक्रमण पुन पुनः क्रियते तदा युष्माक परमसुहृदपि जामदग्न्यो दुर्मनायते इति यद् वाच्यवैचित्र्यं तद् हि ब्राह्मणातिक्रमापरिवर्जनेन कुपितः सः क्षत्रियकुलमिव राक्षसकुलमपि समूलं पातयतीति यद्व्यङ्ग्यं तेन सह समशीर्षिकामारोहति वाच्यस्य साम्नो व्यङ्ग्यस्य विग्रहस्य च तत्र चमत्कारकारित्वाविशेषात्। प्राधान्यञ्चात्र सहृदयनिर्णयमिति कवेरुभयत्र प्रवर्तनात्।

[ वृत्तिः ] काक्वाक्षिप्तं यथा—

> मथ्नामि कौरवशतं समरे न कोपाद्
> दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
> सञ्चूर्णयामि गदया न सुयोधनोरू
> सन्धिं करोतु भवतां नृपतिः पणेन ॥१३१॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधासहभावेन स्थितम्।

[ कमला० ] मथ्नामीति वेणीसंवरणे कौरवसन्धानार्थं श्रीकृष्णं गतं श्रुत्वा सहदेवं प्रति क्रुद्धभीमसेनोक्तिरियम्। उरस्तो हृदयात्। पणेन पञ्चग्रामरूपदेयेन अथ च ग्लाहेन तानपि पुनर्दीव्यतु सन्धिं करोतु। अत एव भवतां नृपतिर्न ममेत्यर्थः। अत्रेति। अयम्भावः—काक्वाक्षिप्तत्वं हि काकुव्यङ्ग्यत्वे सति वाच्यसम्बन्धित्वम्। तत्र न मथ्नामीत्यत्र मथ्नाम्येवेति व्यङ्ग्ये नियमे एवकारार्थो मथनायोगव्यवच्छेदः। तत्प्रतीतौ च प्रतियोगिभूतमथनाभावप्रतीतेर्न क्रोधो वाच्यो यो निषेधः प्रमथनाभावस्तत्सहभावेन तत्पुरस्कारेणैव व्यङ्ग्यप्रतीतेः शूरस्य च तत्प्रतीतौ तिरस्कारोदयाद् व्यङ्ग्यं न चमत्कारकारीति।

[ सरि० ] व्यङ्ग्यस्य गुणभावेन मध्यमकाव्यत्वोदाहरणप्रसङ्गे व्यङ्ग्यस्य काक्वाक्षिप्तत्वेन यो गुणभावस्तदुदाहरणायोपक्रमते काक्वाक्षिप्तत्वमिति। काक्वाक्षिप्त काकुर्ध्वनिविकारस्तेनाक्षिप्तं प्रत्यायितमिति काकुव्यङ्ग्यत्वे सति वाच्यसम्बन्धित्वमिति। यथेति निदर्शने। उदाहरणं प्रस्तौति मथ्नामीति।

समरे कोपात् कौरवशतम् न मथ्नामि दुःशासनस्य उरस्तः रुधिरम् न पिबामि सुयोधनोरू गदया न सञ्चूर्णयामि भवताम् नृपतिः पणेन सन्धिम् करोतु इत्यन्वयः। वेणीसंहारे सहदेवं प्रति सन्धिप्रस्तावेन क्रुद्धस्य भीमस्य वाक्यमिदम्। समरे युद्धे। कोपात् क्रोधेन। कौरवशतं कौरवाणां शतम्। न मथ्नामि न विलोडयामि। दुःशासनस्य तदाख्यस्य दुर्योधनानुजस्य येन द्रौपदी सभायां विवसनीकृता तस्य। उरस्तः वक्षःस्थलात्। रुधिरं रक्तम्। आकृष्येति। न पिबामि न चूषामि। सुयोधनोरू दुर्योधनसक्थीनि। गदया गदाप्रहारेण करणेन न तु कर्त्रा। न सञ्चूर्णयामि भञ्जयामि। भवतां युष्माकम् न तु मम। नृपतिः राजा। युधिष्ठिरः। पणेन पञ्चग्रामरूपदेयेन। सन्धिं मैत्रीम्। करोतु विदधातु। अथ च तानपि पुनर्ग्लहेन दीव्यतु वेति। अत्र न मथ्नामि न पिबामि न सञ्चूर्णया-मीत्येतेषां काकुवशाद्यथाप्रतिज्ञातं तथा न मथ्नामीति न अपितु मथ्याम्येव न पिबामीति न अपितु पिबाम्येव न सञ्चूर्णयामीति न अपितु सञ्चूर्णयाम्येवेति व्यज्यते तस्य च प्रमथनाभावादिसहभावेन तत्पुरस्कारेणैव प्रतीतेः शूरस्य च तत्प्रतीतौ तिरस्कारोदयात् न चमत्कारकारित्वमपि तु वाच्यस्यैवोपस्कारकत्वमिति गुणभावोऽस्य। तदेवाह अत्रेति। अत्रेति काव्येऽस्मिन् मथ्नाम्येवं इत्यादि व्यङ्ग्यं काक्वाक्षिप्तं मथ्नाम्येव पिबाम्येव सञ्चूर्णयाम्येव इति यद् व्यङ्ग्यं तत् वाच्यनिषेधसहभावे वाच्यो न मथ्नामीत्यादिगो यो निषेधो निराकरणरूपोऽर्थ-स्तस्य सहभावेन तत्सहचरत्वेनैव। स्थितम् प्राप्तविग्रहमिति न तु तत्प्रत्यायितत्वेन चमत्कारातिशयाधायकमिति। अत्र प्रतिनकारं काकुः। वस्तुतस्तु शब्दशक्तिरेव स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया विशेषार्थप्रतीतिहेतुर्न काकुमात्रम्। तेन शब्द-शक्त्यनुप्रविष्टया काक्वा मथ्नाम्येवेति व्यङ्ग्यमुत्थाप्यते न तु स्वतन्त्रया व्यञ्जनया। तस्य वाच्यसहभावेन तदतिक्रमणसामर्थ्याभावाद् गुणीभाव इति। नितान्तक्रुद्धस्य विरुद्धनिषेधाभिधायिवाक्येषु नञ्काकुर्निषेधान्तराक्षेपिका। अभावाभावश्चावधारणमेव किन्तु अभावपुरस्कारेणैव तस्य प्रतीतिरिति काक्वाक्षिप्तस्य न चारुत्वातिशयवत्त्व-मिति। उक्तमेव ध्वनिकारिकायाम् —

> "अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।
> सा व्यङ्ग्यस्य गुणीभावे प्रकारमियमाश्रिता॥" इति।

[ वृत्तिः ] असुन्दरं यथा—

> वाणीरकुडुङ्गुड्डीणसउणिकोलाहलं सुणंतीए।
> घरकम्मवावडाए बहुए सीअंति अंगाइं॥१३२॥

( वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृतायाः वध्वाः सीदन्त्यङ्गानि ॥ )

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ।

[ कमला० ] वाणीरेति वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः । गृहकर्मव्यापृतायाः वध्वाः सीदन्त्यङ्गानि । अत्रेति सीदन्तीत्यतः शृङ्गारप्रतीतिः शीघ्रम् । यद्यपि लतागृहं प्रविष्टः तेनोत्कण्ठ्या व्यङ्ग्येऽपि सा तुल्या तथापि व्यवहितेत्यर्थः ।

[ सरि० ] असुन्दरत्वेन व्यङ्ग्यस्य यो गुणीभावस्तदुदाहरणायोपक्रमते असुन्दरमिति । असुन्दरमचारु तत्त्वञ्च व्यङ्ग्यस्य वाच्यान्वयेन । उक्तमेव इक्षुखण्डकल्पे काव्ये ऋजीषप्रायं वाच्यं रसनिष्यन्दस्थानीयं व्यङ्ग्यमिति वाच्यापेक्षया व्यङ्ग्ये चमत्कारातिशयः किन्तु यदा तु व्यङ्ग्यादपि वाच्यस्यैव चारुत्वं तदाऽजागलस्तनवत्तद् व्यङ्ग्यमसुन्दरमित्युच्यते । यथेति निदर्शने । उदाहरणं प्रस्तौति वाणीर इति । वाणीरकुडंगुड्डीणसउणिकोलाहलं ( वानीरकुञ्जोड्डीनशकुनिकोलाहलम् ) सुणंतीए ( शृण्वन्त्याः ) घरकम्मवावडाए ( गृहकर्मव्यापृतायाः ) बहुए ( वध्वाः ) अंगाइं ( अङ्गानि सीअंति ( सीदन्ति , इत्यन्वयः । वाणीरेति वानीरस्य वेतसस्य कुञ्जे लतावेष्टितगहनस्थले सङ्केतस्थानभूते इति उड्डीनानामुत्प्लुतानां कस्यचिदुपस्थित्येति शकुनीनां पक्षिणां कोलाहलं विरावम् । शृण्वन्त्या आकर्णयन्त्याः । गृहेति गृहस्य यत्कर्म पाचनसम्मार्जनधावनादि तत्र व्यापृतायाः संलग्नायाः व्यापारवत्याः । वध्वाः प्रमदायाः । स्त्रीसामान्येऽपि वधूः । अङ्गानि अवयवाः शरीरमिति । सीदन्ति खिन्नानि भवन्तीति । तत्र प्रकृतोपयोगमाह अत्रेति । अत्र काव्येऽस्मिन् । दत्तसङ्केतः कृतागमनशपथः । कश्चित्प्रच्छन्नकामुकः । लतागहनं वल्लरीगृहम् । प्रविष्टः प्राप्तः । इति इत्थं यद् व्यङ्ग्यं वाच्यार्थप्रत्यायितम् । तस्मात् तदपेक्षया । सीदन्त्यङ्गानि इति वाच्यं वाच्यार्थं एव । सचमत्कारं चमत्कारयुक्तमिति व्यङ्ग्यस्यासुन्दरत्वमिति । कस्यचिल्लतागृहप्राप्त्यपेक्षया अङ्गानां सादनमेव सचेतसां चर्वणीयमिति व्यङ्ग्यापेक्षया वाच्यस्य चमत्कारवत्त्वमिति । व्यङ्ग्यस्यासौन्दर्यं वाच्यवर्तिप्राधान्याधिक्येनैव । तेनैतत्तुल्यसंशयप्राधान्यविलक्षणम् ।

[ वि० वृ० ] अथ गुणीभूतव्यङ्ग्यभेदानाह अगूढमित्यादि । तत्रागूढं यथा—

कृष्णस्य जगदीशस्य वन्द्यस्य विबुधोत्तमैः।
शृण्वन्निन्दितमेतस्य जीवन्नैव भवाम्यहम्॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य व्यङ्ग्यमगूढम्। "गोप्यस्तपः किमचरन्"—इत्यादि। अत्र पिबन्तीत्यत्यन्ततिरस्कृतवाच्यस्य। एवमन्येषां च बोध्यम्।

अपरस्य रसादेरङ्गं रसादि अयमेव रसवत्प्रभृतिरलङ्कारः। तत्र रसादे रसाङ्गत्वे रसवत् भावाङ्गत्वे प्रेयः। आभासाङ्गत्वम् ओजस्वि। प्रशमाङ्कत्वे तु समाहितम्। क्रमेणोदाहरणानि—

कोपे यथातिललितं न तथा प्रमादे
वक्रं विधिस्तव तनोतु सदैव कोपम्।
इत्याकलय्य दयितस्य वचो विभङ्गी
राधा जहास विहसत्सु सखीजनेषु॥

अत्र हास्यस्य विप्रलम्भशृङ्गारोऽङ्गम्।

"धन्यं वृन्दारण्यं यस्मिन्विलसति सदैव रमणीभिः।
प्रतिकुञ्जं प्रतिपुलिनं प्रतिगिरिकन्दरमसौ कृष्णः॥"

अत्र वनवर्णनभावस्य सम्भोगशृङ्गार इति रसवत्।

पूर्णाः पुलिन्द्य उरुगाय पदब्जराग-
श्रीकुङ्कुमेन दयितास्तनमण्डितेन।
तद्दर्शनस्मररुजस्तृणरूषितेन
लिम्पन्त्य आननकुचेषु जहुस्तदाधिम्॥

अत्र शृङ्गारस्य पुलिन्दीभावः।

वृन्दावनमतिपुण्यं यस्मिन्कुसुमस्मितैः फलोरोजैः।
पल्लवकुलाधरैरपि सुखयति कृष्णं लतापालिः॥

अत्र वनवर्णनभावस्य लताभाव इति प्रेयः।

'त्वत्सामन्तहृतान्दारान्पुनः प्राप्य त्वदाज्ञया।
मुदितैर्मथुरानाथ वन्द्यसे शात्रवैरपि॥'

अत्र शत्रुकृतशत्रुस्तुतिरूपो भावाभासो भगवद्विषयस्य भावस्येत्यूर्जस्वि।

देवेन्द्रजित्सु पृथुकात्पृथुकोपमाद्भि-
रस्मासु सत्सु न तवेति गिरा सुराणाम् ।
कंसस्य यो हृदि मदः स तु तेषु सर्व-
ष्वाप्तेषु तत्पृथुकतां क्व गतो न जाने ॥

अत्र मदप्रशमो वीरस्येति समाहितम् ।

"गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥"

अत्राच्युतेत्यादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यसिद्धावङ्गं तदुपपादकत्वात् ।

असुरदमन नन्दकः स्वपाणौ कुतुकवशाद्भवता निधीयते चेत् ।
सुरपुनदनितः स्ववेश्मशोभाद्विदधति सद्रचनोज्ज्वल समन्तात् ॥

अत्र खड्गोद्यमनात् कृष्णेन रिपवो वीरा हनिष्यन्ते, ते च स्वर्गमसम-
स्पतित्वेनायास्यन्तीत्यानन्दावेशात्स्वर्गाङ्गनाः स्वनिकेतं मण्डयन्तीति व्यङ्गचस्फुटं
कष्टगम्यत्वात् ।

हे भद्र भाद्रपदमासचतुर्थकेन्दो
तुभ्यं नमोऽस्तु न कदापि मयासि दृष्टः ।
श्यामेन तेन कतमेन नवेन पूना
साकं तथापि मम किं प्रथितः प्रवादः ॥

अत्र त्वद्दर्शनात्प्रवादः इत्यनैकान्तिकम्, किन्तु तादृशादृष्टादेवेति, किं
वा नायं प्रवादः सत्वैवेयं जनश्रुतिर्यद्विनापि त्वद्दर्शनाज्जनैरुद्घोष्यते इति सन्दिग्ध-
प्राधान्यम् ।

स्मरसमरसमाप्तौ वक्रतां भ्रूरहार्षी-
दजनिषत मृगाक्ष्या वीतलक्ष्याः कटाक्षाः ।
धनुरिव विषमेषोर्ज्याविमुक्तं तदासी-
द्विशिखुरिव निषङ्गे मुक्तशेषाः पृषत्काः ॥

अत्रोत्प्रेक्षयोपमा ध्वनिता । तयोः स्वप्राधान्येन स्थितत्वात्तुल्यप्राधान्यम् ।

कुलीनाः किल कुर्वन्तु दुर्यशो मम कर्मठाः ।
रामं दूर्वादलश्यामं कामं नैव भजाम्यहम् ॥

अत्र न भजामीति निषेधो वाच्यस्तेन सहैव भजामीति व्यङ्ग्यः प्रतिभाति। नञ्द्योत्यात्र काकुः।

'कर्णकल्पितरसालमञ्जरी' इत्यत्र व्यङ्ग्यमसुन्दरं द्रष्टव्यम्।

**[ कारिका ] एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥४६॥**

**[ वृत्तिः ] यथायोगमिति—**

'व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्'' ॥

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ॥

[ कमला० ] **एषामिति।** अर्थान्तरसङ्क्रमितवाच्यादयो यावन्तो ध्वनिभेदास्तेषां गुणीभावत्वे तत्तदुपाधिवशात्तावन्तो मध्यमकाव्यभेदा इत्यर्थः। ननु यत्र वस्तुनाऽलङ्कारो व्यज्यते तत्र गुणीभूतस्य वस्तुनो वाच्यत्वेन व्यङ्ग्यत्वाभावात्कथं गुणीभूतव्यङ्ग्यत्वमत आह यथायोगमिति। व्याचष्टे व्यज्यत इति। वस्तुना यत्रालङ्कृतयो व्यज्यन्ते तदा तासामलङ्कृतीनां ध्रुवं निश्चितं ध्वनिं प्रत्यङ्गता। काव्यस्वरूपस्य तदाश्रयात्तदलङ्कारमुखेनैव चमत्कारात्। यद्वा काव्यवृत्तेः काव्यपदशक्तेस्तदाश्रयाद् ध्वन्याश्रितत्वाद् ध्वनेः प्रधानत्वादुत्तमत्वमेव न तु मध्यमत्वम्। तेन वस्तुकृतषड्भेदैरूनत्वादेव पञ्चचत्वारिंशद्भेदा इत्यर्थः।

[ सरि० ] गुणीभूतव्यङ्ग्यस्याष्टविधस्य भेदप्रभेदान्समासेन निर्देशनाय सम्बद्धकारिकामवतारयति **एषामित्यादि।** एषाम् भेदाः च यथायोगम् पूर्ववत् वेदितव्याः इत्यन्वयः। एषामष्टविधगुणीभूतव्यङ्ग्यानां यद्वा गुणीभूतव्यङ्ग्यस्य अष्टविधस्य प्रत्येकम्। भेदाः भेदप्रभेदाः। च इति ध्वनिप्रकरणोक्तसमुच्चये। यथायोगम् असम्भाविनो विहाय असम्भाविनश्च वस्तुमात्रेण अलङ्कारव्यक्तिनिबन्धनास्तेषां तु केवलं ध्वन्यङ्गत्वाद् ध्वनिनैव तेषां व्यञ्जनात्तद्व्यञ्जकस्य ध्वनित्वव्यवहारात्। पूर्ववत् प्रागुक्तवत् ध्वनिप्रकरणोक्तवत्। वेदितव्याः ज्ञातव्या इति। न केवलमेत एव गुणीभूतव्यङ्ग्यभेदाः किन्तु अर्थान्तरसङ्क्रमितवाच्यत्वादिभिर्यथा ध्वनेर्भेदास्तथाऽसम्भाविनो वस्तुमात्रेणालङ्कारनिबन्धना विहाय अस्यापि तैरुपाधिभिः शुद्धभेदा अर्थात् वस्तुकृतषड्भेदैरूनत्वादस्य पञ्चचत्वारिंशदेव शुद्धभेदा इत्यर्थः। उदाहरणान्येषामूह्यानि। कारिकागतं यथायोगमिति पदं व्याचष्टे **यथेति।** कारिकायां यथायोगमिति पदरूपायमेवाशयः। **व्यज्यन्त इति।** यदा वस्तुमात्रेण अलङ्कृतयः व्यज्यन्ते तदा तासाम् काव्यवृत्तेः तदाश्रयात् ध्रुवम् ध्वन्यङ्गता इत्यन्वयः। यदा यत्र हि। **वस्तुमात्रेण** वस्तुनैव स्वतःसम्भविना वा प्रौढोक्तिमात्रसिद्धेनाऽपि न

त्वलङ्कारेणाऽपि अलङ्कृतयः उपमाद्यलङ्काराः। व्यज्यन्ते प्रत्याय्यन्ते। तदा तत्र। तासाम् तादृशवस्तुमात्रप्रतीतालङ्कृतीनाम्। काव्यवृत्तेः काव्यव्यवहारस्य। तदाश्रयात् अलङ्कारसापेक्षत्वात्। ध्रुवम् निश्चयेन। ध्वन्यङ्गता ध्वनित्वनिर्वाहकतेति। इति इत्थम्। ध्वनीति ध्वनिकारेण ध्वनिकारिकाकृता यदुक्तं कथितं तया दिशा प्रकारेण। यत्र यदा। वस्तुमात्रेण वस्तुनैव न त्वलङ्कारेणाऽपि। अलङ्कारः उपमाद्यलङ्कृतिः। व्यज्यते ध्वन्यते। तत्र तादृशस्थले। न नैव। गुणीभूतव्यङ्गयत्वं व्यङ्गयस्य गुणभावसिद्धिः इति। अयमाशयः—यथायोगमिति यत्र तथा सम्भवस्तत्रेति। व्यङ्गयस्य गुणभावो यत्र सम्भवति तत्र तत्रेति। व्यङ्गयस्य गुणीभावस्तु वस्तु व्यक्तालङ्कारस्य ध्वनिनिर्वाहकतया न सम्भवति। तदितरेषां सर्वेषान्तु अर्थान्तरसङ्क्रमितवाच्यत्वादिविधानेन सर्वेऽपि भेदा भवन्तीति। ध्वनेः सर्वत्र सम्भवादेकपञ्चाशद्भेदा उक्ताः शुद्धाः। गुणीभूतव्यङ्गयस्य तु वस्तुकृतनवभेदैरूनत्वाद्द्विचत्वारिंशद्भेदाः भवन्तीति। वस्तुव्यक्तस्यालङ्कारस्य गुणीभूतत्वाभावे हेतुं निर्दिशति अलङ्कारकृतचारुत्वेनैव शब्दार्थयोः काव्यत्वनिर्वाहादिति। सामान्यतो व्यङ्गयस्यापि प्राधान्यविवक्षायामेव ध्वनित्वमितरथा तु गुणीभूतत्वमेव किन्तु वस्तुमात्रव्यङ्गयानामलङ्काराणामसत्यामपि प्राधान्यविवक्षायां ध्वनित्वमेव तेषामेव काव्यनिर्वाहकत्वादिति पूर्वोक्तध्वनिकारिका प्रतिप्रसवः। अस्यायमाशयः—शुद्धध्वनिभेदास्त्वेकपञ्चाशदुक्ताः। गुणीभूतव्यङ्गयानां तु भेदा यथायोगमेव परिगणितव्याः। यत्र वस्तुमात्रेण अलङ्कारो व्यज्यते तत्र न गुणीभूतव्यङ्गयस्य विषयत्वमुदेति कामं तत्र व्यङ्गयस्याप्राधान्यमेव स्यात्। यदि तत्र व्यङ्गयस्य गुणभावो भवेत्तदा वस्त्वेव मुख्य स्यात्। न च वस्तुमात्रे काव्यशब्दप्रवृत्तिस्तेन अगूढादीनां प्रत्येकं पञ्चचत्वारिंशदेव भेदाः। अत्रेदं रहस्यम्।

अलङ्कारो हि द्विधा व्यज्यते कदाचिदङ्गभूतवाच्यालङ्काररहितेन वस्तुमात्रेण कदाचित्तु वाच्यालङ्कारसहितेन वस्तुना च। आद्ये वस्तुमात्रापेक्षयाऽलङ्कारस्याधिकं चारुत्वमिति तत्र सर्वत्र ध्वनित्वमेव। उत्तरत्र तु यदि व्यङ्गयालङ्कारापेक्षया वाच्यालङ्कारस्याधिकं चारुत्वं तदा व्यङ्गयस्यापि तस्य गुणीभूतत्वमेव यत्र च व्यङ्गयालङ्कारस्य समधिकं चारुत्वं तत्र ध्वनित्वमेवेति सारबोधिनीसारः। तत्राद्या स्थितिर्यथा—

नैसर्गगुणविनीतं जनयति कापिञ्जलो वंशः।
आजन्मनो ह्यपूर्वं सूते रत्नाकरो रत्नम्॥

इत्यत्र प्रतिवस्तूपमाव्यङ्गयाया उपमाया अगूढत्वेन गुणीभाव एव। "गाढकान्तदशनक्षतव्यथा" इत्यादौ विरोधालङ्कारव्यङ्गयायास्तुल्ययोगितायाः

गूढत्वेन ध्वनित्वमेवेति। न च अलङ्कारापेक्षया वस्तुमात्रस्यानतिशयनियमेनालङ्कारेण वस्तुमात्रव्यञ्जने कथं ध्वनित्वमिति वाच्यं वस्तुनोऽपि व्यङ्ग्यत्वमाप्तस्य वाच्यत्वापेक्षया चमत्कारातिशयात् तत्रालङ्कारवाच्यत्वेन किञ्चिदपकर्षात्। चारुत्वाभावनिबन्धनमेव हि गुणीभूतव्यङ्ग्यत्वमगूढत्वादिकं तु चारुत्वाभावप्रयोजकभेदकमेव न तु मध्यमकाव्यताप्रयोजकमिति सुधासागरे स्पष्टम्। एतेषामपि गुणीभूतव्यङ्ग्यभेदानामपि परस्परयोजने या सङ्ख्या भवति तत्रापि संसृष्ट्यैकरूपया त्रिविधेन सङ्करेण च गुणने या सङ्ख्या। गुणीभूतव्यङ्ग्यभेदा अपि तावन्त एवेति। तदित्थम् स्वतःसम्भविकविप्रौढोक्तिमात्रसिद्धकविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धवस्तुव्यङ्ग्यालङ्काराणां पदवाक्यप्रबन्धगतत्वेन त्रिरूपतया वस्तुव्यङ्ग्यालङ्कारस्य नवविधत्वमिति ध्वनिभेदसङ्ख्यैकपञ्चाशतनवन्यूनेन अष्टानां भेदानां प्रत्येकं द्विचत्वारिंशद्विधत्वमिति तस्य षट्त्रिंशदधिकत्रिशतभेदाः शुद्धाः। तेषां चान्योन्ययोजने ( ३३६ × ३३६ = )११२८९६ मिता सङ्ख्या भवति। एवमस्य त्रिविधेन सङ्करेण संसृष्ट्या चैकया चेति चतुर्भिर्गुणने ४५१५८४ मिताः सङ्कीर्णभेदा भवन्ति। शुद्धभेदैः सह तेषां सङ्ख्या ४५१९२० भवति। इति। सुधासागरकारास्तु—'वस्त्वलङ्कारयोर्व्यङ्ग्यव्यञ्जकभावोऽत्र क्रमव्युत्क्रमाभ्यां द्विविधोऽपि विवक्षित इति षड्भेदैर्हीनः प्रस्तारः। तथा च गुणीभूतव्यङ्ग्यस्य पञ्चचत्वारिंशद् भेदाः शुद्धा द्रष्टव्याः' इति निर्दिशन्ति। एवमेव कमलाकरभट्टा अपि।

[ वि० वृ० ] एषामिति। एषां समनन्तरोक्तानां भेदा यथासम्भवं ध्वनिभेदवदर्थान्तरसङ्क्रमितवाच्यत्वादिना बोध्याः। यथायोगमिति यत्र वस्तुमात्रेणालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् किन्तु ध्वनित्वमेवेति भावः।

[ कारिका ] सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः।

[ वृत्तिः ] सालङ्कारैरिति तैरेवालङ्कारैः अलङ्कारयुक्तैश्च तैः। तदुक्तं ध्वनिकृता—

स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।
सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा॥ इति।

[ कारिका ] अन्योन्ययोगादेवं स्याद् भेदसङ्ख्यातिभूयसी॥४७॥

[ वृत्तिः ] एवमनेन प्रकारेण अवान्तरभेदप्रभेदगणनेऽतिप्रभूततरा गणना। तथाहि—शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम्। का गणना तु सर्वेषाम्।

[ कमला० ] सालङ्कारैरिति ः तैर्गुणीभूतव्यङ्ग्यैः केवलैरलङ्कारयुक्तैश्च ध्वनेः पूर्वोक्तस्य द्विपञ्चाशद्भेदस्य संसृष्ट्याङ्गाङ्गित्वेन सङ्करेण समप्राधान्येन च योग इत्यर्थः। तैरेवेति। व्यङ्ग्यस्य गुणत्वमेवालङ्कारित्वम्। अतस्तत्तद्रूपैरित्यर्थः। स्वैः प्रभेदैरर्थान्तरसङ्क्रमितवाच्यादिभिः। अयम्भावः—अलङ्कारोपमादौ गुणीभूत-व्यङ्ग्येन व्यङ्ग्यान्तरव्यञ्जने विवक्षाभेदात् व्यङ्ग्यापेक्षयोत्तमत्वम्। अलङ्कारा-पेक्षया मध्यमत्वं वेत्येव ज्ञेयम्। आनन्त्यमिति। तत्तु चतुर्थोल्लासे उक्तमित्यर्थः।

[ सरि० ] इत्थं गुणीभूतव्यङ्ग्यभेदानां परस्परमिश्रणमुक्त्वा सम्प्रति ध्वनि-गुणीभूतव्यङ्ग्ययोर्मिश्रणनिर्देशनाय सम्बद्धकारिकांशमवतारयति सालङ्कारैरिति। सालङ्कारैः तैः संसृष्टिसङ्करैः ध्वनेः तैः संसृष्टिसङ्करैः च योग इत्यन्वयः। सालङ्कारैः अलङ्कृतिरलङ्कारः शोभा तेन युक्तैः पक्षे अलङ्क्रियतेऽनेनेति अलङ्कार उपमादिस्तेन सहितैर्विशिष्टैश्च अथवा सालङ्कारैः वस्तुव्यङ्ग्यालङ्कारसहितैः पूर्वकारिकायां यथा-योगमिति निर्दिष्टैः। तैः गुणीभूतव्यङ्ग्यस्य शुद्धभेदैः तेषां संसृष्टिसङ्करैः परस्परसंसृष्टिसङ्कररूपेण मिश्रणेन ये भेदा भवन्ति तैश्च। ध्वनेः व्यङ्ग्यस्य चारुत्वपर्यवसायित्वस्य ये भेदा भवन्ति तैः शुद्धैः संसृष्टिसङ्कररूपैश्च योगः मिश्रणं भवतीति शेषः। कारिकांशगतं सालङ्कारैरिति पदं व्याख्याति सालङ्कारैरिति। कारिकांशे यत्सालङ्कारैरिति पदं तेन व्यज्यते यत् तैः गुणीभूतव्यङ्ग्यैरेव अलङ्कारैः अलङ्कारस्वरूपैः समासोक्तिरसवदादिरूपैरित्येकपक्षः अलङ्कारयुक्तैः उपमाद्य-लङ्कारसहितैस्तैश्च गुणीभूतव्यङ्ग्यभेदैरित्यपरः पक्ष इति। उक्तं द्रढयति तदित्यादिना। तत् स एवार्थः। ध्वनिकृता ध्वनिकारिकाकारेण। उक्तम-भिहितम्। उक्तमुद्धरति स इति। सः ध्वनिः। सालङ्कारैरलङ्कृतिरूपैर्वाच्या-लङ्कारसहितैश्च। स्वैः निजैः। प्रभेदैः भेदोपभेदैः सह तैः। गुणीभूतव्यङ्ग्यैः व्यङ्ग्यस्य चारुत्वापर्यवसायित्वेन यो गुणभावस्तैः सह मिश्रणेन। स्वैः स्वकीयैः। प्रभेदैः शुद्धभेदैः। पुनः तदतिरिक्तमपि। संसृष्टिसङ्कराभ्यां गुणीभूतव्यङ्ग्यस्य संसृष्टिसङ्कररूपैः स्वस्य च तद्रूपैश्च परस्परमिश्रणेन बहुधा असङ्ख्येयत्वेन। उद्द्योत्यते प्रकाश्यत इति। स्वयमेवालङ्कृतिरूपैः समासोक्तिरसवदाद्यवयवैः शुद्धैः संसृष्टिसङ्कररूपसङ्कीर्णैश्च गुणीभूतव्यङ्ग्यभेदैः स्वस्य च शुद्धरूपैः संसृष्टिसङ्कर-रूपसङ्कीर्णरूपैश्च ध्वनिरसङ्ख्येयत्वेन प्रकाश्यत इत्याशयः। सालङ्कारैरिति अलङ्कारः शोभा तेन सहितैः सालङ्कारैश्च अलङ्कार उपमादिस्तेन सहितैश्च सालङ्कारै-श्चेति भिन्नार्थकयोरेकरूपपदयोरेकशेषः। 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रे रूपग्रहणादर्थभेदेऽपि तथा। यथा व्रीहिश्च माषः। मानञ्च माषः मूर्खश्च माषः।

ते माषाः । इतिवत् । क्वचित्तु भिन्नरूपाणां समानार्थानाञ्चैकशेषो भवति यथा वक्रदण्डश्च कुटिलदण्डश्च तो वक्रदण्डौ कुटिलदण्डौ वेतिवत् । केचित्पदमिदमन्यथाऽपि व्याख्यान्ति । वयन्तु सालङ्कारैरिति वस्तुव्यङ्ग्यालङ्कारैः येषामप्राधान्येऽपि गुणभावो नेष्टस्तैः समेतैरिति ब्रूमः । तेषां व्यङ्ग्यापेक्षयोत्तमत्वमलङ्कारापेक्षया तु मध्यमत्वमेवेति । तेन तैरपि सहितैः शुद्धैः सङ्कीर्णैश्च गुणीभूतव्यङ्ग्यभेदैः ध्वनेः शुद्धैः सङ्कीर्णैश्च भेदैः सह मिश्रणं भवतीति । ध्वनिग्रन्थसंवादस्याऽप्ययमेवाशयः । प्रथमं गुणीभूतव्यङ्ग्यानामलङ्काराणाञ्च सङ्कीर्णत्वं सम्पाद्य पश्चात्तैः ध्वनिस्कन्धस्य साङ्कीर्ण्यमिति । ध्वन्यालोके तु स्वप्रभेदसङ्कीर्णः स्वप्रभेदसंसृष्टः गुणीभूतव्यङ्ग्यसङ्कीर्णः गुणीभूतव्यङ्ग्यसंसृष्टः वाच्यालङ्कारसङ्कीर्णः वाच्यालङ्कारसंसृष्टश्च ध्वनिरिति व्याख्यातमस्ति । उक्तमेव—

> ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात् ।
> न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुणः ॥ इति ।

एवं ध्वनेः केवलैरलङ्कारैर्योगः केवलैर्गुणीभूतव्यङ्ग्यैस्तस्य योगः सालङ्कारैर्गुणीभूतव्यङ्ग्यैश्च तस्य योग इति त्रयः पक्षा अत्रोदीरिताः ।

न च ध्वनिगुणीभूतव्यङ्ग्ययोः सामानाधिकरण्यासम्भवात् सङ्करो न प्रत्येतुं शक्यत इति वाच्यम् । चित्रेण चित्रव्यञ्जने व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि चित्रत्वविवक्षयोभयोस्तुल्यप्राधान्याद् गुणीभूतत्वमिति द्वयमपि विवक्षाभेदाच्चमत्कारप्रयोजकम् । एवमचित्रेणाचित्रव्यञ्जने व्यञ्जकस्याचित्रत्वाद् व्यङ्ग्यस्याचित्रत्वात्प्राधान्यविवक्षया ध्वनित्वम् । उभयोरचित्रत्वविवक्षया तुल्यप्राधान्याद् गुणीभूतव्यङ्ग्यत्वमपीति सुधासागरे ।

गणनाफलनिर्देशककारिकांशमवतारयति अन्योन्येति । एवम् अन्योन्ययोगात् भेदसङ्ख्या अतिभूयसी स्यादित्यन्वयः । एवं पूर्वोक्तप्रकारेण ध्वनेः स्वभेदैः तैः सह वाच्यालङ्कारव्यतिकरेण केवलगुणीभूतव्यङ्ग्यभेदव्यतिकरेण सालङ्कारगुणीभूतव्यङ्ग्यव्यतिकरेण च । अन्योन्ययोगात् ध्वनिगुणीभूतव्यङ्ग्यवाच्यालङ्काराणां परस्परव्यतिकरेण । ध्वनेः । भेदसङ्ख्या भेदप्रभेदगणना । अतिभूयसी असङ्ख्येया । स्यात् भवतीति । कारिकांशं व्याख्याति एवमिति । एवमिति अनेन पूर्वोक्तेन प्रकारेण विधिना । अवान्तरभेदगणने भेदप्रभेदसङ्ख्याने । अतिभूयसीति अतिप्रभूततरा असङ्ख्येया । गणना सङ्ख्या । भवतीति । तथाहीति निदर्शने । शृङ्गारस्य रतिस्थायिभावात्मकस्य रसस्य । एवेत्यवधारणे एकस्यैवेति । भेदप्रभेदगणनायां भेदोपभेदसङ्ख्याने । आनन्त्यमनन्तता । सर्वेषां निखिलानामेव

ध्वनिगुणीभूतव्यङ्ग्यानाम् । तु इति व्यवच्छेदे । का गणना अपि तु गणनाबाह्या एव भेदा इति ।

ध्वनेरेव शुद्धसङ्कीर्णरूपेण १०४५५ भेदाः केवलस्य गुणीभूतव्यङ्ग्यस्य शुद्धसङ्कीर्णरूपेण ४५१९२० भेदा भवन्ति । सालङ्कारस्य गुणीभूतव्यङ्ग्यस्यापि तावन्त एव भेदाः । तेषां चान्योन्ययोजने ध्वनिना सह योजने च भेदानामानन्त्यमेवेति । अत एवोक्तम् —

> ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्यात्मा प्रदर्शितः ।
> एतेनानन्त्यमाप्नोति कवीनां प्रतिभागुणः । इति ।

ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टत्वं यथा —

> तेषां गोपवधूविलाससुहृदां राधारहः साक्षिणां,
> क्षेमं भद्र कलिन्दशैलतनया तीरे लतावेश्मनाम् ।
> विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना,
> ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥

अत्र सुहृच्छब्दे साक्षिशब्दे चाविवक्षितवाच्यो ध्वनिभेदः । ते जाने इत्येते च पदे गुणीभूतव्यङ्ग्ये । तयोश्च मिथोऽनपेक्ष्यैकवाक्यस्थितया संसृष्टिः । तयोश्च सङ्करो यथा—

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः' इत्यत्र । अत्रालक्ष्यक्रमव्यङ्ग्यस्य रौद्रस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टवाच्याभिधायिपदैः सङ्करः । यदरयः इत्यादिभिः विभावादिरूपतया रौद्र एवानुगृह्यते वाच्यस्यैव क्रोधोद्दीपकत्वाद् गुणीभूतव्यङ्ग्यता । पदापेक्षया वाच्यालङ्कारसंसृष्टत्वं यथा —

> दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां,
> प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
> यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः,
> शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥

अत्र मैत्रीपदमविवक्षितवाच्यो ध्वनिः । पदान्तरे चोत्प्रेक्षादिवाच्यालङ्कारसङ्कीर्णत्वम् । इति बालचित्तानुरञ्जन्याम् ।

सुधाकरकारास्तु गुणीभूतव्यङ्ग्यानां पञ्चचत्वारिंशद्भेदान् मन्यन्ते । यथोक्तं तत्र— वस्त्वलङ्कारयोर्व्यङ्ग्यव्यञ्जकभावोऽत्र क्रमव्युत्क्रमाभ्यां द्विविधोऽपि विवक्षित इति षड्भेदैर्हीनः प्रस्तार इत्यपि । तेन तन्मते गणनाऽपि भिन्नैव । यथोक्तं तत्र—

शुद्धैः सहैकपञ्चाशद्भेदैर्भेदा यथा ध्वनेः।
सङ्कीर्णा हि समाख्याताः शरेषुयुगखेन्दवः॥ (१०४५५)।

शुद्धैः शययुगव्यक्तैः सहात्रापि तथा बुधैः।
गुणीभूतव्यङ्ग्यभेदाः बाणाब्धीन्दुगजाः स्मृताः॥ (८१४५)।

मध्यमोत्तमयोरेवं भेदयोर्गुणने पुनः।
भूताश्वाङ्केषु शरभूबाणस्तम्बेरमाः स्मृताः॥ (८५११५९७५)।

चतुर्भिर्गुणने प्राग्वद्विज्ञेया गणकोत्तमैः।
खाकाशाङ्कानिपक्षर्तुव्योमवारिधिवह्नयः॥
(३४०६२३९००)। इति।

[ वृत्तिः ] सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। तथाहि—किञ्चिद् वाच्यतां सहते किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्रं विचित्रञ्चेति। अविचित्रं वस्तुमात्रम्, विचित्रं त्वलङ्काररूपम्। यद्यपि प्राधान्येन तदलङ्कार्यं तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन श्रृङ्गारादिशब्देन वाऽभिधीयेत। न चाभिधीयते तत्प्रयोगेऽपि विभावाद्ययोगे तस्याऽप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते। तेनाऽसौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

[ कमला० ] व्यञ्जनां साधयितुमाह सङ्कलनेनेति सङ्क्षेपेणेत्यर्थः। त्रिरूपत्वादिति वस्त्वलङ्काररसरूपत्वादित्यर्थः। वाच्यतां सहते वाच्यतां कर्तुं शक्यते वस्त्वलङ्काररूपमित्यर्थः। किञ्चिद्रसाद्यन्यथावाच्येनेत्यर्थः। यद्यपि वस्तुपदार्थादिशब्देनोक्तस्य वस्तुनोऽलङ्कारपदोक्तस्य चमत्कारकारित्वाभावान्न वाच्यतासहत्वं तथापि वाक्यार्थविषयत्वं तत्त्वं रसादौ तु न तथेति भावः। न त्वलङ्कारे व्यङ्ग्ये मुख्यध्वनित्वात्कथमलङ्कारत्वव्यपदेशोऽन्यानलङ्करणादत आह यद्यपीति प्राधान्येन हेतुना तद्व्यङ्ग्यमलङ्कार्यं न त्वलङ्काररूपं तथापि व्यङ्ग्यस्य गुणत्वेऽलङ्कारत्वं प्राधान्येन ध्वनित्वम्। श्रमणः संन्यासी। यथैक एव चैत्रोऽवस्थाभेदेन पूर्वं ब्राह्मणः पश्चात्संन्यासी चोच्यते तथेहापीत्यर्थः। रसादीति लक्ष्यते ज्ञायतेऽनेनेति लक्षणं नाम। आदिपदाद् भावादिः। स्वप्ने सर्वथेत्यर्थः। हेतुमाह सहीति। न चेति नैवेत्यर्थः। तदिति रसश्रृङ्गारादिपदप्रयोगेऽपि चमत्काराभावाद्विभावादेरेव तद्व्यञ्जकत्वम्।

रसादिपदोक्तौ स्वशब्दवाच्यत्वात्प्रत्युत दोषत्वं वक्ष्यत इति भावः। व्यङ्ग्य एवेति व्यञ्जकावृत्तिवेद्य इत्यर्थः। ननु विभावादिवाचकेभ्यो रसप्रतीतेरर्द्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीतिवज्जातपुत्रः कृष्णकेश इत्यत्रावस्थाविशेषवच्च वाक्ये एवैका लक्षणास्त्वत आह मुख्यार्थेति न च तात्पर्यानुपपत्त्या लक्षणा अतात्पर्यगोचरस्यापि प्रतीतेः। न चात्र योगः न च विभावादेः कारणत्वात्कार्यकारणभाव एव योग आयुर्घृतमित्यादिवदिति वाच्यं रसादेरकार्यत्वस्योक्तत्वात्। न च ज्ञाप्यज्ञापकभाव एव योगः वृत्तिं विना तस्यैवासिद्धेः। ततश्चान्योन्याश्रयः। न चात्र गङ्गापदे पावनत्वज्ञानमिव रसलक्षणायां प्रयोजनमस्ति तां विना प्रतीतिविश्रान्तेः। योगाभावाच्च। न च रसप्रतीतिरियं प्रयोजनं लक्ष्यमिति वाच्यं ज्ञानविषयस्य प्रयोजनाभावात् फलस्य विषयभिन्नत्वोक्तत्वात्। अत एव न लक्षितलक्षणा गौणी वा योगाद्यभावात्।

[ सरि० ] इत्थं ध्वनिगुणीभूतव्यङ्ग्ये सप्रपञ्चं निरूप्य सम्प्रति व्यङ्ग्यसाधकव्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणमारभते सङ्कलनेनेति। सङ्कलने सङ्ग्रहे भेदानामानन्त्येऽपि उपाधिविशेषणैकीकरणे। पुनः इति भेदान्तरे। अस्य पूर्वोक्तस्य। ध्वनेः ध्वननव्यापारोपहितस्य ध्वनेर्गुणीभूतव्यङ्ग्यस्य च। त्रयः त्रिविधाः। भेदाः प्रकाराः। भवन्तीति। तत्र हेतुमाह व्यङ्ग्यस्येति व्यङ्ग्यस्य प्रतीयमानार्थस्य। त्रिरूपत्वात् वस्त्वलङ्काररसादित्रिविधस्वरूपत्वात्। व्यङ्ग्यस्य हि प्राधान्ये ध्वनिर्भवति गुणभावे तु गुणीभूतव्यङ्ग्यमेवेति ध्वनेर्मूलं व्यङ्ग्यमेव। व्यङ्ग्यस्य वस्त्वलङ्काररसादित्रिविधरूपत्वाद् ध्वननव्यापारोपहितस्य ध्वनेरपि संक्षेपेण कथने त्रय एव भेदा भवन्ति वस्तुध्वनिरलङ्कारध्वनिः रसध्वनिश्चेति। [ त्रिविधत्वकथनमपि व्यञ्जनाव्याख्यानसौकर्याय। अधिकतरसंक्षेपे तु तस्य अविवक्षितवाच्यविवक्षितान्यपरवाच्याविति द्वावेव भेदादधिकतमसंक्षेपे तु सर्वबीजात्मकमेकमेव स्फोटात्मकं व्यङ्ग्यम् ]। तदेव व्याख्याति तथाहीति। तथाहीति विविच्य कथने। किञ्चिद् किञ्चन व्यङ्ग्यमिति। वाच्यतां वाच्यरूपमपि। सहते गृह्णाति वाच्यमपि कर्तुं शक्यते इति। वस्तुमात्ररूपमलङ्काररूपञ्चेति। किञ्चित् किञ्चन। तु इति व्यवच्छेदे तद्व्यतिरिक्तम्। अन्यथा तद्विपरीतमेवार्थाद्वाच्यतां कदापि न सहते। रसादिरूप इत्याशयः। तत्र तयोर्मध्ये। वाच्यतासहं वाच्यमपि कर्तुं शक्यं व्यङ्ग्यं अविचित्रं विलक्षणतारहितम्। विचित्रं विलक्षणम्। चेति समुच्चये। इति इत्थं द्विविधमिति। अविचित्रं विलक्षणतारहितं यद् व्यङ्ग्यं तद्। वस्तुमात्रम् अलङ्कारहीनं केवलं वस्त्वेव। विचित्रं विलक्षणम्। तु इति तद्विपरीतम्। अलङ्काररूपमुपमाद्यलङ्कारविग्रहम्। त्रिविधेऽपि व्यङ्ग्ये किञ्चिद्

वाच्यतां सहते स्वशब्देनाऽभिहितेऽपि चमत्कारमावहति किञ्चित्तु कदाचिदपि न स्वशब्दवाच्यं चमत्कारकारि। आद्यं हि विचित्राविचित्रभेदेन द्विविधं यत्रानलङ्कारं वस्तुमात्रमविचित्रमलङ्काररूपं विचित्रमिति। वाक्यार्थबोधविषयत्वे चमत्कारित्वस्यैव वाच्यतासहत्वात् वस्त्वलङ्कारयोः स्वशब्दाभिहितत्वेऽपि चमत्कारित्वमुक्तम्। वस्तुतस्तु ताभ्यामपि चमत्कारकारित्वं तु व्यक्तावेव। ननु अन्यालङ्करणत्वमेवालङ्कारस्यालङ्कारत्वं तस्य व्यङ्ग्यभावे तु ध्वनित्वात्कथमलङ्कारव्यपदेश इत्यपेक्षायामाह यद्यपीति। यद्यपि तत्त्वतस्तु। प्राधान्येन व्यङ्ग्यत्वे सति मुख्यत्वेन। तदलङ्कारव्यङ्ग्यम्। अलङ्कार्यमलङ्करणीयमेव न त्वलङ्काररूपम्। तथापि तथा स्थितौ सत्यामपि। ब्राह्मणश्रमणन्यायेन पूर्वं ब्राह्मणः पश्चात् श्रमण इति श्रमणे ब्राह्मणव्यवहारवत्। तथा अलङ्कार इति। उच्यते कथ्यते। अयमाशयः— यथा हि शिखासूत्रकर्महीनः श्रमणो न ब्राह्मणस्तथापि भूतकालिकब्राह्मणसम्बन्धेन ब्राह्मणश्रमण इति कथ्यते तथैव व्यङ्ग्यत्वमाप्तोऽलङ्कारोऽलङ्कार्यत्वमाप्तोऽपि अलङ्कार इत्येवाभिधीयत इति। तृतीयं व्याख्याति रसादीति। रसादिलक्षणः रसः आदिपदात् भावश्च लक्षणं संज्ञा यस्य स तादृशः लक्ष्यते ज्ञायतेऽनेनेति व्युत्पत्त्या। रसादिनामक इति। अर्थः प्रतीयमानार्थः। तु इति व्यवच्छेदे तद्विपरीतमिति। स्वप्ने अपि कदाचिदपि सर्वथैवेति। न नैव। वाच्यः स्वशब्देन अभिधेयः। तत्र विमतिमाह स हीति। यदि हि रसादिलक्षणोऽर्थो नैव स्वशब्दवाच्यस्तर्हि सः। हि इत्यवधारणे। रसादिशब्देन सामान्यतो रसभावादिपदैः। वेति विकल्पे। शृङ्गारादिशब्देन विशेषतः शृङ्गारप्रभृतिपदैरेवापि अभिधीयेत उच्येत इति। समाधत्ते नेति न च नैव। अभिधीयते उच्यते रसादिशब्देन वा शृङ्गारादिशब्देनापि। तत्र हेतुमाह तदित्यादि। तत्प्रयोगे तस्य रसादिशब्दस्य वा शृङ्गारादिशब्दस्य वा प्रयोगे व्यवहारे। अपि च। विभावाद्यप्रयोगे विभावादीनामनुपस्थापने। तस्य रसादेः। अपतिपत्तेः चमत्कारप्रतिपत्त्यभावात्। तदप्रयोगे तस्य रसादेर्वा शृङ्गारादेर्वा शब्दस्य प्रयोगाभावे। अपि। विभावादिप्रयोगे विभावादीनामुपस्थापने। तस्य रसादेः। प्रतिपत्तेः चमत्कारप्रतिपत्तिलाभात्। चकारः उभयसमुच्चयार्थः। इति इत्थम्। अन्वयव्यतिरेकाभ्याम् तत्सत्त्वे तत्सत्त्वमन्वयस्तदभावे तदभावो व्यतिरेकस्ताभ्यां विभावादिसत्त्वे तेषां सत्त्वं तेषामभावे तेषामप्यभाव इति। विभावाद्यभिधानद्वारेण विभावाद्युपस्थापनमुखेन। एव इत्यवधारणे न तु तद्बोधकशब्दद्वारेण। प्रतीयते प्रतीतो भवति। इति इत्थम् निश्चीयते निर्णीयते। फलितमाह तेनेति। तेन हेतुना विभावादिप्रत्येयत्वेनेति। असौ रसादिरर्थः। व्यङ्ग्यः प्रतीयमानः। एव इत्यवधारणे न वाच्य इति। यदि नापि वाच्यस्तदा लक्ष्य एवास्तु इत्यपेक्षायामाह मुख्येति। मुख्यार्थबाधाद्यभावात्

मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरसद्भावेति लक्षणापूर्वाधारानुपस्थितेः। पुनः। सः रसादिरर्थः। न लक्षणीयः। नैव च लक्षणागम्य इति। अयमाशयः— रसादिरर्थस्तु न कदापि स्वशब्दवाच्यः। यत्रापि स्वशब्देनोक्तोऽपि दृश्यते तथापि तत्र चमत्कारो न तदाश्रितः। लज्जानम्रमुखी इत्यत्र यो हि चमत्कारः स मुखनमन-व्यापारव्यञ्जितेन भावेनैव न तु लज्जाशब्दोक्तेन। न चासौ रसभावादिपदैर्वा शृङ्गारादिपदैश्च सामान्यैर्विशेषैर्वाऽभिधीयते। तथाभिधानेऽपि विभावादीनामनुप-स्थापने तत्र चमत्कारित्वं न फलति फलनेऽपि न तादृशवाचकशब्दजन्यत्वं चमत्कारस्य यथा 'कोऽप्यजायत रसो निरन्तरः' 'शृङ्गारसीमनि तरङ्गितमातनोति' 'उत्साहस्तस्य कोऽप्यभूत्' इत्यादौ। विभावादीनामुपस्थितौ तु वाचकशब्दाभावेऽपि तेषां चमत्कारित्वप्रतीतिर्यथा 'शून्यं वासगृहमि'त्यादौ। तेन न रसादिरर्थः स्वशब्द-वाच्योऽपितु व्यङ्ग्य एव। न चासौ लक्षणाविषय एव तत्र मुख्यार्थबाधतद्योगरूढि-प्रयोजनान्यतरसद्भावाभावात्। न हि मुख्यार्थबाधस्तत्र विवक्षितान्यपरवाच्यत्वेनैव तत्प्रतीतेः। अतात्पर्यगोचरस्यापि तत्प्रतीतेर्न हि तत्र तात्पर्यानुपपत्त्या लक्षणेति। न च योगः। रसादेरकार्यत्वान्न कार्यकारणभावयोगो विभावादिभिः। न च ज्ञाप्यज्ञापकभावयोगो वृत्तिं विना तस्यासिद्धेः। केवलं तत्रान्योन्याश्रय एव। न च 'गङ्गायां घोषः' इत्यत्र गङ्गापदे पावनत्वज्ञानमिव रसलक्षणायां प्रयोजनमेव सम्भवति तत्पर्यन्तेनैव प्रतीतिविश्रान्तेः। न च तत्प्रतीतिरेव प्रयोजनं ज्ञानविषयस्य प्रयोजना-भावात्। फलस्य विषयभिन्नत्वोक्तत्वाच्च। न वा गौण्येव योगाद्यभावादिति न रसादिर्लक्षणाविषयोऽपि। न च विभावादिवाचकपदानां रसादौ रूढिलक्षणा रसादि-वाचकत्वप्रसिद्धेरभावात्। न हि विभावादीनामनुपयुक्तता न च तेषां रूपान्तरेणाव-गमः। न च विभावादयो न प्रतीयन्त इत्येव तत्समूहावलम्बनरूपत्वाद्रसस्येति नैव प्रयोजनवती च। न च हेतुत्रयमनपेक्ष्य लक्षणायाः प्रवृत्तिरिति सिद्धं रसस्य व्यञ्जनावृत्तिविषयत्वम्।

[ वृत्तिः ] अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूप-व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम्।

[ कमला० ] ननु मा भूद्रसादौ लक्षणा वस्तुपि तु सा स्यादत आह अर्थान्तरेति त्वामस्मि वच्मीत्यत्र वचनमुपदेशेऽर्थान्तरसङ्क्रमितम्। उपकृतं बहु तत्रेत्यत्रापकारो व्यङ्ग्यो वाच्यमत्यन्ततिरस्कृतम्। अत्राद्ये रूढ्यभावादन्त्ये त्वपकारादेः प्रयोजनस्य व्यङ्ग्यत्वमेव न तु लक्ष्यत्वमनवस्थापत्तेरुक्तदूषणत्वाच्चेत्यर्थः। प्रागिति द्वितीयो-ल्लासे। एवमप्यनवस्था स्यादित्यर्थे इत्यर्थः।

[ सरि० ] ननु मा भूद्रसादिर्लक्षणाविषयः किन्तु वस्तुव्यङ्ग्यं सा कथं निवार्यते तत्रार्थस्य लक्ष्यत्वात्प्रयोजनाश्रयेणेति निरासायाह अर्थान्तरेति। अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोः यत्रार्थस्तात्पर्यानुपयुक्तत्वेन रूपान्तरितो भवति, यत्र चात्यन्त एव तिरस्कृतस्तत्र। वस्तुमात्ररूपं वस्तुविग्रहम्। व्यङ्ग्यं विना प्रयोजनस्यैव व्यङ्ग्यत्वात्तदभावे। लक्षणा एव न भवति तत्र रूढ्यभावात्। इति इत्थम्। प्राक् पूर्वमेव लक्षणावसरे। प्रतिपादितं निरूपितमिति। तेन प्रयोजनवत्यां लक्षणायां प्रयोजनस्य व्यङ्ग्यत्वमेव न तु लक्ष्यत्वमिति। यथा हि 'त्वामस्मि वच्मि' इत्यत्र वचनमुपदेशेऽर्थान्तरे सङ्क्रमितम् 'उपकृतं बहु तत्र किमुच्यते' इत्यत्रापकारे व्यङ्ग्ये वाच्यमत्यन्ततिरस्कृतमिति प्रयोजनस्य व्यङ्ग्यत्वमेव न तु लक्ष्यत्वमिति। तेन सिद्धं व्यङ्ग्यस्य त्रैरूप्यं ध्वनेश्च।

[ वृत्तिः ] शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम्।

[ कमला० ] शब्दशक्तीति उल्लास्य कालकरवालेत्यत्राभिधावृत्त्यविषयस्य मेघादेरर्थान्तरस्योपमादेश्च निर्विवादं व्यङ्ग्यत्वम् शब्दबोध्यस्य वृत्तिविषयत्वनियमात्। तेन सह अर्थान्तरेण सहेत्यर्थः।

[ सरि० ] अभिधामूलेऽपि वस्त्वलङ्कारयोर्व्यङ्ग्यत्वसमर्थनायाह शब्दशक्तीति। शब्दशक्तिमूले शब्दशक्तिरभिधा एव मूलं योनिर्यस्य तादृशेऽनुस्वानोपमव्यङ्ग्ये। तु इति व्यवच्छेदे। अभिधायाः वाचकशक्तेः। नियन्त्रणेन एकस्मिन् नियमनेन। यथा 'उल्लास्य कालकरवाल' इत्यादौ राजरूपेऽर्थे। अनभिधेयस्य अभिधया बोधयितुमशक्यस्य। अर्थान्तरस्य द्वितीयार्थस्य इन्द्रमेघादिरूपस्य। तेन तथाविधाभिधाविषयबाह्यार्थान्तरेण सह साकमेव। उपमादेः उपमाप्रभृतेः। अलङ्कारस्यालङ्कृतेरभिधावृत्त्यविषयस्य। व्यङ्ग्यत्वं प्रतीयमानत्वम्। निर्विवादं सर्वसम्मतमिति। शब्दशक्तिमूलव्यङ्ग्येऽपि एकस्मिन्नर्थेऽभिधायाः प्रकरणादिना नियमनेन तस्याः विरम्य व्यापाराभावात्तद्वृत्त्यविषयस्य द्वितीयार्थस्य प्रतीतिरपि व्यञ्जनयैव भवति मुख्यार्थबाधादिहेतुत्रयाभावाल्लक्षणायास्तत्राप्रवृत्तेरभिधायास्तु विरम्य व्यापाराभावाद् वृत्तिं विनार्थप्रतीत्यसम्भवाच्च। एवमेव तत्रोपमादीनां तु स्पष्टतरमेव व्यङ्ग्यत्वं तेषां वाचकत्वाभावात् शब्दबोध्यस्य वृत्तिविषयत्वनियमात्स्मरणस्य तु नानार्थस्थले सम्भवेऽप्यन्वयबोधस्यासम्भवाच्चेति।

[ वृत्तिः ] अर्थशक्तिमूलेऽपि विशेषे सङ्केतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासन्निधियोग्यतावशात्परस्परसंसर्गो

यत्राऽपदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम् ।

[ कमला० ] पृथक्पदाभिहितानां पदार्थानामन्वयः संसर्गो वाक्यार्थ इति भाट्टाः इतरपदार्थान्विते स्वार्थे पदानां शक्तिः । तेन वाक्यार्थः शक्य इति प्राभाकराः । तत्राद्यमतेनाह—विशेषेति । तत्तद् व्यक्तिषु सङ्केतः शक्तिग्रहः कर्तुं न शक्यते आनन्त्याद् व्यभिचाराद्वा । वाक्यार्थस्यापूर्वत्वेन प्रागप्रतीतेश्च सामान्यं जातिस्तद्रूपाणां शक्तिमत्त्वेन ज्ञातानि पदान्याकाङ्क्षादिसहकारिवशात्स्वार्थान्वयं बोधयन्ती सेयं संसर्गमर्यादेत्युच्यते । इदञ्च भट्टैकदेशिमते । भट्टास्तु संसर्गमर्यादाः शब्दवृत्तित्वाभावाद् वृत्त्यविषयत्वे च वाक्यार्थस्याशाब्दत्वापत्तेरनेकपदे वाक्ये संसर्गाणां भेदाद् वाक्यभेदापत्तेश्च तिङन्तपदोक्तविशेषपदार्थे एव वाक्यार्थस्तस्य पदोपस्थितावपि विशेषणपदैः स्वार्थवैशिष्ट्यं लक्ष्यते । ननु विशेष्यपदे लक्षणा न स्यात्तदर्थस्य शक्यत्वात्तत्संसर्गप्रतीतेश्च विशेषणपदैरेव कृतत्वादिति चेन्न विशेष्यत्वस्याशक्यत्वात् संसर्गस्य च विशेषणत्वादिति साधारणत्वेन विशेष्यत्वार्थे लक्षणासिद्धेः । तेन क्रियारूपो वाक्यार्थो लक्ष्य इति । तदुक्तं वार्तिके—

"भावेनैव च वाक्यार्थः स्वकारकविशेषितः ।" इति ।

तिङ्सुवन्तचयो वाक्यं क्रिया वा कारकाऽन्विता' इत्यमरकोशोऽपि । विशेषो मीमांसाकुतूहले वार्तिकटीकायाञ्च ज्ञेयः । ये तु संसर्गांशे कुब्जां शक्तिमाहुस्तेषां शक्तिमत्वस्य पदत्वेन वाक्यमपि पदं स्यात् । शब्दतात्पर्यविषयत्वं शाब्दत्वमिति चेत् शक्तिलक्षणाभिन्नतात्पर्यस्याभावादध्याहारलक्षणाद्युच्छेदापत्तेः शाब्दो वाक्यार्थोऽपि चेन्नाभिधेयस्तदा ततः पश्चाद्भाविनो व्यङ्ग्यस्याभिधेयत्वं दुरापास्तमिति भावः ।

[ शरि० ] अर्थशक्त्युत्थयोर्वस्त्वलङ्कारयोर्व्यङ्ग्यत्वं युक्त्या प्रपञ्चयति अर्थेत्यादिना । अर्थंश स्त्रमूले अर्थशक्तिः शक्तेः शब्दाश्रयत्वेऽपि तत्सहचारित्वेनार्थेऽपि मतत्वेन यार्थशक्तिस्तन्मूले वस्त्वलङ्कारान्यतरव्यङ्ग्ये अपि च । विशेषे तत्तद्व्यक्तिविशेषे सन्निहितगवादिव्यक्तौ यद्वा पदार्थसंसर्गे । सङ्केतः शक्तिग्रहः कर्तुं विज्ञातुम् । न युज्यते न साम्प्रतं नैव पार्यत व्यक्तौ सङ्केतग्रहे आनन्त्याद्व्यभिचाराच्च पदार्थसंसर्गे सङ्केतग्रहे वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेः । इति हेतोः । सामान्यरूपाणां जातिरूपाणां सामान्यत्वेन बोध्यानां वा । पदार्थानां पदबोध्यार्थानाम् । आकाङ्क्षायोग्यतासन्निधिवशात् आकाङ्क्षा प्रतीतिपर्यवसानाविरहः योग्यता पदार्थानां परस्परसम्बन्धाभावः सन्निधिस्तथा नैकट्यं यथाऽन्वयबोधः सम्भवेदिति तद्वशात् तद्बलात् । यत्र यन्मते । अपदार्थः

पदार्थनिवगम्यः । अपि । विशेषरूपः वृत्तित्वानुकूलत्वादिविशेषात्मकः पदार्थावबोध्यः । पदार्थसंसर्गः पदार्थयोगजन्यः । वाक्यार्थः तात्पर्यवृत्त्या वाक्यप्रतिपाद्योऽर्थः । तत्र तत्स्थले । अभिहितान्वयवादे अभिहितानां पूर्वमनन्वितत्वेन यथास्वमुक्तानामन्वयः परस्परसंसर्गः तस्य वादः समर्थनं पूर्वं यथास्वमुक्तानां पश्चादन्वयेन वाक्यार्थबोध इति वादिनि मते । व्यङ्ग्यस्य अभिहितेतररूपस्य प्रतीतिविषयस्य । अभिधेयतायां वाच्यत्वे । का वार्ता नैव वार्ताऽप्युदेतीति यत्र-वाक्यार्थ एव नाभिधेयस्तत्र तस्मादपि दूरभावितया तेनाऽप्याक्षेप्यस्य व्यङ्ग्यस्य तु वाच्यत्वे प्रसङ्ग एव नोदेतीति । प्रथमं पदार्थोपस्थितिः । तत एवाभिधायां निर्वर्तितायां साकाङ्क्षादिवशादेव पदार्थानां परस्परसंसर्गरूपस्य । पदार्थस्य वाक्यार्थस्य बोधस्ततो व्यङ्ग्यप्रतीतिरिति द्वितीयकक्षायामेवानुपस्थिताया अभिधाया स्तृतीयकक्षायां कुतः प्रवेश इति । अयम्भावः अभिहितान्वयवादिनो भाट्टा वाक्यार्थ-बोधे प्रथमं पदार्थानामभिधावशात्पृथगवबोधस्ततस्तेषामर्थानामाकाङ्क्षादिवशा-दन्योन्यसंसर्गरूपस्यापदार्थस्यापि विशेषरूपस्य वाक्यार्थस्य तात्पर्यवृत्त्यावबोध इति कथयन्ति । न हि तत्र तन्मते पदार्थानां प्रागेवान्वयसम्भवः वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेः । पदार्थानां स्वं स्वं सङ्केतितमर्थमवबोध्याभिधा निवर्तते । तत-स्तेषां शक्यार्थानां साकाङ्क्षादिवशात्परस्परसंसर्गरूपविशेषार्थो लक्ष्यते । तस्य च तात्पर्यवृत्त्या वाक्यार्थत्वेनावबोध इति वाक्यार्थबोधनायैवाक्षमाभिधा कथं वाक्यार्थोत्तरकालिकव्यङ्ग्यार्थबोधने समर्था स्यात् । लक्षणा चात्र न हेतुत्रयात्मिका शक्तित्रयेऽन्यतमाऽपितु पदार्थानां परस्परसंसर्गहेतुरपरैव । तेनाभिहितान्वय-वादिमते अभिधालक्षणातात्पर्यवृत्तीरवलम्ब्यैव वाक्यार्थबोधो भवति । तद्विपरीत-मन्विताभिधानवादिनस्तु प्रथममेवान्वितानामेवार्थानामभिधयोपस्थितिं मन्यन्ते । तेन तन्मते वाक्यार्थबोधे लक्षणातात्पर्ययोरनुपयुक्ततैव ।

[ वृत्तिः . येऽप्याहुः –

"शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणाऽत्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥१॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्यावबोधेत सम्बन्धं त्रिप्रमाणकम्" ॥२॥

इति प्रतिपादितदिशा –

"देवदत्त गामानय" इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद्वाक्यादेवंविधोऽर्थः

प्रतिपन्न इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते। परतः 'चैत्र गामानय देवदत्त अश्वमानय' 'देवदत्त गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्ति-निवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थः। न तु पदार्थानां वैशिष्ट्यम्।

[ कमला० ] द्वितीयमते व्यङ्ग्यस्य वाच्यत्वं निराचष्टे – येऽपीति। येऽप्यन्विताभिधानवादिन इत्याहुरित्यन्वयः। शब्दो गामानयेति वाक्यं वृद्धः प्रयोज्यः। अभिधेयो गवानयनादिरर्थः। एतद्यत्र व्युत्पत्तिकाले प्रत्यक्षेण श्रोत्रादिना पश्यति जानाति श्रोतुः प्रयोज्यं चेष्टयाऽनुमानेन तल्लिङ्गकेन प्रतिपन्नत्वं ज्ञातार्थत्वं जानाति यथा अयमेतज्ज्ञानवानेतद्गोचरप्रवृत्तिमत्त्वात्। एतत्प्रवृत्तित्वान्मदीयप्रवृत्तिवत्। सा च धीरतद्वाक्यजन्यात्तदन्वयव्यतिरेकानुविधानाद् द्वयात्मिकां वाच्यवाचकभावात्मिकाम्। अनुपपत्तिश्च शब्दादर्थज्ञानं जायमानं वृत्तिं विनाऽनुपपन्नमन्यथा शक्यार्थधीप्रसङ्गात्। सा च वृत्तिः शक्तिरेव स्वाभाविकत्वात् लक्षणायाश्च मुख्यबाधादिपूर्वकत्वात्। अर्थापत्त्येति गोपदं गवि शक्तिमत्। तदितरा प्रत्यायकत्वे सति तत्प्रत्यायकत्वादित्येवंरूपेत्यर्थः। त्रिप्रमाणकं प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयवन्तं सम्बन्धशक्तिरूपं जानातीत्यर्थः। इदं पूर्वार्द्धविवरणमिति केचित् अन्ये त्वन्यथानुपपत्तिरूपयार्थापत्त्या इत्यभेदेनान्वयमाहुः। एतद् व्याचष्टे देवदत्तेति। अनुमायेत्यन्तमाद्यश्लोकस्थ विवक्षणम्। तयोरित्याद्युत्तरश्लोकस्य बालो व्युत्पत्सुः। द्वयात्मिकां शक्तिमिति व्याचष्टे वाच्यवाचकसम्बन्धमिति। तत्र वाक्ये व्युत्पत्तिः शक्तिग्राहः। पदे कथं शक्तिग्रहस्तदाह परत इति। चैत्रेत्यादिवाक्यत्रये एकैकपदस्यावापोद्वापावन्वयव्यतिरेकौ। ननु व्यभिचारान्वयस्तर्हि केवलेऽर्थे एव शक्तिर्नान्वितेऽर्थेऽत आह प्रवृत्तिनिवृत्तीति। अयम्भावः परार्थः शब्दप्रयोगः। परश्च गामानय गां नयेति प्रवृत्तिनिवृत्तिकारिवाक्यादेव निराकाङ्क्षो जायते न तु पदमात्रात्। अतस्तदेव प्रयोगयोग्यं तदेव च व्युत्पत्तिस्थलम्। तत्र चान्विते एव पदार्थे शक्तिगृहीतेति न केवलं पदमात्रप्रयोगेऽन्विताभिधानमिति। वाक्यस्थितानामेवान्वितानां साकाङ्क्षाणां पदानामन्वितैः पदार्थैः सह सङ्केतो गृह्यत इत्यन्वयः। विशिष्टाः संसर्गविशिष्टाः। ननु तथापि संसर्गत्वं वाच्यं न तु संसर्गविशेषः। गामानय गां बधानेत्यादावानयनबन्धनादिसंसर्गाणां शक्यत्वे गोपदस्य नानार्थत्वापत्तेः न चेष्टापत्तिः।

[ सरि० ] एवमभिहितान्वयवादे व्यङ्ग्यस्याभिधेयत्वं युक्त्या निरस्य अन्विताभिधानवादिमतेऽपि तन्निरासायोपक्रमते येऽपीति। ये अन्विताभिधानवादिनः। अपि च। आहुः कथयन्ति। तदुक्तमुद्धरति शब्देति। ( व्युत्पित्सुः ) अत्र शब्दवृद्धाभिधेयान् च प्रत्यक्षेण श्रोतुः प्रतिपन्नत्वम् अनुमानेन चेष्टया पश्यति अन्यथाऽनुपपत्त्या अर्थापत्त्या तु द्वयात्मिकाम् शक्तिम् बोधेत सम्बन्धम् त्रिप्रमाणकम् अवबोधेत इत्यन्वयः। शब्दवृद्धाभिधेयान शब्दः श्रूयमाणः गामानयेत्यादि वाक्यमिति स च वृद्धौ उत्तमः वृद्धः प्रयोजको मध्यमवृद्धः प्रयोज्यश्च तौ च अभिधेयः गवादिरर्थश्च तान्। व्युत्पित्सुर्बालः इति शेषः। प्रत्यक्षेण प्रमाणेन शब्दं श्रोत्रप्रत्यक्षत्वेन वृद्धावर्थञ्च चाक्षुषप्रत्यक्षत्वेन। एषां प्रत्यक्षा उपस्थितिरुपस्थितेष्वेव शक्तिग्रहात्। श्रोतुः प्रयोज्यस्य मध्यमवृद्धस्य। प्रतिपन्नत्वं व्युत्पन्नत्वं ज्ञातार्थत्वम् अनुमानेन चेष्टया इति अभेदान्वयः गवानयनादिव्यापाररूपेणानुमानेन। पश्यति जानाति। द्वयात्मिकाम् आश्रयभूतस्य वाक्यस्य वाचकत्वं विषयभूतस्यार्थस्य वाच्यत्वमित्येतद्द्वयमात्मा स्वरूपं यस्याः सा तथाविधां वाच्यवाचकं भावात्मिकाम्। शक्तिं वृत्तिम्। अन्यथाऽनुपपत्त्या अन्यथा न उपपद्यत इत्यन्यथानुपपत्तिस्तया अर्थापत्त्या अर्थस्य आपत्तिः कल्पना यस्मादिति यद्वा अर्थस्यापत्तिर्ज्ञानमपि तया प्रमाणभूतया। बोधेज्जानीयात्। एवम् सम्बन्धम् वाच्यवाचकसम्बन्धम्। त्रिप्रमाणकं त्रीणि प्रत्यक्षमनुमानमर्थापत्तिश्चेति अनुपपत्तेरप्यर्थापत्तिभेदत्वात् त्रिविधानि प्रमाणानि सन्तीति। अवबोधेत जानीयादिति। अयम्भावः—व्युत्पित्सुर्बालो हि गामानय देवदत्त इति शक्ये शब्दान् प्रयोज्यकप्रयोजकवृद्धौ गवाद्यर्थञ्च श्रुत्वा प्रत्यक्षीकरोति श्रोतृणा प्रयोज्येन अस्मादयमर्थो ज्ञात इति तत्कृतगवानयनादिव्यापारं दृष्ट्वा अनुमानेन जानाति। पश्चाच्च तत्र अस्य शब्दस्यायमर्थ इति वाच्यवाचकरूपशक्तिमन्यथानुपपत्त्याऽर्थापत्त्या जानाति। तेन हि वाच्यवाचकसम्बन्धो हि प्रत्यक्षानुमानार्थापत्तित्रिप्रमाणकं इति। यदर्थान्तरेणापादितसन्देहं कल्पयति साऽर्थापत्तिरनुमाने तु न सन्दिग्धं सन्देहापादकं वा गमकमतः सामग्रीभेदादेव अर्थापत्त्यनुमानयोर्भेदात्प्रमाणत्रयमुक्तम् दृष्टश्रुतभेदेनार्थापत्तिर्द्विविधा। अभिधानानुपपत्तिरभिहितानुपपत्तिश्चेति श्रुतार्थापत्तिर्द्विविधा। तत्र यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति साऽभिहितानुपपत्तिः अन्वयाभिधानानुपपत्त्या तदुपयोगिपदान्तरकल्पनाऽभिधानानुपपत्तिः। तेन हि वाक्यतदर्थसम्बन्धो हि प्रत्यक्षानुमानार्थापत्तिभिस्त्रिभिः प्रमाणैर्ज्ञायत इति। कारिकाद्वयमित्यमनूद्य तद्व्याख्याति इतीति। इति इत्थम्। प्रतिपादितदिशा यद्वाद्धान्तितं तदनुसारेण। 'देवदत्त गामानय' इति देवदत्तेति मध्यमवृद्धमुद्दिश्य उत्तमवृद्धसम्बुद्धिः। इति इत्थम्। उत्तमवृद्धवाक्यप्रयोगात् उत्तमवृद्धस्य प्रयोजकस्य

वाक्यस्य कथनस्य प्रयोगाद् व्यवहारात् गामानयेति उत्तमवृद्धनियोगेनेत्याशयः। **देशात्** एकस्मात्स्थानात्। **देशान्तरं** स्थानान्तरम्। सास्नादिमन्तं सास्नादिवैशिष्टच-विशिष्टम्। **अर्थं** वस्तु। **मध्यमवृद्धे** प्रयोज्यवृद्धे। **नयति** प्रापयति। सति। **अनेन** मध्यमवृद्धेन। अस्मात् गामानयेत्येतस्मात्। **वाक्याद्** वचनाद्। **एवंविधः** सास्नादिमत्पिण्डानयनरूपः। **अर्थः** अभिप्रायः। **प्रतिपन्नः** ज्ञातः। **इति** इत्थम्। **तच्चेष्टया** तत्कृतगवानयनव्यापारेण। **अनुमाय** परिकल्प्य। तेनेत्थमुक्तमनेनेत्थं कृतमिति कथनस्यायमाशयोऽनेनावगत इति तद्व्यापारेणानुमानविषयीकृत्येति। **तयोः** कथनव्यापारणयोः। **अखण्डवाक्यवाक्यार्थयोः** अखण्डस्य न हि देवदत्तगणादि-विभागेन शकलितस्य वाक्यस्य वाक्यार्थस्य च तयोः। **अर्थापत्त्या** अर्थकल्पनया तद्विना तदसम्भवात्। **वाच्यवाचकभावलक्षणं** वाक्यस्य वाचकत्वं गवानयनस्य वाच्यत्वञ्चेति तत्स्वरूपम्। **सम्बन्धं** शक्तिम्। **अवधार्य** निश्चीय। **तत्र** वाक्ये। **बालः** व्युत्पित्सुः बाल इव बालः। **व्युत्पद्यते** व्युत्पन्नो भवति। **परतः** पश्चाच्च। 'चैत्र गामानय' देवदत्त अश्वमानय' 'देवदत्त गां नय' **इत्यादीति** इतिप्रभृति वाक्यव्यवहारे। **तस्य तस्य** गवादिपदस्य। **तं तं** गवादिरूपम्। **अर्थमभिधेयम्**। अवधारयति निश्चिनोति। **इति** इत्थम्। **अन्वयव्यतिरेकाभ्याम्** आवापोद्वापाभ्यां गवादिपदप्रयोगाप्रयोगाभ्याम्। तत्सत्त्वे तत्सत्त्वमन्वयः तदभावे तदभावो व्यतिरेकः। अत्र चैत्र गामानयेत्यन्वयः देवदत्त गां नयेति व्यतिरेकः। गोपदसत्त्वे गवार्थप्रतीतिस्तदसत्त्वे, च तदप्रतीतिरिति। **प्रवृत्तिनिवृत्तिकारि** प्रवृत्तिः प्रवर्तनं निवृत्तिस्तु निवर्तनमत्र गामानयेति गवानयने प्रवृत्तिकारि गां नयेति तन्निवृत्तिकारि इति तत्कारित्वात्। **वाक्यम्** पूर्णार्थकपदसमूहः। **एव** इत्यवधारणे न तु पदम्। **प्रयोगयोग्यं** व्यवहार्यम्। **इति** हेतोः। **वाक्य-स्थितानां** वाक्यत्वेन परस्परान्वितबोधकतयाऽवस्थितानाम्। एवेत्यवधारणे न तु पृथक्त्वेन स्थितानामपि। **पदानाम्**। **अन्वितैः** पदान्तरेण संसृष्टैः। **अन्वितानां** परस्परसम्पृक्तानाम्। एवेत्यवधारणे। न तु परस्परनिराकाङ्क्षाणामपि। **सङ्केतः** शक्तिग्रहः। **क्रियते** विधीयते गृह्यते इति। **इति** हेतोः। **विशिष्टाः** परस्परान्वयेन वैशिष्टचमापन्नाः। **एवे**त्यवधारणे न तु सामान्याः। **पदार्थाः** पदवृत्तिविषयाः। **वाक्यार्थः** वाक्यप्रतिपाद्य इति। तत्प्रतिपक्षमाह **नेति**। **न** नैव। **तु** हि। **पदार्थानां** प्रथमं सामान्यत्वेनोपस्थितानां पदवृत्तिविषयाणाम्। **वैशिष्टच** विशिष्टसम्बन्धः। वाक्यार्थ इति शेषः। वाक्यस्यैव सङ्केतग्रहे प्रवृत्तिनिवृत्तिहेतुत्वा-त्तत्रान्वितत्वेन विशिष्टाः पदार्थाः एव वाक्यार्थो न तु प्रथमं सामान्यत्वेनाभिहितानां पदार्थानां पश्चादन्वयवैशिष्टचमिति। सङ्केतग्रहस्य व्युत्पत्त्यधीनत्वाद् व्युत्पत्तेश्च व्यवहाराधीनत्वात्प्रवृत्तिनिवृत्तिरूपस्य व्यवहारस्य पदमात्रेण कर्तुमशक्यत्वाद् वाक्य-

स्थितानामेव पदानामन्वितेष्वेव पदार्थेषु सङ्केतग्रहादन्विता एव पदशक्यास्त एव च वाक्यार्थमिति प्रदीपे स्पष्टम् ।

[ वृत्तिः ] यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्त इति पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केतगोचरस्तथापि सामान्यावच्छादितो विशेषरूप एवाऽसौ प्रतिपद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः । तेषामपि मते सामान्यविशेषरूपः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य निःशेषश्च्युतेत्यादौ विध्यादेश्चर्चा ।

[ कमला० ] अर्थभेदे शब्दभेदापत्त्या तदेवेदं पदमिति प्रत्यभिज्ञा न स्यादत आह यद्यपीति । उत्तरमाह तथापीति । अयम्भावः--यथा घटमानयेत्यत्र घटत्वेन शक्यता जातेरेव शक्यत्वात् । नीलघटादिविशेषस्तु प्रकरणादिनाऽऽक्षेपाद् वाभासते तथा संसर्गत्वेन शक्यत्वेऽपि आकाङ्क्षायोग्यतादिवशाद्विशेषधीरिति सामान्येनावच्छादितः आक्षिप्तः सामान्यस्य विशेषं विना पर्यवसानात् । असौ पदार्थः प्रतिपद्यते ज्ञायते । व्यतिषक्तानामन्वितानां, पदार्थानां तथाभूतत्वाद् विशेषबोधविषयत्वात् । दृष्टान्तोऽयम् । यथा पदार्थे गवादौ विशेषधीस्तथा पदार्थत्वात्संसर्गेऽपीत्यर्थः । एतन्मतेऽपि व्यङ्ग्यस्य वाच्यत्वं निराचष्टे तेषामपीति । सामान्यरूपेण विशेषरूपो वाच्य न तु विशेषत्वेनातिविशेषभूतः आनयनान्वयीत्यर्थः । वाक्यार्थेऽन्तर्गतो योग्यतया भासमान इत्यर्थः । असङ्केतितत्वादिति सामान्यलक्षणप्रत्यासत्त्यभावात्सङ्केतविषयत्वादित्यर्थः । अयम्भावः—शक्तिग्रहकाले गोत्वेन गोपिण्डस्य शक्यत्वेऽपि न सर्वव्यक्तिषु शक्तिग्रहः सामान्यलक्षणानङ्गीकारेण तद्व्यक्तीनामनुपस्थितेः । विशेषभानं तु प्रकरणादिना आक्षेपाद्वा । एवं संसर्गेऽपि । न च तर्हि अपदार्थ एव विशेष इति वाच्यमन्वयव्यतिरेकाभ्यां पदगम्यत्वादिति । अर्थान्तरेति तदन्तिकगमननिषेधविरोधिनस्तदन्तिकगमनरूपविध्यादेरित्यर्थः । यत्र व्यक्तिविशेषस्यानभिधेयत्वं तत्र वाक्यार्थप्रतीत्यनन्तरं तदन्तिकमेव रन्तुं गताऽसीत्यादिव्यङ्ग्यस्य विधेश्चर्चा वाच्यत्वप्रसङ्गो दूरेऽनाशङ्क्य इत्यर्थः ।

[ सरि० ] अन्विताभिधाने विशेषे पदानां सङ्केत उक्तो विशिष्टानामेव पदार्थानां वाक्यार्थत्वात् किन्तु यदि गामानयेत्यत्र गोविशिष्टानयने सङ्केतग्रहो मन्यते तदा तु अश्वमानयेत्यादौ कथमानयनपदस्यार्थज्ञानम् ? तेन यद्येकेन सहान्वितरूपेण सङ्केतः स्वीक्रियते वाक्यान्तरे प्रयुक्तस्य तस्यैवार्थबोधो न सम्भवेत् । यदि सामान्य-

रूपेणान्विते एव सङ्केतो मन्यते तदा पक्षान्तरादस्य किं वैलक्षण्यमित्याशङ्क्याऽऽह यद्यपीति। यद्यपि सामान्यतः। वाक्यान्तरप्रयुज्यमानानि भिन्नवाक्ये स्थितानि गामानयेति वाक्यभिन्ने अश्वमानयेति वाक्ये उक्तानीति। पदानि आनयनादीनि। अपि। प्रत्यभिज्ञाप्रत्ययेन प्रत्यभिज्ञा तदेतदिति प्रतीतिस्तस्या प्रत्ययेन बलेनाधारेण। एतानि पदानि। तानि पूर्वमेव प्रयुक्तानि अत एव गृहीतसङ्केतानि। एव नापराणि। इति। निश्चीयन्ते ज्ञायन्ते। इति हेतोः। पदार्थान्तरमात्रेण अन्यपदार्थसामान्येन। अन्वितः संश्लिष्टः। पदार्थः पदवृत्तिविषयः। सङ्केतगोचरः सङ्केतविषयः। तथापि तथासत्यपि। सामान्यावच्छादितः सामान्येन सामान्यरूपेण अवच्छादितः वृतः किन्तु न्यक्कृतसामान्यः सत्यपि सामान्यत्वे तस्य विशेषत्वसहगामित्वेन ग्रहणमिति। विशेषरूपः अन्वितत्वेन विशेषविग्रहः। एव इत्यवधारणे सामान्यविशेषयुगलमेलकस्वभाव इति। असौ अर्थः। प्रतिपद्यते ज्ञायते। तत्र हेतुमाह व्यतीति व्यतिषक्तानां परस्परमन्वितानाम्। पदार्थानां पदवृत्तिविषयाणाम्। तथाभूतत्वात विशेषरूपत्वात्। इति इत्थम्। अन्विताभिधानवादिनः अन्वितानामेव अभिधानं वदन्ति तच्छीलाः प्रथममेव पदानि अन्वितानि भवन्ति सङ्केतग्रहश्चान्वितानामेवेति वादिनः। इति। अयमाशयः—स्थितमेतद्यत्सङ्केतग्रहो व्यवहारतः सम्भवति। व्यवहारो हि वाक्येन भवति न तु पदमात्रेणेति अन्वितेष्वेव पदार्थेषु शक्तिग्रहो न तु पदार्थमात्रे इति। तादृशश्चान्वयो यदि विशेषार्थेन सह मन्यते तदा कथं वाक्यान्तरप्रयुक्तस्य तस्य प्रत्यभिज्ञावशात्सङ्केतबोधः सम्भवति। यदि च स सामान्यार्थेन सह मन्यते तदा किमस्य पक्षान्तराद्वैलक्षण्यमित्यपेक्षायामुच्यते न हि निर्विशेषं सामान्यं भवति विशेषरूपोऽपि सामान्यानुगृहीत एव। तेन सङ्केतग्रहोऽपि सामान्यविशेषयुगलमेलकस्वभाव एव। अतो हि गामानयेत्यत्र गामित्यनेन सहान्वितत्वेन गृहीतसङ्केतमपि आनयपदम् अश्वमानयेत्यत्रापि सामान्यानुगृहीतं सदानयनरूपं सामान्यार्थमश्वानयनरूपं विशेषार्थं बोधयति परस्परमन्वितानामन्योन्यमशक्यपृथक्काराणां पदार्थानां विशेषरूपत्वादिति। यथा हि गामानयेत्यत्र गोत्वेन सकलगाव इव अपरपदार्थान्विताऽनयनत्वादिसामान्यधर्मप्रकारेण गृहीतसङ्केतः सर्वं एव आनयनाद्यर्थं इति। एवमन्विताभिधानवादिनां मतमनूद्य तत्रापि व्यङ्ग्यस्याभिधेयत्वनिरासायाह तेषामित्यादि। तेषाम् अन्विताभिधानवादिनाम्। अपि इति समुच्चये अभिहितान्वयपक्षे इवेति। मते सिद्धान्ते। सामान्यविशेषरूपः सामान्यमपरपदार्थान्विताऽनयनत्वादिसाधारणधर्मेण। विशेषरूपः वस्तुगत्या गवानयनादिरूपः। पदार्थः पदवृत्तिविषयः। सङ्केतविषयः शक्तिः। इति हेतोः। अतिविशेषभूतः गवानयनादिरूपविशेषस्वरूपः। वाक्यार्थान्तर्गतः गामानयेत्यादिवाक्यमध्य-

निविष्टः। असङ्केतित्वात् सङ्केतविषयबाह्यत्वात् सामान्येनैव रूपेण विशेषस्य शक्यत्वान्न तु विशेषरूपेणेति तस्या सङ्केतितत्वम्। अवाच्यः अभिधाविषयबाह्यः। पदार्थः पदवृत्तिविषयः। यत्र वाक्ये मते वा। प्रतिपद्यते ज्ञानविषयीभवति। तत्र तादृशस्थलेऽपि। अर्थान्तरभूतस्य न पुनस्तस्याधमस्यान्तिकमिति तदन्तिकगमननिषेधस्य विरोधिनः तदन्तिकगमनरूपस्य विपरीतार्थत्वमाप्तस्य। निःशेषच्युतेत्यादौ निःशेषच्युतचन्दनं स्तनतटमिति काव्ये। विध्यादेः तदन्तिकगमनरूपविध्यर्थस्य। चर्चा वार्ता वाच्येति। दूरे विप्रकृष्टे एव। अयमाशयः—अन्विताभिधानवादिमतेऽपि व्यङ्ग्यस्य नैवाभिधेयत्वम। यत्र हि सामान्येन विशेषरूप एव पदार्थः सङ्केतविषय इति अतिविशेषभूतत्वाद् वाक्यार्थस्यैवावाच्यता तत्र तत्प्रतीत्यनन्तरं वक्तृबोद्धव्यवैशिष्ट्येन प्रतीयमानस्य व्यङ्ग्यस्य त्वभिधेयत्वे वार्तैव नोदेतीति।

**[ वृत्तिः ] अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधानेऽन्वितविशेषस्त्ववाच्य एव इत्युभयनयेऽपि अपदार्थ एव वाक्यार्थः।**

[ कमला० ] मतद्वये प्रकृताविरोधमाह अन्वित इति। अभिहितान्वये इति वाच्ये इति शेषः। एवमग्रेऽपि। अतोऽर्थस्य वाच्यत्वे एव विवादः प्रतीयमानस्य संसर्गविशेषस्य व्यक्तिविशेषस्य वाऽनभिधेयत्वं तूभयोस्तुल्यम् तथा व्यङ्ग्येऽपीति भावः। वाक्यार्थो वाक्ये प्रतीयमानोऽर्थ इत्यर्थः। अपदार्थः पदामभिधेयः।

[ सरि० ] मतद्वयेऽपि प्रकृताविरोधं युगपदाह अनन्वित इति। अभिहितान्वये अभिहितानामभिधया प्रकटीकृतस्वस्वशक्यार्थानां पदानामन्वयः संसर्गस्तस्मिन् यद्वा अभिहितानामभिधया प्रकटितानामर्थानामन्वयः संयोगस्तस्मिन्। पदानि पूर्वमभिधया स्वं स्वमर्थं प्रकटयन्ति पश्चाच्च तेषामन्वयेन एकार्थो लक्ष्यते तच्च तात्पर्यवृत्त्या प्रकाश्यते इति वादे तदाख्ये। अनन्वितः असंसृष्टः पृथक्पृथगदबोधितः। अर्थः पदार्थः। अन्विताभिधाने अन्वितानां परस्परसंयुक्तानामर्थानामभिधानमभिधया बोधनं तस्मिन्। पदार्थान्तरेण अन्येषां पदानामर्थेन। अन्वितः संयुक्तः। भवतीति शेषः। अन्वितविशेषः विशेषण संसृष्टः 'गामानय' इत्यत्र गवान्वितानयनरूपः। तु। अवाच्यः अनभिधेयः। एव। इति हेतोः। उभयनये अभिहितान्वयनयेऽन्विताभिधाननये। अपि च। अपदार्थः पदवृत्त्यविषयः। एव न तु पदबोध्यः। वाक्यार्थः वाक्यबोध्यार्थः। इति। अभि-

हितान्वयवादेऽनन्वित एवार्थो वाक्यार्थः अन्विताभिधाने पदार्थसामान्यान्वितः स्वार्थः सङ्केतविषयः गवादिविशेषान्वितानयादिरूपस्त्वसङ्केतित एवेत्यवाच्य एव वाक्यार्थ इति। यदा वाक्यार्थ एवानभिधेयस्तदा तदाक्षिप्तस्य व्यङ्ग्यार्थस्याभिधेयत्वसम्भावना कथमपि नोदेतीति। ये हि तथा मन्यन्ते ते विषयानभिज्ञा एवेति।

[ वृत्तिः ] यदप्युच्यते नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते इति। तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा? शब्दस्य प्रकाशकत्वान्न कारकत्वम्। ज्ञापकत्वं तु अज्ञातस्य कथम्? ज्ञातत्वञ्च सङ्केतेनैव। स चान्वितमात्रे एवञ्च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते इत्यविचारिताभिधानम्।

[ कमला० ] एकदेशिमतमाशङ्कते यदपीति। नैमित्तिकं व्यङ्ग्यधीः। तद्वशाच्छब्दशक्तिर्निमित्तं कल्प्यते। शब्दश्रवणानन्तरं व्यङ्ग्यधीर्जायमानान्यस्याभावाच्छब्दमेव निमित्तं कल्पयति शक्तिं विना तदसम्भवात्तां कल्पयतीति भावः। दूषयति तत्रेति कारकत्वं जनकत्वम्। अज्ञानस्येति प्रत्यक्षेतरप्रमाणस्य ज्ञातकारणत्वं नियमात् अगृहीतसङ्केतस्य तद्धीप्रसङ्गाच्च। अस्तु तर्हि ज्ञातस्य ज्ञापकत्वमत आह ज्ञातत्वञ्चेति। सङ्केतेनैव न तु स्वरूपेणेत्यर्थः। स च सङ्केतोऽन्वितमात्रे न त्वन्वितविशेषे इत्यर्थः। अस्तु को दोषस्तत्राह एवञ्चेति निमित्तस्य शब्दस्य नियतनिमित्तत्वं विशेषसङ्केतवत्त्वम्। नैमित्तिकस्य व्यङ्ग्यस्य विशेषसङ्केतग्रहे सति तदुपस्थितिर्विशेषोपस्थितौ च तत्र सङ्केतग्रह इति अन्योन्याश्रय इत्यर्थः।

[ हरि० ] व्यङ्ग्यस्य शब्दबोध्यत्वात्तस्य वृत्तिं विना बोध्यबोधकरूपनिमित्तत्वासम्भवात्तत्राभिधैव वृत्तिरित्येकदेशिमतमाशङ्क्य दूषयितुमुपक्रमते यदपीत्यादिना। यदपि यच्च। उच्यते कथ्यते नैमित्तिकानुसारेण नैमित्तिकानां यन्निमित्तं कश्चिदपि निमित्तत्वेन कल्प्यते तन्नैमित्तिकं हेतुमत् तेषां हेतुमतामर्थानामनुसारेणानुरूप्येण। यद्यत्प्रयोगाधीनप्रतीतिकं तत्तन्निमित्तकमित्याकारेणेत्याशयः। निमित्तानि सम्बन्धग्रहणादीनि। कल्प्यन्ते उन्नीयन्ते। इति इत्थम्। 'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते यद्यत्प्रयोगाधीनप्रतीतिकं तत्तन्निमित्तकमित्याकारेण सम्बन्धग्रहणादीनि उन्नीयन्ते इति यदुच्यते तदसदिति भावः। तत्रारुचिप्रदर्शनाय प्रकरणमारभते तत्रेति। तत्र नैमित्तिकानुसारेण निमित्तकल्पने। निमित्तत्वं व्यङ्ग्यं प्रति हेतुत्वम्। यदुच्यते तद् हि कारकत्वं

निर्मायित्वम्। वा इति पक्षान्तरे। ज्ञापकत्वं सूचकत्वम्। शब्दस्येति। यदि हि व्यङ्ग्यं प्रति शब्दस्य निमित्तत्वं मन्यते तदा तत्तस्य व्यङ्ग्यस्य कारकत्वमुताहो ज्ञापकत्वम्। तत्राद्यं पक्षं खण्डयति शब्दस्येति। शब्दस्य। व्यङ्ग्यस्य प्रकाशकत्वात् द्योतकत्वान्न तूत्पादकत्वात्। न नैव। कारकत्वं निर्मायित्वं वाऽर्थजनकत्वमिति। यदि हि शब्दस्य व्यङ्ग्यं प्रति कारकत्वं तदा सुरस्य मोदकस्य च शब्दस्योच्चारणमात्रेण मुखस्य पाटनपूरणे स्याताम् किन्तु न तथेति न हि शब्दस्य कारकत्वमपि तु केवलं सत एवार्थस्य बोधकत्वमेवेति। द्वितीयमपि पक्षं दूषयति ज्ञापकत्वमिति। ज्ञापकत्वं सूचकत्वम्। तु अपि। अज्ञातस्य अनवगतस्य। कथं केनोपायेन स्यादपि तु नैवेति। ज्ञातमेव धूमादिरग्नेर्ज्ञापकं भवति। प्रत्यक्षान्यप्रमाणस्य ज्ञातस्यैव करणत्वनियमः। अज्ञातस्य वा स्वरूपमात्रेण ज्ञातस्य ज्ञापकत्वे सर्वदार्थप्रतीतिप्रसङ्गादव्युत्पन्नस्यापि शब्दश्रवणमात्रेणाप्यर्थप्रतीतिप्रसङ्गः स्यात् किन्तु न तथेति नैव शब्दस्य व्यङ्ग्यं ज्ञापकत्वमपि। अस्तु तर्हि ज्ञातस्यैव ज्ञापकत्वमित्याह ज्ञातत्वमिति। ज्ञातत्वमवगतत्वम्। सङ्केतेन सङ्केतवत्त्वेन। एव इत्यवधारणे वाचकपरिज्ञाने व्यतिरिक्तकारणाभावात्। सः सङ्केतः। च तु। अन्वितमात्रे अन्वितसामान्ये एव न तु अतिविशेषलक्षणेऽन्वितिविशेषेऽपि। अस्तु तर्हि अन्वितविशेषे एव सङ्केत इत्यपेक्षायामाह एवमिति। एवमित्थम्। च हि। निमित्तस्य निमित्तत्वेन गृह्यमाणस्य शब्दस्य। यावत् यावत्पर्यन्तम्। नियतनिमित्तत्वं किम्प्रकारकं निमित्तत्वमिति निश्चितनिमित्तत्वं विशेषसङ्केतवत्त्वम्। न नैव। निश्चितमवधारितम्। तावत् तावत्पर्यन्तम्। नैमित्तिकस्य निमित्तविषयत्वेन कथ्यमानस्य व्यङ्ग्यस्य। प्रतीतिः ज्ञानम्। एव। कथम् कथं भवतीति। इति हेतोः। नैमित्तिकेत्यादि इति कथनमिति। अविचारिताभिधानम् अविषये एव वचनप्रयोगः इति। अयम्भावः—नैमित्तिकानुसारेण निमित्तानि प्रकल्प्यन्ते अर्थात् यद्यत्प्रयोगाधीनप्रतीतिकं तत्तन्निमित्तकमित्याकारेण सम्बन्धग्रहणादीन्युन्नीयन्ते इत्युक्तिमनुसृत्य व्यङ्ग्यं नैमित्तिकं शब्द एव निमित्तं निमित्तान्तरानुपलब्धेः इति मत्वा बोध्यबोधकरूपं हि तन्निमित्तत्वं वृत्तिं विना न सम्भवतीति व्यङ्ग्यस्यापि वाच्यार्थस्यैवाभिधाविषयत्वं यदुच्यते कैश्चित् शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्रैवोपस्थितत्वाच्छब्द एव निमित्तं कल्प्यत इत्याधारेण तदसत्। निमित्तत्वं हि कर्तृत्वेन ज्ञापकत्वेन वा भवति। न हि व्यङ्ग्यं प्रति शब्दस्य कर्तृत्वं तस्य द्योतकत्वात्, न च ज्ञापकत्वं व्यङ्ग्यस्याज्ञातत्वात्। ज्ञातत्वं तु सङ्केतितार्थे एव यो हि अन्वितमात्रे भवति न त्वन्वितविशेषे। शब्दस्यार्थकारकत्वे मोदकशब्दोच्चारणादेव मुखपूरणं स्यात्। ज्ञातमेव धूमादि वह्नेर्ज्ञापकं भवति। अज्ञातस्य स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वे तु

सर्वदार्थप्रतीतिप्रसङ्गेनाव्युत्पन्नस्यापि शब्दश्रवणमात्रेणार्थप्रतीतिः स्यात्। तेन यदा निमित्तस्यैव किं स्वरूपमिति नियतनिमित्तत्वं न निश्चेतुं शक्यते तदा नैमित्तिकस्य प्रतीतेस्तु वार्तैव नोदेति। अतो यदुच्यते मीमांसकैर्नैमित्तिकानुसारेण निमित्तानि प्रकल्प्यन्ते इति तदस्थाने वचनप्रयोग एवेति। वस्तुतस्तु व्यङ्ग्यं प्रति शब्दस्य न कारकत्वं तस्य द्योतकत्वमेव न च ज्ञापकत्वमेव व्यङ्ग्यार्थे सङ्केतितत्वाभावात्सङ्केतितार्थस्यैव ज्ञातत्वसम्भवाज्ज्ञातस्यैव च ज्ञापकत्वसम्भवादिति। इदमत्र स्थितम्। न ह्यर्थं प्रति शब्दस्य कारकत्वं तस्य तदनुत्पादकत्वात् केवलं प्रकाशकत्वात्। न ह्यसङ्केतितमर्थमभिधा बोधयितुं प्रभवति। अतः सङ्केतसापेक्ष एव शब्दः स्वव्यापारं कर्तुं प्रभवति न तु स्वभावत एव। यत्रैवास्य सङ्केतस्तावन्मात्रस्य प्रतिपत्तिरिष्टा न तु व्यङ्ग्यस्य तत्र सङ्केताभावात्। एवञ्च नियतसम्बन्धाग्रहात् नैमित्तिकप्रतीतिरेव दुर्लभेति।

**[ वृत्तिः ] ये त्वभिदधति "सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार" इति "यत्परः शब्दः स शब्दार्थ" इति च "विधिरेवात्र वाच्य" इति। तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानाम्प्रियाः। तथाहि भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति। ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद् विधीयते। यथा ऋत्विक्प्रचरणे प्रमाणान्तरात्सिद्धे लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र लोहितोष्णीषत्वमात्रं विधेयम्। हवनस्यान्यतः सिद्धेर्दध्ना जुहोतीत्यादौ दध्यादेः कारणत्वमात्रं विधेयम्। क्वचिदुभयविधिः। क्वचित्त्रिविधिरपि। यथा रक्तं पटं वयेत्यादौ एकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे। एवं हि पूर्वो धावतीत्यादावपराद्यर्थेऽपि क्वचित्तात्पर्यं स्यात्।**

[ कमला० ] लोल्लटमतमाशङ्कते ये त्विति। यथा शर एकेनैव वेगाख्यव्यापारेण रिपोः कवचहृदयभेदप्राणहरणानि करोति तथा शब्द एकेनैव शक्तिरूपेण व्यापारेण पदार्थवाक्यार्थव्यङ्ग्यज्ञानानि करोत्यतो व्यङ्ग्यं शक्तिरेवेत्यर्थः। यत्पर इति। यत्र शब्दस्य तात्पर्यं स शब्दार्थं इत्यर्थः। अत्रेति न पुनस्तस्यावमस्येत्यत्र गतासीति विधिर्वाच्य एवेत्यर्थः। दूषयति तेऽपीति तात्पर्यवाचोयुक्तेस्तात्पर्यपदस्य तात्पर्यमजानन्तस्ते देवानाम्प्रियाः पशव इत्यर्थः। भूतेति। अयम्भावः--न तावत्प्रतीतेर्व्यङ्ग्ये शब्दस्य तात्पर्यं युक्तं पूर्वो धावतीत्यादौ अपरार्थेऽपि तात्पर्यापत्तेः। किन्तु विधीयमानस्यैव तात्पर्यविषयत्वं विधेस्तत्र तात्पर्यात्। न च

व्यङ्ग्यं तदस्ति न हि सर्वत्र व्यङ्ग्यं विधिरस्तीति। ग्रन्थार्थस्तु भूतं सिद्धरूपं सोमादि भव्यं साध्यं यागादि कारकपदार्था यागादयः। प्रधानक्रियेति यागेन स्वर्गमिति। यागस्य करणत्वेऽप्यसाधितस्य तदयोगाद्यागं कुर्यादित्यर्थाक्षिप्तयागस्य साध्यत्वं प्रतीयते। यद्वा दध्ना जुहोतीत्यादौ कारकपदार्था दध्यादयः होमानुवादेन विधीयमाना अक्रियारूपस्य दध्नो विधेयत्वायोगात्। प्रधानक्रियाया होमस्य निर्वर्तिततया स्वक्रियाकरणत्वरूपकारकाणां क्रियैकदेशत्वात् क्रियात्वोक्तिः। तत्सम्बन्धात्साध्यायमानतां साध्यतुल्यता विधेयत्वात्साध्यत्ववत्प्रधानत्वं प्राप्नुवन्तीत्यर्थः। अतएव साध्यायमानतामित्युक्तं न तु साध्यतामिति। ततश्चेति अदग्धमेव हि अग्निर्दहति तथेत्यर्थः। उदाहरणमाह ऋत्विगिति ऋत्विक् सहिते प्रचरणे इत्यर्थः। प्रमाणान्तरादतिदेशात्। ज्योतिष्टोमविकृतौ श्येनयागे हीदं श्रुतम्। उदाहरणान्तरमाह हवनस्येति अन्यतोऽग्निहोत्रं जुहोतीत्युत्पत्तिवाक्यादित्यर्थः। अक्रियारूपस्य दध्नो विधेयत्वायोगात्करणत्वमात्रमित्युक्तम्। उभयविधिरिति यथा सोमेन यजेतेत्यत्र सोमयागयोरित्यर्थः। त्रिविधिरिति यथा यदाग्नेयोऽष्टाकपाल इत्यत्र हव्यदेवतायागानामित्यर्थः। यत्त्वत्र देवनाथेनोक्तं लोहितोष्णीषत्वप्रचरणयोरुभयोर्लोहितोष्णीषप्रचरणऋत्विजाञ्च त्रयाणां विधिरिति तदतिदेशाद् द्वयोः प्राग्वैर्मीमांसाध्ययनाभावान्मौर्ख्यं कृतमित्युपेक्ष्य लोकेषूदाहरति यथेति रक्तत्वपटत्ववयत्वानां मध्ये एकस्य द्वयोस्त्रयाणां वाऽसिद्धावेकादिविधिरित्यर्थः। उपात्तस्यैवेति तत्र निःशेषेत्यादौ विधिरूपात्तो येन शब्दस्य तत्र तात्पर्यं स्यादिति। अर्थे वृत्तिविषये इदं त्वापाततः। वस्तुतस्तु लोके शक्तिलक्षणाभिन्नस्य तात्पर्यस्यैवानिरूपणादिति तत्त्वम्। अस्तु प्रतीतमात्रे तात्पर्यं तत्राह एवं हीति। पूर्वत्वापरत्वयोः समानसंवित्संवेद्यत्वादिति भावः।

[ सरि० ] पदस्य कस्मिंश्चिदर्थे सङ्केतग्रहे तत्प्रतिपाद्येऽन्यत्रापि शक्तिरिति भट्टलोल्लटादिमतमनुभाष्य दूषयितुमुपक्रमते ये त्वित्यादिना। ये येचन पण्डितम्मानिनः। तु पुनः। अभिदधति कथयन्ति। सः प्रतीयमानोऽपि। अयमर्थः। इषोः बलवता शत्रुमुद्दिश्य प्रयुक्तस्य बाणस्य। इव यथा। दीर्घदीर्घतरः प्रवृत्त्यभेदेन विहितः। व्यापारः क्रिया। इति इति समुद्धरणे। अयमाशयः—यथा हि बलवता शत्रुमुद्दिश्य प्रहितो बाण एकेनैव वेगाख्येन व्यापारेण शत्रोः कवचं छिनत्ति वक्षो भिनत्ति प्राणांश्चापहरति तथैव बुद्धिमता प्रयुक्तः शब्दोऽपि एकेनैव शक्तिव्यापारेण पदार्थस्मृतिं वाक्यार्थबुद्धिं व्यङ्ग्यार्थं प्रतीतिञ्च विदधाति इत्यतो व्यङ्ग्येऽपि शक्तिरेवेति। किञ्च यत्परः यत्परत्वेन प्रयुक्तो यमुद्दिश्य प्रयुक्त इति। शब्दः। सः तात्पर्यसिक्त एव। शब्दार्थः शब्दविषयः इति। शब्दस्य हि

नैवैकार्थप्रतीतौ विरामो विवक्षितार्थप्रत्यायनेनैव तस्य विरामादिति । तेन हि यत्र शब्दस्य तात्पर्यं स एव तस्यार्थ इति । तेन अत्र निःशेषच्युतचन्दनमित्यत्र वाक्यस्य तस्यैवार्थस्य विवक्षातः 'न पुनस्तस्याधमस्यान्तिकम्' इत्यत्र निषेधात्मकस्यापि वाक्यस्य विधिः तदन्तिकगमनम् । एव इत्यवधारणे न तु निषेधः । वाच्यः अभिधया बोध्यो विवक्षितत्वात्तत्रैव तात्पर्यपर्यवसानेनेति । इति । ते तथावादिनः । अपि च । तात्पर्यवाचोयुक्तेः यत्परः शब्दः स शब्दार्थं इति मीमांसककथनस्य । अलुक् षष्ठी । अतात्पर्यज्ञाः रहस्यमजानन्तः । देवानांप्रियाः पशवो विशेषेण गाव एवेति । तर्हि किं यत्परः शब्दः स एव शब्दार्थ इत्येतस्य तात्पर्यमित्यपेक्षायामाह तथाहीति । तथा हि इति निदर्शने । भूतभव्यसमुच्चारणे भूतं सिद्धं भव्यं साध्यं तयोः समुच्चारणे समभिव्याहारे एकत्रोक्तौ । भूतं सिद्धम् । भव्याय साध्याय । समुपदिश्यते उपस्थाप्यते । यत्र हि एकत्र सिद्धसाध्ययोरुपस्थितिस्तत्र प्रथमं द्वितीयाय भवतीति ( शाबरभाष्यम् ३/४/४२ ) कारकपदार्थाः विभक्त्यन्तपदानीति यथा गामानय इत्यत्र गामिति कर्मकारकत्वेन कर्मणि द्वितीयेति द्वितीयान्तपदम् । अक्रियारूपा अपि कारकान्तपदद्योत्यार्थाः । क्रियापदार्थेन साध्यरूपं तिङन्तं वा साध्यरूपं घञाद्यन्तं यत्क्रियापदं यथा 'गामानय' इत्यत्र आनयेति तस्यार्थस्तेन । अन्वीयमानाः अनुगम्यमानाः सम्बद्धा इति । प्रधानेति प्रधाना मुख्यत्वेन तात्पर्यपर्यवसायित्वेन विवक्षिता या क्रिया गामानयेत्यत्र आनयनरूपा साध्या तस्या निर्वर्तिका सम्पादयित्री या स्वस्य गामानयेत्यत्र गोरित्यस्य क्रिया चलनादिरूपा तस्याः अभिसम्बन्धात् आश्रयत्वात् । साध्यायमानतां स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्यावस्थाम् । प्राप्नुवन्ति विपरिणमन्ति । यथा हि पूर्वमेव सिद्धस्यापि घटस्य नीलत्वदशायां नीलो घटो जात इति व्यवहारस्तथा सिद्धक्रियारूपाणामपि कारकाणां साध्यक्रियाभिसम्बन्धात् साध्यरूपत्वं भाक्तमिति । यथा वा 'घटमानय' इत्यत्रानयनं समीपदेशसंयोगः स एव प्रधानक्रिया तस्या निर्वर्तिका सम्पादयित्री या घटस्य पूर्वदेशसंयोगध्वंसहेतुविभागजनकस्पन्दः क्रिया तदभिसम्बन्धात् स्वरूपतः सिद्धावपि स्पन्दाश्रयत्वेन साध्यत्वं लभते घट इति । विशेष्ये बाधे स्पन्दस्यैव तथात्वमिति । ततः तथासाध्यत्वप्राप्त्या । च । अदग्धदहनन्यायेन यथा दहनेन वह्निना अदग्धमभस्मीभूतमेव दह्यते भस्मसात्क्रियते न तु भस्मनः पुनर्दाह इति न्यायात् साध्यान्वितसिद्धेषु । यावत् अप्राप्तमसिद्धं साध्यमिति । तावदेव तावत्पर्यन्तमेव न तु सिद्धमपि । विधीयते क्रियते शब्देनेति शेषः । तत्र निदर्शनमाह यथेति । यथा इति निदर्शने । ऋत्विक्प्रचरणे ऋत्विजां याजकविशेषाणां होतृसहचराणां प्रचरणे नियतकार्यानुष्ठाने ज्योतिष्टोमविकृतिश्येनयागप्रकरणे इति । प्रमाणान्तरात्

ज्योतिष्टोमातिदेशादिति। सिद्धे सिद्धत्वमाप्तेऽपि प्रमाणान्तरात् ज्योतिष्टोमाति-देशात् ऋत्विजां प्रचरणे सिद्धेऽपीति पुनः श्येनयागे 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' इत्यत्र रक्तशिरोवसनाच्छादितशिरस्का ऋत्विजः कृत्यमनुतिष्ठन्ति इति वाक्ये। लोहितोष्णीषत्वमात्रं रक्तशिरोवेष्टनवसनशिरोवेष्टनमात्रम्। विधेयं तात्पर्यमिति। अयम्भावः—श्येनयागे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' 'इति वाक्यमायाति। श्येनयागो हि ज्योतिष्टोमस्य विकृतिरेव। तत्र ऋत्विजा प्रचरणं तु प्रमाणान्तरभूते ज्योतिष्टोमे एव विधानादत्र तु तस्य सिद्धत्वमेव साध्यत्वं त्वस्य वाक्यस्यात्र ये हि ऋत्विजः प्रचरन्ति ते लोहितोष्णीषा भवेयुरिति लोहितोष्णीषत्वमात्रे प्रयोजनं न तु प्रचरणेऽपि तस्य सिद्धेः प्रागेव। न हि दग्धं दह्यते इतिवत् न हि प्रमाणान्तरेणैव सिद्धं प्रचरणं पुनरत्राऽप्युच्यते पिष्टपेषणवत्। उदाहरणान्तरमाह हवनस्येति हवनस्य आहुतिकर्मणः। अन्यतः ग्रन्थान्तरात् प्रकरणान्तराद्वा। सिद्धेः सिद्धत्वात्। 'दध्ना जुहोति' इत्यादौ इति वाक्ये दध्यादेः दध्नः। करणत्वमात्रं हवनसाधनत्वमात्रम्। विधेयं तात्पर्यं न तु हवनमपि तस्य प्रागेव सिद्धत्वात्। अयमाशयः--दध्ना जुहोति इति वाक्ये दधिशब्देनैव प्रयोजनं न तु जुहोत्याऽपि। तस्य तु प्रकरणान्तरसिद्धेः। जुहोतीति अनुवर्तमानेऽत्र दध्ना इत्येव तस्य तात्पर्यमिति तन्मात्रस्यैव पूर्वमप्राप्तत्वात्। यत्र तु न प्रमाणान्तरसिद्धिस्तत्र किं स्यादित्यत आह क्वचिदिति। क्वचित् कुत्रचित्स्थले तु। उभयविधिः विधेयत्वस्यैकवर्तित्वमेवेत्यनियमात् विधिद्वयमपि गृह्यते विधेयत्वेन यथा 'सोमेन यजेत' इत्यत्र सोमस्य करणस्य यजेतेत्येतस्य यागस्य च। क्वचित् कुत्रचित्तु यत्र तदधिकविधीनामपि आवश्यकता तत्र त्रिविधिः विधित्रयमपि। यथा 'यदाग्नेयोऽष्टाकपालः' इत्यत्र हव्यदेवतायागानां त्रयाणामेव विधेयत्वमिति। लोकेऽपि अप्राप्तांशस्यैव प्राप्तिमुदाहरति यथेति रक्तं पटं वय इत्यादौ इति कथने। एकविधिः त्रिषु पदप्राप्तं तस्यैकस्यैव विधेयत्वं द्वयोस्त्र-याणामेव वेति। ज्ञाते पटवयनोद्देश्ये रक्तत्वस्यैव विधेयत्वम्। ज्ञाते च रक्तत्वे पटवयनयोः यद्वा ज्ञाते पटे रक्तत्ववयनयोः ज्ञाते रक्तत्वपटादिके वयनस्य वा विधेयत्वमिति। लब्धार्थं संहृत्याह ततश्चेति। ततः तेन। च हि। यदेव यावानंश एव। विधेयं सूचनीयम्। तत्रैव तस्मिन्नेवांशे। तात्पर्यं प्रयोजनम्। इति हेतोः। उपात्तस्य तात्पर्यान्वितत्वेन गृहीतस्य। शब्दस्य। एव न त्वन्येषामपि। अर्थे प्रयोजने। तात्पर्यं प्रयोजनम्। न नैव। तु इति व्यवच्छेदे। प्रतीतमात्रे उपस्थितमात्रे तत्कालं येन केनापि सम्बन्धेन ज्ञायमाने। प्रतीतमात्रेऽपि तात्पर्ये को दोष इत्यपेक्षायामाह एवमिति। एवं प्रतीतमात्रेऽपि तात्पर्ये सति। हि यतः। 'पूर्वो धावति' इत्यादौ। अपराद्यर्थे धावनकर्मण अपरेणापि सम्बद्धत्वेन

अपरो धावति इत्याद्यर्थेऽपि । **क्वचित्** कुत्रचिदेतादृशस्थले ; **तात्पर्यं** प्रयोजनम् । स्यात् यन्नेष्टमिति । पूर्वत्वं हि नियतमेव अपरसापेक्षमिति अपरभावे एव पूर्वत्वसिद्धेः पूर्वत्वज्ञानकालज्ञायमानं अपरपदार्थोऽपि कदाचित्तात्पर्यविषयः सन् पूर्वशब्दवाच्यतां भजेतेति । इत्थमुक्तं भवति । ये हि यत्परः शब्दः स एव शब्दार्थ इति निःशेषच्युतचन्दनमित्यादौ शब्दं विधिपरं मत्वा विधिरेव तस्य वाच्य इति विधिश्चाभिधाया वीरप्रयुक्तशरस्येव ( प्रथमं वेगस्ततः कवचच्छेदनकर्म ततो वेगस्ततो वक्षो भेदनकर्म ततो वेगस्तत प्राणहरणकर्मेति । ) दीर्घदीर्घतरव्यापार इति मन्यन्ते ते 'यत्परः शब्दः स एव शब्दार्थः' इत्युक्तेस्तात्पर्यमजानन्तो मूर्खा एवैकतानाः । वस्तुतस्तु न तथा तदाशयः । तदाशयस्त्वित्थम् । यत्रैकत्र सिद्धसाध्ययोः समभिव्याहारस्तत्र सिद्धं हि साध्यसाधनाय भवति इत्युक्तदिशा कारकपदार्था यथा गामानयेत्यत्र गामित्येतस्य अनुगतक्रियापदार्थाः सन्तः यथा तत्र आनयेत्येतेन मुख्या या क्रिया आनयनरूपा तस्याः सम्पादिकाया स्वस्य क्रिया चलनादिरूपा तस्याः सम्बन्धेन साध्यावस्थामागच्छन्ति । तेन हि यथाऽग्निरदग्धमेव तृणं दहति दग्धादग्धतृणसमुच्चये पातितः तथैव ते यावदसिद्धं तावदेव साधयन्ति न तु सिद्धं पुनः साधयन्ति । यथा श्येनयागे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति वाक्ये प्रचरणस्य ज्योतिष्टोमप्रकरणादेव सिद्धैरत्र लोहितोष्णीषत्वमेव सूचयन्ति तथैव दध्ना जुहोति इत्यत्र हवनकर्मणः प्रकरणान्तरसिद्धेरत्र दध्नः करणत्वमात्रं सूच्यते । न हि विधेयत्वमेकस्यैवेति राजाज्ञाऽपितु यत्रावश्यकं तत्र द्वयोस्त्रयाणां वाऽपि तत्सम्भवति । यथा 'सोमेन यजेत' इत्यत्र सोमयागयोरुभयोरेव 'यदाग्नेयोऽष्टाकपालः' इत्यत्र हव्यदेवतायागानां त्रयाणामेव तथैव रक्तं पटं वय इत्यत्र एकस्य द्वयोस्त्रयाणामेव वा विधेयत्वम् । तेन सिध्यति यद्यदेव तात्पर्यं तन्निर्वाहकशब्दस्यैवार्थे तात्पर्यं न त्वन्येषामिति । प्रतीतमात्रस्य तात्पर्ये तु पूर्वो धावति इत्यत्र पूर्वस्यापरसापेक्षत्वेन अपरोऽपि तात्पर्यविषयीभूय पूर्वत्वं भजेतेति । तेन न प्रतीतमात्रे तात्पर्यमपितु उपात्तस्यैव शब्दस्यार्थे तात्पर्यमिति पर्यवसितोऽर्थः ।

[ वृत्तिः ] यत्तु "विषं भक्षय मा चास्य गृहे भुङ्क्थाः" इत्यत्र "एतद्गृहे न भोक्तव्यम्" इत्यत्र तात्पर्यमिति स एव वाक्यार्थ इति उच्यते । तत्र चकार एकवाक्यतासूचनार्थः । न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा 'मा अस्य गृहे भुङ्क्थाः' इत्युपात्तशब्दार्थ एव तात्पर्यम् । यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति

शब्दस्याभिधैव व्यापारः ततः कथं 'ब्राह्मण ! पुत्रस्ते जातः ब्राह्मण ! कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्।

कस्माच्च लक्षणा ? लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः।

किमिति च श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां पूर्वपूर्व-बलीयस्त्वमित्यन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्गयत्वम्।

[ कमला० ] 'विषं भक्षये'त्यस्य नैतद्गृहे भोक्तव्यमित्यत्र तात्पर्यादिति शङ्कते यत्त्विति। यद्यपि मा चाऽस्य गृहे इत्यस्य न भोक्तव्यमित्यर्थोऽभिधैव तथापि पूर्ववाक्ये न भोक्तव्यमित्यर्थे नाभिधेति तात्पर्यं कल्प्यत इत्यर्थः। दूषयति तत्रेति अन्यथा मा चेति वैयर्थ्यादित्यर्थः। अङ्गाङ्गिभावत्र इति साक्षादिति शेषः। गुणानाञ्च परार्थत्वादिति न्यायादित्यर्थः। अङ्गतेति। अयम्भावः—भक्षयेति विधौ बलवद-निष्टाननुबन्धित्वमित्यर्थः। विषे च तद्बाध इति विरोधितासम्बन्धेन प्रतियोगिभूत-मनिष्टानुबन्धित्वं लक्ष्यते। तच्च मानान्तरोपस्थिते गृहभोजनेऽन्वितमिति दुष्टमेतद्गृहे भोजनमिति पिण्डितो महावाक्यार्थ इति। यच्चोक्तं सोऽयमिषोरिवेति तद्दूषयति यदि चेति। कन्या कुमारी अनूढाया गर्भे पापाद्राजदण्डादिभयाद्वा शोक इत्यर्थः। न चानन्यलभ्येऽभिधाकल्पनम्। हर्षशोकादेस्तु मुखप्रसादमालिन्यादिनाऽनुमानान्न तथात्वमत आह कस्माच्चेति। ननु माऽस्तु लक्षणाऽत आह किमिति चेति। समवाये पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनिसूत्रशेषः। अत्राङ्गबोधकश्रुत्यादिषट्-प्रमाणानां विरोधे परस्य दुर्बलत्वं बाध्यत्वं पूर्वपूर्वकल्पकत्वात्परेषामर्थस्य विनियोगस्य विप्रकर्षाद्व्यवधानादित्यर्थः। श्रुत्यादिलक्षणं तूक्तं मण्डनमिश्रैः—

श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि।
सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगवती समाख्या॥

द्वितीयातृतीयादेरुपलक्षणं यथा 'व्रीहीनवहन्ति' 'अरुणया क्रीणाति' इत्यादि-क्षमताऽर्थप्रकाशनसामर्थ्यम्। यथा अग्निर्मूर्धेत्यस्याग्नेययागार्थत्वम्। संहतानि अर्थैक्ये सति विभागे साकाङ्क्षाणि। यथा देवस्यत्वे निर्वपामीत्येकवाक्यत्वात्त-दर्थत्वम्। कथमिति प्रधानाकाङ्क्षाप्रकरणं यथा प्रयाजादेस्तद्वशादङ्गत्वं क्रमाद् अग्निरसि इत्यस्योपांशु याजाङ्गत्वम् यौगिकसमाख्ययाऽङ्गत्वम्। यथा अध्वर्यव-मित्यनयाध्वर्योः विरोधे तु पूर्वस्य बलवत्त्वात्। यथैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र द्वितीयया लैङ्गिकेन्द्रार्थत्वबाधः। एवं लिङ्गवाक्यविरोधे 'स्योनन्ते' 'तस्मिन् सीदे'-त्यनयोर्लिङ्गात्प्रत्येकं सदने चयने च विनियोगः। द्वादशाहीनस्येत्यत्र तु प्रकरणं

बाधित्वा वाक्यादहीनं संज्ञयाऽङ्गाङ्गत्वम् । यथा वा सूक्ते वाके देवतापदैक-वाक्यतया इदं हविरित्यादेरुत्कर्षो न तु प्रकरणादुभयार्थत्वम् । राजसूयेऽभिषेचनीय-सन्निधिं बाधित्वा विदेवनादीनां प्रकरणात्सर्वार्थत्वम् । सान्नाय्यपात्रसन्निधौ शुन्धध्व-मिति मन्त्रस्य पौरोडाशिकमिति समाख्यावगतत्तदर्थत्वबाधेन क्रमात्सान्नाय्यपात्रार्थत्व-मित्युदाहरणानि ज्ञेयानि । तदुक्तं वार्तिके—

> एकं द्वित्रिचतुः पञ्च वस्त्वन्तरप्रकारितम् ।
> श्रुत्यर्थं प्रतिवैषम्यं लिङ्गादीनां प्रतीयते ॥
> बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
> मध्यगानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥

तदिदं पूर्वबलीयस्त्वं न स्याद् दीर्घतरव्यापारेन्द्रगार्हपत्ययोरैक्यभिधया विशेषादित्यर्थः । इष्टापत्तिं परिहरन्नुपसंहरति इत्यन्वितेति । गुरुमतेऽप-सिद्धान्तादित्यर्थः । विधेरपीति निःशेषेत्यादौ गतासीत्यस्य व्यङ्ग्यत्वं सिद्धमित्यर्थः ।

[ सरि० ] भवता उपात्तस्यैव शब्दस्यार्थे एव तात्पर्यं न तु प्रतीतमात्रे इति यदुक्तं तदसङ्गतं 'विषं भक्षय' इत्यादिवाक्ये व्यभिचारात् । किञ्च 'विषं भक्षय' इत्यादीनां शब्दानामन्यत्रानभिमतगृहेषु न भोक्तव्यमिति तात्पर्यं न चात्र द्वितीय-वाक्योपादानमित्याशङ्कानिरासाय तदनूद्य दूषयति यत्त्वित्यादिना । यत् यदेव । तु हि । 'विषं भक्षय' विषं गरलं भक्षय भुङ्क्ष्व इति वाक्यस्य न हि विषभक्षणे एव तात्पर्यमपि तु 'मा चास्य गृहे भुङ्क्थाः' अस्य अनभिमतस्य रिपोः । गृहे भवने । मा नैव । भुङ्क्थाः भोजनं कुर्याः इति वाक्यस्य अर्थे । एतत् गृहे अस्मिन् भवने । न भोक्तव्यं न भोजनं कर्तव्यम् । इत्यत्र इत्यस्मिन्नर्थे । तात्पर्यं वक्तुरभिप्रेतम् । इति हेतोः । सः एतद्गृहे न भोक्तव्यमितिरूपः । एव इति निश्चये । वाक्यार्थः वाक्यबोध्योऽर्थः स च अनुपात्तस्यापि शब्दस्यार्थे तात्पर्य-मिति । इति इत्थम् । यत् उच्यते । तदसदिति । एवञ्चैतद्वाक्यवर्तिपदोप-स्थापितातिरिक्तेऽपि तात्पर्यदर्शनाद् व्यङ्ग्यार्थेऽपि तात्पर्यं स्यादिति पूर्वपक्षिणोऽभि-प्रायो दूषणायानूदितः । विषं भक्षय इत्यत्र विषभक्षणे एवं न तात्पर्यं तथा सति तूपात्तस्यैव शब्दस्यार्थे तात्पर्यं स्यादपि तु अत्र तात्पर्यं तु मा चास्य गृहे भुङ्क्थाः इत्यत्र अनुपात्तशब्दार्थे वर्तते इति कथमुच्यते उपात्तस्यैव शब्दस्यार्थे तात्पर्यमित्युच्यते इति पूर्वपक्षिणो वदन्तीति । तद्दूषयति उच्यते इति । अत्र उच्यते कथ्यते । यद् तत्र वाक्येऽस्मिन् । चकारः मा चास्य गृहे भुङ्क्थाः इत्यत्र चपाठः । एकेति

उभयोरपि वाक्ययोः एकवाक्यता वाक्यैक्यं तत्सूचनं ज्ञापनं तदर्थः तन्निमित्त-मिति। तेन द्वयोरेकवाक्यत्वेनोपात्तस्यैव शब्दस्यार्थे तात्पर्यमिति पर्यवस्यत इति। यदि तयोरेकवाक्यत्वं मन्यते कथं तथा द्वयोराख्यातवाक्ययोरङ्गाङ्गिभावाभावादिति चेदुच्यते सत्यमेव न नैव। च हि। द्वयोः परस्परनिरपेक्षत्वेन प्रधानभूतयोः द्विसङ्ख्याकयोः। आख्यातवाक्ययोः 'भक्षय' 'भुङ्क्थाः' इति तिङन्तघटित-वाक्ययोः इत्येवंरूपाख्यातान्तक्रियापदार्थयोः। अङ्गाङ्गिभावः विशेषण-विशेष्यभावः। द्वयोः समप्राधान्याद् गुणानाञ्च परार्थत्वादसम्बन्धः समत्वादिति न्यायेन यथा समत्वेन गुणयोः परस्परसम्बन्ध एवं प्रधानयोरपि समत्वेनैव परस्पर-मनन्वय इति। इति हेतोः। विषभक्षणवाक्यस्य विषं भक्षयेति वाक्यस्य। सुहृद्वाक्यत्वेन क्रुद्धाच्यतयोपकारकवाक्यत्वेन। भुजक्रियानिषेधस्यान्वययितुम-शक्यत्वाद् विषभक्षणवाक्ये क्रुद्धाच्यत्वस्य विश्रान्तेरिति। अङ्गता विशेषणभावः। कल्पनीया उन्नेयाः। इति हेतोरुभयोरेकवाक्यत्वेन। विषभक्षणात् गरलाशना-पेक्षया। अपि। दुष्टमसाधु। एतद्गृहे शत्रोरस्य भवने। भोजनं भक्षणम्। इति इत्थम्। सर्वथा कथमपि। अस्य जनस्य शत्रोः। गृहे भवने। मा भुङ्क्थाः नैव भक्षय इति इत्थम्। उपात्तशब्दार्थे गृहीतस्य शब्दस्य अर्थे। एव। तात्पर्यं वक्तुरभिप्रायः इति सिद्धमुपात्तशब्दार्थे एवं तात्पर्यं न तु प्रतीतमात्रे इति इति। अयमाशयः—उपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे इति यदुक्तं तन्नैव सङ्गच्छते यतः 'विषं भक्षय' इति वाक्यस्य स्वस्मिन्नेव तात्पर्यस्यानवसानात् 'मा चास्य गृहे भुङ्क्थाः' इति वाक्यार्थे तात्पर्यादुपात्तशब्दार्थादन्यत्र तात्पर्यं प्रसक्तमिति यदुच्यते तदसत्। वस्तुतस्तु तत्र उभे अपि वाक्ये परस्परप्रसक्ते एव। मा चास्येत्यत्र चकारः उभयसमुच्चयं जनयतीत्यतो वाक्यैक्यान्नात्र पूर्ववाक्यस्या-परवाक्ये तात्पर्यम्। ननु द्वयोरपि तिङन्तघटितवाक्ययोः समगुणयोरिव सम-प्राधान्ययोः परस्परनिरपेक्ष्यत्वेन प्रधानभूतयोर्विशेषणविशेष्यभावाभावेन कथं तयोरेकवाक्यत्वमुच्यत इत्यपेक्षायामुच्यते पूर्ववाक्यस्य सुहृद्वाक्यत्वेन वाच्यतयाऽपर-वाक्यस्याङ्गता, यतो हि 'विषभक्षणादपि दुष्टमेतद्गृहे भोजनमि'ति द्वयोरेक एवार्थ इति। तस्य तात्पर्यञ्च 'सर्वथा माऽस्य गृहे भुङ्क्थाः' इति यद्धि उपात्तशब्दस्यार्थेऽस्ति न तु प्रतीतमात्रे इति सिद्धम्। तस्मात् स्थितमेतत् यत्परः शब्द इत्यादि यदुक्तं तत्तात्पर्याज्ञानादिति। एवञ्च यत्र वाक्यं स्वार्थे न विश्राम्यति यथाऽत्रैव सुहृद्वक्तृ-कत्वात्तत्रामुख्येऽर्थे तात्पर्याल्लक्षणा यत्र तु स्वार्थबोधोत्तरमितरत्प्रतीयते तत्र व्यञ्जनैवेति प्रघट्टकार्थ इति स्पष्टं प्रदीपोद्द्योतयोः। यत्त्वाह धनिकस्तात्पर्यानति-रेकाद् व्यञ्जनीयस्य न ध्वनिरिति उपक्रम्य यावत्कार्यप्रसारित्वात्तात्पर्यम् न तु लाधृत-मिति तदपि परास्तमनेन उपात्तस्यैव शब्दस्यार्थे तात्पर्यम् न तु प्रतीतमात्रे इति प्रतिपादनेन।

अनुपात्तेऽपि शब्दार्थे तात्पर्यकल्पनायामतिप्रसङ्गमाह **यदीति** यदि च यद्येतदुच्यते। **शब्दश्रुतेः** शब्दस्य श्रुतेः श्रवणादनन्तरम्। **यावान्** यावत्सीमः। **अर्थः** अभिप्रायः। **लभ्यते** प्राप्यते। **तावति** तावत्पर्यन्तम्। **शब्दस्य**। **अभिधा** सङ्केतग्राहिका शक्तिः। **एव** इति व्यवच्छेदे नापरेति। **व्यापारः** वृत्तिः। **ततः** तदा। **कथं** किं हेतोः। 'ब्राह्मण पुत्रस्ते जातः' 'ब्राह्मण कन्या ( अनूढा पुत्री ) ते गर्भिणी जाता' इत्यादौ ब्राह्मण इति सम्बोधनम् प्रयोजनस्चातिशयद्योतनमेव पुत्रजन्मनि अनूढकन्यायां गर्भिण्याञ्च ब्राह्मणस्यैव हर्ष-शोकयोरतिशयात्। **ते** भवतः। **पुत्रः** सुतः। **जातः** उत्पन्नः। **ते** तव। **कन्या** अनूढा सुता। **गर्भिणी** दोहदवती। **जाता** सम्पन्ना व्यभिचारेणेति केनापि सहेति। **इत्यादौ** इति कथने। क्रमशः। **हर्षशोकादीनाम्** पुत्रजन्मनि हर्षः वंशवृद्धेः पितॄणामृणान्मुक्तेश्च। अनूढायाः कन्याया गर्भधारणे शोकः कुल-कलङ्कभियेति तेषां हर्षस्य प्रमोदस्य शोकस्य शुचश्च तदादीनाम्। **अपि** इति समुच्चये। **वाच्यत्वम्** अभिधेयत्वम्। **न** नैवेति। अयमाशयः—यदि च शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावति सर्वत्र यदि शब्दस्याभिधैव स्यात्तदा 'पुत्रस्ते जातः, कन्या ते गर्भिणी' इत्यादिवाक्यानन्तरं ततः प्रतीतस्य हर्षस्य विषादस्य च वाच्यत्वमेव किं न स्यादिति। अभिधाया दीर्घदीर्घतरव्यापार-कल्पनायां तु तदपि स्यात्किन्तु न हर्षशोकयोरभिधेयत्वमभिधायाः सङ्केतितमात्र-विषयत्वाद्धर्षशोकयोर्मुखप्रसादमालिन्यादिलिङ्गेनानुमानात्प्रत्यायितात्वात् । तावन्तमवधिं विश्रृङ्खलस्तात्पर्यप्रसर इति हर्षशोकयोरपि वाच्यत्वप्रसङ्गो ययो-रुत्पाद्यत्वमिति। यथोक्तं विवरणकारैः—यदि हि उपात्तशब्दे एव तात्पर्यम् स्यात्तदा 'विषं भक्षय' इति 'मा चास्य गृहे भुङ्क्थाः' इति च आख्यातान्तक्रियाद्वयघटितत्वेन वाक्यद्वयस्यैकस्मिन् एतद्गृहे न भोक्तव्यमित्यर्थे तात्पर्यं न स्यात्। अन्यार्थस्य विष भक्षय इति वाक्यार्थत्वाभावादिति पूर्वः पक्षः। सिद्धान्तस्त्वयम्। मा चास्येति चकारेण अनन्यप्रयोजकेनानयोरेकवाक्यत्वमेव लभ्यते। एकवाक्यत्वञ्चा-ख्यातक्रियाद्वयान्वितयोर्यथाश्रुतार्थे निरपेक्षयोर्न सम्भवति नापि च विषभक्षणं सुहृदुपदेशयोग्यमिति 'विषं भक्षय' इति वाक्यं स्वार्थे सबाधं सत् विषभक्षणा-दपि दुष्टमेतद्गृहे भोजनमित्यर्थं लक्षयत् मा चास्य इति वाक्यस्य हेतुत्वेनाङ्गता-मापन्नञ्च सत् परस्परमेकवाक्यत्वं भजते इति एकवाक्यान्तर्वर्तिपदार्थ एव तात्पर्य-मिति नियमस्य न व्यभिचारः। इति।

पक्षान्तरेणाभिधाया दीर्घदीर्घतरव्यापारमतं दूषयति **कस्मादिति**। यदि हि यावत्कार्यप्रसारितात्पर्यं तर्हि **कस्मात्** किमर्थम्! च हि। **लक्षणा** लक्षणावृत्तिः

स्वीक्रियते यथा तैरपि लक्षणा तु स्वीक्रियते यद्यपि न व्यञ्जना। लक्षणीये मुख्यार्थबाधात्प्रतीयमाने। अपि च। अभिधायाः दीर्घदीर्घतरव्यापारेण इषोरिव प्रथमवेगस्ततः कार्यम् ततो वेगस्ततः कार्यं पुनर्वेगस्ततः कार्यमिति क्रमेण कवचच्छेदन वक्षोभेदनप्राणहरणवत् प्रथमं मुख्यार्थबोधस्ततस्तद्बाधे तत्सम्बद्धान्यार्थबोध इति प्रकारेण पुङ्खानुपुङ्खवृत्त्या। एव न तु लक्षणया। प्रतीतिसिद्धेः उपस्थापनसम्भवादिति। ते हि यदा लक्षणां स्वीकुर्वन्ति तदा ते एवाभिधाया दीर्घदीर्घतरव्यापारं निराकुर्वन्तीति। अनुपात्तेऽपि तात्पर्यकल्पनायां लक्षणाऽपि न स्यादिति।

तत्रैव दूषणान्तरमाह किमितीति किमिति किमर्थं हि यदि हि तात्पर्ये विद्यमाने तेनैव सिद्धे किं निमित्तम्। श्रुतीति श्रुतिः अनन्यसाकाङ्क्षः शब्दो लिङ्त्व्यादिः लिङ्गं वस्तुसामर्थ्यम् वाक्यं पदान्तरसमभिव्याहारः प्रकरणं वाक्यस्य वाक्यान्तरेणान्वयः स्थानं सन्निधानं समाख्या पुरातनी परिभाषा चासाम्। पूर्वपूर्वबलीयस्त्वं पूर्वपूर्वापेक्षया उत्तरोत्तरदुर्बलत्वमर्थात्प्रमाणविरोधे सर्वापेक्षया श्रुतेः प्राधान्यं समाख्याया दुर्बलत्वमिति। यदुच्यते 'श्रुतिलिङ्गवाक्यप्रकरणस्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति तत्तात्पर्यैकनिबन्धनत्वे निष्प्रयो-जनमेव तात्पर्यवशादेव तत्सिद्धेरिति सर्वत्रैवाभिधाप्रसङ्गे उत्तरस्य दौर्बल्ये बीजा-भावादित्यपि। अनूद्यतेऽत्र जैमिनीयं मीमांसासूत्रम्—'श्रुतिलिङ्गवाक्यप्रकरण-स्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (३/२/१४) इति। व्याख्यातञ्च यथा श्रुत्यादीनां समवाये एकत्रोपनिपाते तेषां मध्ये यदपेक्षया यत्परं तदपेक्षया तद्दुर्बलम् कुत अर्थविप्रकर्षात् पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वात्। तेषु हि—

अभिधातु पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः।
सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते॥
संहत्यार्थाभिधायित्वं पदानां वाक्यमुच्यते।
प्रधानवाक्यस्यान्यार्थाकाङ्क्षा प्रकरणं मतम्॥
स्थानं समानदेशत्वं समाख्या यौगिको रवः। इति।

तथैव —

"श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि।
सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या॥"

केचित्तृतीयामपि श्रुतिं मन्यन्ते क्रियां प्रति प्रकृत्यर्थस्य करणभावावगमनात्। क्रियां प्रति कर्मणः शेषित्वं करणस्य शेषत्वमिति। अपरे तु श्रवणमात्रेण अर्थप्रत्यायिका श्रुतिरिति सर्वा एव कारकविभक्तयो न तूपपदविभक्तय श्रुतिरिति प्रचक्षते। केचित्तु लिङ्तव्यादिमपि श्रुतिं मन्यन्ते। वस्तुतस्तु विधेयार्थबोधने शब्दान्तरनिरपेक्षंशब्दमात्रमेव श्रुतिरिति इतरे। उदाहृता यथा श्रुतिः 'व्रीहीनवहन्ति' इति। अत्र द्वितीया श्रवणमात्रेणावहननक्रियायां विनियोगोऽवगम्यते। श्रुतिर्हि लिङ्गादिभ्यः प्रबलं प्रमाणम्। लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति किन्तु कल्प्यः। यावच्च तैर्विनियोजकः शब्दः कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वात्तेषां कल्प्यकत्वशक्तिर्विहन्यत इति श्रुतेः प्राबल्यमिति न्यायप्रकाशे। यथा 'ऐन्द्रचा गार्हपत्यमुपतिष्ठते' ( मैं० ३/२/४ ) यावल्लिङ्गादैन्द्रचा इन्द्रोपस्थानाङ्गत्वं कल्प्यते तावत्प्रत्यक्षया श्रुत्या गार्हपत्योपस्थानाङ्गत्वं क्रियत इति ऐन्द्री-गार्हपत्योपस्थानाङ्गम्। सामर्थ्यमेव लिङ्गम्। लिङ्गेनाङ्गत्व यथा 'बर्हिर्देव सदनं दामि' ( मैं० १/१/३ ) इत्यस्य लवनाङ्गत्वम्। तदेतल्लिङ्गं वाक्यादिभ्यो बलवत तेषां साक्षाद्विनियोजकत्वाभावात्किन्तु लिङ्गस्य श्रुतिं च कल्पयित्वा तद्भावात्। सेन 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि' इत्यस्य सदनाङ्गत्वं लिङ्गादेव न तु वाक्यात्। पदसमभिव्याहारो वाक्यम्। साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारण समभिव्याहारः। यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं लोकं शृणोति ( तै० ३/५/७/२ ) अत्र द्वितीयाभावेऽपि पर्णताजुह्वोः समभिव्याहारेण पर्णताया जुह्वङ्गत्वम्। वाक्यस्य प्रकरणाद् बलीयस्त्वं यथा 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' ( तै० ब्रा० ३/५/१०/३ ) इत्यत्र इन्द्राग्नीपदस्य लिङ्गाद् दर्शाङ्गत्वे सिद्धे इदं हविरित्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वम्। न तु प्रकरणाद् दर्शपूर्णमासाङ्गत्वम्। उभयाकाङ्क्षा प्रकरणम्। यथा प्रयाजादिषु 'समिधो यजति' इत्यत्र उपकार्योपकारकाकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। प्रकरणं क्रियाया एव विनियोजकं न तु द्रव्यगुणयोः। तत्रापि अवान्तरप्रकरणं महाप्रकरणाद् बलीयः। प्रकरणं स्थानादितो बलवत्। विदेवनादिधर्माणां प्रकरणबलाद्राजसूयाङ्गत्वं न तु अभिषेचनीयसन्निधौ पठितानामपि तेषां स्थानादभिषेचनीयस्याङ्गत्वम्। देशसामान्यं स्थानं पाठसादेश्यमनुष्ठानसादेश्यं वा। स्थानं समाख्यातः प्रबलम्। स्थानविनियोगे हि पदार्थयोर्देशसामान्यलक्षणः सम्बन्धः प्रत्यक्षः समाख्याविनियोगे तु तदभावात्। समाख्या यौगिकः शब्दः। सा च वैदिकी लौकिकी च। निदर्शनञ्च हौत्रमौद्गात्रमित्यादि। श्रुत्यादयः षट् प्रमाणानि। एषाञ्च विरोधे पूर्वं प्रति परस्य दौर्बल्यमिति यदुक्तं तेनापि तात्पर्यं न यावत्कार्यप्रसारीति सिध्यति।

उपसंहरति इतीति इति इत्थम्। अन्विताभिधानवादे अन्वितानामेवार्थाना-मभिधानं कथनं तस्य वादे अभिधा हि अन्वितानामेवार्थानां बोधिकेति मते अपि च न केवलमभिहितान्वयवादे एवेति। विधेः निःशेषच्युतचन्दनमित्यादौ रन्तुमेव गतासीति विध्यर्थस्य। अपि च व्यङ्ग्यत्वं प्रतीयमानत्वम्। सिद्धं सम्पन्नमिति।

**[ वृत्तिः ] किञ्च 'कुरु रुचिम्' इति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम्? न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवेति एवमाद्यपरित्याज्यं स्यात्।**

[ कमला० ] दूषणान्तरमाह किञ्चेति वैपरीत्ये रुचिङ्कुरु इत्येवंरूपेण लाटदेशे चिङ्कुपद भगवाचि प्रसिद्धम्। न हीति अत्र भगरूपोऽसभ्योऽर्थः पदार्थान्तरैर्न ह्यन्वितः पदार्थान्तरस्यैवाभावात्। आद्यन्तयोरुद्वयस्यार्थाभावात्। इति हेतोरनभिधेय एव अन्वितस्यैवाभिधेयत्वात्। व्यञ्जनाभावेऽसभ्यार्थे वृत्त्यभावा-त्तदवाचकस्य चिङ्कुपदस्य दुष्टत्वं न स्यादित्यर्थः।

[ सरि० ] एतावताऽप्यसन्तुष्टः पुनः वस्तुगत्या पदार्थान्तरेण योऽन्वितः सोऽभिधयोपस्थाप्य इत्यन्विताभिधानं तदा व्यञ्जनैव गतिरिति प्रतिपादयितुमाह किञ्चेति। किञ्च यतो हि। 'कुरु रुचिम्' इति इत्येतयोः। पदयोः। काव्यान्तर्वर्तिनि काव्यमध्यस्थापिते। 'क्वन्तर्वर्तिनि' इति पाठे कु इति अन्तर्मध्ये वर्तते यत्र इति तादृशे। वैपरीत्ये रुचिङ्कुरु इति विपर्यासे। कथम् कुतः। दुष्टत्वमश्लीलत्वमिति। सन्धावेव चिङ्कुपदस्य निष्पादनादिति। लाटभाषायां चिङ्कुपदं योनिमध्यवर्त्यङ्कुरवाचकमतोऽश्लीलमिति बहवः कश्मीरादिभाषायामिति विश्वनाथकविराजाः। अपरे पदमेतद्भगमात्रवाचकमित्यपि। औदीच्यासु भाषासु सम्प्रत्यपि पदमेतत् किञ्चिद्रूपान्तरितं मैथुनार्थे प्रयुज्यते। ननु चिङ्कुपदस्य वाचकत्वमेवेत्यत आह न हीति। हि यतः। अत्र वाक्येऽस्मिन् रुचिङ्कुरु इति रूपे। असभ्यः अश्लीलो योन्यवयववाचकत्वेन। पदार्थान्तरैः अन्यपदार्थैः केवलस्य चिङ्कारस्य पदत्वाभावात्। न नैव। अन्वितः प्राप्तान्वयः इति अनभिधेयः अभिधाविषयबाह्य एव। अन्विताभिधाने हि पदार्थान्तरैरन्वित-स्यैव तद्विषयत्वात्। व्यञ्जनापलापे तस्य अश्लीलार्थप्रत्यायकत्वाभावात्। एव। इति हेतोः। एवमादि एतद्विधप्रयोगः काव्ये। अपरित्याज्यम् अहेयमेव। स्यात् ग्राह्यमेव भवेदिति। ये हि पदार्थान्तरैरन्वित एवार्थोऽभिधेय इति मन्यन्ते तन्मते यदि व्यञ्जना नोररीक्रियते वाऽपलप्यते तदा 'कुरु रुचिम्' इति पदयोर्विपर्यासेऽपि अश्लीलत्वं न प्रतिभासेत तस्य पदार्थान्तरान्वितत्वाभावादनभिधेतया। तेन

तथाविधं काव्ये ग्राह्यमेव स्यात् । रुचिं कुरु इत्येवं रूपे विपर्यासे 'चिङ्कु' इत्येतस्य भगाङ्गबोधकत्वेन यदश्लीलत्वं तद् व्यञ्जनयैव । न त्वभिधया । पदार्थान्तरानन्वितत्वेन नाभिधा व्यञ्जना त्वपलभ्यत एव । तदा तस्याश्लीलत्वमपि न स्यात् । तेनापि अन्विताभिधानवादिभिः शिरो विनमय्य व्यञ्जना स्वीकर्तव्येति ।

[ वृत्तिः ] यदि च वाच्यवाचकव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नं सर्वस्यैव हि विभक्ततया प्रतिभासात् । वाच्यवाचकव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था ।

'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः' । इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ।

[ कमला० ] दूषणान्तरमाह यदि चेति । असाधुत्वं व्याकरणाननुगतत्वम् । कष्टत्वं कर्णकटुत्वम् । तस्य शृङ्गारे दोषत्वेऽपि रौद्रवीभत्सेषु गुणत्वमेव । अत एवास्यानित्यत्वम् सार्वत्रिकं दोषत्वम् । अभिधया व्यङ्ग्योपस्थितौ तु तस्याः सर्वत्र तुल्यत्वात्सर्वत्र दोषत्वम् क्वचिद्गुणत्वे वा सर्वत्र तदेव स्यात् । अतिरिक्तव्यञ्जनास्वीकारे तु तत्तद्रसप्रधानपुरुषविशेषं प्रत्येव तत्सत्त्वात्तेषां चानियमादेकस्यैव युज्यते क्वचिद् दोषत्वं गुणत्वञ्चेति भावः । अस्त्वनुपपन्नमत आह न चेति । चस्त्वर्थे । सर्वस्येति तत्तद्रसाविष्टस्य पुरुषस्येत्यर्थः । प्रतिभासादनुभवात् । कथं त्वन्मते नित्यदोषत्वमत आह वाच्येति । व्यङ्ग्यस्य रसादेर्बहुविधत्वाद्रौद्रशृङ्गारादिरूपत्वात्क्वचिदेव रौद्रादौ कस्यचिच्छ्रुतिकटुत्वादेरौचित्येन व्यञ्जनायामौचित्यज्ञानं सहकारीति युक्ता व्यवस्थेत्यर्थः । इतोऽपि व्यञ्जनासिद्धिरित्याह द्वयमिति । तपस्यन्तीं गौरीं प्रति ब्रह्मचारिणः शिवनिन्दोक्तिरियम् । अत्र 'कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी' इत्युत्तरार्द्धे कपालं शिरोऽस्थि तद्वत्तया बीभत्सरसावलम्बनत्वं जुगुप्सायाः गौर्याः शोच्यत्वं चेति युक्तं काव्यानुगुणत्वम् । व्यञ्जनाभावे तु 'पिनाकिनः' इत्युक्तेऽपि शिवज्ञानाविशेषात् वीररसावगतेश्च न विवक्षिता निन्दा स्यादित्यर्थप्रतीतौ महदन्तरमित्यर्थः । किमिति कुतो न स्यादित्यर्थः ।

[ सरि० ] व्यञ्जनासिद्धये युक्त्यन्तरमाह यदीति । **यदि । च हि ।** **वाच्यवाचकव्यतिरेकेण** अर्थस्य वाच्यत्वं शब्दस्य वाचकत्वमिति तद्व्यतिरेकेण तदतिरिक्तत्वेन । **व्यङ्ग्यभावः** व्यङ्ग्यः प्रतीयमानार्थः व्यञ्जकः प्रकाशकः शब्द इति भावोऽवस्थितिः । **न** नैव । **अभ्युपेयते** स्वीक्रियते **तत्** तदा । **असाधुत्वादीनाम्** असाधुत्वं व्याकरणाननुगतत्वं तदादीनां दोषाणाम् । **नित्यदोषत्वं** सार्वत्रिकहेयत्वम् । **कष्टत्वादीनां** कष्टत्वं कर्णकटुत्वं तदादीनां दोषाणाम् । **अनित्यदोषत्वम्** सार्वत्रिकहेयत्वं तेषां श्रृङ्गारे एव त्याज्यत्वाद्वीररौद्रादिषु गुणत्वादिति । **इति** इत्थम् । **विभागकरणं** भेदकथनम् । **अनुपपन्नम**युक्तमेव । स्यादिति । अयम्भावः—व्यञ्जनापलापेन सर्वत्र वाच्यत्वाङ्गीकारे तस्य सर्वत्राविशेषात् कथङ्कारं दोषाणां नित्यानित्यत्वविभागः समुपपद्येत । वाच्ये हि अवस्थाया अविशेषाद् दोषाणां सर्वत्र दोषत्वमेव स्यात् । दोषत्वं च तदा न रसापकर्षकत्वेनापितु वाक्यार्थज्ञानविघटकत्वेनैव स्यात्तदविघटकत्वेऽदोषापत्तेः । न च स्यादनुपन्न एव दोषाणां नित्यानित्यत्वविभाग इत्यत आह **न चेति । न** नैव चस्त्वर्थे । **अनुपपन्नमयुक्तमेव** । अपि तु तादृशविभागः अपरिहार्य एवेति । तथात्वे हेतुमाह **सर्वस्यैवेति सर्वस्य** निर्विशेषस्य सहृदयस्य । **एव** । **विभक्ततया** नित्यानित्यत्वेन पृथक्तया । **प्रतिभासात् द्योतनात्** । अयमाशयः—दोषाणां नित्यानित्यत्वविभागोऽनुपपन्न एव स्यात्तत्र का हानिरित्यपि न वाच्यं निर्विशेषस्यैव सहृदयस्य तथैवावगमात् । यथा हि कष्टत्वदोषः श्रृङ्गारस्यापकर्षकः किन्तु वीररौद्रयोरुत्कर्षक इति स्पष्टतया दोषस्यानित्यत्वं कथमपलप्यते इति । तर्हि कथं तस्योपपत्तिरित्यपेक्षायामाह **वाच्येति वाच्यवाचकभावव्यतिरेकेण** अर्थस्य यद्वाच्यत्वं शब्दस्य यद्वाचकत्वं तदतिरिक्तत्वेन । **व्यङ्ग्यव्यञ्जकताश्रयणे** अर्थस्य व्यङ्ग्यत्वं शब्दस्य व्यञ्जकत्वं तयोर्भावस्तत्ता तस्याः आश्रयणेऽवलम्बने । **तु** इति व्यवच्छेदे । **व्यङ्ग्यस्य** प्रतीयमानार्थस्य । **बहुविधत्वात्** अनेकप्रकारत्वात् रसादिरूपे । **क्वचिदेव** कुत्रचिदेव । **कस्यचिदेव** यस्य कस्यापि न तु सर्वेषामेव यथा वाच्ये । **औचित्येन** उपस्कारकत्वेन उपयुक्तत्वेन वा । **उपपद्यते** विपरिणमति । **एव** यथा श्रृङ्गारे कष्टत्वस्य दोषत्वं वीररौद्रादौ गुणत्वमिति । **विभागव्यवस्था** विभेदकल्पना । सम्भवतीति । अयमाशयः—वाच्यस्य हि सर्वत्रैवैकरूपत्वान्न दोषाणां दोषगुणत्वसिद्धिः । तद्विपरीतं व्यङ्ग्यस्य तु श्रृङ्गारादिनानारूपत्वादेकत्र यो दोषोऽपरत्र स एव गुण इति दोषस्य नित्यानित्यत्वकल्पनोचितेति । अयमपि प्रसङ्गो ग्रन्थान्तर इति । असाधुत्वज्ञानवद्यदि श्रुतिकटुत्वादेरपि वाक्यार्थज्ञानविघटकता तदा सर्वत्र चमत्कारस्य वाक्यार्थज्ञानाधीनत्वात्तदभावे चमत्काराभावेन नित्यदोषत्वमेव । तदविघटकत्वे तु दोषत्वमेव न स्यादिति भावः । एवं हि सर्वत्र

वाच्यत्वमात्र स्वीकारे तस्य त्वविशेषात् पर्यायेषु मध्ये कुत्रचित्कस्यचित्काव्यानुगुणत्व-मपि न स्याद्यथा दृश्यते क्वचित्कस्याऽपि काव्यानुगुण्यत्वं न त्वपरस्य तथा। तदेवादाहरति द्वयं गतमिति। पद्यमिदं कुमारसम्भवमहाकाव्यगतम्। तद्यथा—

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।

कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ इति।

तपस्यन्तीं पार्वतीं प्रति वटुवेषधारिणः शिवस्योक्तिरियम्। प्रयोजनञ्चास्य शिवं प्रति पार्वत्या हृदये घृणोत्पादनं तद्‌गतप्रेमपरीक्षार्थं। कपालिनः समागम-प्रार्थनया कलावतः सा कान्तिमती कला अस्य लोकस्य नेत्रकौमुदी त्वम् च द्वयम् सम्प्रति शोचनीयताम् गतम् इत्यन्वयः। **कपालिनः** शिरोऽस्थिमालाधारिणः शिवस्येति। **समागमप्रार्थनया** प्राप्तिकामनया। **कलावतः** चन्द्रमसः। **सा** प्रसिद्धा। **कान्तिमती** छविमण्डिता। **कला** ज्योत्स्नायाः षोडशो भागः। **अस्य** समग्रस्य। **लोकस्य** जगतः। **नेत्रकौमुदी** नयनचन्द्रिका। **त्वम्** अत्र प्रकरणात् पार्वती। **चकारः** उभयसमुच्चये। **इति** एतत् द्वयम् उभयमेव। **सम्प्रति** अधुना। **शोचनीयताम्** शोच्यत्वयुक्तताम्। **गतं** प्राप्तमिति। भूतकालनिर्देशेना-वश्यभाव्यत्वं सूच्यते। कपालिनोऽत एवातथायोग्यस्य समागमप्रार्थनया चन्द्रकला तु शोच्याऽऽसीदेव। सम्प्रति नु त्वमपरेति द्वयमेव शोच्यमित्यर्थः। तत्राभीष्टमाह इत्यादाविति। **इत्यादौ** इति काव्ये। **पिनाक्यादिपदवैलक्षण्येन** पिनाकिप्रभृति-पर्यायपदविलक्षणतया। **किमिति** किमर्थम्। **कपाल्यादिपदानां** कपालिप्रभृति-पदानाम्। **काव्यानुगुणत्वं** काव्यानुकूल्यमिति। अपि तु व्यञ्जनानङ्गीकारे कपालिपदस्थाने पिनाकिपदप्रयोगेऽपि उभयोरेव वाच्यार्थस्याविशेषतया न किमप्यन्तरं स्यात्। मास्त्वनन्तरमित्यपि नैव वक्तुं शक्यते शोचनीयत्वस्योत्कर्षाय पिनाकि-पदापेक्षया कपालिपदस्यैवानुगुण्यं स्पष्टमेव तस्य जुगुप्साव्यञ्जकत्वादिति। तेनैव हि तत्रैव काव्यान्तरे—

'तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।'

इत्यत्र पिनाकिपदस्य वीरद्योतकत्वेन पर्यायान्तरापेक्षया—

'एवमालि निगृहीतसाध्वसं शङ्करो रहसि सेव्यतामिति।'

इत्यत्र शङ्करपदस्य प्रीतिद्योतकत्वेन—

'गिरिशमुपचचार प्रत्यहं सा सुकेशी।'

इत्यत्र गिरिशपदस्य देवविषयकरतिभावव्यञ्जकत्वेन—

'अद्य प्रभृत्यवनताङ्गि तवास्मि दासः।
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ॥'

इत्यत्र शृङ्गारव्यञ्जकतया चन्द्रमौलिपदस्य च काव्यानुगुण्यम् । ननु तर्हि कथं—

'हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'

इत्यत्र हरशब्दस्य काव्यानुगुण्यमिति चेदुच्यते अन्वर्थनामा हरोऽपि तदा उमामुखे लोचनव्यापारणाय विवशोऽभूदिति पार्वत्याः सौन्दर्यातिशयस्य कामस्य साफल्यप्रकर्षस्य च द्योतनात्तस्य काव्यानुगुण्यमिति । एवमेव —

'अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः।'

इत्यत्र दिलीपनन्दनपदस्य साफल्यद्योतनेन—

'नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत।'

इत्यत्र सुदक्षिणासूनुरिति पदस्य पराजयद्योतकत्वेन च ।

ननु तर्हि कथं सा तथापि रतये पिनाकिनः' इत्यत्र पिनाकिनपदस्य काव्यानुगुण्यमिति चेदुच्यते तथाविधा नववधूः पिनाकिनोऽपि रतये किमुतान्येषामिति द्योतनादिति । अत एवोक्तं ध्वनिकृता—

उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयीभवेत् ॥ इति ।

यथा वा कुन्तकाचार्यैः—

"शब्दो विवक्षितैकार्थवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः ॥
उभावेतावलङ्कार्यौ ....................."। इति ।

कपालिशब्देनात्र मुख्यया वृत्त्या धर्मी शिवः व्यञ्जनया वक्तृत्वोचितं गर्हितत्वमिति व्यक्तिविवेककारा अपि परास्ताः ।

[ वृत्तिः ] अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तृन् प्रति एकरूप एवेति नियतोऽसौ । न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्रादिविशेषसहायतया नानात्वं भजते । तथा च 'गतोऽस्तमर्कः' इत्यतः 'सपत्नं प्रत्यवस्कन्दना-

वसरः' इति 'अभिसरणमुपक्रम्यतामि'ति प्राप्तप्रायस्ते प्रेयानिति कर्मकरणान्निवर्तामह इति सान्ध्यो विधिरुपक्रम्यतामिति दूरं मा गा इति सुरभयो गृहं प्रवेश्यन्तामिति सन्तापोऽधुना न भवतीति विक्रेयवस्तूनि संह्रियन्तामिति नागतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति ।

[ कमला० ] वाच्याद् व्यङ्ग्यस्य भेदकान्तरमाह वाच्योऽर्थं इति । यद्यपि वाच्योऽपि नानार्थसैन्धवादिपदेषु अनेकस्तथापि कोशानुशासनान्नियतरूपः । न च व्यङ्ग्येऽनुशासनमस्ति । निष्कर्षस्तु एकवाक्यान्तर्गते तत्राप्येक एवार्थः । सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति न्यायात् । अन्यथा वाक्यस्य संशायकत्वेनाप्रामाण्यापत्तेः प्रकरणादिसहकारेण तद्धीर्न स्वतः इत्यन्यदेतत् । न च व्यङ्ग्यस्तथा किञ्च नानार्थे यथा तथाऽस्तु न च गतोऽस्तमित्यादौ तथा वाच्यस्य नियतत्वात् व्यङ्ग्यस्य च नानात्वादिति हृदयम् । प्रतीयमानो व्यङ्ग्यः । नानात्वमिति वाच्यस्तु नानाऽपि प्रकरणादिसहायतयैक्यं भजत इत्यर्थः । अवस्कन्दनं मर्दनम् । तत्र तत्रेति । क्रमेण शूरस्वैरिणीप्रतिवेशिनीकर्मकरविप्रपान्थगोपतापवणिग्वियोगिनीषु इत्यर्थः ।

[ सरि० ] नैतावतैवापितु सङ्ख्यास्वरूपकालाश्रयकारणकार्यविषयादिदृष्ट्याऽपि वाच्यव्यङ्ग्ययोः पूर्वस्मिन्नुत्तरस्यान्तर्भावो नोपपद्यत इति उद्भावयिष्यन्नादौ सङ्ख्याकृतभेदं निरूपयति अपीति । अपि च नैतावन्मात्रमपि तु । वाच्यः शक्यः । अर्थः । सर्वान् निर्विशेषान् । प्रतिपत्तॄन् बोद्धॄन् विदग्धानविदग्धांश्च । प्रति निमित्तम् । एकरूपः समानलक्षणः । एव न तु नानारूपः । इति इत्थम् । असौ वाच्यार्थः । नियतः निश्चितः शक्यतावच्छेदकस्य नियतत्वादिति । नानार्थकहर्यादिपदेषु अनेकोऽपि वाच्यार्थः कोशाद्यनुशासनान्नियतरूप एव एकवाक्ये एकस्यैवार्थस्य बोधकत्वात् तदभावे वाक्यस्य संशायकत्वेन प्रामाण्यापत्तेः । तद्धीश्च न स्वतोऽपितु प्रकरणादिसहकारेणैवेति । तेन नानाऽपि वाच्यः प्रकरणादिवशादैक्यमेव भजते इति । तत्र निदर्शनमाह न हीति । न नैव । हि यतः । गतोऽस्तमर्कः अर्कः सूर्यः । अस्तमस्ताचलम् । गतः प्राप्तः । इत्यादौ इत्यत्र । वाच्यः अभिधेयः । अर्थः सूर्योऽस्तमगादिति । क्वचित् कुत्रचिदपि । अन्यथा इतरथा । भवति सम्पद्यते इति । गतोऽस्तमर्क इत्यस्य वाच्यार्थस्तु सर्वत्रैव सूर्योऽस्ताचलमप्रापदित्येव भवति न तु तदितरोऽपि । प्रतीयमानः व्यङ्ग्यार्थः । तु तद्व्यतिरिक्तम् । तदिति ते ते तत्तत्सम्बद्धाः ये प्रकरणादीनां वक्तृश्रोतृबुद्धिस्थतादीनां वक्तॄणां कथयितॄणां प्रतिपत्तॄणां श्रोतॄणां भावकानां विशेषास्तेषां सहायतया

सहकारेण। नानात्वमनेकरूपत्वमेकस्मिन्नपि वाक्ये। भजते प्राप्नोतीत्यर्थः। यदा वाच्योऽर्थो नानापि एकस्मिन् वाक्ये प्रकरणादिसहकारेणैक्यमेव भजते तदा व्यङ्ग्योऽर्थः प्रकरणादिवक्तृबोद्धृविशेषसहकारेण नानात्वं भजते। तदेव व्याख्याति तथेति तथा च यथा हि। 'गतोऽस्तमर्कः' इत्यतः गतोऽस्तमर्कः इत्येतस्माद्वाक्यात्। सपत्नमिति सपत्नं शत्रुम्। प्रति उद्दिश्य। अवस्कन्दनावसरः अवस्कन्दनं प्रसह्यावमर्दनं शत्रोर्यथा पुरीनवस्कन्द इत्यत्र। इति। इत्थञ्च शूरचौरादिविषये। अभीति अभिसरणं मिलनाय सङ्केतस्थानगमनम्। उपक्रम्यतां प्रारभ्यताम्। इति अभिसारिकाविषये। प्राप्तेति ते भवत्याः। प्रेयान् प्रियतमः। प्राप्तप्रायः आगत एव। इति प्रतिवेशिनीविषये प्रोषितभर्तृकाविषये वा। कर्मेति कर्मकरणात् कार्यव्यावृत्तितः। निवर्तामहे विरता भवामः इति कर्मकरविषये। सान्ध्य इति सान्ध्यः सन्ध्याकालीनः। विधिः अनुष्ठानं सन्ध्योपासनादि। उपक्रम्यतामारभ्यताम्। इति विप्रविषये। दूरं विप्रकृष्टदेशमग्रे वा मा। गाः गच्छेः। इति पान्थविषये। सुरभय इति सुरभयो गावः। गृहं गोष्ठम्। प्रवेश्यन्ताम् नीयन्ताम्। इति गोपविषये। सन्ताप इति अधुना सम्प्रति। सन्तापः घर्मः। न भवति। इति तापक्लान्तविषये। विक्रेयेति विक्रेयवस्तूनि विक्रयार्थं बहिःप्रसारितद्रव्याणि संह्रियन्तामेकत्रोत्क्षिप्यन्ताम्। इति वणिग्विषये। नागत इति। प्रेयान् प्रियः। अद्यापि सम्प्रत्यपि। न नैव। आगत प्राप्त इति वियोगिनीविषये। इत्यादिः इत्येवंविधः। अनवधिः अनन्तः यथा प्रदीपः प्रज्वाल्यतामिति गृहिणीविषये गृहाभ्यन्तरं प्रविशेति बालविषये कुमुदान्यपचीयन्ता-मिति मुग्धाविषये नेदानीं स्नानौचित्यमिति स्नानपरायणे। इत्यादि नानाविधः। व्यङ्ग्यः प्रतीयमानः। अर्थः। तत्र तत्र प्रकरणवक्तृश्रोतृविशेषे। प्रतिभाति उद्द्योतत इति। एवं हि नानार्थस्यापि वाच्यस्यैकस्मिन् वाक्ये प्रकरणादिवशादैक्यं भवति स च सर्वान् प्रति अविशिष्टत्वेन भासते तत्पुरस्कारेण भासितस्य व्यङ्ग्यस्य तु प्रकरणादिवक्तृबोद्धृप्रभृतिवशान्नानात्वमेवेति सङ्ख्याहष्टयाऽपि न हि व्यङ्ग्यस्य वाच्येऽन्तर्भावः। न च वाच्य एवं नानात्वं भजत्विति वाच्यं तथा सति वाक्यस्य संशायकत्वेनाप्रामाण्यापत्तेः। यद्यपि 'सैन्धवमानय' इत्युक्ते सैन्धवपदेन अश्वस्य लवणस्य च बोधः सम्भवति तथापि तस्य प्रकरणादिना एकस्मिन्नर्थे नियमनं भवत्येव यथा यात्रावसरेऽश्वः भोजनावसरे लवणमिति।

[ वृत्तिः ] वाच्यव्यङ्ग्ययोः निःशेषेत्यादौ निषेधविध्यात्मना—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्॥१३३॥

इत्यादौ संशयशान्तशृङ्गार्यन्तरगतनिश्चयरूपेण—

> कथमवनिप दर्पो यन्निशातासिधारा-
> दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।
> ननु तव निहतारेरप्यसौ किं न नीता,
> त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥१३४॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य ।

पूर्वपश्चाद्भावेन प्रतीतेः कालस्य शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रयत्वेन च आश्रयस्य शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य बोद्धृमात्रविदग्ध-व्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात्कार्यस्य 'गतोऽस्तमर्कः' इत्यादौ प्रदर्शितनयेन सङ्ख्यायाः—

> कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
> सभमरपउमग्घाइणि वारिअवामे सहसु एण्हि ॥१३५॥

> ( कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
> सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ॥ )

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत् क्वचिदपि नीलपीतादौ भेदो न स्यात् । उक्तं हि—'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति ।

[ कमला० ] भेदकान्तराण्याह वाच्येत्यादिना न स्यादित्यन्तेन । अत्रायमन्वयः । वाच्यव्यङ्ग्ययोर्निषेधव्यङ्ग्यत्वादिना हेतुना स्वरूपस्य कालस्याश्रयस्य निमित्तस्य व्यपदेशयोश्चमत्कृत्योः कार्यस्य सङ्ख्यायाः विषयस्य भेदेऽपि यद्येकत्वं तत्तदा क्वचिदपि नीलपीतादौ गुणे तद्वति घटादौ च भेदो न स्यादिति । अक्षरार्थस्तु निःशेषेत्यत्र निषेधो वाच्यः विधिर्व्यङ्ग्यः । तेन स्वरूपस्य भेदः । मात्सर्यमिति कार्यं प्रयोजनम् । नितम्बा इत्यस्य विलासिनीनामित्यत्राप्यन्वयः । अत्र संशयो वाच्यः शान्तशृङ्गारिणौ तद्रसप्रधानौ पुरुषौ । तद्गतस्तत्तद्रसो निश्चयरूपो व्यङ्ग्यः । तेन स्वरूपस्य भेदः । कथमिति हे अवनिप भूप यद्विद्विषां श्रीः स्वीकृता अयं दर्पः कथं कुत इत्यर्थः । यत एभिर्वैरिभिस्तवासौ कीर्तिरेव वल्लभा प्रिया स्त्री च स्वर्गे किं न नीतेत्यर्थः । त्वत्स्त्रीहरणात्त्वत्तोऽपि तेऽधिका इत्यर्थः । अत्र निन्दा वाच्या स्तुतिर्व्यङ्ग्या । तयोर्वपुषा स्वरूपेण स्वरूपस्य भेदः । पूर्वेति वाच्यस्य

व्यञ्जकत्वेन कारणत्वात्तस्य च पूर्ववर्तित्वात् पूर्वप्रतीतिः पश्चाद्वयङ्गचस्येति कालस्य भेदः। शब्देति वाच्यादेः शब्दाश्रितत्वाभावेऽपि वृत्तिपरमिदम्। अभिधाशब्दाश्रिता व्यञ्जना तु शब्दः पदं शब्दैकदेशः प्रकृतिप्रत्ययादिः वर्णास्तेषां घटनाऽऽनुपूर्वी तदाश्रिता। तेनाश्रयस्य भेदः। शब्देति अनुशासनं कोशादि। तस्य ज्ञानेन वाच्यस्यावगमः प्रकरणादिना व्यङ्गचस्येति निमित्तस्य भेदः। कार्यभेदादाह बोद्धृमात्रेति बोद्धा ज्ञाता मात्रशब्दः साकल्यार्थः। वाच्येन सर्वबोधः प्रतीतिमात्रस्य कारणादुत्पादना। व्यङ्गचेन विदग्धशब्देन व्यपदेश्यो व्यवहार्यः। रसिक इति यावत्। तस्य चमत्कृतेः साश्चर्यानुभवस्य कारणात्कार्यस्य भेद इत्यर्थः। गतोऽस्तमिति वाच्यस्यैकत्वाद् व्यङ्गचस्यानेकत्वात्सङ्ख्याया भेद इत्यर्थः। कस्स वेति। कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्। सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्। ओष्ठव्रणं दृष्ट्वा क्रुद्धे प्रिये सख्या इयमुक्तिः। वारिते कर्मणि वामा विरुद्धा। इदानीं जारासन्निधौ सपत्नीसन्निधौ च सहस्व पतिधिक्काराद्यनुभवस्व। जारासन्निधौ सर्वं सुखायाऽऽसीदित्यर्थः। सखी वक्त्री। वाच्यस्य विषयः। त्वत्कान्तो नायकः। षट्पदेन दष्ठोष्ठेयं न जारेणेति व्यङ्गचस्य विषयः। आदिपदात्पुनरेव मा कृथा इति व्यङ्गचस्य जारो विषयः। एवं विषयस्य भेदेऽपि यद्येकत्वं वाच्यव्यङ्गचयोस्तदा क्वापि नीलादौ भेदो न स्यादित्यर्थः। उक्त होति। भेदोऽन्योन्याभावः। विरुद्धस्य तदवृत्तेर्धर्मस्य अध्यासो ज्ञानं भेदः। इदञ्च ज्ञातवैधर्म्यस्यान्यान्याभावत्ववादिमतेनोक्तम्। कारणभेदो भेदहेतुरन्योन्याभावज्ञापकः इति क्रमेण योजना।

[ सरि० ] वाच्यव्यङ्गचयोः भेदकान्तरैरपि भेदमभिधातुमुपक्रममाणः प्रथमं बहुमुखं स्वरूपगतभेदं वर्णयन् विधिनिषेधमुखेनाह वाच्येति वाच्यव्यङ्गचयोः वाच्योऽभिधेयः व्यङ्गचः प्रतीयमानोऽर्थस्तयोः। इत्युपक्रम्य निःशेषेति निःशेषेत्यादौ निःशेषच्युतचन्दनं स्तनतटमित्यत्र। निषेधविध्यात्मना निषेधः न पुनस्तस्याधमस्यान्तिकमिति तदाक्षिप्तविधिस्तु रन्तुमेव गताऽसी इति तदात्मना तत्स्वरूपेण। अत्र वाच्यो निषेधात्मा व्यङ्गचश्च विध्यात्मेति तयोर्भेद इति। तयोरेव प्रतीतिमुखेन भेदमुदाहरति मात्सर्यमिति। आर्याः मात्सर्यम् उत्सार्य विचार्य समर्यादम् कार्यम् उदाहरन्तु किमु भूधराणाम्। उत स्मरस्मेरविलासिनीनाम् नितम्बाः सेव्याः इत्यन्वयः। आर्या सज्जनाः। मात्सर्यमसूयां पक्षपातमिति। उत्सार्य त्यक्त्वा। विचार्य सम्यग् विचिन्त्य सारासारम्। समर्यादम् प्रमाणमर्यादासहितं यथा स्यात्तथा। कार्यं कर्तव्यम्। उदाहरन्तु कथयन्तु। किमु किम्। भूधराणां पर्वतानाम्। उत इति पक्षान्तरे। स्मरस्मेरविलासिनीनां

स्मरेण कन्दर्पेण स्मेराणां सस्मितानां विलासिनीनां कामिनीनाम्। नितम्बाः कटिप्रदेशाः सेव्याः समाश्रयणीया इति। किमु इति उत इति च संशयार्थे। तत्राभीष्टमाह इत्यादाविति इत्यादौ इत्यत्र। संशयेति संशयके हि सेव्या इति वाच्यः तत्प्रतीतः। शान्तो विरक्तः तत्पक्षे निश्चयश्च व्यङ्ग्यो भूधरनितम्बसेवनरूपः शृङ्गारी शृङ्गाराकृष्टचेताः तत्पक्षे च निश्चयो व्यङ्ग्यः स्मरस्मेरविलासिनीनितम्ब-सेवनरूपः तयोर्वक्त्रोरन्यतरगत एकस्मिन्नवस्थितो यो निश्चयो निर्णयस्तद्रूपेण तद्विग्रहेण। अयमाशयः--संशये वाचनिके सति शान्तः शृङ्गारी वा वक्ता। वक्तरि शान्ते सति भूधरनितम्बसेवने न सन्देहः शृङ्गारिणि सति तु कामिनीनितम्बसेवने न सन्देह इति उभयत्र निश्चय एवेति प्रतीतिभेदमुखेन वाच्यव्यङ्ग्ययोर्भेद इति। निन्दास्तुतिभ्यां तदेवोदाहरति कथमित्यादि। हे अवनिप! दर्पः कथम् यत् निशातासिधारादलनगलितमूर्ध्नाम् विद्विषाम् श्रीः स्वीकृता ननु निहतारेः अपि तव असौ वल्लभा कीर्तिः अपगताङ्गैः एभिः त्रिदिवम् किम् न नीता इत्यन्वयः। हे अवनिप! अवति रक्षति सर्वानिति अवनिस्तां पाति रक्षतीति तत्सम्बुद्धौ। दर्पोऽभिमानो विजये इति। कथम् कस्मादिति। दर्पोऽयमिति पाठे अयं दर्पः कथमित्यन्वयः। यद्। निशातेति निशाता तीक्ष्णा या असिधारा खड्गप्रान्त-भागस्तया दलनेन छेदनेन गलिताः पतिता मूर्धानः शिरांसि येषान्तेषां तथाभूतानाम्। विद्विषां शत्रूणाम्। श्रीर्लक्ष्मीः। स्वीकृता उररीकृता आत्मसात्कृतेति। ननु यतः निहतारेः सादितशत्रोः। अपि। तव भवतः। असौ प्रसिद्धा। वल्लभा नितान्तप्रिया। कीर्तिर्यशः। अपगताङ्गैः हीनावयवैः। अपि। एभिः भवच्छत्रुभिः। त्रिदिवं स्वर्गम्। किम् इति प्रश्ने। न। नीता प्रापिता इति। त्वया तु छिन्नशिरसां परेषां श्रीरेव गृहीता। हीनाङ्गैरपि वैर्भवतः प्रेयसी कीर्तिरपि दिवं नीतेति तादृशे विजये कोऽभिमान इति निन्दा वाचनिकी स्तुतिस्तु व्यङ्ग्यैव प्रतीयमानत्वात्। एवमेव वाचनिक्या स्तुत्या निन्दाऽपि प्रत्याय्यत इति स्पष्टमेव वाच्यव्यङ्ग्ययोर्भेदः। तदेवाह निन्देति। निन्दास्तुतिवपुषा तव कीर्तिरपि तैर्नीतेति त्वां निरोद्धुं भवानक्षम इति निन्दा वाचनिकी स्तुतिश्च भवद्यशस्त्रिदिवमपि व्याप्नोतीति व्यङ्ग्या तद्वपुषा शरीरेण। भेद इति। स्वरूपस्येति निषेधे वाच्ये विधिर्व्यङ्ग्यम् विधौ वाच्ये निषेधो व्यङ्ग्यम् संशये वाच्ये निश्चयो व्यङ्ग्यम् निन्दायां वाचनिक्या स्तुतिर्व्यङ्ग्या स्तुतौ वाचनिकायां निन्दा व्यङ्ग्येति स्वरूपदृष्टया वाच्यव्यङ्ग्ययोः स्पष्टो भेद इति।

तदेव कालस्याह पूर्वेति। पूर्वपश्चाद्भावेन पूर्वं प्राक् पश्चादनन्तरम् भावोऽव-स्थितिस्तेन। प्रतीतेरवभासनात्। कालस्य समयस्येति। अयमाशयः— पूर्वं हि

वाच्यार्थं उदेति ततश्च स एव दीपवद् व्यङ्ग्यार्थं प्रकाशते इति वाच्यव्यङ्ग्ययोः पौर्वापर्येण कालदृष्टयाऽपि तयोर्भेद इति। वाच्यप्रतीतेर्व्यङ्ग्यप्रतीतिकारणात्काल-कृतभेद इति।

तयोरेवाश्रयभेदमाह शब्देति। वाच्यस्य शब्दाश्रयत्वेन शब्दाधारत्वेन। वाच्यं हि पूर्णावयवशब्दमाश्रित्यैव प्रवर्तते न हि वाचकशब्दानुपस्थितौ वाच्यार्थोपस्थिति-रिति। व्यङ्ग्यस्य तु शब्देति शब्दः पदम् तदेकदेशः पदैकदेशः प्रकृतिप्रत्ययोपसर्ग-निपातादिः तदर्थः पदार्थः वर्णाः अक्षराणि सङ्घटना रचना तदाश्रयत्वेन तदव-लम्बेन। च। आश्रयस्य भेद इति। वाच्यो ह्यर्थः शब्दमात्रेण बोध्यते व्यङ्ग्यार्थस्तु शब्देन (पदेन) पदावयवभूतप्रकृतिप्रत्ययादिना वर्णैः पदार्थैर्वाच्य-लक्ष्यव्यङ्ग्यै स्त्रिभिरेव रचनया च प्रत्याय्यते इति तयोराश्रयकृतभेदः स्पष्ट इति। निमित्तभेदमाह शब्देति वाच्यार्थो हि शब्दानुशासनज्ञानेन शब्दानामनुशासनं व्याकरणकोशादि तस्य ज्ञानेन परिचयेन हि ज्ञायते यदा व्यङ्ग्यार्थस्तु प्रकरणेति प्रकरणं वक्तृबोद्धृबुद्धिस्थता तदादि सहायमुपकारकं यत्प्रतिभायाः प्रज्ञायाः नैर्मल्यं वैशद्यं तेन सहितेन युक्तेन तेन शब्दानुशासनज्ञानेन। च। अवगमः उपलब्धिः। इति। निमित्तस्य कारणस्य। अयमाशयः—वाच्यार्थो हि व्याकरणकोशादिज्ञानेनैव ज्ञातुं शक्यते व्यङ्ग्यार्थस्तु प्रकरणादिसहकारेण प्रतिभानैर्मल्यादेवावगन्तुं शक्यत इति कारणदृष्टयाऽपि वाच्यव्यङ्ग्ययोर्भेद इति। यथोक्तं ध्वनिकृता—

शब्दार्थशासनज्ञानमात्रादेव न वेद्यते।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्॥ इति।

कार्यभेदमाह बोद्धीति बोद्धृमात्रविदग्धव्यपदेश्ययोः बोद्धा विज्ञमात्र-शब्दः स च विदग्धः सहृदयः स च ताभ्यां व्यपदेश्ययोः व्यवहार्ययोः। प्रतीतिरुप-स्थितिमात्रशब्दोऽवधारणार्थे चमत्कृतिश्च तयोः। करणात् समुत्पादनात्। कार्यस्य फलस्य। भेद इति। अयमाशयः— वाच्यार्थो हि समस्ते ज्ञातरि प्रतीयते एव यदा व्यङ्ग्यार्थस्तु विदग्धजने एव चमत्कारमुत्पादयति। तेन वाच्यार्थो ज्ञातृमात्रे प्रतीतिकारको यदा व्यङ्ग्यार्थो विदग्धजने चमत्कारोत्पादक इति कार्य-दृष्टया तयोर्भेद इति। तेनैवोक्तं वाच्यप्रतीतौ प्रतीतिमात्रफलं यदा व्यङ्ग्यप्रतीतौ चमत्काराख्य आनन्दातिशयः फलमिति तयोर्भेद इति।

सङ्ख्याभेदमाह गत इति। 'गतोऽस्तमर्कः' इत्यादौ इति वाक्ये। प्रदर्शित-नयेन प्रागुपवर्णितप्रकारेण। सङ्ख्यायाः भेद इति। अयमाशयः— वाच्यार्थस्य तु सर्वत्रैक्यमेव। सत्यपि नानार्थे एकस्मिन् वाक्ये एक एवार्थो विलसति अन्यथा

वाक्यस्य संशायकत्वेनाप्रामाण्यात् । व्यङ्ग्यार्थस्तु प्रकरणादिसाहाय्येनानन्तत्वं भजते इति सङ्ख्याकृतो भेदस्तयोरिति ।

विषयभेदमाह **कस्स** इति पिआए ( प्रियायाः ) **अहरं** अधरम् सव्वणं ( सव्रणम् ) दट्ठूण ( दृष्ट्वा ) कस्स ( कस्य ) वा रोसो ( रोषः ) ण ( न ) होइ ( भवति ) सभमरपद्मग्घइणि ( सभ्रमरपद्माघ्रायिणि ) वारिअवामे ( वारितवामे ) एण्हिम् ( इदानीम् ) सहसु ( सहस्व ) इत्यन्वयः । **प्रियायाः** प्रेयस्याः । **अधरं** निम्नोष्ठम् । **सव्रणं** क्षताङ्कितम् । **दृष्ट्वा** विलोक्य । **कस्य** जनस्य । **वा** हि । **रोषः** क्रोधः **न** नैव । **भवति** सञ्जायते अपितु सर्वेषामेव । तेन हे सभ्रमरपद्माघ्रायिणि ! भ्रमरैः षट्पदैः सहितं यत् पद्म कमलं तदा जिघ्रति तच्छीले । **वारितवामे** वारिते मा. इति निवारिते वामा प्रतिकूला हठयुक्तेति । **इदानीं** सम्प्रति । **सहस्व** पतिकृतावज्ञामनुभवेति । अत्रोच्यते — अत्र वाच्यार्थः सखीविषयः । व्यङ्ग्यार्थस्तु भ्रमरेणास्या अधरः खण्डितो न तूपपतिनेति तत्कान्ते इदं मया समाहितं पुनरेवं त्वया न विधेयमित्युपपतौ भ्रमर-खण्डिताधरेयमिति न भर्तृकृतेति वेर्ष्या कार्येति सपत्नीविषये सरलतरेयं न शङ्का-स्थानमिति श्वश्रूविषये इति विषयभेदेन भिद्यत इति ।

तत्राभीष्टमाह **इत्यादाविति इत्यादौ** इत्यत्र काव्ये । **सखीतत्कान्तादि-गतत्वेन** वाच्यस्यार्थस्य सभ्रमरपद्माघ्राणेनाधरस्य सव्रणत्वरूपस्य सखीगतत्वं व्यङ्ग्यार्थस्य अधरदशनादेः सखीकान्तगतत्वञ्च तेन । **विषयस्य** प्रस्तावितवस्तुनः । **च**कारः पूर्वोक्तसमुच्चये ।

**भेदे** पार्थक्ये । **अपि च** । **यदि** मौढ्यवशात् । **एकत्वं** वाच्यव्यङ्ग्ययोर-भिन्नत्वम् । **तत्** तदा । **क्वचिदपि** कुत्रापि । **नीलपीतादौ** नीलवर्णे पीतवर्णे च तद्वति घटादौ । **भेदं** पार्थक्यम् । **न स्यादिति** । इत्थमुक्तं भवति । अभिधाबोध्यस्य वाच्यस्य व्यञ्जनाबोध्यस्य व्यङ्ग्यस्य च स्वरूपकाल-आश्रय-निमित्त-कार्य-सङ्ख्या-विषयादिगतभेदः स्पष्ट एव । तथा सत्यपि तदविचिन्त्यैव यदि तयोरेकत्वमेव समर्थ्यते तदा तेषां मते नीलघटे पीतघटे च नीलोऽयं पीतोऽयमिति च भेदो न स्याद्धर्म्याविशेषात् । तत्र वाच्ये निषेधे व्यङ्ग्यो विधिर्वा विधौ वाच्ये व्यङ्ग्यो निषेधः वाच्ये संशये व्यङ्ग्यो निश्चयः निन्दाया वाचनिकायां स्तुतिर्व्यङ्ग्या स्तुतौ वाचनिकायां निन्दा व्यङ्ग्येति स्वरूपस्य भेदः वाच्योऽर्थः पूर्वं प्रतीयते व्यङ्ग्योऽर्थस्तु पश्चात्तदाक्षिप्तत्वेन प्रतीयते इति कालस्य भेदः वाच्यो हि पूर्णशब्दमात्राश्रयः शब्दोपस्थितिं विना तदप्रतीतेः व्यङ्ग्यार्थस्तु पदपदैकदेश-वर्ण-पदार्थ-सङ्घटनाद्या-श्रयत्वेन प्रतीयत इति आश्रयस्य भेदः वाच्यार्थो हि कोशव्याकरणादिज्ञानमात्रेण

ज्ञातुं शक्यते व्यङ्ग्यार्थस्तु प्रकरणादिसहकारेण विशदीकृता या प्रतिभा तद्विशिष्टेन ज्ञानेनैव ज्ञातुं शक्यत इति कारणस्य भेदः वाच्यार्थो हि बोद्धरि प्रतीयते एव किन्तु व्यङ्ग्यार्थस्तु विदग्धजने चमत्कृतिमुत्पादयतीति कार्यस्य भेदः वाच्यार्थः सर्वत्र ऐक्येन प्रतिभासते व्यङ्ग्यार्थस्तु पात्रभेदेन भिन्नत्वेन प्रत्येत्यानन्त्यं भजत इति सङ्ख्याया भेदः एकस्मिन्नेकगतत्वेन वाच्यार्थः प्रतीयते तदा व्यङ्ग्यार्थस्त्वपरस्मिन् अपरगतत्वेन प्रतीयते इति विषयस्य भेदः इति तयोर्भेदः स्पष्टः। स्वकथनदार्ढ्यायाचार्यग्रन्थं संवादयति उक्तमित्यादिना। उक्तं कथितं वृद्धैरिति शेषः। हि एव वस्तूनाम्। अयमेष एव नान्यः। भेदः अन्योन्याभावः। वा पक्षान्तरे। भेदहेतुः भेदकारणम्। यद्। विरुद्धधर्माध्यासः विरुद्धस्य तदवृत्तेर्धर्मस्य अध्यासो ज्ञानमारोपो वा। कारणभेदः निमित्तपार्थक्यम्। चकार उभयसमुच्चये। इदमुक्तं भवति। वस्तुनोस्तत्तदवृत्तिधर्मज्ञानमेव भेदः निमित्तपार्थक्यमेवान्योन्याभावज्ञापकमिति। अयमेव घटपटयोर्भेदो जलाहरणशीतत्राणादिविरुद्धधर्माध्यासोऽयमेव भेदहेतुर्यत्कारणभेदश्चेति सारः। परस्परविरुद्धधर्म एव वस्तूनां भेदः तद्धेतुश्च कारणभेद एवेति तत्त्वम्।

**[ वृत्तिः ] वाचकानामर्थापेक्षा व्यञ्जकानां तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम्। किञ्च वाणीरकुडङ्गेत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽप्यतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामिति।**

[ कमला० ] वाच्यव्यङ्ग्यवद्वाचकव्यञ्जकयोर्भेदमाह वाचकानामिति। अर्थः सङ्केतविषयः। सङ्केतितमेव वाचका बोधयन्ति व्यञ्जकस्तु न तथा अर्थस्यापि व्यञ्जकत्वात्। न ह्यर्थोऽप्यर्थेऽसङ्केतितः। यदुक्तं तात्पर्यविषयत्वाद् व्यङ्ग्यस्य शाब्दत्वमिति तदितोऽप्ययुक्तमित्याह किञ्चेति सीदन्त्यङ्गानीत्यादौ लतागृहं प्रविष्ट इति व्यङ्ग्यं बोधयित्वा सीदन्तीति वाच्येऽर्थे यत्र विप्रलम्भाऽऽख्यरसपोषणात् तात्पर्यं विश्राम्यति समाप्यते तस्मिन् मध्यमे चमत्काराभावादतात्पर्यभूतोऽपि व्यङ्ग्योऽर्थः प्रतीयमानः किं व्यापारविषयः स्यान्न कस्यापीत्यर्थः।

[ सरि० ] वाच्यव्यङ्ग्ययोरिव वाचकव्यञ्जकयोरपि वैधर्म्यमुपदर्शयति वाचकानामिति। वाचकानां वाचकशब्दानाम्। अर्थापेक्षा सङ्केतितवस्तुन आवश्यकता सङ्केतितार्थं विना अर्थबोधनसामर्थ्याभावात्। तेन हि अर्थवतामेव शब्दानां वाचकत्वं न त्वर्थहीनानाम्। व्यञ्जकानां व्यङ्ग्यार्थप्रकाशकानां शब्दानाम्। तु तद्विपरीतम्। न नैव। तदपेक्षत्वम् अर्थापेक्ष्यत्वमर्थवतां हि व्यञ्जकत्वं त्वस्येव

किन्तु निरर्थका अपि वर्णास्तस्य व्यञ्जका भवन्तीति व्यञ्जकानां नार्थवत्त्वनैयत्यमिति । अवाचकस्यापि गीतशब्दादेः रसादिलक्षणावगमदर्शनादशब्दस्याऽपि चेष्टादेरर्थविशेषप्रकाशनसिद्धेश्च । वाचका गृहीतसङ्केतमेवार्थं बोधयन्तीति तेषां सङ्केतितार्थापेक्षा । असदेव शीतत्वपावनत्वादिकं तटे बोधयन्ति व्यञ्जका इति व्यञ्जकानामर्थानपेक्षेति ।

यदुक्तं व्यङ्ग्यस्य शाब्दत्वं तस्य तात्पर्यविषयत्वादिति तन्निरासाय पुनरुपक्रमते किञ्चेति । किञ्च यतः । वाणीरकुडंगित्यादौ वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः । गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि' इति काव्ये । प्रतीयमानं लतागृहं प्रविष्टः इति व्यङ्ग्यम् । अर्थमभिप्रायम् । अभिव्यज्य प्रत्याय्य । वाच्यं वाच्यार्थः । यत्र यदा । स्वरूपे स्वक्षेत्रे । अङ्गानि सीदन्तीत्यत्र । एव । विश्राम्यति समाप्यते तावतैव विप्रलम्भरसपोषणातात्पर्यसिद्धेः । तत्र तादृशे । गुणीभूतव्यङ्ग्ये वाच्यापेक्षयाऽसुन्दरत्वेन व्यङ्ग्यस्य गुणभावेन चमत्काराभावात्तत्र कृते मध्यमकाव्ये । अतात्पर्यभूतः तात्पर्यविषयातिरिक्तः पर्यन्तकक्षाविश्रान्त्यभावात् । स्वशब्दानभिधेयः स्वस्य शब्देन अनभिधेयः अकथनीयः विधेयस्यैभिधेयत्वादस्य च विधेयातिरिक्तत्वात् सङ्केतितत्वाभावाच्च । अर्थः व्यङ्ग्यरूपः । प्रतीतिपथं प्रतीतिविषयम् । अवतरन् प्रापन् सन् अनपह्नवनीयतया परिस्फुरन् सन् । कस्य कतमस्य हि । व्यापारस्य वृत्तेः । विषयतां क्षेत्रतां यदि व्यञ्जना न स्वीक्रियते तदेति । अवलम्बताम् आश्रयताम् । इति हेतोरपि व्यञ्जनावश्यमेव स्वीकर्तव्येति । इत्थमुक्तं भवति -- यत्परः शब्दः स शब्दार्थ इति यदि तात्पर्यमतुलाधृतत्वाद्यावत्कार्यप्रसारित्वेन मन्यते तत्पक्षे व्यङ्ग्यस्य यत्र प्राधान्यं तत्र तु शब्दं व्यङ्ग्यतत्परं मत्वा यद्वा व्यङ्ग्यार्थमेव तात्पर्यं मत्वा व्यङ्ग्यार्थमपि कामं वाच्यत्वेन ग्रहीतुं सम्भवेदपि किन्तु यत्र तु व्यङ्ग्यस्य गुणभावोऽचमत्कारितया तत्र तु व्यङ्ग्यार्थः कस्य विषयतामापतेद्यदि व्यञ्जना नोररीक्रियते ः नासौ स्वशब्दाभिधेयोऽसङ्केतितत्वात् न चासौ तात्पर्यविषयः पर्यन्तकक्ष्याविश्रान्त्यभावात् । न चासौ उपेक्ष्य एव अनपह्नवनीयतया परिस्फुरितत्वात् । यदि नासौ वाच्यो न तात्पर्यविषयश्च न चोपेक्ष्यस्तदा स निश्चयमेव व्यञ्जनाया एव विषय इति । तेन तात्पर्यमभिधा वा न प्रतीयमानेऽर्थे व्यापार इति पर्यवसितमिति ।

[ वृत्तिः ] ननु 'रामोऽस्मि सर्वं सहे' इति 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' इति 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च

भवति। तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम। उच्यते—लक्षणीयार्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियतत्वमेव। न खलु मुख्येनार्थेनानियतसम्बन्धो लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसम्बन्धः अनियतसम्बन्धः सम्बद्धसम्बन्धश्च द्योत्यते।

[ कमला० ] व्यङ्ग्यस्य लक्षणागम्यत्वं शङ्कते नन्विति। रामेणेति। अत्र—

प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा,
सोढं तच्च तथा तया कुलजनो धत्ते यथोच्चैः शिरः।

व्यर्थं सम्प्रति बिभ्रता धनुरिदं तद्व्यापदः साक्षिणा इति पूर्वं पादत्रयं रामोक्तिः। प्रत्याख्यानं निराकरणं तत्परायास्ते तव रक्षसा रावणेन समुचितं क्रूरयोग्यं कर्म कृतं तच्च त्वया तथा सोढं यथा कुलस्थो जनो मल्लक्षणः उच्चैः शिरो धत्ते श्लाघां धत्ते अन्यथा लाञ्छनेन नम्रीभावापत्तेः। तव व्यापदो विपत्तेः साक्षी द्रष्टा तेन प्रियजीवितेन अद्यापि जीवता रामेण सह प्रेम्णः प्रीतेः सुकृतं सम्यक् करणमाचरणम्। भावे क्तः। नोचितं न युक्तमिति श्लोकार्थः। श्लोकद्वयं मूले स्थलान्तरे स्पष्टम्। रामोऽस्मीत्यत्र दुःखसहिष्णुत्वं रामेणेत्यत्र निःस्नेहत्वं रामोऽसावित्यत्रोत्कृष्टत्वं लक्ष्यम्। तेन नानात्वमित्यर्थः। विशेषेति विशेषव्यपदेशोऽर्थान्तरसङ्क्रमितवाच्यत्वादिस्तद्धेतुस्तद्विषयस्तदवगमो लक्ष्यावगमः। लक्षणायाः शब्दवृत्तित्वात्तदायत्तत्वम्। शक्यसम्बन्धापेक्षणाच्चार्थायत्तत्वम्। प्रकरणादीति तस्यैव तात्पर्यग्राहकत्वात्तात्पर्यानुपपत्तेश्च लक्षणामूलत्वादित्यर्थः। नूतनो व्यङ्ग्यः। नानात्वादि धर्मैर्हि व्यङ्ग्यसिद्धिस्त्वयाभिप्रेतम्। ते च लक्ष्येऽपि सन्तीति तत्रैव व्यङ्ग्यस्यान्तर्भावोऽस्त्विति भावः। उत्तरमाह उच्यते इति। न हि नानात्वाल्लक्ष्यत्वम् नानार्थेऽतिप्रसक्तेरित्यर्थः। नियतत्वं सर्वपुरुषगम्यत्वम्। प्रतीयमानो व्यङ्ग्यः। गतोऽस्तमर्क इत्यादौ नियतानियतपरम्परासम्बन्धगम्यार्थप्रतीतेरित्यर्थः।

[ सरि० ] इत्थं व्यङ्ग्यस्य वाच्यत्वं तात्पर्यविषयत्वञ्च युक्त्या सप्रपञ्चं निरस्य सम्प्रति तस्य लक्ष्यत्वनिरासाय प्रकरणमारभते नन्विति। ननु इति प्रश्ने। कश्चिद् ब्रूयादिति। यथा हि भवतोक्तं वाच्यं हि सर्वत्रैकत्वं भजते प्रकरणादिवशान्नियतत्वेन व्यङ्ग्यं तु तद्विपरीतं प्रकरणादिवक्तृप्रतिपत्तृविशेषसहकारेण नानात्वं भजते इति तर्हि ""रामोऽस्मि सर्वं हे" रामेण प्रियजीवितेन तु कृतं 'प्रेम्णः प्रिये

नोचितम्' 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ इत्यादि-वाक्ये रामशब्दमतः। लक्षणीयः लक्षणाविषयः। अपि च। अर्थः। नानात्वं विविधत्वं यथा आद्ये दुःखसहिष्णुत्वं द्वितीये निःस्नेहत्वं तृतीये सर्वोत्कृष्टत्वमिति रामस्यैवानेकेऽर्था इति। भजते प्राप्नोति। विशेषव्यपदेशहेतुः विशेषस्य वाच्यातिरिक्तस्यार्थस्य व्यपदेशः सूचनमर्थान्तरसङ्क्रमितवाच्यत्वादिः तस्य हेतुस्तद्विषयः। चेति समुच्चये। भवति सम्पद्यते। तदवगमः तस्य लक्ष्यार्थस्य अवगमः प्राप्तिः ज्ञानं वा। च अपि। शब्दार्थायत्तः शब्देऽर्थे च आयत्तः आश्रितो निर्भर इति। लक्षणायाः शब्दवृत्तित्वाल्लक्ष्यस्य शब्दायत्तत्वम्। तस्य शक्यसम्बन्धापेक्षणाल्लक्ष्यस्यार्थायत्तत्वञ्च। प्रकरणादिसव्यपेक्षः प्रकरणं वक्तृप्रतिपत्तृबुद्धिस्थता तदादेः सव्यपेक्षः विशेषणे या अपेक्षा तया सहितः। तथात्वञ्च तस्यैव तात्पर्यग्राहकत्वात्तात्पर्यानुपपत्तेश्च लक्षणामूलत्वादिति कमलाकर्याम्। चकारः समुच्चयार्थः। इति हेतोः। अयमेषः। कः कतमो हि। नूतनः अपरम्परासिद्धः। प्रतीयमानः। नाम व्यङ्ग्येति कथितोऽर्थः इति। अयमाशयः— व्यङ्ग्ये हि नानात्वमर्थान्तरसङ्क्रमितवाच्यत्वादिविशेषव्यपदेश्यत्वं शब्दार्थाधीनत्वं प्रकरणादिसव्यपेक्षत्वञ्चेत्यादयो ये हि धर्माः महता प्रयासेनोक्तास्ते लक्ष्येऽपि भवन्त्येव। यथा हि 'रामोऽस्मि सर्वं सहे' इत्यत्र रामपदस्य राज्यभ्रंशादिनानाविधक्लेशसहिष्णुत्वं रामेण प्रियजीवितेन इत्यत्र तस्य पुरुषकारपराङ्मुखत्वं रामोऽसौ भुवनेषु इत्यत्र सर्वलोकातिशायित्वञ्चेति लक्षणीयार्थस्य नानात्वं दृश्यत एव यद्भवताऽपि नैव प्रत्याख्यातुं पार्यते तस्यार्थान्तरसङ्क्रमितवाच्यत्वादिविशेषव्यपदेशविषयत्वमप्यस्त्येव लक्षणायाः शब्दाश्रयत्वाल्लक्ष्यार्थस्य शक्यसम्बन्धापेक्षणाच्च तस्य शब्दार्थाधीनत्वमप्यस्त्येव स्पष्टम्, तस्यैव तात्पर्यग्राहकत्वात्तात्पर्यानुपपत्तेश्च लक्षणामूलत्वाच्च तस्य प्रकरणादिसव्यपेक्षमप्यस्त्येवेति यदि न वाच्यो व्यङ्ग्यस्तदा लक्ष्य एवास्तु तत्र वैधर्म्यानाश्रयत्वेनेति पूर्वपक्षः। प्रकरणञ्चेत्थम्—

> स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः,
> वाताः सीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
> कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे,
> वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥

इत्यत्र वक्त्रा रामेण स्वयं कथितस्य रामशब्दस्य बाधितदाशरथिरूपमुख्यार्थस्य कठोरहृदयपदसाहचर्येण सर्वदुःखसहिष्णुजनत्वं लक्ष्योऽर्थः। तथैव—

प्रत्याख्यानरुचेः कृते समुचितं क्रूरेण ते रक्षसा,
सोढं तच्च तथा त्वया कुलजने धत्ते यथोच्चैः शिरः।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा,
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥

इत्यत्रापि बाधितमुख्यार्थस्य रामपदस्य पुरुषकारपराङ्मुखत्वेन कातरत्वं लक्ष्योऽर्थः। पिण्डितोऽर्थस्त्वित्थम्। हे प्रिये! प्रत्याख्यानरुचेर्निराकरणतत्परायाः हठिन्यास्ते तव क्रूरेण निर्दयेन रक्षसा रावणेन समुचितं योग्यं क्रूरमेव कर्म तवापहरणं कृतं त्वया तद्दुःखञ्च तथा सोढं यथा कुलजनः उच्चैः शिरः धत्ते सम्प्रति इदं धनुः व्यर्थमेव बिभ्रता धारयता पत्न्यपहारकेऽपि न प्रयुक्तमिति अस्य कुत्र हि प्रयोगः स्यात्तेन व्यर्थत्वमेवास्येति। त्वद्व्यापदां भवद्विपत्तीनां साक्षिणा द्रष्ट्रा प्रियजीवितेन रामेण प्रेम्णः उचितं योग्यं न कृतमिति। त्वां हरता रक्षसा राक्षसयोग्यं क्रूरं कर्म कृतं त्वया च ससाहसं तत्सहनेन पितृपतिकुलोचितं कर्म कृतम्। मया रामेणैव दम्भिना धनुर्धारिणाऽपि त्वामरक्षता प्रेम्णः उचितं न कृतमिति रामपदेनात्र दाशरथिव्यतिरिक्तपुरुषकारपराङ्मुखजनरूपमर्थं लक्ष्यत इति। तथा च—

'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यत्र रामपदस्यार्थः लोकातिशायिजनेऽर्थे लक्षित इति। इत्थं पूर्वपक्षमनूद्य तद्दूषयति **उच्यत** इति। उच्यते तत्परिहारायेदं कथ्यते इति। **लक्षणीयस्य** मुख्यार्थबाधे सति लक्षणाबोध्यस्य। **अर्थस्य** लक्ष्यार्थस्य। **नानात्वे** बहुविधत्वे यथोदाहृतं त्वयेति। **अपि**। **अनेकार्थशब्दाभिधेयवत्** अनेके अर्थाः सन्ति यस्य तादृशो यः शब्दः सैन्धवादिस्तस्य अभिधेयवत् वाच्यार्थवत्। नियतत्वम् निश्चितसीमत्वम् सर्वपुरुषगम्यत्वम्। **एव** इत्यवधारणे न तु तस्यानन्त्यमिति। यथा ह्यनेकार्थस्यापि सैन्धवशब्दस्य प्रकरणादिवशादेकस्मिन् वाक्ये एक एवार्थः प्रतीयते यथा भोजनप्रसङ्गे लवणमिति यात्राप्रसङ्गेऽश्व इति तथैव लक्षणीयार्थस्यापि नियतत्वमेव न त्वानन्त्यमिति। तथाभवने हेतुमाह **न खल्विति**। खल्विति निश्चये। **न** नैव। **मुख्येन** अभिधेयेन सङ्केतितेनेति। **अर्थेन** वाच्यार्थेन। **अनियतसम्बन्धः** अनिश्चितव्यतिकरः। एवार्थः। **लक्षयितुं** लक्षणया उपस्थापयितुम्। शक्यते पार्यते। नानात्वेऽपि लक्ष्यार्थस्य सोऽपि एकस्मिन् वाक्ये एक एवेति नियत एव। न हि लक्षणा नियतेन मुख्यार्थेन नितान्तमसम्बद्धमर्थं बोधयितुं प्रभवति। तेन मुख्यार्थेन सह नियतसम्बन्धत्वाल्लक्ष्यस्यापि नियतत्वमेव। ततो व्यङ्ग्यस्य वैशिष्ट्यमाह **प्रतीति** प्रतीयमानः व्यङ्ग्यार्थः। तु इति व्यवच्छेदे तद्व्यति-

रिक्तमिति। प्रकरणादिविषयवशेन प्रकरणवक्तृप्रत्तिपत्तृप्रभृतिविषयाधीन्येन। मुख्यार्थेन सह नियतसम्बन्धः नियतः सर्वपुरुषगम्यः सम्बन्धो व्यतिकरो यस्येति यथा 'अत्ता एत्थ णिमज्जइ' इत्यादौ। अनियतसम्बन्धः अनिश्चितव्यतिकरः पात्रानुसारेण पृथगेवावभासनाद् यथा 'कस्स वा ण होइ रोसो' इत्यादौ। सम्बद्धसम्बन्धः सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषयः यथा 'विपरिअरए लच्छी' इत्यादौ। चकारः सर्वसमुच्चयार्थः। द्योतते अवभासते इति। अयमाशयः— प्रतीयमानार्थस्तु लक्ष्यार्थवन्नियत एव भवतीति न निश्चयः। स तु प्रकरणादिसहकारेण क्वचिन्मुख्यार्थेन सह नियतसम्बन्धत्वेन क्वचिदनियतसम्बन्धत्वेन क्वचित्तु सम्बद्धसम्बन्धत्वेन चावभासत इति लक्ष्यव्यतिरिक्त एव स इति।

[ वृत्तिः ] न च—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि।
मा पहिअ रत्तिअंधअ सेज्जाए मह णिमज्जहिसि ॥१३६॥
( श्वश्रूरत्र निमज्जति अत्राऽहं दिवसके प्रलोकय।
मा पथिक रात्र्यन्धक शय्यायामावयोर्निमङ्क्ष्यसि ॥ )

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः। तत्कथमत्र लक्षणा? लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम्।

[ कमला० ] मुख्यार्थबाधाभावादपि न लक्षणेत्याह न चेति। श्वश्रूरत्र निमज्जति अत्राहं दिवसके विलोकय। मा पथिक रात्र्यन्धक शय्यायां मम निमङ्क्ष्यसि। निमज्जति वृद्धत्वान्निष्पन्दं शेते। ननु न मुख्यार्थबाधो लक्षणाबीजं किन्तु तात्पर्यानुपपत्तिः। सा च अत्ता एत्थ इत्यत्रास्त्येवाऽत आह लक्षणायामपीति। अयम्भावः—पावनत्वादिप्रतीतेरावश्यकत्वात्तत्र च वृत्यन्तराभावादवश्यं व्यञ्जनाऽङ्गीकार्या। न च तत्रापि लक्षणा। सा हि न निरूढा प्रसिद्ध्यभावात् न प्रयोजनवती प्रयोजनस्य विषयत्वाभावादित्युक्तश्च द्वितीयोल्लासे। किञ्च व्यङ्ग्ये लक्षणा न पदवृत्तिर्वाच्यस्यापि व्यञ्जकत्वात् पदैकदेशवर्णादौ तत्त्वाच्च। न वाक्ये पदत्वं तदेकदेशादौ सत्त्वात्। न च शब्दवृत्तिरर्थस्य व्यञ्जकत्वादित्यादिवैधर्म्यैर्मुख्यार्थबाधाभावेऽपि तात्पर्यज्ञानं विनाऽपि वक्तृबोद्धव्यादिसहकारेण या अन्यार्थधीः सा व्यञ्जनां साधयतीति।

[ सरि० ] ननु यया कथञ्चिदविवक्षितवाच्ये लक्षणा मन्यतेऽपि तुष्यतु दुर्जनन्यायेन किन्तु यत्र यत्र व्यङ्ग्यप्रतीतिस्तत्र तत्र न लक्षणा भवतीत्यत आह

न चेति । न च । ( नैव हि यत्र यत्र व्यङ्गचप्रतीतिस्तत्र तत्र लक्षणा भवत्येवेति नियमो यतः । ) अत्ता इति हे रत्तिअंधअ ( रात्र्यन्धक ) पहिअ ( पथिक ) अत्ता ( श्वश्रूः ) एत्थ ( अत्र ) णिमज्जइ ( निमज्जति ) अहं ( अहम् ) एत्थ ( अत्र ) दिअहए ( दिवसके ) पलोएहि ( प्रलोकय ) मह ( आवयोः ) सेज्जाए ( शय्यायाम् ) मा ( मा ) णिमज्जहिसि ( निमङ्क्ष्यसि ) इत्यन्वयः । वासार्थं प्राप्तं प्रच्छन्नकामुकं पथिकं प्रति प्रोषितभर्तृकायाः कामातुरायाः वध्वा उक्तिरियम् । हे रात्र्यन्धक ! रात्रौ क्षीणविलोकन ! पथिक ! पान्थ ! श्वश्रूः पतिजननी । अत्र अस्मिन् स्थले । निमज्जति वृद्धत्वान्निष्पन्दं शेते । सन्निकटशय्याऽपि सा न किमपि ज्ञातुं प्रभवति । अहं मन्दभाग्या । अत्र अस्मिन् स्थले । स्वपिमि इति क्रियाभावाद्रात्रिं व्यथिता एव यापयामि निद्राभावादिति । द्वयोरेवोल्लेखान्न तृतीयः कश्चिदिहेति । दिवसके दिनकाले एव । दिने एव नावसर इति कुत्सायां कन् । प्रलोकय सम्यगालोकय निपुणं पश्येति । मम तस्याश्च । शय्यायां शयने । मा निमङ्क्ष्यसि पतिष्यसि तथा विलोकय यथा श्वश्र्वाः शयने न पतिष्यसीति । स्पर्शे तु तस्या जागरणसम्भवात् । लक्ष्ये प्रकृतोपयोगमाह इत्यादाविति । इत्यादौ इति काव्ये । विवक्षितान्यपरवाच्ये विवक्षितमपेक्षितमन्यपरमन्यार्थप्रत्यायकं वाच्यं शक्यार्थो यत्र तादृशे । ध्वनौ । मुख्यार्थबाधः शक्यार्थानन्वय इति । अयमभावः —यदि कथञ्चित् अविवक्षितवाच्ये मुख्यार्थबाधं प्रकल्प्य लक्षणा स्वीक्रियतेऽपि किन्तु यत्र यत्र व्यङ्गचप्रतीतिर्न हि तत्र तत्र लक्षणा सम्भवो यथा विवक्षितान्यपरवाच्ये ध्वनौ । तत्र वाच्यस्य विवक्षितत्वेन न मुख्यार्थबाधो येन लक्षणा स्यात् । तेन न हि लक्षणा व्यञ्जनास्थानीयेति । यथा 'अत्ता एत्थ' इत्यादौ श्वश्र्वा जस्तरत्वेन निष्पन्दस्वापादस्मत्तृतीयस्य गृहेऽभावाच्च निःशङ्कं मम शय्यायामेव यथेच्छं विहरन् रात्रिं यापयेति यद् व्यङ्गचं वक्तृबोध्यत्वद्विकवशाज्ज्ञायते तद्धि वाच्यस्य व्यङ्गचपरत्वेन विवक्षणादेवेति नात्र मुख्यार्थबाध इति । अतो न लक्षणा व्यङ्गचमाकलयितुं प्रभवतीति । तदेवाह तदिति । तत् तेन । अत्र एतादृशस्थले यत्र वाच्यस्य विवक्षा वर्तते तत्र । कथं केन नियमेन । लक्षणा शक्यसम्बन्धवृत्तिरिति ।' अपितु कथमपि नैवेति ।

ननु माऽस्तु मुख्यार्थबाधस्तत्र किन्तु लक्षणा तु तात्पर्यानुपपत्तावेव भवति । यदि हि मुख्यार्थबाधमात्रे लक्षणा स्वीक्रियते तात्पर्यानुपपत्तिमुपेक्ष्य तदा गङ्गायां घोषः इत्यत्र गङ्गापदस्य नौकादौ घोषपदस्य मत्स्यादावपि लक्षणा स्यात्तथा सति मुख्यार्थान्वयसम्भवात् । किन्तु ततोऽपि तात्पर्यानुपपत्तेस्तत्र गङ्गापदस्य तटे एव लक्षणेति । अत्रापि आवयोः शय्यायां मा निमङ्क्ष्यसि इत्येतस्य मुख्यार्थबाधा-

भावेऽपि तात्पर्यानुपपत्तिस्त्वस्त्येव । अतस्तत्रापि लक्षणैव स्यादिति निरासायाऽऽह लक्षणायामिति । लक्षणायां लक्षणाविषये यत्र प्रयोजनमाश्रित्य लक्षणा भवति तत्रेति । अपि च । व्यञ्जनं प्रत्यायनम् । अवश्यमपरिहार्यत्वेन । आश्रयितव्यमवलम्बनीयम् । इति इत्थम् । प्रतिपादितं लक्षणानिरूपणावसरे प्रपञ्चितमिति । अयम्भावः—प्रयोजनवती लक्षणा हि व्यञ्जनामाश्रित्यैव भवतीति प्रतिपादितमेव ।

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥
नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ।
लक्ष्यं न मुख्यं नाऽप्यत्र बाधो योगः फलेन नो ॥
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ।
एवमप्यनवस्था स्याद्या मूलक्षयकारिणी ॥
प्रयोजनेन सहितं लक्षणीयं न युज्यते ।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ॥
विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते ।'

इति कथनेन । तेनैतादृशस्थले व्यञ्जनैव साधिकेति । यथोक्तं कमलाकर्याम्—पावनत्वादिप्रतीतेरावश्यकत्वात्तत्र च वृत्त्यन्तराभावादवश्यं व्यञ्जनाङ्गीकार्या । न च तत्रापि लक्षणा । सा हि न निरूढा प्रसिद्ध्यभावान्न प्रयोजनवती प्रयोजनस्य विषयत्वाभावात् । किञ्च व्यङ्ग्ये लक्षणा न पदवृत्तिः वाच्यस्यापि व्यञ्जकत्वात्पदैकदेशवर्णादौ तत्त्वाच्च न वाक्ये पदत्वं तदेकदेशादौ सत्त्वात् न च शब्दवृत्तिरर्थस्य व्यञ्जकत्वादित्यादिवैधर्म्यैर्मुख्यार्थबाधाभावेऽपि तात्पर्यज्ञानं विनापि वक्तृबोद्धव्यादिसहकारेण अन्यार्थधीः सा व्यञ्जनां साधयतीति ।

[ वृत्तिः ] यथा च समयसव्यपेक्षाऽभिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा । अत एवाभिधापुच्छभूता सेत्याहुः । न च लक्षणात्मकमेव ध्वननम्, तदनुगमनेन तस्य दर्शनात् । न च तदनुगतमेव अभिधावलम्बनेनापि तस्य भावात् । न चोभयानुसार्येव अवाचकवर्णानुसारेणाऽपि तस्य दृष्टेः । न च शब्दानुसार्येव अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनाऽपि तस्य प्रसिद्धेः । इति । अभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपलपनीय एव ।

तत्र 'अत्ता एत्थ' इत्यादौ नियतसम्बन्धः 'कस्स व ण होइ रोसो' इत्यादावनियतसम्बन्धः—

विपरीअरए लच्छी बम्हं दट्ठूणं णाहिकमलट्ठं।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ॥
( विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति॥ )

इत्यादौ सम्बद्धसम्बन्धः। अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते। तन्निमीलनेन सूर्यास्तमयः। तेन पद्मस्य सङ्कोचः। ततो ब्रह्मणः स्थगनम्। तत्र सति गोप्याङ्गस्यादर्शनेनानियन्त्रणं निधुवनविलसितमिति।

[ कमला० ] किञ्चाभिधावल्लक्षणाऽपि सङ्केतापेक्षा न च व्यङ्ग्ये तदस्तीत्याह यथा चेति। समयः सङ्केतः। यद्यपि तद्रूपत्वादभिधानतत्सापेक्षा तथापि सम्बन्धाभिप्रायः समयशब्दः। यद्वाभिधा तज्जन्यं ज्ञानं सङ्केतापेक्षा तज्ज्ञाना-पेक्षेत्यर्थः। मुख्यार्थबाधस्तद्योगः प्रयोजनञ्चेति त्रयमित्यर्थः। ननु तर्हि अभिधात्तो भेदो न स्यादत आह अत एवेति। यतः सङ्केतापेक्षाभिधातत्सापेक्षा च लक्षणा वाक्यसम्बन्धात्तस्याः। अतः परम्परया लक्षणाऽपि सङ्केतापेक्षेत्यभिधापुच्छ-भूतेत्यर्थः। लक्षणाव्यञ्जनयोर्भेदकान्तरमाह न चेति। तस्य ध्वननस्य असिद्धिं निरस्यति न चेति। अभिधेति। नानार्थव्यञ्जनाया भद्रात्मन इत्यादावित्यर्थः। उभयलक्षणाऽभिधाना। अवाचकेति अबोधकवर्णा 'गतोऽस्तमर्कः' इत्यादावित्यर्थः। वस्तुतस्तु एकैकदूषणेनैवोभयदूषणाद्रसादेरपूर्वत्वे न तत्र शक्तिग्रहाभावाच्छक्यसम्बन्धा-ग्रहणाच्चेति तत्त्वम्। नेत्रविभागः कटाक्षः आदिपदादभिनयादिः तात्पर्यवाक्यस्य तदर्थे अत्ता एत्थेति नियतत्वं वाच्यव्यङ्ग्यप्रतीत्योरेकाधिकरणत्वम्। द्वयोः पान्यनिष्ठत्वात्। कस्स व ण इत्यादौ अनियतत्वं सखीकान्ताद्यनेकनिष्ठत्वात् विपरीअरए इति विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्। हरेर्दक्षिण-नयनं रसाकुला झटिति स्थगयति। सम्बद्धसम्बन्धं विवृणोति अत्र हीति। ततस्तेन सङ्कोचेनेत्यर्थः। तत्र चेति स्थगने सतीत्यर्थः। अनियन्त्रणं निर्लज्जं निधुवनं सुरतम्। अत्र परम्परया व्यङ्ग्यधीरित्यर्थः।

[ सरि० ] ननु प्रयोजनानपेक्षयैव कर्मणि कुशलः इत्यादाविव निरूढ-लक्षणाऽस्त्वन्यत्राप्यत आह यथेति। यथा येन प्रकारेण। च। अभिधा मुख्य-

शक्तिः। समयसव्यपेक्षा समयस्य सङ्केतस्य सव्यपेक्षा अपरिहार्यत्वेनापेक्षा यस्याः तथा। तथा तेनैव प्रकारेण। मुख्येति मुख्यार्थबाधादीनां त्रयं मुख्यार्थबाधतद्योग-रूढिप्रयोजनान्यतरसद्भावानां त्रिकं तदेव समयः पूर्वाधार तस्य सव्यपेक्षा अपरिहार्यता यस्यां तथाभूता। लक्षणा गौणी वृत्तिः। अत एव अनेनैव कारणेन। सा लक्षणा। अभिधापुच्छभूता अभिधायाः मुख्यशक्तेः पुच्छभूता पृष्टलग्ना। इति आहुः कथयन्ति। अयम्भावः—यथाऽभिधा सङ्केतग्रहसापेक्षा तथैव मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरस्य मुख्यार्थसङ्केतग्रहस्य सापेक्षा लक्षणाऽतो रूढिप्रयोजनान्यतराभावे न सा प्रवर्तते। यतो हि लक्षणाऽपि सङ्केत-ग्रहसापेक्षा तेन साऽभिधापुच्छभूतेति। यतो हि सा अभिधापुच्छभूता तेन तस्या मुख्यार्थबाधादित्रयाभावे न प्रवृत्तिरिति व्यङ्ग्ये तदभावान्न व्यङ्ग्यं लक्षणाविषय इत्यपितु व्यञ्जनाविषय एवेति। लक्षणाव्यञ्जनयोर्भेदकान्तरमाह न चेति। न नैव। च हि। लक्षणात्मक लक्षणास्वरूपम्। एव इत्यवधारणे। ध्वननं ध्वनि-स्वरूपम्। तत्र हेतुमाह तदिति। तदनुगमनेन तस्या लक्षणायाः अनुगमनेन उपजीवनेन। तस्य व्यङ्ग्यस्य। दर्शनात् अवस्थितेः। न हि लक्षणाव्यञ्जनयोरभेद एव। लक्षणामूलव्यञ्जनास्थले लक्षणामुपजीव्यैव तद्व्यापारादिति। लक्ष्यार्थं प्रत्याय्य लक्षणायां विरतायां व्यञ्जनाप्रवृत्तेरित्याशयः। न हि सर्वत्र व्यङ्ग्यस्य लक्षणानुगतत्वमेवेति तयोर्भेद इत्याह न चेति। न च नैव हि। व्यङ्ग्यं तदनुगतम् तस्या लक्षणायाः अनुगतमनुसृतम्। एव इत्यवधारणे। तत्र हेतुमाह अभिधेति तस्य व्यङ्ग्यस्य। अभिधावलम्बनेन अभिधायाः मुख्यशक्त्या अवलम्बनमाश्रयस्तेन। भावात् सत्त्वात् इति। न हि ध्वननं लक्षणात्मकमेव विवक्षितान्यपरवाच्ये तस्य अभिधाश्रयेण सत्त्वात्। न च। नैव हि। व्यङ्ग्यम् उभयानुसारि अभिधालक्षणोभयमात्रानुगामि। एव इत्यवधारणे। तत्र हेतुमाह अवाचकेति। तस्य ध्वननस्य। अवाचकेति अवाचकानां शब्दावयवत्वेन सङ्केता-भावाद् वाचकत्वहीनानाम् वर्णानां कखादीनां 'मूर्ध्नि वर्गान्त्यगाः स्पर्शाः' इत्यादिवक्ष्यमाणानामनुसारेणानुगमनेन। अपि च। दृष्टेः दर्शनात्। कोमल-परुषादिवर्णानामपि गुणव्यञ्जनद्वारा रसादिव्यञ्जकत्वस्य दर्शनान्न व्यङ्ग्यमुभयानुगत-मेवेति। न च नैव हि। शब्दानुसारि शब्दानुगामि। एव इत्यवधारणे। तत्र हेतुमाह अशब्देति। अशब्दात्मकेति अशब्दात्मकं शब्दविषयबाह्यमशब्दवेद्यं यद् नेत्रत्रिभागेन कटाक्षेण अवलोकनं दर्शनं तदादिगतत्वेन तदाश्रितत्वेन। अपि च। तस्य ध्वननस्य। प्रसिद्धेः ख्यातेः। कटाक्षादेरपि अभिलाषादिव्यञ्जनात्। उपसंहरति इतीति इति इत्थम्। अभिधेति अभिधा शब्दात्मिका शक्तिः तात्पर्यं वक्त्रिच्छा लक्षणा शक्यसम्बन्धवृत्तिः इत्येतदात्मकानामितिस्वरूपाणां व्यापाराणां

वृत्तीनां त्रयं त्रिकं तमतिवर्तते व्यतिरिक्तत्वेन भवतीति तादृशः। **ध्वननादिपर्यायः** ध्वनन-व्यञ्जन-अञ्जन-द्योतन-प्रकाशन-प्रत्यायन-बोधनाद्यपरपर्यायो यस्य स तादृशः। **व्यापारः** वृत्तिः। **अनपह्नवनीयः** मात्सर्यमात्रेण नापलपनीयः। एव इत्यवधारणे इति। तदयं पिण्डितोऽर्थः। नानात्वेऽपि न लक्ष्योऽर्थो व्यङ्ग्यतुलामारोहति तस्य नानार्थशब्दाभिधेयवन्नियतत्वान्मुख्यार्थेनानियतसम्बन्धत्वेन अभावाच्च। व्यङ्ग्यस्य तु प्रकरणादिवशान्मुख्यार्थेन सह नियतानियतसम्बद्धसम्बन्धेनाऽपि प्रकाश्यत्वात्। मतेऽपि कथञ्चिदविवक्षितवाच्यस्य लक्ष्यसाम्ये विवक्षितान्यपरवाच्ये मुख्यार्थबाधाप्रसङ्गान्मुख्यार्थमुखेनैव व्यङ्ग्यस्य भावाच्च न लक्ष्यस्तत्र व्यङ्ग्यत्वं भजते। न च तत्र तात्पर्यानुपपत्त्यैव लक्षणेति वाच्यं तथाकरणे प्रयोजनाभावान्निरूढत्वाभावाच्च। यस्य प्रतीतये वाचकमपि शब्दमपहाय लक्षकशब्दः प्रयुज्यते तत्प्रतीतिर्व्यञ्जनयैव भवति न तु लक्षणया। यथा शीतत्वपावनत्वं हि यत्प्रयोजनं तस्य गङ्गाशब्दत एव सिद्धेर्वाचकमपि तटशब्दमपहाय 'गङ्गायां घोषः' इत्यत्र लक्षकत्वेन गङ्गाशब्दप्रयोगस्तत्प्रतीतिर्लक्षणया न सम्भवति शीतत्वस्यैव लक्ष्यार्थत्वे प्रयोजनान्तराभावात्तथाऽप्रसिद्धेश्च। प्रयोजनस्य प्रयोजनं न भवतीति प्रयोजनमेव लक्षणया बोध्यते चेत्तदा तस्याः प्रवर्तने प्रयोजनमेव न भवतीति प्रयोजनं व्यङ्ग्यविषयमेव। तेन प्रयोजनवती या लक्षणा सा व्यञ्जनाश्रितैव। अभिधेव लक्षणाऽपि हेतुत्रयाधीनेति तत्पृष्ठलग्नैवेति न व्यञ्जनातुलामारोहति। न हि लक्षणात्मकत्वं व्यङ्ग्यं लक्षणामूलध्वनौ लक्ष्यानन्तरमेव व्यङ्ग्यस्य दर्शनात्। न च लक्ष्यानुसृतमेव व्यङ्ग्यं भवति विवक्षितान्यपरवाच्येऽपि तस्य भावात्। अत एवोक्तं ध्वनिकृता—

> "वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
> व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्॥
> भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।
> कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम्"॥ इति।

न च व्यङ्ग्यस्य अभिधालक्षणोभयानुधावनसङ्कोच एव अवाचकवर्णादेरपि तस्य द्योतनात् यथा हि कोमलपरुषवर्णा गुणाभिव्यञ्जनमुखेन रसं द्योतयन्तीति। न हि व्यङ्ग्यं शब्दमेवापेक्षते अभिधालक्षणावदशब्दविषयैः कटाक्षादिभिरपि तस्य व्यञ्जनात् अनेन कटाक्षेणाभिलाषो व्यज्यते इति प्रसिद्धेः। इत्येवं व्यङ्ग्यमभिधालक्षणातात्पर्यव्यापारव्यतिरिक्तमेव व्यञ्जनाविषय इति स्थितमिति। सङ्केतित एवार्थः शक्यः। शक्यसम्बन्धो लक्षणा शक्यानुवर्त्यैव तात्पर्यम्। व्यञ्जना तु बोध्यसम्बन्धः। तेन तेषां भेदः स्पष्ट एवेति स्थितम्।

व्यङ्गचस्य यन्नियतानियतसम्बद्धसम्बन्धत्वमुक्तं तदेवोदाहरति **तत्रेति**। तत्र तेषु सम्बन्धत्रिकेषु मध्ये। 'अत्ता एत्थ' इत्यादौ अत्ता एत्थ णिमज्जइ इति काव्ये। व्यङ्गचार्थो हि। **नियतसम्बन्धः** नियतः शय्याप्रवेशरूपे व्यङ्गचे तदप्रवेशरूपस्य वाच्यस्य यो विरोधसम्बन्धः स प्रसिद्धतया क्लृप्त इति निश्चितः सम्बन्धो यस्य तादृशो व्यङ्गचार्थ इति। नियतसम्बन्धत्वं हि वाच्यव्यङ्गचप्रतीत्योरेकविषयात्मकत्वम्। अत्र तूभयोरेव पान्थनिष्ठत्वाद् व्यङ्गचस्यापि नियतसम्बन्धत्वमत्र। 'कस्स व ण होइ रोसो' इत्यादौ इति काव्ये। **अनियतसम्बन्धः** न विद्यते नियतः सम्बन्धो यस्येति तथा व्यङ्गचार्थ इति। अनियतसम्बन्धत्वं तु वाच्यस्यैकनिष्ठत्वे व्यङ्गचस्यानेकनिष्ठत्वम्। प्रकृते वाच्यस्य सखीनिष्ठत्वे व्यङ्गचस्य सखीतत्कान्तजारप्रतिवेशिनी सपत्नीश्वश्रूप्रभृत्यनेकनिष्ठत्वाद् गतोऽस्तमर्कः इत्यादावपि। केचित्त्वत्र नियतानियतसम्बन्धमपि वाञ्छन्ति वाच्ये सर्वेषामेव सत्यप्रतीतिः व्यङ्गचे तु कान्तस्यैव सत्यतयाऽन्येषां त्वसत्यतया प्रतीतिरिति। वाच्यप्रतीतेरेव सत्यासत्यत्वप्रतीतिविषयत्वरूपान्न तथेत्यपरे। तृतीयमुदाहरति **विपरीअरए** इति। लच्छी ( लक्ष्मीः ) विपरीअरए ( विपरीतरते ) णाहिकमलट्ठं ( नाभिकमलस्थम् ) बह्माणं ( ब्रह्माणम् ) दट्ठूण ( दृष्ट्वा ) रसाउला ( रसाकुला ) सती हरिणो ( हरेः ) दाहिण णअण ( दक्षिणनयनम् ) झत्ति ( झटिति ) ढक्केई ( स्थगयति ) इत्यन्वयः। **लक्ष्मीः** कमला। **विपरीतरते** विपरीतं स्त्रियाः पुरुषायितत्वेन प्रतिकूलं यद्रतं तस्मिन् प्रसङ्गे। **नाभिकमलस्थं** विष्णोर्यन्नाभिरेव कमलं वा नाभौ यत्कमलं तत्र तिष्ठतीति तं विद्यमानम्। **ब्रह्माणं** प्रजापतिं पद्मयोनिम्। **दृष्ट्वा** विलोक्य। लज्जमाना किन्तु **रसाकुला** रसेन सुरतावेशेनाकुला सती ततो निर्वर्तितुमक्षमा। **हरेः** नारायणस्य। **दक्षिणनयनम्** सव्येतरलोचनम्। **झटिति** प्रसह्य। **स्थगयति** ( आच्छादयति स्ववामकरतलेनेति )। लक्ष्ये प्रकृतोपयोगमाह इत्यादाविति **इत्यादौ** इतिकाव्ये। **सम्बद्धसम्बन्धः** निर्वाह्यनिर्वाहकतया सन्तानीभूय प्रतीतः। व्यङ्गचार्थं इति। तत्र सम्बद्धसम्बन्धमेव व्याख्याति **अत्रेत्यादिना**। अत्र काव्येऽस्मिन्। **हरिपदेन** हरिपदसाहचर्येण हरेरिति कथनेनेति। **दक्षिणनयनस्य** वामेतरलोचनस्य। **सूर्यात्मकता** सूर्यरूपता। **व्यज्यते** द्योत्यते। हरेर्दक्षिणवामनेत्रयोः सूर्यचन्द्रात्मकत्वेन परस्परया प्रसिद्धेः। **तन्निमीलनेन** तस्य सूर्यरूपदक्षिणनेत्रस्य निमीलनेनाच्छादनेन। **सूर्यास्तमयः** सूर्यस्य अस्तमयोऽप्रकाशः। **तेन** सूर्याप्रकाशेन। **पद्मस्य** कमलस्य। **सङ्कोचो** मुद्रणमिति। ततः कमलसङ्कोचनात्। **ब्रह्मणः** पद्मयोनेः। **स्थगनं** पिधानमदर्शनम्। **तत्र** तथा। **सति** विद्यमाने। **ब्रह्मणः** स्थगने। **गोप्याङ्गस्य** योनिस्तनादेरङ्गस्य। **अदर्शनेन** विलोकनाभावेन। **अनियन्त्रणः** प्रतिबन्धं

निर्बाधमिति । निधुवनविलसितम् निधुवनस्य सम्भोगस्य विलसितं विहारः । इति । अत्र नेत्राच्छादनेन सूर्याप्रकाशस्तेन पद्मसङ्कोचस्तेन प्रजापतिस्थगनं ततो निर्बाधं रतमिति सम्बद्धसम्बन्धं व्यङ्ग्यमिति । यच्च महिमभट्ट प्रहेलिकाप्रायमिति दूषयति व्यवधानवत्त्वादिदं तन्न ध्यानार्हम् प्रहेलिकाया अतथास्वरूपत्वात्प्रहेलिकाया अपि सर्वस्या नीरसत्वनियमाभावाच्च । यदि व्यवधानवत्त्वमेव प्रहेलिकात्वं तदा 'पत्युः शिरश्चन्द्रकलामनेन' इत्यादावपि प्रहर्षौत्सुक्यादिभावान्तरितत्वात्प्रहेलिकात्वं स्याद्वस्तुतस्तु न तथेति साहित्यचूडामणौ स्पष्टम् ।

[ वृत्तिः ] 'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः वाक्यमेव च वाचकमि'ति येऽप्याहुस्तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ।

[ कमला० ] अखण्डवाक्यस्य वाक्यार्थे शक्तिरिव व्यङ्ग्येऽपि शक्तिवेदान्तिमतमाशङ्कते अखण्डबुद्धीति । एकमेवाद्वितीयं ब्रह्मेति श्रुतयः शक्त्या बोधयन्ति तथा व्यङ्ग्येऽपि वाच्य इत्यर्थः । तदुक्तम् – अनवयवमेव वाक्यमनाद्यविद्योपदर्शितालीकवर्णपदविभागमस्यानिमित्तमिति अस्या-बुद्धेरन्यत्रापि अविशिष्टमपर्यायानेकशब्दप्रकाशितमेकं वेदान्तनिष्णातास्तमखण्डप्रपेदिरे इति निराकरोति तैरपीति तत्त्वतश्चेद्वाक्यमप्यलीकमिति कस्य वाचकत्वम् । अविद्यादशायां तु व्यवहारे भट्टनयाङ्गीकारादावापोद्वापाभ्यां पदपदार्थविभागोऽङ्गीकार्य एव अन्यथा साध्वसाधुशब्दव्यवहारो न स्यान्न स्याच्च वाक्ये तत्तत्पदार्थतत्तत्सम्बन्धविशेषधीः । तत्र चोक्तदिशा व्यङ्ग्येऽभिधाद्यसम्भवात्सिद्धा व्यञ्जनेति भावः । उक्तेति निःशेषेत्यादौ तदन्तिकं गतासीति विधिरित्यर्थः ।

[ सरि० ] अखण्डवाक्यवादिमतेनापि व्यञ्जनासिद्धिमुपस्थापयति अखण्डेत्यादि । ये वेदान्तिनो वैयाकरणा वा । अपि हि । अखण्डबुद्धिनिर्ग्राह्यः अखण्डया अविभक्तया बुद्धया धिया निर्ग्राह्यः अवबोध्यः । वाक्यार्थः वाक्यजनिताशय. । एव हि नान्यः । वाच्यः वाच्यार्थः । वाक्यम् अखण्डार्थप्रतिपादकं वाक्यम् । एव नान्यत् । वाचकम् अर्थावबोधकम् । इति इत्थम् । आहुः कथयन्ति । अविद्यापदपतितैः अविद्यापदं व्यवहारावस्थां वा प्रक्रियादशां पतितैरापन्नैः । तैः अखण्डवाक्यवादिभिर्वेदान्तिभिर्वैयाकरणैश्च । पदपदार्थकल्पना पदानां वाक्यावयवानां पदार्थानां तत्प्रतिपाद्यार्थानाञ्च कल्पना आवापोद्वापाभ्यां विचारणा । कर्तव्या विधेया । एव इत्यवधारणे । इति हेतोः । तत्पक्षे तन्मते । अपि च । अवश्यं निश्चयेन । उक्तोदाहरणादौ निःशेषच्युतचन्दनं

स्तनतटमित्याद्युदाहरणे। विध्यादिः वाच्ये निषेधे सति विधि र्व्यङ्ग्य एवेत्यादि-रूपो यद्वा रन्तुमेव गताऽऽसीः इत्यादिरूपोऽर्थः। व्यङ्ग्यः प्रतीयमानः। एव इत्यवधारणे न तु वाच्यो वा लक्ष्य एवेति। अयमाशयः—ये हि खलु 'घटमानय' इत्यादौ घटत्वकर्मत्वानयनत्वकृतीनामखण्डत्वेन ग्राहका अखण्डवाक्यादखण्डार्थ-प्रतीतिरिति समर्थकाः अखण्डवाक्यार्थमेव वाच्यमखण्डवाक्यमेव वाचकं मत्वा शक्तेरेव विद्यमानतामधिवदन्ति ते हि विद्यादशायां कामं तथैवामनन्तु किन्तु अविद्या( व्यवहारप्रवृत्ति )दशायां तु तैरपि पदपदार्थविचारणा विधातव्यैव तां विना व्यवहारासिद्धेः। यथा हि घटमानय घटं नय इत्येतयोर्वाक्ययोरखण्डत्वेना-विशेषादानयननयनरूपव्यवहारवैजात्यमपि न सिध्यति पदपदार्थवृत्तेरनङ्गीकारे। तत्स्वीकारे तु सङ्केताच्छक्तिर्मुख्यार्थबाधादिभिर्लक्षणा तयोरसाध्ये व्यञ्जनेति स्थितमेव। तथा हि आवापोद्वापाभ्यामिदं पदमत्रार्थे बोधकं नापरत्रेति पदपदार्थ-विभागज्ञानकल्पनयैव व्यवहारवैजात्योपपत्तिः। तैश्च तथाव्यवहारदशामापन्नैर्भाट्ट-नयमनुसृत्य अभिधया पदार्थस्तात्पर्येण वाक्यार्थो व्यञ्जनया व्यङ्ग्यार्थश्चेति न पुनस्तस्यावनस्यान्तिकमित्यादौ रन्तुमेव गताऽऽसीः इत्यादिर्विध्याद्यर्थः व्यङ्ग्यत्वेन स्वीकर्तव्य एवेति। न च वाक्यार्थे एव वाक्यस्य सङ्केतग्रहो वाच्यः वाक्यार्थस्या-पूर्वत्वेनानन्त्यात्तत्र सङ्केतग्रहस्याशक्यत्वात्। विद्यापक्षे तु न हि अखण्डयोरपि वाच्यवाचकभावः उभयोः पारमार्थिकभेदाभावात्। बुद्धेरखण्डत्वं वाक्यार्थ-गोचरत्वम्। 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतयोः वाक्यार्थविषया ब्रह्म बोध-यन्ति। तेन वाक्यार्थो ब्रह्म वार्यस्तत्प्रतिपादकत्वाद्वाक्यमेव वाचकमिति सर्वत्र शक्तेरेव विषया का वार्ता व्यञ्जनाया इति पूर्वपक्षः। तथाविध दशायां तु वाक्य-मेवालीकमिति तस्यापि वाचकत्वं न भवति। व्यवहारदशायां तु भाट्टनयानुसारेण व्यञ्जना स्वीकर्तव्यैवेति मधुमत्यां स्पष्टम्। एवमेव अखण्डस्फोटवादिभिरपि प्रक्रियादशायां तु व्यञ्जनैवाङ्गीकार्येति।

पूर्वपक्षोऽयं वेदान्त्येकदेशिन एव सिद्धान्तिवेदान्तिमते तु लक्षणा स्वीकृतैव। न चायं वाक्यस्फोटाङ्गिकर्तृ वैयाकरणविषयः तत्रापि—

> उपायाः शिक्ष्यमाणानां बालानामुपलालनाः।
> असत्ये वर्त्मनि स्थित्वा ततः सत्यं प्रवर्तते॥
> पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
> वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन॥

इत्युक्तत्वात्। यच्च—

अविशिष्टमपर्यायानेकशब्दप्रकाशितम्।
एकं वेदान्तनिष्णातास्तमखण्डं प्रपेदिरे॥

'अतत्त्वयत्नमेव वाक्यमनाद्यविद्योपदर्शितालोकपदवर्णविभागमस्या निमित्तम्'।

इत्याद्युक्तं तन्महावाक्यविषये एव। व्यवहारपदे तु तद्विभागाभावे व्युत्पन्नाव्युत्पन्नव्यवहारस्तद्विशेषपदार्थोपस्थितिश्च न स्यादिति पिण्डितोऽर्थः।

[ वृत्तिः ] ननु वाच्यादसम्बद्धं तावन्न प्रतीयते यतः कुतश्चिद् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्। एवञ्च सम्बन्धाद् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्तद्रूपः पर्यवस्यति। तथा हि—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण।
गोलाणइकच्छकुडंगवासिणा दरिअसीहेण॥१३८॥

( भ्रम धार्मिक विस्रब्धः स शुनकोऽत्र मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥ )

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति। यद्यद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकं गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः।

अत्रोच्यते—भीरुरपि गुरोः प्रभोर्वा निर्देशेन प्रियानुरागेण अन्येन चैवम्भूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद् वा न निश्चितोऽपितु वचनात्। न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धादित्यसिद्धश्च। तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः।

तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति। अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि। व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनु-

मानम्। एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तददूषणम् ॥ ३ ॥

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चम उल्लासः ॥ ५ ॥

[ कमला० ] अनुमानाद् व्यङ्ग्यधीरिति व्यक्तिविवेककारमहिमभट्टमतं शङ्कते नन्विति। तावत्पदेन व्यञ्जनावादिनोऽपीदं तुल्यमिति सूचितम्। सम्बन्धसामान्येऽप्यतिप्रसङ्गस्तुल्योऽत आह प्रतिबन्धेति। प्रतिबन्धो व्याप्तिः। पक्षधर्मतामाह नियतेति। द्वन्द्वान्ते श्रुतस्यत्वस्य प्रत्येकमन्वयः। नियतत्वेन धर्मिनिष्ठत्वेन चेत्यर्थः। विपक्षासत्त्वेन सपक्षसत्त्वेन चेत्यर्थः। अत एवोक्तं त्रिरूपादिति पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वधर्मत्रययुतादित्यर्थः। अबाधितत्वस्य सर्वप्रमाणसाधारण्यादसत्प्रतिपक्षत्वस्य स्वार्थानुमानेऽनुमानाच्च नाभिधानम्। अत्रानुमानपदं भावव्युत्पत्त्याऽनुमितिपरम्। तद्रूप इति अनुमित्यात्मको व्यङ्ग्यव्यञ्जकभाव इति पूर्वेणान्वयः।

भम धम्मिएति—

> भ्रम धार्मिक विश्वस्तः स श्वा अद्य मारितस्तेन।
> गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥

पुष्पावचयार्थं स्वसङ्केतस्थलं गोदानिकुञ्जं गच्छन्तं विघ्नकारिणं प्रति कस्याश्चिदियमुक्तिः। गोदातीरे सिंहोपलक्षितभयहेतोः सत्त्वाद् गृहे एव तिष्ठ मागा इति तात्पर्यार्थः। अनुमानप्रकारमाह अत्रेति। गृहे भ्रमणमभ्रमणमनुमापयतीत्यन्वयः। यद्यपि गृहे भ्रमणं गोदातीरे न भ्रमणाभावमनुयातुमीष्टे व्यधिकरणत्वात्तथापि व्याप्तिग्रहोपायिकत्वेनेदमुक्तम्। श्वनिवृत्त्या गृहे विहितं भ्रमणं तद्धेतुकं कल्प्यते। तेनैव व्याप्तिः। यद्यद्भीरुभ्रमणं तत्तद्भयकारणाभावज्ञानपूर्वकमिति। गोदेति। अत्र हेतुः सिंहोपलब्धेरिति। एवञ्च प्रयोगः। गोदातीरं भीरुभ्रमणायोग्यम् भयकारणवत्त्वात् सिंहादिमत्त्वाद्वा। यन्नैवन्तन्नैवम्। यथा गृहमिति भ्रमणाभावानुमितिः। व्याप्तिं दर्शयितुमाह यद्यदिति। व्यापकविरुद्धेति। भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिस्तद्विरुद्धं भयकारणं तदुपलब्धिरित्यर्थः। तेन व्यतिरेकव्याप्तिरुक्ता। दूषयति उच्यत इति। एवं हि परस्य व्याप्तिरभिमता। यत्र भीरुभ्रमणायोग्यत्वाभावः किन्तु भीरुभ्रमणयोग्यत्वं तत्र भयकारणाभाव इति सा चायुक्ता। बलात्प्रभुनिर्देशादिना भीरुभ्रमणस्य भयकारणेऽपि दर्शनेन व्यभिचारादिति भावः। अन्येन चेति निधिलाभादिनेत्यर्थः। शुनो बिभ्यदिति

स्पर्शदोषाद्बिभ्यदित्यर्थः। यदि धार्मिकः शूरोऽभिप्रेतस्तत्र गोदातीरं शूरभ्रमणयोग्यं भयहेतुमत्वात् सिंहवत्त्वाद्वेत्युच्येत तदा साध्याभावव्याप्तत्वाद्विरुद्धतेति भावः। यदि तु भयकारणवत्त्वं सिंहवत्त्वं वा पुंश्चल्याः प्रयुज्येते तदा स्वरूपासिद्धिरपीत्याह गोदावरीति। अर्थेनेति अप्रतिबन्धादव्याप्तत्वात्। न हि सर्वं वाक्यमर्थसत्तया व्याप्तम्, प्रतारकवाक्यस्यापि दर्शनात्। अतः सन्दिग्धासिद्धेरपीत्यर्थः। स्थलान्तरेऽपि व्यभिचारादनुमानं निरस्यति तथेति। कारणान्तरसंयोगभिन्नं स्नानादि तस्मादित्यर्थः। प्रतिबद्धानि व्याप्तानि तर्हि व्यभिचारे व्यञ्जनाऽपि कथं तत्राह व्यक्तीति। व्यक्तिर्व्यञ्जना। अस्तु ममाप्यधमपदसहकारेणानुमानमत आह न चेति। ततश्च पूर्ववत् संवित्सिद्धिरिति भावः। ननु व्यञ्जनापक्षेऽप्येष दोषोऽत आह एवमिति। तत्र व्याप्तेरनङ्गत्वेन सम्भावनामात्रादपि तत्प्रतीतेः न चातिप्रसङ्गः वक्त्रादिवैशिष्टयस्य नियामकत्वात्। यस्त्वर्थसन्देहे व्यङ्गयधीर्नेति तत्स्ववासनया प्रतीतिकलहे एव विश्राम्यतीति तत्त्वम्।

इति कमलाकरकृतायां काव्यप्रकाशव्याख्यायां
पञ्चम उल्लासः ॥ ५ ॥

( समाप्तिमियादित्यलम् )

[ सरि० ] अनुमानाद् व्यङ्गयप्रतीतिरिति यन्महिमभट्टमतं तद्दूषणायोपक्रममाणः प्रथमं तन्मतमनुवदति नन्वित्यादिना। ननु इति प्रश्ने। यत्किञ्चिदपि शक्यानुगतत्वेन लक्ष्यानुगतत्वेन तद्व्यतिरिक्तानुगतत्वेन वा प्रतीयते तद्। तावत् प्रथमम्। व्यक्तिवादिनोऽपि नात्र विप्रतिपत्तिरिति तावच्छब्दस्याभिप्रायः। वाच्यात् शक्यार्थात्। असम्बद्धं नियतानियतसम्बद्धसम्बन्धान्यतमसम्बन्धहीनम्। न नैव। प्रतीयते अभिव्यज्यते यद्यपि अनुमितौ नियतसम्बन्ध एवापेक्षणीयस्तथा च व्यञ्जनायां प्रायः सम्बन्धस्य अनैयत्यं सम्भावनातोऽपि प्रतीतेः तथापि तत्रापि व्याप्तिं संसाध्येदमुच्यते प्रतीयते इति। वाच्यासम्बद्धस्याप्रतीतेर्हेतुमाह यत इति। यतः यस्माद्धेतोः। कुतश्चित् कस्माँश्चिदपि। यस्य कस्यचित् वाच्यासम्बद्धस्यैव अर्थस्य वस्तुनः। प्रतीतेः अभिव्यक्तेः। प्रसङ्गात् सम्भावनोत्पत्तेः। यदि हि वाच्यादसम्बद्धमेव प्रतीयेत तदा यस्मांश्चित्कस्मांश्चिच्छब्दात् यः कोऽप्यर्थः प्रतीतो भवेदिति वाच्यादसम्बद्धोऽर्थो नैव प्रतीयत एव। वाच्यसम्बद्धमात्रस्य प्रतीतेः प्रकृते विप्रतिपत्तिमाह एवमित्यादिना। एवम् इत्थम्। च हि। सम्बन्धात् वाच्येन सह नियतमात्रसम्बन्धात्। व्यङ्गयव्यञ्जकभावः अर्थस्य यद्व्यङ्गयत्वं शब्दार्थयोर्यद्व्यञ्जकत्वञ्च। अप्रतिबन्धे अनियतसम्बन्धेन प्रति नियतो बन्ध इति

व्युत्पत्त्या। व्याप्त्याख्यसम्बन्धरहिते। अवश्यम् नियमने। सहृदयानां व्यङ्ग्य-प्रतीतिस्तु नियतैव। न भवति नैव सम्पद्यत। इति हेतोः। व्याप्तत्वेन सपक्षसत्त्वेन। नियतधर्मिनिष्ठत्वेन नियतत्वं विपक्षव्यावृतत्वं धर्मिनिष्ठत्वं धर्मिणि पक्षे निष्ठा संलग्नता यस्य तस्य भावस्तत्वं तेन। द्वन्द्वान्ते श्रुतत्वात्त्वस्य प्रत्येकमन्वयः। विपक्षव्यावृत्तत्वेन पक्षवृत्तित्वेन चेति। चकारः त्रिकसमुच्चये। त्रिरूपात् सपक्षसत्वविपक्षव्यावृत्तत्वपक्षवृत्तित्वलक्षणरूपत्रयवतः। लिङ्गात् हेतोः। लिङ्गिज्ञानं लिङ्गिनि साध्ये व्यङ्ग्यलक्षणे ज्ञानं साध्यविषयकज्ञानम्। अनुमानमनुमितिः। यत् यदेव। तद्रूपः अनुमित्यात्मकः व्यङ्ग्यव्यञ्जकभाव इति। पर्यवस्यति सम्पद्यते अर्थविषयकशाब्दप्रतीतिः सम्भवतीति। 'त्रिरूपाल्लिङ्गतोऽर्थदृक्' इति कथनात्। व्यञ्जकत्वं हि शब्दानां गमकत्वम्। तच्च लिङ्गत्वमिति व्यङ्ग्य-प्रतीतिरपि लिङ्गिप्रतीतिरेवेति व्यङ्ग्यव्यञ्जकभावो लिङ्गिलिङ्गभाव एव। अतोऽनुमानादेव व्यङ्ग्यप्रतीतिरथवा व्यङ्ग्यार्थोऽनुमानमेवेति न किमपि कार्यं व्यञ्जनयेत्याशयः। अनुमितिकरणमनुमानम्। अनुमितिकरणं द्विविधं व्याप्तिज्ञानं लिङ्गपरामर्शश्च। प्रथमं पर्वतो बह्निमान् धूमवत्त्वादित्यत्र धूमो वह्निव्याप्य इति ज्ञानम्। द्वितीयं तु तत्रैव वह्निव्याप्यधूमवानयमिति। व्याप्तिः पक्षधर्मता चेत्यनुमानस्य द्व्यङ्गं। अनुमानस्य पक्षः साध्यं हेतुर्दृष्टान्तश्च पादाः। तत्र सन्दिग्धसाध्यधर्मा धर्मी सिषाधयिषितसाध्यधर्मा धर्मी वा पक्षः यथा पर्वते धूमेन वह्निसाधने पर्वतः पक्षः। साध्यं सद्धेतुस्थले व्यापकं यथा पर्वते वह्निः। व्याप्यं हेतुर्लिङ्गम्। यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यम्। व्याप्तिबलेन यद्यस्य गमकं तत्तस्य लिङ्गम् यथा वह्नेर्धूमः। निश्चितसाध्यधर्मा धर्मी सपक्षः यथा धूमेन पर्वते वह्निसाधने महानसः। साध्यसमानं धर्मवान् धर्मी वा। कथं तर्हि वाचक-व्यङ्ग्ययोः पक्षत्वं पक्षधर्मसपक्षसत्त्वविपक्षव्यावृत्तिरित्यपेक्षायां ध्वन्युदाहरणं पर्यालोच्योदाहरणेन स्वपक्षं द्रढयति 'भम' इति। हे धम्मिअ (धार्मिक!) वीसद्धो (विस्रब्धः) भम (भ्रम) सो (सः) सुणओ (शुनकः) अज्ज (अद्य) तेण (तेन) गोलाणईकच्छकुडंगवासिणा (गोदानदीकच्छकुञ्जवासिना) दरिअसीहेण (दृप्तसिंहेन) मारिओ (मारितः) इत्यन्वयः। हे धार्मिक! धर्मशील! विस्रब्धः विश्वस्तः। निर्भीकः। सन्। भ्रम विहर। सः तव भीतिहेतुः। शुनकः श्वा। अद्य वर्तमानदिने। तेन प्रसिद्धेन। गोदानदीति गोदाख्या या नदी सरित् तस्याः कच्छे तटवर्तिप्रदेशे यत्कुञ्जं वेतसीनिकुञ्जं तत्र वसति नियतत्वेन तिष्ठति तच्छील इति तेन। दृप्तसिंहेन (उन्मत्तकेसरिणा) मारितः घातित इति। लक्ष्ये प्रकृतोपयोगमाह अत्रेति। अत्र काव्येऽस्मिन्। गृहे भवने। श्वनिवृत्त्या

कुक्कुराभावेन । भ्रमणं विहरणम् । विहितं सूचितम् । गोदावरीतीरे गोदावरीनदीतटे । सिंहोपलब्धेः हर्यक्षोपस्थितेः । अभ्रमणमविहरणम् । अनुमापयति अनुमानं कारयति । यद् यद् यदेव । भीरुभ्रमणं भयशीलविहरणम् । तत् तत् तदेव सर्वम् । भयेति भयस्य भीतेर्यत्कारणं हेतुः तस्य निवृत्तेरभावस्य या उपलब्धिः प्राप्तिस्तत्पूर्वकं तदावृत्त्यैव । गोदावरीतीरे गोदानदीतटे । च अपि । सिंहोपलब्धिः हर्यक्षोपस्थितिः । इति हेतोः । व्यापकविरुद्धोपलब्धिः व्यापकं यद्विरुद्धं वैपरीत्यं तस्य उपलब्धिः प्राप्तिरिति । अस्यायमाशयः—अविवक्षिताद् विवक्षितादपि नितान्तमसम्बद्धं यद् वस्तु तन्न कथमपि प्रतीयते तथा सति कुतश्चिद् वाच्याद्यस्य कस्याप्यर्थस्य प्रतीतिः सम्भवेत् । तेन हि व्यङ्ग्यव्यञ्जकभावो प्रतिबन्धहानौ ( नियतसम्बन्धाभावे ) नैव सम्पद्यते । तदेतत्संवृत्तं व्याप्तत्वेन सपक्षावगाहितया नियतत्वेन विपक्षाद् व्यावृत्तिः धर्मिणि वाचके साध्यधर्मविशिष्टे निष्पत्तिरिति व्यङ्ग्यस्य पक्षवृत्तित्वसिद्धिः । तदेतत्त्रिरूपाल्लिङ्गात् लिङ्गिनि व्यङ्ग्यलक्षणे यज्ज्ञानमनुमानाकारं तद्रूपः पर्यवस्यति न पुनरस्य व्यञ्जनामूलतोपपद्यते । तेन पर्यवसाने व्यङ्ग्यव्यञ्जकभाव अनुमानरूप एव । यथा हि ध्वनेरुदाहरणत्वेन प्रस्तुते 'भम धम्मिअ' इत्युदाहरणे गृहे भ्रमणविधिर्वाच्यस्तत्प्रतिषेधस्त्वनुमेय एव । तत्र गोलाणई इति गोदावरीकच्छकुहरस्य धर्मित्वनिर्देशः । शुनकमारणकारणाभिधानेनोपात्तस्य दृप्तसिंहसद्भावस्य हेतुभावः । 'कुडङ्गवासिणा' इति तद्विशेषणेन तस्य धर्मिणि सद्भावोपदर्शनम् । तत्र भयकारणनिवृत्तिर्व्यापिका भीरुभ्रमणं व्याप्यम् सिंहसद्भावश्च व्यापकविरुद्धोपलब्धिरेकादशविधानुपलम्भमध्येऽनुमानभेदः इति साहित्यचूडामणिकाव्यादर्शादौ स्पष्टम् । तच्चेत्थं सङ्गृहीतम्—गोदावरीतटं भीरुभ्रमणायोग्यं प्रतिज्ञा साध्यं वा । भयकारणसिंहोपलब्धेरिति हेतुः साधनं वा । यद्यद् भीरुभ्रमणयोग्यं तत्तद्भयकारणाभाववद्यथा गृहमिति व्यतिरेकव्याप्तिः सोदाहरणा । न चेदं तीरं तथा भयकारणाभाववत्सिंहोपलब्धेरित्युपनयः । तस्माद् भीरुभ्रमणायोग्यमिति निगमनम् ।

इत्थं महिमभट्टमतमनूद्य तद्दूषयति अत्रेति । अत्र प्रकृते काव्ये । उच्यते तत्राक्वेस्तत्परिहाराय कथ्यते भयकारणेनाभ्रमणानुमानं न युक्तियुक्तं यतः भीरुः भयशीलः । अपि च । गुरोः मान्यजनस्य । प्रभोः स्वामिनः । वा अथवा । निर्देशेन आज्ञया । प्रियानुरागेण दयितजनस्नेहेन । अन्येन तदितरेण । च इति समुच्चये । एवम्भूतेन ईदृशेन । हेतुना कारणेन । भयकारणे भीतिहेतौ सति विद्यमाने । अपि । भ्रमति अटति । इति हेतुः अभ्रमणत्वेन निर्दिष्टं कारणम् । अनैकान्तिकः अव्यभिचाररहितः । यतो हेतुरेवानैकान्तिकस्तेन व्याप्तिविघटकमपि

व्यभिचाररहितं नेति। तथैव शुनः कुक्कुरात्। बिभ्यत् भयमनुभवन् स्पर्शेऽपायजननात्। अपि। वीरत्वेन शूरत्वेन। सिंहात् हर्यक्षात्। न नैव। बिभेति भयमनुभवति। इति हेतोः। विरुद्धः असिद्धः। अपि च। गोदावरीतीरे गोदातटे। सिंहसद्भावः हर्यक्षोपस्थितिः। प्रत्यक्षात् स्वानुभवेन। वा अनुमानात् अनुमितेः। न। निश्चितः निर्णीतः। अपि तु तद्व्यतिरिक्तम्। वचनात् कुलटावाक्यात्। न नैव। च हि। वचनस्य कथनस्य। प्रामाण्यं प्रमाणभावः। नियतमिति शेषः। अर्थेन वाच्यार्थेन। अप्रतिबन्धात् अनियतत्वात्सम्बन्धानियमात्। असिद्धः अप्रामाणिकः हेतुरिति शेषः। शाठ्योक्तौ प्रामाण्यसन्देहाच्छब्दार्थयोर्नियतसम्बन्धाभावाच्छब्दे सन्देहेनार्थेष्वप्यसन्देह इति सन्दिग्धासिद्धिरिति। उपसंहरति तदिति। तत् तस्माद्धेतोः। कथं केन प्रकारेण। एवंविधात् सन्दिग्धासिद्धेः। हेतोः लिङ्गात्। साध्यसिद्धिः साध्यस्याभ्रमणरूपस्य सिद्धिः प्राप्तिरिति। अनैकान्तिकविरुद्धासिद्धरूपाद्धेतोर्नैव साध्यसिद्धिरिति। अयमाशयः— भीरुभ्रमणं भयकारणनिवृत्तिपूर्वकमिति यदभ्रमणस्य भयकारणं हेतुरित्युक्तं तदपि नैकान्तिकमेव। भीरुरपि भयकारणे सत्यपि गुर्वादीनां प्रभोर्वाऽऽज्ञया दयितस्नेहेन धनादिलोभेन वा तत्र तत्र भ्रमत्येव। स्पर्शजन्यापायभयात्कुक्कुराद् भीतोऽपि शूरत्वेन सिंहान्नैव भयमनुभवतीति विरुद्धश्च। गोदावरीकच्छकुञ्जे सिंहोपस्थितिरपि न प्रत्यक्षदृष्टा वाऽनुमानसिद्धाऽपितु वचनादेव ज्ञाता। कुटिला वाक्याद्वचनस्य न प्रामाण्यमर्थेनानियतसम्बन्धत्वादिति अनैकान्तिकविरुद्धासिद्धहेतोः कथमपि नैव साध्यसिद्धिरिति।

तदेव निजोदाहरणे योजयति तथेति। तथा तेनैव प्रकारेण। निःशेषच्युतेत्यादौ निःशेषच्युतचन्दनमिति काव्ये। गमकतया प्रत्यायकत्वेन। यानि। चन्दनच्यवनादीनि चन्दनच्युतिरागनिर्मृष्टिप्रभृतीनि। उपात्तानि स्वीकृतानि। तानि। कारणान्तरतः अन्यस्मादपि कारणात्। अपि च। भवन्ति सम्पद्यन्ते। अतः हेतोरस्मात्। अत्रैव प्रसङ्गेऽस्मिन्नेव। स्नानकार्यत्वेन स्नानपरिणामत्वेन। उक्तानि कथितानि। इति हेतोः। उपभोगे सुरते। एव। न। प्रतिबद्धानि नियतानि। इति। अनैकान्तिकानि व्यभिचारहीनानि। अतो न तेषामनुमाने लिङ्गत्वमिति। व्यक्तिवादिना व्यञ्जनासमर्थकेन। च। अधमपदसहायानां तस्याधमस्यान्तिकम् इत्यत्र योऽधमशब्दस्तत्साहाय्यानाम्। एषां चन्दनच्यवनादीनाम्। व्यञ्जकत्वं प्रत्यायकत्वम्। उक्तम् कथितमिति। न नैव। च हि। अत्र काव्येऽस्मिन्। अधमत्वं नायकस्याधमत्वम्। प्रमाणप्रतिपन्नम् प्रमाणसिद्धं न प्रत्यक्षविषयो नैव चानुमानविषय इति। कथं केन

विधिना। अनुमानम् अनुमानविषय इति। निगमयति एवमिति। एवंविधात् एतादृशात्। अर्थात्। एवंविधः ईदृशः। अर्थः। उपपत्त्यनपेक्षत्वे उपपत्तेः व्याप्त्यादेरनपेक्षत्वे नैरपेक्ष्ये। अपि। व्याप्तेरनङ्गत्वेन सम्भावनामात्रादेव तत्सिद्धेरिति। प्रकाशते द्योतते। इति हेतोः। व्यक्तिवादिनः व्यञ्जनावादिनः। तत् तादृशं कथनम्। अदूषणं न दुष्टमिति। अयम्भावः—यथा ह्यनुमानं व्याप्त्यादिनिश्चयमपेक्षते न तथा व्यञ्जना। न चातिप्रसङ्गो वक्त्रादिवैशिष्ट्यावगमस्य नियामकत्वात्। तस्य चानुमानवादिनाऽपि स्वीकार्यत्वात् लिङ्गस्य च व्याप्त्यादिस्मृतिविलम्बनेन विलम्बितत्वात्। नापि लिङ्गनिश्चय इवात्रापि तदर्थनिश्चयः प्रयोजको मानाभावात्। ज्ञानमात्रं तु भवत्येवेति निर्विवादमिति मधुमत्याम्। लिङ्गं हि पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृतत्वसिद्धमेवानुमानस्य साधकम्। तेषु हि कस्याऽप्येकस्यासद्भावे हेत्वाभासत्वमेव भजते। तत्रापि पक्षेऽनवस्थितो हेतुः स्वरूपासिद्धहेत्वाभासस्तथैव विपक्षव्यावृतत्वधर्महीनो हेतुरनैकान्तिकहेत्वाभासः। यच्च पूर्वपक्षेण भीरुभ्रमणायोग्यत्वसिद्धये सिंहोपलब्धिहेतुत्वेन प्रस्तुता साऽनैकान्तिक्येव। यत्र यत्र भीरुभ्रमणं तत्र तत्र भयकारणाभाव इति नैव व्याप्तिः सङ्गच्छते। गुर्वाज्ञाप्रभुनियोगप्रियामन्त्रणधनलाभादिभिः भीरूणामपि सत्यपि भयकारणे तत्र प्रवृत्तिर्दृश्यत इति। तेन नास्य विपक्षव्यावृत्तत्वमिति। न च पक्षभूते गोदावरीनिकुञ्जे सिंहोपस्थितिः प्रत्यक्षदृष्टा वाऽनुमानसिद्धाऽपितु केवलं वचनसिद्धा। वचनस्य च कुलटारूपानाप्तनिर्गतत्वेन न प्रामाणिकत्वम्। यतो वचनस्यैव न प्रामाणिकत्वं तदा कुतोऽर्थस्येति तत्र सिंहोपस्थितेरनिश्चयाद्धेतोः पक्षे निश्चितरूपेणागृहीतत्वात्स्वरूपासिद्धहेत्वाभासत्वमेवास्य। एवमेव शुनः स्पर्शजन्यापायशङ्कया बिभ्यदपि शूरत्वेन सिंहान्नैवापि बिभेतीति विरुद्धोऽपि। अतो हेतोरनैकान्तिकत्वेन स्वरूपासिद्धत्वेन विरुद्धत्वेन न तत्रानुमानस्य विषयताऽपितु एतद्विलक्षणाया व्यञ्जनाया एवाऽयं विषय इति स्थितमिति सिद्धान्तपक्षः।

एवमेव निःशेषच्युतचन्दनमित्यादौ गमकत्वेन मतानि चन्दनच्युतिरागविमृष्टिप्रभृतीनि कारणान्तरादपि सम्भवन्ति केवलमत्र स्नानकार्यत्वेन गृहीतानि। तेन तेषामप्यनैकान्तिकत्वान्नोपभोगे तेषां व्याप्तिः। नैव यद्यच्चन्दनच्यवनादिकं तत्तत्सुरतकार्यमेवेति व्याप्तिः सम्भवति कारणान्तरादपि तस्मादिति गमकानां तेषामनैकान्तिकत्वमेवेति तेभ्यो नाऽनुमानसिद्धिः। तेषां व्यञ्जकत्वमधमपदसहकारेणैव। तत्राधमत्वस्य प्रामाण्यमपि न प्रत्यक्षदृष्टं नानुमानसिद्धमिति वचननिर्भरमेव। वचनञ्च क्रुद्धाया इति स्वरूपासिद्धत्वेनास्यापि हेत्वाभासत्वमेव। तेन नात्राप्यनुमानेन साध्यसिद्धिः। व्यञ्जनायां तु व्याप्तिं विनाऽपि प्रकरणादिवक्तृप्रतिपत्तृविशेष-

सहृयोगवशात्साध्यसिद्धिरिति न हि व्यक्तिवादिमतं दुष्टमिति पिण्डितोऽर्थः। तेन हि सर्वैरेवोपायैर्व्यञ्जना नैवापलपितुं शक्येति तत्त्वम्।

अवाचकोऽपि यो व्यङ्ग्यं प्रत्याययति विष्टपम्।
नमः सर्वात्मने यत्र चारुत्वं पर्यवस्यति॥

इति श्रीमद्वत्सगोत्रोत्पन्नरविलालात्मजपरशुरामसूनुविष्णुमायागर्भज-
कात्यायनपथानुयायिमाध्यन्दिनीयशाखान्तर्गतशुक्लयजुर्वेदाध्यायि-
परमशैवलोकमणिदाहालप्रणीतायां काव्यप्रकाशस्य
सरिताख्यविवृत्यां ध्वनिगुणीभूतव्यङ्ग्य-
सङ्कीर्णभेदनिर्णयो नाम पञ्चम
उल्लासः॥ ५॥

यथाऽऽस्ते देवसरिता नित्यं हृत्पटले मम।
तथैवैषा पाठकानां चित्ते नित्यं विराजताम्॥
ॐ नमः शिवाय।

[ वि० वृ० ] अन्योन्येति।

एवमनेन प्रकारेणावान्तरभेदप्रभेदगणने भूयसी भेदसङ्ख्या। तथाहि एकस्यैव शृङ्गारस्यैकोऽपि सम्भोगरूपो भेदो मिथो वीक्षाश्लेषादिभेदात्प्रत्येकञ्च विभावादि-वैचित्र्यात्सङ्ख्यातुमशक्यः का गणना पुनः सर्वेषामिति।

सङ्क्षेपात्त्वस्य ध्वनेस्त्रयो भेदाः व्यङ्ग्यस्य त्रिरूपत्वात्। तथा हि किञ्चिद् व्यङ्ग्यं वाच्यतासहं किञ्चित्त्वन्यथा। तत्राविचित्रं विचित्रञ्चेति। द्विविधमाद्यं क्रमाद्वस्त्व-लङ्कृतिरूपम्। द्वितीयं तु रसादि। तच्च स्वप्नेऽपि वाच्यतां न सहते विभावा-द्युक्तिद्वारैव प्रतिपत्तेः।

इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां गुणीभूतव्यङ्ग्यभेद-
निर्णयो नाम पञ्चमः परिच्छेदः।

—:०:—

# अथ षष्ठ उल्लासः

[ कारिका ] शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः ॥ ४८ ॥

[ वृत्तिः ] न तु चित्रेऽर्थस्याचित्रत्वमर्थचित्रे वा शब्दस्य । तथा चोक्तम्—

"रूपकादिरलङ्कारस्तस्याऽन्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङाञ्च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥" इति ।

[ कमला० ] एवम् मध्यमकाव्ये निर्णीतेऽधमं निरूपयति शब्देति । यद्यप्याद्योल्लासे तत्स्वरूपं शब्दार्थचित्ररूपं भेदद्वयञ्चोक्तं तद्भेदाश्च शब्दाद्यलङ्कारमुखेनैव दर्शिता भवन्तीति न किञ्चिद् वक्तव्यमस्तीति तथाऽप्युक्तं भेदद्वयमेवानुपपन्नं शब्दार्थालङ्कारयोरन्योन्यनैरपेक्ष्येणाप्रतीतेरिति मतनिरासार्थो भेदार्थोऽयमुद्यम इति तत्त्वम् । स्वच्छन्देति शब्दचित्रं विनिर्गतमित्यर्थचित्रं यत्पूर्वमुक्तं तत्र यद्यप्याद्ये व्यतिरेकालङ्कारस्यार्थचित्रत्व द्वितीये च द्विर्माशब्दश्रुतेरनुप्रासस्येति शब्दस्य चित्रत्वमिति सङ्करः प्रतिभाति तथापि गुणत्वेन प्राधान्येन चास्थितिर्यत्कृतं कवेश्चारुत्वं विवक्षितं तस्य प्राधान्यात्तेनैव व्यपदेश इति युक्तो विभाग इत्यर्थः । व्यतिरेकमुखेन व्याचष्टे नन्विति । न हि सर्वथा परस्परपरिहारा स्थितिर्भेदहेतुः प्राधान्येन व्यपदेशाः भवन्तीति न्यायादिति भावः । केचिदर्थालङ्कारमेव मन्यन्ते केचिच्छब्दालङ्कारम् । युक्तौ तु द्वावपीति यदुक्तं तत्र वृद्धसम्मतिमाह यथोक्तमिति । तस्य काव्यस्य बहुधा बाहुल्येनेत्यर्थः । कान्तं सगुणमपीत्यर्थः । विभाति विभावनां न प्राप्नोतीत्यर्थः । अयम्भावः—सर्वत्र सालङ्कारमेव काव्यम् । गुणाः स्वतन्त्रमर्थस्यैव

विभावादेः रसव्यञ्जकत्वादलङ्करणयुक्तं न शब्दस्य तस्यार्थं प्रत्याय्योपक्षीणत्वात्। अतोऽर्थालङ्कार एव युक्तः इति परेऽन्ये रूपकादिमर्थालङ्कारं वाह्यं बहिरङ्गतन्त्रमाहुः। सुपां तिङां तदन्तानां पदानां व्युत्पत्ति विशेषेणोत्पत्तिमनुप्रासादिरूपं निर्माणं वाचां शब्दानामलङ्कृतिं वाञ्छन्ति। तदेतत्सौशब्द्यं माधुर्यादिव्यञ्जकवर्णस्वरूपं सुशब्दनामाहुर्वृद्धाः। अर्थस्य व्युत्पत्तिर्बोधः। ईदृशी सुशब्दसदृशी नार्थे स्वतः सौष्ठवं नास्ति शब्दे तु स्वत इत्यर्थः। तेषामयमभावः—शब्द एव काव्यं तस्यैव प्रवृत्तिगोचरत्वात्। स एव हि पठ्यते श्रूयते गीयते च। अशब्दकृतचमत्कारस्य तु विभावाद्यर्थैरुपचयः। शब्दश्च माधुर्यादिव्यञ्जकः वर्णानुप्रासादिमत्त्वेन व्यञ्जकस्तेन शब्दालङ्कार एव मुख्यो नार्थालङ्कारस्तस्य पाश्चात्यत्वादिति। स्वमतमाह शब्देति। अभिधेयोऽर्थमात्रं तेन लक्ष्यव्यङ्ग्ययोः सङ्ग्रहः। शब्दार्थालङ्कारयोर्भेदान्नोऽस्माकं तु द्वयमिष्टमित्यन्वयः। इदमाकूतम्। न हि शब्दे स्वरूपेणालङ्कारः निरर्थकेऽपि तथापत्तेः नाप्यर्थे सर्वदार्थसत्त्वेन तदापत्तेः। किन्तु शब्दबोधितेऽर्थेऽर्थबोधकशब्दे च चित्रता। अत एव द्वौ काव्यम्। तेनोभयोर्व्यञ्जकत्वसाम्याद् विनिगमकाभावाच्च द्वावलङ्कारौ। तत्रापि यो यदन्वयव्यतिरेकानुविधायी स तेन व्यपदिश्यत इति।

[ सरि० ] शब्दार्थविग्रहौ देवौ नत्वा शब्दार्थयोः शुभा।
प्रकृते षष्ठ उल्लासे स्थितिश्चित्रा निरूप्यते ॥ १ ॥

एवं मध्यमकाव्यमपि सप्रपञ्चं निरूप्य सम्प्रति क्रमप्राप्तचित्रकाव्यनिरूपणाय सम्बद्धकारिकामवतारयति शब्दार्थेति। क्रमप्राप्तत्वात्स्वत एवोल्लाससङ्गतिरिति नात्र वृत्तेर्भूमिकाभागयुक्तमिति बोध्यम्। यत् शब्दार्थचित्रम् काव्यद्वयम् पूर्वम् उदाहृतम् तत्र अर्थशब्दयोः गुणप्राधान्यतः चित्रा स्थितिः इत्यन्वयः। यत् यदेव। शब्दार्थचित्रं शब्दो वाचकः अर्थो वाच्यस्तयोश्चित्रं स्फुटप्रतीयमानार्थरहितमपि गुणालङ्कारयुक्तत्वेन चमत्कारकारि चित्रमिव प्रतिकृतित्वेनावरं यच्चित्रसंज्ञकं यत्रेति। तादृशम्। काव्यद्वयं शब्दचित्रमर्थचित्रमिति काव्ययुगलम्। पूर्वं प्रथमं प्रथमोल्लासे काव्यभेदनिर्देशनावसरे। उदाहृतमुदाहरणमुखेन व्याख्यातं प्रोक्तं वा यत्र 'स्वच्छन्दोच्छलदच्छकच्छ' इत्यादिना शब्दचित्रम् 'विनिर्गतं मानदमात्ममन्दिरात्' इत्यादिनाऽर्थचित्रञ्च। तत्र तादृशे काव्ये शब्दचित्रेऽर्थचित्रे च अर्थशब्दयोः अर्थस्य शब्दस्य च। गुणप्राधान्यतः गुणभावेन प्रधानभावेन च गुणश्च प्रधानञ्चेति भावप्रत्ययः क्वचिदुत्तरपदस्यापि इति वृद्धिर्यद्वा गुणयति इति गुणिधातोरेरच् गुणश्च प्राधान्यञ्चेति तस्मात्। चित्रा चित्रत्वेन चमत्कारकारित्वेन। स्थितिरवस्थान-

मिति। शब्दचित्रे शब्दस्य प्राधान्यमर्थस्य गुणभावोऽर्थचित्रेऽर्थस्य प्राधान्यं शब्दस्य गुणभाव इति न तु तयोरन्योन्यनैरपेक्ष्येणावस्थितिरिति तथाऽनुपलम्भादिति। तत्र यत्र यत्कृतचारुत्वस्योत्कटत्वं तत्र तस्य प्रधानभावोऽपरस्य तदपेक्षया गुणभाव इति। तयोरलङ्कारवत्त्वं तु सर्वत्र काव्येऽपरिहार्यमेव सालङ्कारस्यैव शब्दार्थयुगलस्य काव्यत्वव्यपदेशात्। तर्हि कथमनलङ्कृतिः पुनः क्वापि इति चेदुच्यतेऽनलङ्कृतित्वं तु चमत्कारकारित्वेन स्फुटालङ्काराभाव एव न त्वलङ्कारस्य नितान्ताभावस्तथा सति तु सर्वस्यैव वाङ्मयस्य काव्यत्वापत्तेः। तयोर्गुणप्रधानभावश्च कवेरभिनिवेशादेव। सामान्येनालङ्कृतत्वं तूभयोरेवाभीष्टमिति। स्वच्छन्दोच्छलदच्छकच्छ इत्यादौ नद्यन्तरापेक्षया मन्दाकिन्या व्यतिरेकवर्णनाद् व्यतिरेकालङ्कारेणार्थस्यापि चित्रं तथापि तदपेक्षया तत्रानुप्रासच्छटैव चमत्कारिणीति तच्छब्दचित्रोदाहरणम्। एवमेव 'विनिर्गतं मानदमात्ममन्दिरात्' इत्यादौ मकारावृत्त्याऽनुप्रासे सत्यपि तदपेक्षयोत्प्रेक्षैव चमत्कारावहेति अर्थचित्रस्योदाहरणं तत्। तेनोभयत्रोभयोरेव साङ्कर्यत्वं परिहार्यमेव एकं विनाऽन्यस्य प्रवर्तनयोग्यताभावात्। न च शब्दार्थचित्ररूपभेदद्वयं प्रागेव दर्शितं तद्भेदाश्चालङ्कारप्रदर्शने नैव दर्शिता भविष्यन्तीति उपक्रमोऽयं निरर्थक इति वाच्यं तत्तच्चित्र[illegible]णप्राधान्येन स्थितिवशादनयोर्विभाग इति दर्शयितुं शब्दार्थालङ्कारयोः स्वसम्मतत्वदर्शनाय चास्योपयोगात्। तदेवाऽऽह व्यतिरेकमुखेन वृत्तिकृत् न त्विति। न नैव। तु हि। शब्दचित्रे शब्दकृतचमत्कारोत्कटत्वेन तदाख्ये काव्ये। अर्थस्य। अचित्रत्वमनुपस्थितिरचमत्कारिता। वा इति पक्षान्तरे। अर्थचित्रे अर्थप्राकर्ष्यकृतचमत्कारोत्कटत्वेन तदाख्ये काव्ये। शब्दस्य। अचित्रत्वमनुपस्थितिर्वा। उभयोरेवोभयत्रोपस्थितिः समानैव। भेदस्तु चमत्कारातिशयकृतो न तु स्वरूपकृत इति। उभयालङ्काराणां प्रयोजकत्वे प्रामाणिकसम्मतिमाह तथा चेति। तथा काव्ये शब्दार्थोभयालङ्कारप्रयोजकत्वमिति। उक्तं पूर्वाचार्यैः प्रतिपादितं विशेषेण आद्यलक्षणाचार्येण भामहेनेति। च एव अव्ययानामनेकार्थत्वात्। अनुवदति रूपकादिरित्यादि। परिकरश्लोका इमे आद्यकाव्यशास्त्राचार्यस्य भामहस्य काव्यालङ्कारतोऽनूदिताः। तस्य अन्यैः रूपकादिः अलङ्कारः बहुधा उदितः कान्तम् अपि निर्भूषम् वनिताऽऽननम् न विभाति परे रूपकादिम् अलङ्कारम् बाह्यम् आचक्षते सुपाम् तिङाम् च व्युत्पत्तिम् वाचाम् अलङ्कृतिम् वाञ्छन्ति। तत् एतत् सौशब्द्यम् आहुः न ईदृशी अर्थव्युत्पत्तिः। नः तु शब्दाभिधेयालङ्कारभेदात् द्वयम् इष्टम् इत्यन्वयः। इह हि द्विविधाः समालोचकाः। तत्र केचित्सालङ्कारस्यैव शब्दार्थयुगलस्य काव्यत्वं मन्यन्तेऽन्ये तु तदविशिष्टस्याऽपि। प्रथमपक्षवरेष्वपि केचिदर्थालङ्कारवादिनः परे शब्दालङ्कारमात्रसमर्थका अन्ये तु उभयालङ्कारवादिनोऽपि। तत्रापि केचिदलङ्कारं काव्यस्याभ्यन्तरतत्वं

मन्यन्तेऽपरे बाह्यमेव कटककुण्डलादिव च्छोभाधायकमात्रम् । तत्सर्वमपि संहृत्याहेति । तत्र प्रथममर्थालङ्कारप्राधान्यवादिनां मतमुपस्थापयति रूपकादिरिति । तस्य अन्यैः रूपकादिः अलङ्कारः बहुधा उदितः कान्तम् अपि निर्भूषम् वनितामुखम् न विभाति इत्यन्वयः । तस्य काव्यस्य । अन्यैः केश्चित् । रूपकादिः रूपकप्रभृतिः । अलङ्कारः अर्थगतालङ्कारवर्गः । बहुधा बाहुल्येन । उदितः प्रतिपादितः । तत्र व्यतिरेकदृष्टान्तमाह न कान्तमिति कान्तं कमनीयम् । अपि च । निर्भूषम् कटकाद्यलङ्काररहितम् । वनितानन्म् कामिनीवदनम् । न नैव । विभाति शोभते विभावनां न प्राप्नोतीति । यथा हि कमनीयमपि निरलङ्कृत कामिनीवदनं न तथा विभावनां प्राप्नोति यथा स्वलङ्कृतं तथैव शब्दार्थयुगलमपि रूपकाद्यलङ्कृतमेव सुशोभत न तु सगुणमपि निरलङ्कृतमिति । यथोक्तं विभाति विभावना प्राप्नोति कुण्डलादिमत्त्वेनैव विभावनीयत्वात् । विभावदित्वेन प्राप्तानामर्थानामेव रसत्वमिति तेषां परिस्करणमुचितम् । अर्थं प्रत्याय्योपक्षीणानां शब्दानामलङ्करणस्यानादरणीयत्वात् । अर्थस्य विभावादिरूपस्य रसव्यञ्जकत्वेनार्थनिष्ठो रूपकादिरलङ्कार एव मुख्यस्य रसादेरुपकर्षकत्वाच्छब्दालङ्काराणां तु विभावाद्युपनयनमात्रप्रयोजकशब्दधर्मतया बहिरङ्गत्वान्न मुख्यालङ्कारत्वमित्याशयः । शब्दालङ्कारप्राधान्यवादिनां मतमनुवदति रूपकादिमिति । परे रूपकादिम् अलङ्कारम् बाह्यम् आचक्षते ते सुपाम् तिङाम् च व्युत्पत्तिम् वाचाम् अलङ्कृतिम् वाञ्छन्ति तत् एतत् सौशब्द्यम् न अर्थव्युत्पत्तिः ईदृशी इति आहुः इत्यन्वयः । परे इतरे तु । रूपकादिम् रूपकप्रभृत्यर्थालङ्कारवर्गम् । बाह्यं काव्यार्थप्रतीत्युत्तरवर्तित्वेन गौणम् । आचक्षते कथयन्ति । ते हि सुपाम् सुबन्तानाम् । तिङां तिङन्तानाम् । चकार उभयसमुच्चयार्थः । व्युत्पत्तिं विशेषेण उत्पत्तिं सन्निवेशम् । एव । वाचां वचसाम् । अलङ्कृतिमलङ्कारम् । वाञ्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्ति । तत्र युक्तिमाह तदिति । तत् तस्मात् । ते हि । एतत् काव्यम् । सौशब्द्यं शब्दनिर्माणसौष्ठवम् । आहुः कथयन्ति । तन्मते सौशब्द्यमेव काव्यमिति । काव्यं पठ्यते श्रूयते गीयते 'काव्यं पठितमर्थो नावगतः' इत्यादिव्यवहारेण शब्दस्यैव पठनश्रवणादिविषयत्वात् । तेन तद्धर्म एवालङ्कारो न तु रूपकादेस्तस्य अर्थाश्रितत्वेन बाह्यत्वात् तत्रालङ्कारप्रयोगस्तु भाक्त एवेति । यथोक्तमपि—शब्दैरभिव्यज्यमानानामास्वादानां विभावादिभिरर्थैरुपचायनं ते च माधुर्यादिव्यञ्जकवर्णघटितानुप्रासादिमत्तया रचिता एव तद्व्यञ्जने प्रभवन्ति । तेन शब्दालङ्काराणामावश्यकत्वं पाश्चात्यानामर्थालङ्काराणामकिञ्चित्करत्व तैर्विनाऽपि शब्दालङ्कारैरभिव्यक्तेरिति । बाह्यत्वमर्थालङ्काराणां त्वास्वादोत्पत्तिदशायां तदनुपलम्भादिति । तत्र हेतुमाह नेति । न नैव । ईदृशी चमत्कारिणी यथा शब्द-

व्युत्पत्तिः तथा। अर्थव्युत्पत्तिः अर्थचमत्कृतिरिति। काव्यस्वरूपासमवेतत्वेन रूपकाद्यर्थालङ्काराणां बहिरङ्गतेति सुप्तिङ् व्युत्पत्तेः काव्यस्वरूपसमवेतत्वेनान्तरङ्गतेति। अलङ्कारा अपि तदाश्रया एवेति तस्यैव चित्रतेति। अयमाशयः—अलङ्कारा हि काव्याश्रयाः। काव्यञ्च शब्दमात्रम्। शब्द एव पठ्यते श्रूयते गीयते इति। अर्थस्यापि शब्दोपस्थितस्यैव चमत्कृतिहेतुत्वं वाच्यमिति शब्दस्यैव काव्यत्वाङ्गीकारस्यावश्यकत्वात्। तेन अलङ्कारा अपि शब्दस्यैवेति शब्दमात्रमेव चित्रं न त्वर्थः। अनलङ्कृतस्यापि शब्दस्य सुप्तिङादिविशेषणोपन्यासेन काव्यत्वलाभादित्येकः पक्षः। तन्मते सुप्तिङ् व्युत्पत्तिविशिष्टं सौशब्द्यमेव काव्यमलङ्कारास्तु तस्य बाह्यधर्मा एवेति स्थितम्। शब्दस्यार्थमुखप्रेक्षित्वप्रत्ययात् अन्यथा समुद्रघोषादेरपि काव्यत्वापत्तेरर्थ एव काव्यं न शब्दः। विभावादित्वेन प्राधानामर्थानामेव रसत्वमिति तेषामेव काव्यत्वमिति तेषामेव परिष्करणमुचितमर्थं प्रत्याय्योपक्षीणानां शब्दानामलङ्कारस्यानादरणीयत्वमित्यपरः पक्षः। इत्थं परस्परप्रतिस्पर्धिमतद्वयमनूद्य स्वमतमाह शब्देति नः तु शब्दाभिधेयालङ्कारभेदात् द्वयम् इष्टम् इत्यन्वयः। नः अस्माकम्। तु इति व्यवच्छेदे तदुभयव्यतिरिक्तमिति। शब्देति शब्दः अर्थोपस्थापकः अभिधेयः तत्प्रतिपाद्योऽर्थस्त्रिविध एव तयोरलङ्कारस्य भेदात् विभागात्। द्वयमुभयमेव शब्दार्थालङ्कारयुगलम्। इष्टमभिमतमिति। न हि शब्दे स्वरूपेणालङ्कारः निरर्थकेऽपि तदापत्तेः नाप्यर्थे सर्वदाऽर्थसत्त्वेन तदापत्तेः किन्तु शब्दबोधितेऽर्थेऽर्थबोधके शब्दे च चित्रता। अत एव द्वे काव्ये द्वयोरेवास्वादोपकारत्वात्। शब्दावच्छिन्नोऽर्थोऽर्थावच्छिन्नः शब्दो वा शब्दार्थौ वा काव्यं न त्वेकमात्रं विनिगमनाभावादिति तत्त्वम्। प्राधान्येन तत्प्रतिपाद्यो व्यङ्ग्यो यत्प्रतीत्यनुकूलव्यापारः शब्दार्थोभयनिष्ठ इति। व्यञ्जकतायां तूभयोः सममेव प्राधान्यम्। तेनोभयोरेवालङ्कारता वाच्याऽन्यथा व्यञ्जकतैव न स्यात्। तत्र योऽलङ्कारो यदन्वयव्यतिरेकानुविधायी स तस्येति विवक्षावशाच्छब्दचित्रार्थचित्रव्यपदेश इति। अतो हि इष्टतावच्छेदकं शब्दालङ्कारत्वमर्थालङ्कारत्वञ्च। तयोर्गुणप्रधानभावस्तु आस्वादप्रयोजकताप्रयोज्य इति।

[ वृत्तिः ] शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥१३९॥

[ कमला० ] प्रथममिति। तावच्छब्द एवार्थे मृगलाञ्छनः क्षणदामुखे प्रथममरुणकान्तिरेवोदयतीत्यन्वयः। कन्देत्यत्र काण्डेति वा पाठः। काण्डं दण्डः शरश्च तस्य रिपुनाशकत्वात्। अत्रोपमासत्त्वेऽप्यनुप्रासे कवेस्तात्पर्याच्छब्दचित्रतैव। उपमा तु गुणीभूतेत्यर्थः।

[ सरि० ] तत्र क्रमप्राप्तशब्दचित्रोदाहरणायोपक्रमते शब्देति शब्दचित्रं शब्दालङ्कारस्यास्वादप्रयोजकतया यत्काव्यं तदाख्यम्। यथेति निदर्शने। उदाहरणं प्रस्तौति प्रथममिति मृगलाञ्छनः क्षणदामुखे प्रथमम् तावत् अरुणच्छायः ततः कनकप्रभः तदनु विरहोत्तास्यत्तन्वीकपोलतलद्युतिः ततः ध्वान्तध्वंसक्षमः सरसविसिनीकन्दच्छेदच्छविः उदयति इत्यन्वयः। चन्द्रिकाकारमते पद्यमिदं मालतीमाधवे चन्द्रोदयवर्णनपरम्। अन्ये तु सम्प्रतितनो लभ्यसंस्करणे तदभावात्तत्सशेरते। मृगलाञ्छनः शशी। क्षणदामुखे निशारम्भे। प्रथमम् प्रथमदर्शने। तावद् इत्यवधारणे। अरुणच्छविः अरुणकान्तिः लोहितवर्णः। ततः तदनन्तरम्। कनकप्रभः पीतः। तदनु तत्पश्चात्। विरहेति विरहेण प्रियवियोगेन उत्तास्यन्ती क्लिश्यमाना या तन्वी कृशाङ्गी तस्याः कपोलतलस्य गण्डस्थलस्य इव द्युतिः प्रभा यस्य सः तादृशः। पाण्डुरवर्णः। ततः। सरसेति सरसायाः स्निग्धायाः विसिन्याः कमलिन्याः कन्दो मृणालं तस्य च्छेदः खण्डस्तद्वत् छविः कान्तिर्यस्य सः। अतिधवलत्वात्तथाभूतः। अत एव ध्वान्तध्वंसक्षमः ध्वान्तोऽन्धकारस्तस्य ध्वंसे नाशे क्षमः समर्थः। अत एव विपक्षजयात्। उदयति उदयसौभाग्यमाप्नोतीति। अत्र प्रथममरुण इत्यत्र मकारयोः तावत्तत इत्यत्र तकाराणां कनकप्रभ इत्यत्र ककारयोः ध्वान्तध्वंस इत्यत्र धकारयोः सरस इत्यत्र सकारयोः च्छेदच्छविरित्यत्र चकारयोश्छकारयोश्च एवमेव सच्छलानामनुप्रासस्य शब्दालङ्कारस्य प्राधान्यं कवेस्तत्रैव विवक्षयेति शब्दचित्रताऽत्र। अत्र तत्तद्वर्णता स्वभावोक्तिः अरुणच्छायः कनकप्रभः इत्यादावुपमा चेति तयोरर्थचित्रयोरपि उपस्थितिस्तदेव किञ्चिद्व्यङ्ग्यमपि यथा प्रथममरुणच्छायः प्रतिद्वन्द्विनोऽरुणस्येयमिति तत्त्यक्त्वा पीतवर्णः प्रतिस्पर्द्धिकान्तामुखमण्डनमिति तदपि त्यक्त्वा पाण्डुरद्युतिस्तत्रापि पूर्वच्छायेति तद्विहाय धवलरुचिरिति तथापि न तत्र तत्र कवेस्तात्पर्यमिति शब्दचित्रतैवाऽस्य। तेनैवोक्तम्—अत्र स्वभावोक्त्युपमयोः। सत्वेऽपि तकाराद्यनुप्रासप्राधान्याच्छब्दचित्रतेति।

[ वृत्तिः ] अर्थचित्रं यथा—

> ते दृष्टिमात्रपतिता अपि स्य नात्र
> क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।
> नीचाः सदैव सविलासमलीकलग्ना
> ये कालतां कुटिलतामिव न त्यजन्ति ॥१४०॥

[ कमला० ] ते दृष्टीति । पक्ष्मले बहुपक्ष्मयुते दृशौ यासां तासां स्त्रीणामलकाः केशाः खला दुर्जनाश्चात्र संसारे कस्य क्षोभो धैर्यच्युतिरस्वास्थ्यञ्च न अपितु सर्वस्येत्यर्थः । ये नीचाः ह्रस्वाः वक्रत्वात् । अनुच्चाशयाश्च । सविलासं सविभ्रमम् । अलीके ललाटे लग्नाः खलपक्षे विलं रन्ध्रम् । बवयोरभेदात् । असनमासः प्रहारः रन्ध्रे प्रहार इत्यर्थः । तत्सहितं यथा तथाऽलीकेऽनृते लग्नाः सक्ताः । कालतां श्यामतां यमतां तद्वत्क्रूरत्वं कुटिलतां वक्रता च न त्यजन्तीत्यर्थः ।

[ सरि० ] अर्थालङ्कारस्य आस्वादप्रयोजकत्वेन यन्निबन्धनं तेन यदर्थचित्रं तदुदाहरणायोपक्रमते अर्थचित्रमिति अर्थचित्रम् अर्थालङ्कारस्य चमत्कारकारित्वेन यन्निबन्धनं तद् । यथेति निदर्शने । उदाहरति ते इति । पक्ष्मलदृशाम् ते अलकाः खलाः च अत्र दृष्टिमात्रपतिताः अपि कस्य क्षोभाय न भवन्ति । सदैव नीचाः सविलासम् अलीकलग्नाः ये कुटिलताम् इव कालताम् । कालताम् इव कुटिलताम् । न त्यजन्ति इत्यन्वय । पक्ष्मलदृशां सुभ्रुवाम् । ते प्रसिद्धाः । अलकाः केशाः खलाः मूर्खाः । च अपि । अत्र लोके । दृष्टिमात्रपतिताः केवलं दृष्टिमात्रे एव पतिताः प्राप्ताः न मनसा भावितस्वरूपाः वा व्यवहारगोचराः । कस्य कस्य हि जनस्य । क्षोभाय धैर्यनाशाय सुस्थत्वाभावाय च । न नैव । भवन्ति सम्पद्यन्ते । अपि तु सर्वस्यैवेति । सदैव नित्यमेव तेषां तथैव स्वभावात् । नीचा अधोमुखा ह्रस्वाः क्षुद्राश्च । सविलासं सविभ्रमं विले रन्ध्रे असिः प्रहारो यथा स्यात्तथा वा कपटपूर्वकं वा । अलीकलग्नाः अलीके ललाटे मिथ्यावञ्चने वा लग्नाः सक्ताः । कालतां कृष्णवर्णतां यमरूपतां वा । कुटिलतां कुञ्चितत्वं वक्रतां वा । इव यथा । न नैव । त्यजन्ति जहति इति । अत्रार्थश्लेषसमुच्चययोः प्राधान्यादर्थचित्रतेति । क्षोभरूपैककार्येऽलकखलयोः समुच्चयोक्तेः समुच्चयालङ्कारः तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेदिति तल्लक्षणात् । श्लेषस्योपमायाश्च तदङ्गत्वमादित आसमाप्तेस्तन्निर्वहणात् । अलीकपदस्य परिवृत्त्यसहत्वेन शब्दश्लेषस्य अनुप्रासस्य च सम्भवेऽपि तयोरविवक्षितत्वेनाप्राधान्यमेवेति अर्थचित्रोदाहरणमिदम् । अत्र कुटिलतामिवेति सहोपमा तद्वयङ्गश्च समुच्चय इत्युद्द्योते स्पष्टम् । अत्र प्रकृतखलाप्रकृतालकयोरेकधर्मान्वयरूपं दीपकमर्थालङ्कारः प्रधानमिति महेश्वरभट्टाचार्याः ।

[ वृत्तिः ] यद्यपि सर्वत्र काव्येऽन्ततः विभावादिरूपतयैव पर्यवसानं तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्गचमेतत्काव्यद्वयमुक्तम् । अत्र च शब्दार्थालङ्कारभेदाद् बहवो भेदाः, ते चालङ्कारनिर्णये निर्णेष्यन्ते ।

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम
षष्ठ उल्लासः ॥ ६ ॥

[ कमला० ] अत्रार्थयोर्युगपदभिधानात्मकसमुच्चयरूपेऽर्थालङ्कारे कवेस्तात्पर्याच्छब्दश्लेषो गुणभूत इत्यप्रयोजकः। न त्वत्र श्लोकद्वयेऽपि चन्द्रनारीरूपोद्दीपनालम्बनविभावादिना शृङ्गारप्रतीतिः कथमव्यङ्ग्यत्वं कथं बाधमत्वमत आह यद्यपीति। सर्वत्र स्वच्छन्देत्यादावपीत्यर्थः। रस्यत इति रसो व्यङ्ग्यो मुख्यरसस्य सर्वत्राभावात्। व्यङ्ग्यं त्वस्त्वेवाग्रे ततो वर्ण्यविषयरतेरेव व्यङ्ग्यत्वात्। स्फुटस्येति। अयम्भावः—शब्दार्थयोर्व्यञ्जकत्वेऽपि न सर्वत्र तत् किन्तु कयोश्चिदेव। व्यङ्ग्यमपि कस्यचिदेव चमत्कुरुते न सर्वस्य। तत्रायथाभूतशब्दार्थप्रयोगे विभावादिप्रयोगेऽपि विवक्षाभावान्न रसप्रतीतिः किन्त्वलङ्कारत्वमेव। तदुक्तं ध्वनिकृता ---

रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥ इति।

अतो रसाद्यविवक्षया चित्रत्वम्। तद्विवक्षायास्तत्र सत्त्वमेवेति। अस्येति। अलङ्कारमुखेन प्रदर्शिता भवन्तीति नोच्यन्त इत्यर्थः।

अथ काव्यभेदाः—

तत्रोक्तं त्रिविधं काव्यं द्वेधा दृश्यश्रव्यत्वभेदेन तच्च काव्यं द्विधा मतमित्युक्तेः। तत्राल्पत्वाच्छ्रव्यमुच्यते।

श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा।
छन्दोबद्धपदं पद्यं तच्चैकेनैव मुक्तकम्॥
द्वाभ्यां तु युग्मकं तत्तु विशेषं त्रिभिरिष्यते॥
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्।
सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशक्षत्रियो वाऽपि धीरोदात्तगुणान्वितः।
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः।
वनप्रयाणोपयममन्त्रपुत्रादिवर्णनम्।
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा।
नामाऽस्य सर्गोपादेयकथया सर्गनाम तु।

प्राकृतैर्निर्मितं चेत्स्यात् सर्गा आश्वाससंज्ञका:।
वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च।
भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम्।
आद्यैः पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्।

यथा कादम्बरी-दशकुमारादि।

आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम्।
अस्यामन्यकवीनाञ्च तथा वृत्तं क्वचित् क्वचित्।
कथांशानामवच्छेद आश्वास इति कथ्यते।
आर्यावक्त्रापवक्त्राणां छन्दसां येन केनचित्।
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्।
गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते।
गद्यपद्यमयी राज्ञः स्तुतिर्विरुदमुच्यते॥
करम्भकस्तु भाषाभिर्विविधाभिर्विनिर्मितम्।
विरुदावल्यसौ च स्याच्छ्रव्यभेदा इमे स्मृताः॥

अथ दृश्यकाव्यम्। तच्चतुर्धा –

दृश्यं स्यादभिनेयं तद्रूपारोपात्तु रूपकम्।
भवेदभिनयोऽवस्थानुकारः स चतुर्विधः।
आङ्गिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा।

तत्र रूपकं दशधा—

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश॥

दशरूपकेऽप्युक्तम् --

नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥

एवं रसाश्रयं रूपकं दशधा भावाश्रयं सप्तधा। तदुक्तम्—

अन्यद्भावाश्रयं नृत्यमिति।

डोम्बी श्रीगदितं भाणो भाणीप्रस्थानहासकाः।
काव्यञ्च सप्त नृत्यस्य भेदाः स्युस्तेऽपि भाणवत्॥

वाक्यार्थाभिनयो नृत्यम्।
पदार्थाभिनयो नृत्तम्॥

द्विविधमपि तन्मधुरोद्धतभेदेन पुनर्द्विविधम्। तदपि—लास्यताण्डवरूपेण नाटकाद्युपकारकम्। तत्र नाटकम्—

तत्र नाटकमष्टादशधा। तदुक्तम्—

नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा॥
संलापकं श्रीगदितं शिल्पकञ्च विलासिका।
दुर्मल्लिका च प्रकरी हल्लीशो भाणिकेति च॥
अष्टादशैव जगदुः रूपकाणि मनीषिणः।
विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्॥

यथा—

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः॥
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः।
एक एव भवेदङ्गी शृङ्गारो वीर एव वा॥
अङ्गमन्ये रसाः सर्वे कार्यं निर्वहणेऽद्भुतम्।
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः॥
गोपुच्छाग्रसमानं तु बन्धनं परिकीर्तितम्।
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः॥
विवाहो भोजनं प्रायोत्सर्गो मृत्यू रतं तथा।
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरं च यत्॥
शयनाधरपानादि नगराद्युपरोधनम्।
स्नानानुलेपनं चैभिर्वर्जितो नातिविस्तरः॥
अन्ते निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः॥

गर्भाङ्कमाह—

अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान्।
अङ्कात्परः स गर्भाङ्कः सबीजः फलवानपि॥

मुखमाह—

तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम्।
कथनं कविसंज्ञादेर्नाटकस्य मुखं स्मृतम्।
यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्ग स उच्यते।

प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि।
तथाऽप्यवश्य कर्तव्या नान्दी विघ्नोपशान्तये।
आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति कीर्तितम्॥
पदैर्युता द्वादशभिरष्टाभिर्वा पदैरुत।
पूर्वरङ्गं विधायैवं सूत्रधारो निवर्तते।
रूपकस्य कवेराख्यां गोत्रादपि च कीर्तयेत्।
उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा।
प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः।

पदानामल्पार्थं कृत्वा पात्रप्रवेश आद्यः। सूत्रधारोत्तरपात्रप्रवेशो द्वितीयः। एकप्रयोगेऽन्यप्रयोगस्तृतीयः। सूत्रधाराश्रितपात्रप्रवेशश्चतुर्थः।

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः।
शुद्धः समाभ्यां सङ्कीर्णो नीचमध्यमकल्पितः।
प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका।
अङ्कान्तसूचितः पात्रैरङ्कस्यावतरः स्मृतः।
यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला।
तदङ्कमुखमित्याहुर्बीजार्थख्यापकञ्च तत्।
अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात्।
अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम्।
यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा।
कार्यो विष्कम्भको नाट्ये आमुखाक्षिप्तपात्रकः।
यदा तु सरसं वस्तु मूलादेव प्रवर्तते।
आदावेव तदाङ्के स्यादामुखाक्षेपसंश्रयः।
विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः।
अन्योन्येन तिरोधानं न कुर्याद्रसवस्तुनोः।
न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः॥
बीजं बिन्दुः पताका च प्रकरी बीजमेव च।

अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि।
अर्थः प्रयोजनं तस्य प्रकृतेः सिद्धिहेतवः।

स्वल्पं फलं यद्बहु विस्तार्यते तद्बीजम्।

उपक्रान्तार्थविच्छेदे बिन्दुरच्छेदकारणम्।
प्रासङ्गिकं पताका स्यात्प्रदेशः प्रकरी मता।
दूरानुवर्तनं या तु पताका साऽभिधीयते।
फलं प्रकल्प्यते यत्र प्रकरीं तां विनिर्दिशेत्।
अपेक्षितं तु यत्साध्यं तत्कार्यमिति सम्मतम्।
अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः।
भवेत्प्रारम्भ औत्सुक्यं फलार्थो यत्न उच्यते।
उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिरुच्यते।
अपायाभावतः प्राप्तिर्नियताप्तिस्तु सा स्मृता।
फलागमस्तु संज्ञेयो यः समग्रफलोदयः।
अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति।

एकप्रयोजनायां कथायामन्यप्रयोजनसम्बन्धः सन्धिरित्यर्थः।

**अथ सन्धिभेदाः—**

मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः।
इति पञ्चास्य भेदाः स्युः—
नानारसारम्भयुक्तं मुखं तु परिकीर्तितम्।
मध्ये त्वन्यरसारम्भो ज्ञेयं प्रतिमुखं तु तत्।
फलस्य गर्भकिरणं सान्तरायो विमर्शकः।
एकार्थास्तु मुखाद्यर्था उपसंहृतिरुच्यते।

मुखाङ्गान्याह—

उपक्षेपः परिकरः परिन्यासो विलोभनम्।
युक्तिः प्राप्तिः समाधानं विधानं परिभावनम्।
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे।
काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः।
तस्य वृद्धिः परिकरस्तन्निष्पत्तिस्तृतीयकः।
विलोभनं गुणाख्यानं युक्तिः स्यादर्थनिश्चयः।

प्राप्तिः सुखागमो बीजस्यागमः सप्तमो मतः।
विधानं सुखदुःखोत्थं कौतुकं परिभावनम्।
बीजार्थाङ्कुर उद्भेद आरम्भः करणं मतम्।
करणं वा समारम्भो भेदः सङ्घातभेदनम्॥

प्रतिमुखेऽङ्गान्याह—

विलासः परिसर्पश्च विधूतं तापनं तथा।
नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः।
निरोधश्च प्रतिमुखे तथा स्यात्पर्युपासनम्।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि॥
रतीच्छा तु विलासः स्यान्नष्टानुसरणं पराम्।
विधूतं प्रार्थनात्यागो हेत्वज्ञानं तु तापनम्।
परिहासवचो नर्म धृतिस्तज्जा द्युतिः स्मृता।
उत्तरा वाक् प्रगमनं हितरोधो निरोधनम्।
पुनः पुनः प्रार्थनत्वं पर्युपासनमुच्यते।
पुष्पं विशेषवचनं वज्रं निष्ठुरभाषणम्।
प्रसादनमुपन्यासः पात्राणां मिलनं परः।

पात्राणि नटाः। परो वर्णसंहारः।

अथ गर्भाङ्गानि—

अभूताहरणं मार्गो रूपोदाहरणे क्रमः।
सङ्ग्रहश्चानुमानञ्च प्रार्थना क्षिप्तिरेव च।
तोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा।
व्याजाश्रयं तु वाक्ये यदभूताहरणं मतम्।
तत्त्वार्थकथनं मार्गो रूपं वाक्यं वितर्कवत्।
उदाहरणमुत्कर्षो भावतत्त्वार्थधीः क्रमः।
सङ्ग्रहः सामदानोक्तिर्लिङ्गादूहोऽनुमानकम्।
प्रार्थना रतिहर्षेच्छा रहस्योद्भेदनं परा।

परा क्षिप्तिः।

संरम्भवाक् तोटकं स्यात् छलं त्वधिबलं मतम्।
उद्वेगो भीतिरेव स्यात्सम्भ्रमो विद्रवो मतः।
............................भय त्रासश्च विद्रवः।

अथ विमर्शाङ्गानि—

अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः।
शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम्।
प्ररोचना विमर्शे स्यादादानं छादनं तथा।

दशरूपके तु—

तत्रापवादसम्फेटौ विद्रवद्रवशक्तयः।
द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम्।
प्ररोचनाविचलनमादानञ्च त्रयोदश।

इत्युक्तम्।

दोषप्रख्यापवादः स्यात् सम्फेटो रोषभाषणम्।
व्यवसायः प्रतिज्ञा स्याद् द्रवः स्याद् गुर्वतिक्रमः।
द्युति स्यात्तर्जनोद्वेगः शक्तिर्वैरस्यनाशनम्।
प्रसङ्गो गुरुकीर्तिः स्याच्छमः खेद इति स्मृतः।
ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते।
कार्यात्ययो विरोधः स्यात्संहारार्थः प्ररोचना।
कार्ये सङ्ग्रह आदानं छादनं त्वपगूहनम्।

अपमानं गोपनमित्यर्थः।

अथोपसंहाराङ्गानि—

सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम्।
कृतिः प्रसाद आनन्दः समयो ह्युपगूहनम्।
भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च।
प्रशस्तिरुपसंहारे ज्ञेयान्यङ्गानि नामतः।
बीजस्मृतिस्तु सन्धिः स्याद् विरोधः कार्यमार्गणा।
कार्योक्तिर्ग्रथनं स्वानुभूतोऽर्थो निर्णयः स्मृतः।
परिवादः परीभाषं लब्धोपशमनं कृतिः।
शुश्रूषादिः प्रसादः स्यादानन्दो वाञ्छितागमः।
समयो दुःखनिर्याणमद्भुतं तूपगूहनम्।
भाषणं सामदानादि उक्तार्थं पूर्ववाक्यकम्।
वरदानस्य सम्प्राप्तिः काव्यसंहार इष्यते।
उपदेशादिशान्तिश्च प्रशस्तिरभिधीयते।
चतुःषष्टिविधं प्रोक्तमङ्गं नाट्ये मनीषिभिः।

षड्विधं फलमाह—

इष्टार्थवचनाश्चर्यलाभो वृत्तान्तविस्तरः ।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ।
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम् ।
रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्धिबन्धनम् ।

अथ रसवृत्तम:—

शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ।
चतस्रो वृत्तयो ह्येताः सर्वनाट्येषु मातृकाः ।
स्युर्नायकादि व्यापारविशेषान्नाटकादिषु ।

अथ कैशिकी—

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा सा कैशिकी चारुविलासयुक्ता ।
नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
चत्वार्यङ्गान्यस्या वैदग्ध्यक्रीडितं नर्म ।
इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतं विदुषाम् ।
हास्यो न केवलेनात्र विहितं शृङ्गारभययुतेन तेन ।

केवलेन हास्येन शृङ्गारयुतेन भययुतेन वेति त्रिविधमित्यर्थः ।

नर्मस्फूर्जः सुखारम्भो भयान्तो नवसङ्गमः ।
नर्मस्फोटो भावलेशैः सूचितोऽल्परसो मतः ।
नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्तिनः ।

अथ सात्वती—

सात्वती बहुला सत्त्वशौर्यत्यागदयार्जवैः ।
सहर्षा क्षुद्रशृङ्गारा विशोका चाद्भुता तथा ।

अथ तदङ्गानि—

उत्थापकोऽथ संहारः संलापः परिवर्तकः ।
विशेषा इति चत्वारः सात्वत्यां परिकीर्तिताः ।
उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ।
मन्त्रार्थदैवशक्त्यादेः संहात्यः सङ्घभेदनम् ।

संलापः स्याद् गभीरोक्तिर्नानाभावसमाश्रया ।
प्रारब्धादन्यकार्याणां करणं परिवर्तकः ।

**अथारभटी—**

मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता ।
वस्तूत्थापनसम्फेटौ संक्षिप्तिरवपातनम् ।
इति भेदास्तु चत्वार आरभटयाः प्रकीर्तिताः ।
माययोत्थापितं वस्तु वस्तूत्थापनमुच्यते ।
सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ।
संक्षिप्ता वस्तुरचना शिल्पैरितरथाऽपि वा ।
संक्षिप्तिः स्यान्निवृत्तौ नेतुर्नेत्रन्तरग्रहः ।
प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवः ।
अवपातनमित्युक्तं पूर्वमुक्तैव भारती ।
( भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः । )

**अथ नाटचोक्तिभेदाः—**

अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।
सर्वश्राव्यं प्रकाशं स्यात् तद्भवेदपवारितम् ।
रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताकाकरेणान्यानपवार्य्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ।
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ।
दत्तां सिद्धाश्च सेनाश्च वेश्यानां नाम दर्शयेत् ।
दत्तप्रायाणि वणिजां चेटचेटचोस्तथा पुनः ।
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ।
नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ।
नायिकानायकाख्यानं संज्ञाप्रकरणादिषु ।
नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ।
प्रायेण ण्यन्तकः साधिर्गमेः स्थानं प्रयुज्यते ।
राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ।

राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः।
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः।
वाच्यौ नटीसूत्रधारौ आर्यनाम्ना परस्परम्।
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः।
वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रजः।
भगवन्निति वक्तव्याः सर्वदेवर्षिलिङ्गिनः।
वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः।
आयुष्मन् रथिनं वृद्धसूतस्तातेति चेतरः।
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः।
विप्रैरयममात्येति सचिवेति च भण्यते।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः।
एवमन्येऽपि कोशाद्यैर्वाच्या ज्ञेया यथायथम्।

अथ भाषाविभागस्तत्रैव—

अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम्।
चेटानां राजपुत्राणां श्रेष्ठिनाञ्चार्धमागधी।
प्राच्या विदूषकादीनां धूर्तानां स्यादवन्तिका।
योधनागरिकादीनां दाक्षिणात्याऽहिदीव्यताम्।
शकाराणां शकादीनां शावरीं सम्प्रयोजयेत्।
बाह्लीकभाषोदीच्यानां द्राविडी द्रविडादिषु।
आभीरेषु तथाऽऽभीरी चाण्डाली पुक्कसादिषु।
आभीरी शावरी चापि काष्ठपत्रोपजीविषु।
तथैवाङ्गारकारादौ पैशाची स्यात्पिशाचवाक्।
चेटीनामप्यनीचानामपि स्यात् शौरसेनिका।
बालानां षण्ढकानाञ्च नीचग्रहविचारिणाम्।
उन्मत्तानामातुराणां सैव स्यात्संस्कृतं क्वचित्।
ऐश्वर्येण प्रमत्तस्य दारिद्र्योपहतस्य च।
भिक्षुवल्कधरादीनां प्राकृतं सम्प्रयोजयेत्।
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च।
पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम्।

शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ।
आसामेव च गाथासु महाराष्ट्रीं प्रयोजयेत् ।
यद्देश्यं नीचपात्रं तु तद्देश्यं तस्य भाषितम् ।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा ।
एवमन्यान् विजानीयान्महाकविनिबन्धतः ।
षट्त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा ।
लास्याङ्गानि दश यथा लाभं रसव्यपेक्षया ।
स्वत एव कवेः शक्त्या ज्ञानान्नोक्तानि तेन च ।
एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ।

इति नाटकम् ।

**अथ प्रकरणम्—**

भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।
सापायधर्मकामार्थपरो धीरप्रशान्तकः ।
नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ।
कितवद्यूतकारादिविटचेटकसङ्कुलाः ।

**अथ भाणः—**

भाणः स्याद्धूर्तचरितो नानावस्थान्तरात्मकः ।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा ।
सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितम् ।
सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः ।
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशाऽपि च ।

**अथ व्यायोगः—**

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।
हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ।
एकाङ्कश्च भवेदस्त्री निमित्तसमरोदयः ।
कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ।

राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः।

अथ समवकारः—

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।
सन्धयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे।
सन्धी द्वावन्त्ययोस्तद्वदेक एव भवेत्पुनः।
नायका द्वादशोदात्ताः प्रख्याता देवदानवाः।
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः।
वृत्तयो मन्दकैशिक्यो नात्र विन्दुप्रवेशकौ।
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च।
त्रिशृङ्गारस्त्रिकपटः कार्यश्चायं त्रिविद्रवः।
वस्तु द्वादशनाडीभिर्निष्पाद्यं प्रथमाङ्कगम्।
द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके।

अथ डिमः—

मायेन्द्रजालयुद्धाद्यैः डिमः ख्यातेतिवृत्तकः।
अङ्गी रौद्रो रसा अङ्गमन्ये चाङ्कचतुष्टयम्।
नायका देवगन्धर्वयक्षरक्षोमहोरगाः।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तयुद्धताः।
वृत्तयः कैशिकीहीना निर्विमर्शाश्च सन्धयः।
नात्र विष्कम्भको नैव प्रवेशक इह स्मृतः।

अथेहामृगः—

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा।
नरदिव्यावनियतौ यमौ।
ख्यातौ धीरोद्धतावन्त्यो गूढभावादयुक्तकृत्।
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः।
शृङ्गाराभ्यासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत्।
युद्धमानीय संरम्भं परं व्याजान्निवर्तते।
महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो।

एकाङ्को दिव्य एवात्र नेतेत्याहुः परे पुनः।
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे।।

मिश्रं ख्याताख्यातम् । अन्य प्रतिनायकः ।

**अथाङ्कः—**

उत्सृष्टिकाङ्क एवाङ्को नेतारः प्राकृता नराः।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेविनम्।
प्रख्यातमितिवृत्तञ्च कविर्बुद्धया प्रकल्पयेत्।
भाणवत्सन्धिवृत्त्यङ्गान्यस्मिन् जयपराजयौ।
युद्धञ्च वाचा कर्तव्यं निर्वेदवचनं बहु।

**अथ वीथी—**

वीथ्यप्येको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते।

**अवशिष्टः—**

आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः।
सूचयेद् भूरिश्रृङ्गारं किञ्चिदन्यान् रसानपि।
मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः।

**अथ प्रहसनम्—**

भवेत्प्रहसने वृत्तं निन्द्यानां कविकल्पितम्।
तत्र नारभटी नापि विष्कम्भकप्रवेशकौ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा।
वृत्तं बहूनां भ्रष्टानां वेश्याविटादिसङ्कुलम्।

**अथोपरूपकाणि—**

**तत्र नाटिका—**

नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः।
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा।
नवानुरागा कन्यात्र नायिका नृपवंशजा।
सम्प्रवर्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा।

पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात्कैशिकी स्वल्पविमर्शाः सन्धयः पुनः ।

अथ त्रोटकम्—

सप्ताष्टनवपञ्चाङ्के दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ।

अथ गोष्ठी--

प्राकृतैर्दशभिर्नवभिर्वाऽप्यलङ्कृता ।
नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी ।
हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता ।
कामश्रृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ॥

अथ सट्टकम्--

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ।
अङ्का जवनिकाऽऽख्याः स्युः स्यादन्यन्नाटिकासमम् ।

अथ नाट्यरासकम्—

नाट्यरासकमेकाङ्कं बहुताललयस्थितिः ।
उदात्तनायकं तद्वत् पीठमर्दोपनायकम् ।
हास्योऽङ्गयत्र सश्रृङ्गारो नारीवासकसज्जिका ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ।
क्वचित्प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ।

अथ प्रस्थानम्--

प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कैशिकी भारती तथा ।
सुरापानसमायोगादुच्छिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ।

अथोल्लाप्यम्—

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।
शिल्पकाङ्गैर्युतं हास्यश्रृङ्गारकरुणै रसैः ।
उल्लाप्यं बहुसङ्ग्रामसस्त्रगीतिमनोहरम् ।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ।

अथ काव्यम्—

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
खण्डमात्राद्विपदिकाभग्नतालैरलङ्कृतम् ।
वर्णमात्राच्छड्डलिकायुतं शृङ्गारभाषितम् ।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ।

अथ प्रेङ्खणम्—

विमर्शगर्भरहितं प्रेङ्खणं हीननायकम् ।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ।
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ।

अथ रासकम्—

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।
भाषाविभाषाभूयिष्ठं भारतीकैशिकीयुतम् ।
असूत्रधारमेकाङ्कं सवीथ्यङ्ककलान्वितम् ।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ।
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ।

अथ संलापकम्—

संलापकेऽङ्काश्चत्वारास्त्रयो वा नायकः पुनः ।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ।
भवेयुः पुरसंरोधच्छलसङ्ग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कैशिकी ।

अथ श्रीगदितम्—

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम् ।
भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ।

अथ शिल्पकम्—

चत्वारः शिल्पकेऽङ्काः स्युश्चत्वारो वृत्तयस्तथा ।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ।
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः ।

सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ।
आशंसातर्कसन्देहतापोद्वेगप्रसक्तयः ।

अथ विलासिका —

शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ।
विदूषकविटाभ्याञ्च पीठमर्देन भूषिता ।
हीना गर्भविमर्शाभ्यां सन्धिभ्यां हीननायका ।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ।

अथ दुर्मल्लिका—

दुर्मल्ली चतुरङ्का स्यात् कैशिकी भारती तथा ।
अगर्भा नागरनरा न्यूननायकभूषिता ।
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान् ।
चतुर्थो दशनालिः स्यादङ्कः क्रीडितनायकः ।

अथ प्रकरणिका —

नाटिकैव प्रकरणी सार्थवाहादिनायका ।
समानवंशजा नेतुर्भवेद्यत्र च नायिका ।

अथ हल्लीशः—

हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः ।
वागुदात्तैकपुरुषः कैशिकीवृत्तिसङ्कुलः ।
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः ।

अथ भाणिका —

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ।
कैशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता ।
उदात्तनायिका मन्दपुरुषाऽत्राङ्गसप्तकम । इति ।

रसाद्यविवक्षायां चित्रत्वं तद्विवक्षायां तूत्तमत्वमेवेति । अस्येति । अलङ्कार-मुखेन प्रदर्शिता भवन्तीति नोच्यन्त इत्यर्थः ।

इति भट्टकमलाकरकृतायां काव्यप्रकाशव्याख्यायां

षष्ठोल्लासः ।। ६ ।।

[ सरि० ] ननु प्रथमे चन्द्रोदयस्योद्दीपनस्य वर्णनीयतया शृङ्गारो व्यङ्ग्यः उत्तरे कामिनीलक्षणस्यालम्बनस्येति कथमिदमव्यङ्ग्यमित्याह **यद्यपीति**। **यद्यपि** सामान्यतः। **काव्ये** काव्यसरण्याम्। **सर्वत्र** निरपवादमेव। **अन्ततः** परिणामित्वेन। **विभावादिरूपतया** विभावस्वरूपत्वेन। **पर्यवसानं** परिणतिः तेषामेव रसत्वेन पर्यवसानात्। **तथापि** तथाभूते सत्यपि। **स्फुटस्य** सहृदयचमत्कारित्वेन स्थितस्य। **रसस्य** शृङ्गारादेः भावादेर्वा व्यङ्ग्यस्येत्याशयः 'अव्यङ्ग्यं त्ववरं स्मृतम्' इति प्रतिपादितत्वात्। **अनुपलम्भात्** अप्रतीतेः। **एतत्** प्रकृतम्। काव्यद्वयं शब्दचित्रमर्थचित्रञ्च। **अव्यङ्ग्यमवरम्**। **उक्तं** कथितम्। सर्वमपि वस्तु विभावादिरूपेणान्ते रसादावेव पर्यवस्यतीति रसात्मकता तु सर्वत्र भवत्येव तथापि प्रकृते काव्यद्वये न हि कश्चिद् व्यङ्ग्योऽर्थः स्फुट इति तयोरवरकाव्यत्वमिति। तेन स्थितमेतद्व्यङ्ग्यस्य चारुत्वपर्यवसायित्वेन प्राधान्ये ध्वनिकाव्यवाच्यापेक्षयाऽतिशयचमत्कारानाधायकत्वे मध्यमकाव्यं गुणीभूतव्यङ्ग्याख्यं सत्यपि व्यङ्ग्येऽचमत्कारिणि अवरकाव्यमिति। अवरस्य भेदनिर्देशनपुरःसरमुपसंहरति **अत्रेति**। **अत्र** अवरकाव्ये। **च** अपि। **यथा** पूर्वोक्तभेदयोः। **शब्दार्थालङ्कारभेदात्** शब्दालङ्काराणामनुप्रासादेरर्थालङ्काराणामुपमादेश्च भेदात्। **बहवः** अनेके। **भेदाः** प्रकाराः। **ते** भेदाः च। **अलङ्कारनिरूपणे** अलङ्कारप्रकरणे। **निर्णेष्यन्ते** विवेचयिष्यन्ते।

यथा हि ध्वनिकाव्यस्य गुणीभूतव्यङ्ग्यस्य च बहवो भेदा व्यङ्ग्यस्य स्वरूपाश्रयस्थितिभेदेन तथैव शब्दार्थालङ्कारभेदेनास्यापि बहवो भेदाः सन्ति। ते च अलङ्कारनिरूपणप्रसङ्गे एव निर्दिश्यन्त इति नोक्ता अत्रेति।

इति श्रीवत्सगोत्रोत्पन्नरविलालात्मजपरशुरामसूनुविष्णुसायागभंज-
कात्यायनपथानुयायि माध्यन्दिनीयशाखान्तर्गतशुक्लयजुर्वेदाध्यायि
परमशैवलोकमणिदाहालप्रणीतायां काव्यप्रकाशस्य
सरिताऽऽख्यविवृत्यां शब्दार्थचित्रनिरूपणं
नाम षष्ठ उल्लासः ॥ ६ ॥

यथाऽऽस्ते देवसरिता नित्यं हृत्पटले मम।
तथैवैषा पाठकानां चित्ते नित्यं विराजताम् ॥

ॐ नमः शिवाय।

—:०:—

# षष्ठः परिच्छेदः

अथ शब्दार्थचित्रयोरेकत्रैव गुणप्रधानभावेन स्थितिरिति शब्दार्थालङ्कारौ द्वावपि स्वाभीष्टाविति च बोधयितुमारम्भः।

शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम्।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः॥ १॥

यत्र शब्दस्य चित्रत्वं प्रधानं तत्रार्थस्य गौणं तत्, यत्र त्वर्थस्य प्रधानं तत्र शब्दस्य गौणमित्यर्थः।

क्रमेणोदाहरणम्—

"कर्णिकारकृतकर्णिकाद्युतिर्वर्णिकापदनियुक्तगैरिका।
मेचका मनसि मे चकास्तु ते मेचकाभरणभारिणी तनुः॥"

"आम्नायप्रथितान्वया स्मृतिमती बाढं षडङ्गोज्ज्वला,
न्यायेनानुगता पुराणसुहृदा मीमांसया मण्डिता।
त्वां लब्धावसरा चिरादगुरुकुले प्रेक्ष्य स्वसङ्गार्थिनं
विद्या नाम वधूश्चतुर्दशगुणा गोविन्द शुश्रूषते॥"

पूर्वत्र शब्दकृतं चारुत्वं प्राधान्यादनुभूयते, परत्र त्वर्थकृतं तत्। इह रसादिरूपस्य व्यङ्ग्यस्य स्फुटमप्रत्ययादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम्। वस्तुतस्तु विभावादिरूपतया सर्वत्र रसपर्यवसायितास्ति।

किञ्च शब्दार्थयोर्व्यङ्ग्यस्य च प्राधान्येन चारुतायां परमोत्तममिदं काव्यमिति स्वारस्यम्।

यथा—

'पदद्युतिविनिर्धुतस्मरपरार्धरूपोद्धति-
र्दृगञ्चलकलानटीपटिमभिर्मनोमोहिनी।
स्फुरन्नवघनाकृतिः परमदिव्यलीलानिधिः
क्रियात्तव जगत्त्रयीयुवतिभाग्यसिद्धिर्मुदम्॥'

अत्र त्रिधापि चारुता प्राधान्येनानुभूयते ।

यथा वा—

तिर्यक्क्षिप्तचलदृगञ्चलरुचिर्लास्योल्लसद्भ्रूलता
कुन्दाभस्मितचन्द्रिकोज्ज्वलमुखी गण्डोच्छलत्कुण्डला ।
कन्दर्पागमसिद्धमन्त्रगहनामर्धं दुहाना गिरं,
हारिष्यद्य हरेर्जहार हृदयं राधा विलासोर्मिभिः ॥

एवमन्यच्च बोध्यम् ।

इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां चित्रभेदनिर्णयो
नाम षष्ठः परिच्छेदः ।

—:०:—

परिशिष्टम्—१

# काव्यप्रकाशोल्लासषट्कगतविषयाणाम् अकाराद्यनुक्रमणी

"अ"



"आ"



"ऊ"



"क"

"श"



"स"

परिशिष्टम्—२

# उल्लासषट्कगतमूलकारिकाणां वर्णानुक्रमसूचनी

—:०:—

परिशिष्टम्—३

# काव्यप्रकाशोल्लासषट्कोदाहरणनिदर्शनानां प्रमाणानां च सूची

"स"



"ह"



—:०:—

श्रीराजानकमम्मटभट्टप्रणीतः

# काव्य प्रकाशः

## KAVYAPRAKASHAH

कमलाकरीव्याख्यासमलङ्कृतः

WITH

KAMALAKARI COMMENTARY

काव्यप्रकाशाभिधोऽयं लक्षणग्रन्थः श्रीमत्कमलाकरभट्टप्रणीतया कमलाकर्याख्यया सुविस्तृतया व्याख्यया समलङ्कृत्य लोकमणिप्रणीत-सरिताख्यविवृत्या च विभूष्य प्रकाशितोऽस्ति। अत्र हि तुलनात्मका-ध्ययनसौकर्याय विद्याभूषणप्रणीत साहित्यकौमुदी चोपस्थापिताऽस्ति। असौ हि कलेवरदृष्टया आदितः षष्ठोल्लासपर्यन्तमेव प्रकाशितः प्रथमभागे। अपरभागे चावशिष्टो भागः प्रकाश्यते।

बहुशो बहुभिर्व्याख्यातोऽपि ग्रन्थोऽसौ दुर्गम एवेति कमलाकर्या सरित्या च विभूष्य प्रकाशनेन किञ्चिदपि सुकरो भवेदिति आशास्यते।

1— 6 उल्लास भाग १ 1993

7–10 उल्लास भाग २ (प्रेस में)

प्रकाशक :

भारतीय विद्या प्रकाशन

पो० बाक्स नं० ११०८
कचौड़ीगली
वाराणसी-२२१००१
( उ० प्र० )

१ यू० बी० जवाहर नगर
बैंग्लोरोड,
दिल्ली-११०००७